श्रीजयदेवकविविरचितः

# चन्द्रालोकः

'सुबोधिनी' व्याख्यया
समलंकृतः

टीकाकारः
पं० श्री गौरीनाथपाठकः, साहित्याचार्यः

मास्टर खेलाड़ीलाल ऐण्ड सन्स, बनारस-१

"मास्टर"-मणि-मालायाः २३५ संख्यको मणिः ( नाटक-विभागे ६ )

"श्रीशूद्रक"कवि-प्रणीतं-

# 'मृच्छकटिकं' नाम प्रकरणम्

"श्रीप्रियम्वदा"ख्य ( संस्कृत-हिन्दी ) टीकया सहितम् ।

टीकाकारः—

"हर्ष-चरित-सार", "सावित्र्युपाख्यान", मुद्राराक्षसा"-
दीनां व्याख्याता, "उद्बोधन"-काव्य-प्रणेता,
श्रीब्रह्मानन्दशुक्लः, साहित्याचार्यः,
व्याकरणालङ्कार-शास्त्री, काव्य-
तीर्थः, कविरत्नम् ।
साहित्य-विभागाध्यक्षः—
श्रीराधा-कृष्ण-संस्कृत-कालेजः, खुरजा, ( उत्तर-प्रदेशः )

हिन्दी-रूपान्तर-कारः—
तदात्मजः—
श्रीकृष्णकान्त 'शुक्लः', साहित्य-शास्त्री ।

प्रकाशकः—

**मास्टर खेलाड़ीलाल ऐण्ड सन्स,**
संस्कृत बुकडिपो,
कचौड़ीगली, बनारस–१

प्रथमं संस्करणम् ] सन् १९५२ ई० मूल्यम् { ग्लेजस्य ६) रफस्य ५)

अमर-भारती-पीयूष-पान-वितत-वैभवानाम्, सकल-शास्त्र-तत्त्वावगाहन-निष्णातानाम्, व्याकरण-साहित्या-युर्वेदादर्श-मणीनाम्, काव्य-कला-कोविदानाम्, "श्रीविल्वेश्वर-संस्कृत-महाविद्यालय, मेरठ", श्रीहरदयालु-दुर्गादत्त-संस्कृत-महाविद्यालय, अमृतसरः", "श्रीभागीरथी-संस्कृत-महाविद्यालयः, गढ़मुक्तेश्वर"—प्रधानाचार्य-पद-भाजाम्, कीर्ति-कलेवराणाम्, आचार्य-प्रवर-पूज्य-गुरुवर-**श्रीमत्पण्डितचन्द्रमणि-शर्म-शास्त्रिणां** चरणारविन्दयोः

**"श्रद्धाञ्जलि"-रूपेण**

सप्रश्रयं सकृतज्ञञ्च समुपा-
हृतेयं कृतिः सुचिरं
राजताम्।

---

आराध्यचरणाः!

"अमृत-द्रव-माधुरी-मुषः,
परितो हन्त! लसन्ति वो गुणाः।
भवदीय शुभाक्षरावली-
परिपाकं यदवाप मादृशः॥"

विनयावनतः—

ब्रह्मानन्दः

# "आमुखम् ।"

हंसवाहिनी-कर-कलित-वीणा-कोण-निक्वाणन-नानाध्वनि-समुद्गिरणकला-प्रावीण्येषु, सुरभारती-कर-कमल-निश्च्योतितामित सुधा-बिन्दु सन्दोहेष्विव, सहृदय-हृदय-वशीकाराय, कार्मण-कल्पेषु, पीयूष-रसातिशायि-माधुर्येषु, संस्कृत-काव्येषु नाटकानामनुपम-वैभवं समुन्नतं स्थानञ्च कस्य विज्ञानघनस्यान्तस्तत्त्वानि प्रीति-विस्फारितानि न सन्तनोति ? आदिकवि-श्रीवाल्मीकि-प्रमुखैर्वन्दनीयचरणैर्महामहिमकवि-शिरोमणिभिः समाराधितानन्द-प्रवाहासु सूक्तिवाहिनीषु, निसर्ग-मधुरेषु कवि-कुल-गुरोः श्रीकालिदासस्य सरस्वती-निष्यन्देषु, अमन्देषु च "भास"-परिकलित-कलाकन्देषु, सर्वस्यापि जगतः समुच्छेषणे बद्धपरिकरासु कविताकामिनी-पञ्चबाण-"बाण"-वचोमाधुरीषु, "श्रीहर्षस्य" काव्योत्कर्षे च कस्य वा सचेतसश्चेतो ब्रह्मानन्दं न विन्दते ?

हन्त ! दारिद्र्य-दावानल-दग्धदेह-गेह-स्नेहेषु, सुचिर पारवश्य-पाश-निगडितात्मसु भारतीयेषु, सुरभारती-सेवा-हेवाक-महिमानार्यदेशे सरस्वती-प्रवाह इव विलुप्तप्रायः सञ्जातः ।

पूर्व-पुरुष-तपो-व्रात-सन्तुष्टस्य परमात्मनोऽनुग्रहेण कथं कथमपि स्वतन्त्रे भारते प्राचीनार्वाचीन-विविध-विद्या-मन्दाकिनी-रसास्वाद-समाराधन-क्षणोऽस्माभिः स्वलोचनजालैरेवावलोकितः ! गाढान्धकार-गर्तेषु निपतितानां प्रत्नानां रत्नानां समुद्धाराय यथाशक्ति सर्वैरेव प्रयत्न-परैर्भवितव्य म् ।

"श्रीशूद्रक" कवि-विरचित-"मृच्छकटिक"—नाम्नः प्रकरणस्य स्थानोच्चतायामपि तदीय-सुषमा-समुचित-"विशेषका" भावाद्भूति-परिकलित-मणि-महिमेव नातितमामाह्लादयतीव सतां मनांसि । श्रीपरमेश्वरानुकम्पया पाषाणैरपि सागरे सेतुर्निबद्धः । इहापि भगवती सैवानुकम्पा एतट्टीकाप्रणयने जनमिमं निमित्तमकरोत् । सा चेयं "श्रीप्रियम्वदा"—भिधानाऽन्वर्था संस्कृत-हिन्दी-टीका सारल्यमनुधावतां साहित्य तत्त्व-गवेषणा-प्रणयिनाञ्च विनेयानामनुदिन-जायमान-खेदं परिहर्तुं कामपि नवीनतां समानेतुञ्च व्यरचि ।

अत्र च मूल-ग्रन्थस्य स एव भागो व्याख्यातः, यो विद्यार्थि-बन्धूनां बुद्धौ पदं नादधाति । यत्र च स्वल्पमतेरपि संस्कृतज्ञस्य बुद्धिः स्वयमेव लब्धप्रसरा भवति, सोंऽशस्तु न व्याख्यातः । प्रतिपद-पर्याय-प्रदान-पद्धतिरत्र परित्यक्ता । एवं बालानां बोधेऽपि साहाय्यं भविष्यतीति मम विश्वासः ।

अपि च—कोश-सन्निधानेन, पाणिनि-सूत्र-सम्भारेण चापि ग्रन्थ-कलेवरो न सम्वर्धितः। तत्रापि सम्प्रति नास्ति विशेषोऽनुरागः, इत्यनुभवः। अलङ्काराणाम्, गुणानाम्, छन्दसां, रीतीनाञ्च प्रायः समुल्लेखः कृतः, यत्र स्वयमेव सारल्यं, तत्र परित्यक्तः। भाव-प्रदर्शने बहु प्रयतितम्। साहित्य-तत्त्वानां स्फुटीकरणञ्च कृतम्। व्याख्या-मार्गस्तु सर्वथा नवीन एव।

भूमिकायाञ्च सर्वेषामावश्यक-वस्तूनां विशदतया विवेचनं विहितम्। एतस्मिन् कर्मणि येषां कृतीनां कृतिभ्यो मनागपि साहाय्यमुपगृहीतम्, ते सर्वदाऽभिनन्दनीयाः।

किञ्च—ममात्मजेनायुष्मता श्रीकृष्णकान्त'शुक्लेन' "साहित्य-शास्त्रिणा" हिन्दी-रूपान्तरं विधाय सुवर्णे सुरभि-संयोगः सम्पादितः, इत्यहं भूयोभूयः प्रियवत्सं शुभाशिषां राशिभिः संवर्धयामि। आशासे चायं श्रीपरेशानुग्रहेण बहु-विध-परिचर्यया सुरभारती-सेवां सम्पादयन् विदुषां कृपा-पात्रतां प्राप्स्यति।

श्रीपूज्यचरणानां विविध-विद्या-विद्योतितान्तःकरणानां परमपूज्य-गुरुवर-विद्यावाचस्पति–श्रीपण्डितपरमानन्दशास्त्रिणां–श्रीराधाकृष्ण-संस्कृत-कालेज, खुरजाध्यक्षाणां महान्तमुपकारं सदैव संवहामि, येषामुत्साहशक्त्याशीर्वचोराशिभिश्चैतावान् गुरुभारो मयोढः।

एतस्याष्टीकाया निर्माणे प्रवृत्तिस्तु "श्रीमास्टर खेलाड़ीलाल ऐण्ड सन्स"–प्रकाशन-मन्दिर-स्वामिना-मनुरोधेनैव समजनि। एतदर्थमेतानहं शुभाशिषाभिनन्दामि।

एवं सर्वात्मना यथामति सावधानतया विहितेऽपि कर्मणि त्रुटि-सम्भावना तु मानव-मान-वर्धिकेति किमु वक्तव्यम्? यद्येवं विहितेनाभिनवेनानेन कर्मणा कस्याप्युपकारः सम्भवति, सफल-प्रयासोऽस्मीति मंस्ये।

श्रीविश्वनाथः प्रीयताम्। तथास्तु।

ज्येष्ठशु० रवौ१०, 'गङ्गादशहरा'
संवत् २०१०
दिनाङ्क, २१–६–१९५३

—ब्रह्मानन्दशुक्लः, साहित्याचार्यः,
साहित्य-विभागाध्यक्षः—
श्रीराधा-कृष्ण-संस्कृत-कालेजः,
खुरजा (उत्तरप्रदेशः)

# भूमिकान्तर्गतानां विषयाणामनुक्रमणिका ।

विषयः

## "काव्यम्, नाटकञ्च ।"

"ममैवांशो जीवलोके जीवभूतः सनातनः" इति श्रीमद्भगवद्गीतोक्त्यनुसारं सच्चिदानन्दांश–भूतस्य मानवस्य प्रायः सर्वा अपि प्रवृत्तयः आनन्दाधिगमायैव सम्पद्यन्ते। स चानन्दः प्रभुसम्मित—शब्द-प्रधान–वेदादिभ्यः, सुहृत्सम्मित–पुराणादिभ्यश्च न सम्भवति विदुषामपि "कटुकौषधोपशमनीयस्य रोगस्य सितशर्करोपशमनीयत्वे कस्य वा रोगिणः सितशर्करायां प्रवृत्तिः साधीयसी न स्यात् ?" इत्यभियुक्तोक्त्या कान्तासम्मिततया रसात्मकतया च सारल्येन काव्येभ्य एव समुपलभ्यते। "लोकोत्तरवर्णनानिपुणकविकर्म काव्यम्" इति हि काव्यस्य सामान्यं लक्षणम्। विशेषलक्षणानि च नानाशेमुषीकैर्विद्वद्भिः स्वमत्यनुरूपं तत्र–तत्रोक्तानि। श्रीवाग्देवतावतारस्य "श्रीमम्मटभट्टस्य" सिद्धान्तभूतं काव्यलक्षण म्—

"तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि" इति ।

"साहित्यदर्पणकारस्य" "श्रीविश्वनाथस्य" च—

"वाक्यं रसात्मकं काव्यम्" इति। केचन विज्ञाश्च—"कविकर्म काव्यम्" इति समाख्यानुरोधात् शब्द–प्रधानं "आस्वादजीवातुः पदसन्दर्भः काव्यम्" इति लक्षणमभ्युपगच्छन्ति । 'रसगङ्गाधर' कारः "श्रीजगन्नाथपण्डितराज"श्चापि शब्द–प्रधानमेव—

"रमणीयार्थप्रतिपादकः शब्दः काव्यम्", इति लक्षणं स्वीचकार ।

"रीतिरात्मा काव्यस्ये" ति "वामन"–मतम् ।

"निर्दोषा लक्षणवती स-रीतिर्गुणभूषणा ।<br>सालङ्काररसानेक–वृत्तिर्वा "काव्य"–नामभाक् ॥"

इति "चन्द्रालोक"–कारस्य लक्षणम्। एवमेवान्येषामपि विदुषां काव्य–लक्षणानि तत्र–तत्रोपनिबद्धानि, विशेषविज्ञानार्थं तत एवोन्नेयानि।

## काव्य–प्रयोजनानि।

"काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यः परनिर्वृतये, कान्ता-सम्मिततयोपदेशयुजे॥"

इति 'काव्यप्रकाश'–कृता प्रतिपादितानि। सामान्यतया यश आदि–प्राप्तिः, विशेषतश्चानन्दप्राप्तिरेव काव्यस्य प्रयोजनत्वेन स्वीकृता। स चानन्दो "रस"-संज्ञः। ततश्च शब्दार्थयोरुभयोरपि गौणत्वमेवोत्तमकाव्ये। अत एव तस्य "ध्वनिकाव्यम्" "गुणीभूतव्यङ्ग्यम्" "अधमकाव्यञ्चेति त्रैविध्यं स्वीकृतं "श्रीमम्मटभट्टैः"।

## काव्यस्य भेदाः।

तच्च काव्यम् "श्रव्य"–"दृश्य"–भेदेन पूर्वं द्विविधम्। "श्रव्यम्" हि—श्रवणीयं स्वयं पठनीयं वा भवति। तच्च त्रिविधम्—पद्य-गद्य-चम्पूरूपेण। "पद्यकाव्यञ्च" त्रिविधम्—महाकाव्य, खण्डकाव्य, मुक्तकभेदात्। "गद्यम्" पुन-र्द्विविधम्—कथा, आख्यायिकात्मकत्वेन। गद्य–पद्यमयं काव्यं "चम्पूः" भवति। तत्र "रघुवंश"–"नैषधीयचरितादि" काव्यजातम्–"महाकाव्यं" सर्गबन्धात्मकम्, एकदेशकथात्मकं "खण्डकाव्यं" 'मेघदूत' प्रभृति, स्वतन्त्र-पद्यानि च "मुक्तक"-संज्ञकानि–यथा–"अमरुकशतकम्"। एतेषां विशेषलक्षणानि "साहित्यदर्पणतो" ज्ञेयानि।

## "दृश्य" काव्यञ्च––

अभिनेयार्थं भवति। तस्य च—"रूपकम्" "नाटकम्" इत्यादीनि नामानि सन्ति। "रूपकञ्च"—

"रूपकमथ प्रकरणं, भाण-व्यायोग-समवकार-डिमाः।
ईहामृगाङ्क-वीथ्यः प्रहसनमिति रूपकाणि दश॥"

इति कथनाद्दशविधम्।

अपि च—

> “नाटिका[१], त्रोटकं[२], गोष्ठी[३], सट्टकं[४] नाट्यरासकम्[५] ।
> प्रस्थानो[६]ल्लाप्य[७]काव्यानि[८], प्रेङ्खणं[९], रासकं[१०] तथा ॥
> संलापकं[११] श्रीगदितं[१२], शिल्पकञ्च[१३], विलासिका[१४] ।
> दुर्मल्लिका[१५], प्रकरणी[१६], हल्लीशो[१७], भाणिकेति[१८] च ॥
> अष्टादश प्राहुरुपरूपकाणि मनीषिणः ।
> विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम् ॥”

एवञ्च दशरूपकाणि, अष्टादश चोपरूपकाणीति मिलित्वाऽष्टाविंशतिसंख्यकानि तानीति ।

## नाटकञ्च—

> “नाटकं ख्यातवृत्तं स्यात् पञ्च–सन्धि–समन्वितम् ।
> विलासर्द्ध्यादि–गुणवद्, युक्तं नानाविभूतिभिः ॥
> सुख–दुःख–समुद्भूति–नाना–रस–निरन्तरम् ।
> पञ्चादिका दशपरास्तत्राङ्काः परिकीर्तिताः ॥
> प्रख्यात–वंशो राजर्षि–र्धीरोदात्तः प्रतापवान् ।
> दिव्योऽथ दिव्यादिव्यो वा गुणवान् नायको मतः ॥
> एक एव भवेदङ्गी शृङ्गारो वीर एव वा ।
> अङ्गमन्ये रसाः सर्वे, कार्यं निर्वहणेऽद्भुतम् ॥
> चत्वारः पञ्च वा मुख्याः कार्यव्यापृतपूरुषाः ।
> गोपुच्छाग्रसमाग्रं तु बन्धनं तस्य कीर्तितम् ॥”

इति लक्षण–लक्षितं भवति ।

## प्रकरणञ्च—

> “भवेत् प्रकरणे वृत्तं लौकिकं कवि–कल्पितम् ।
> शृङ्गारोऽङ्गी नायकस्तु, विप्रोऽमात्योऽथवा वणिक् ॥
> सापाय–धर्म–कामार्थ–परो धीरप्रशान्तकः ।
> नायिका कुलजा क्वापि, वेश्या क्वापि, द्वयं क्वचित् ॥

तेन भेदास्त्रयस्तस्य, तत्र भेदस्तृतीयकः ।
कितव – द्यूतकारादि – विट – चेटक – सङ्कुलः ॥" इति ॥

इदं प्रकरणमपि नाटक–प्रकृतिकत्वाद् "रूपकमेव" । "तद्रूपारोपात् तु रूपकम्" इति लक्षणात् । विट-चेटादि-सङ्कुलत्वात् "मृच्छकटिकं" प्रकरणं तृतीय-भेद-सम्पन्नमस्ति ।

## नाटकानां विशेषता ।

यद्यपि काव्यानां प्रयोजनमानन्द–प्राप्तिः, तथापि वर्णनापेक्षया वर्णनीयानां पदार्थानां तथाविधाभिनयप्रदर्शनेन सजीवता भवति । श्रुतिमधुरता, नयनहारिता चेति नाटके उभयमपि सहृदयाः सामाजिकाः सममेवानु–भवन्तीति काव्यापेक्षया सुतरां नाटकस्य विशेषता ।

नाटकानाञ्च कोमल–कला–कौशलं स्फुटमेव कवेः सुकृत्यम् । कवित्वस्य परिपाको नाटकेष्वेव विलोक्यते । सर्वोऽपि सुख–दुःखात्मको भावः सहृदयानां सामाजिकानां प्रत्यक्षीकरणकरणात् सपदि चेतसि सम्मदरसं प्रादुर्भावयति । अत एव— "नाटकान्तं कवित्वम्" "काव्येषु नाटकं रम्यमि"त्याद्युक्तयः संस्कृत-जगति विख्याताः सन्ति, इत्येतदालोच्यैव भगवता "श्रीभरत"मुनिना स्वनाट्यशास्त्रे प्रतिपादितम्—

"न तज्ज्ञानं, न तच्छिल्पं, न सा विद्या, न सा कला ।
न स योगो, न तत्कर्म, नाटके यन्न दृश्यते ॥" इति ॥

कान्तासम्मिततया नाटकान्येव सारल्येन, माधुर्येण च मनसि समर्पयन्ति समुचितामुपदेश-सुधाधारामिति काव्यापेक्षया नाटकस्य विशेषता स्फुटैवेति दिक् ।

## संस्कृत-नाटकानां वैशिष्ट्यम् ।

संस्कृत-नाटकानि प्रायशः सुखान्तानि (*Comedy*) भवन्ति । अनुरागात्मक-शैल्या लोक-मनोऽनुरञ्जनपुरस्सरं चिर-प्रसुप्तानां कमनीय-कोमल-भावानां सचेतसां चेतःसु समुद्भावनमेव नाटकानां प्रयोजनम् । भाषान्तर-निबद्धानि च नाटकानि दुःखपर्यवसायीन्यपि ( *Tragedy* ) समुपलभ्यन्ते । संस्कृत-नाटकानि चानेकैर्नियमैर्नियन्त्रितानि भवन्ति । ते च नियमविशेषा विशेषतो दशरूपक, साहित्यदर्पण, नाट्यसूत्रादीनामालोचनेनावलोकनेन च धीर-धिषणैर्ज्ञातुं शक्यन्ते ।

## नाटकानामारम्भः

एतस्मिन् विषये प्राचामर्वाचाञ्च सन्ति विसंवादाः। तत्रादौ सिद्धान्तभूतं प्राचामाचार्याणां मतमेव प्रतन्यते, तदेव च भारतीय-सिद्धान्त-परिपोषकम्। सुचिरमस्माकं पारतन्त्र्य-पाश-निगडितत्वाद् वा, दौर्भाग्यदुराशयादिभूतावेश-वशाद् वा, काल-कलनया वा भारतीयानां सर्वाण्यपि विकासभाञ्ज्यपि सुरम्याण्यादर्श-भूतानि कार्याण्यपि पाश्चात्य-प्रभावेणोपनिबद्धानि। सर्वेषाञ्च समीक्षा पाश्चात्योप-नेत्रेणैव क्रियते विज्ञैः। मन्ये, भारतीयां संस्कृतिं भारतीय-बालकानां हृदय-मन्दिरान्निष्कासयितुमेवायं प्रकारो महापुरुषैस्तैरङ्गीकृतः। परमिदानीं कैश्चिद्भारत-भारती-भक्तैस्तथाविधोभय-मार्गावलोकनेन परिष्कृतः प्राचां पन्थाः।

ऋग्वेदे—संवाद-सूक्तेषु—"यम-यमी-संवादस्य" "उर्वशी-पुरूरवसोः" "सर-मायाः पणि" प्रभृतीनां संवादस्य चोपलम्भात्, सामवेदे-सङ्गीत-तत्त्वानां विद्यमान-त्वात्, वैदिककाण्डेषु च यजुर्वेदेषु धार्मिककृत्येषु नृत्यस्य दर्शनात्, नाटकीय-तत्त्वानां वेद मूलत्वे न कापि विचिकित्सा।

क्रमशो विकासमुपयातेषु नाटक-तत्त्वेषु रामायण-महाभारत-काले विशेषरूपेण नाटकीय-पद्धतौ समुन्मेषः समभवत्। "विराटपर्वणि" "रङ्गशालायाः" "नट"—शब्दस्य च सङ्कीर्तनमवलोक्यते। रामायणे च बहुषु प्रकरणेषु—"नट"—"नर्तक"—"रङ्ग"—प्रमुखानामुल्लेखः समायात्येव।

व्याकरण—दर्शनाचार्येण "श्रीपाणिनिना" स्वकीयाष्टाध्याय्यां—"पाराशर्य-शिलालिभ्यां भिक्षु-नट-सूत्रयोः" इति सूत्रे "नट-सूत्र" पदस्य सङ्केतः कृतः। "श्रीपतञ्जलिमुनि"—विरचिते महाभाष्ये च (३।२।१११) "कंस-वध" "बलि-बन्धयो" र्नाटकयोर्वर्णनमायाति।

नाट्याचार्य "श्रीभरतमुनि"-निर्मिते "नाट्यशास्त्रे" नाटकानां ब्रह्म-निर्मि-तत्त्वं, पञ्चम-वेद-स्वरूपत्वञ्च विशदीकृतम्। तत्र देवानां प्रार्थनया ब्रह्मणा सर्वलो-कोपकारकं, स्त्री-शूद्र-बन्धूनां कल्याण-करं, मनोरञ्जकसम्भार-भास्वरं, नाटकं विरचितम्। नाटक-तत्त्वानि च वेदेभ्य एव संगृहीतानि। तथा चोक्तम् तत्र प्रथमाध्याये—

"जग्राह पाठ्यमृग्वेदात्, सामभ्यो गीतमेव च ।
यजुर्वेदादभिनयान्, रसानाथर्वणादपि ॥" इति ॥

द्वितीयाध्याये च रङ्ग-मण्डपानां "त्रिकोण"–"चतुरस्र"–"वर्तुल"कारतया त्रैविध्यमुद्घोषितम् । वैज्ञानिकशैल्या च तेषां रचना–प्रकारः स्पष्टीकृतः ।

इत्येवं रीत्या वेदाचलोदरात् प्रादुर्भूता नाटक–मन्दाकिनी रामायण–महाभारतादि-तीर्थ–सम्पर्काच्चिराल्लब्ध–प्रसारा सरसा सुमनोहरा च सती कविता–कामिनी–विलास–कालिदास–भास–प्रभृतीनां कृतीनां विचित्रैः कल्पना–कलनैः सपरिष्कारं काव्य-कुञ्ज-पुञ्जं सुरभितं चकार । अत्र विषयेऽपि—

"एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं–स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥"

इति "मनूक्त्य"नुसारं विद्यान्तर–प्रकाश इव नाट्यकला-विकासेऽपि गुरुवर-स्यास्य भा-रतस्य भारतस्य प्राथम्यं सुतरां विराजमानमद्यापि प्राचामनुकम्पया प्रेक्षावतां शिरांसि स-गौरवाणि करोत्येवेति सर्वदा वन्दनीया अभिनन्दनीयाश्च ते गुरवः ।

अतीत–सच्चरित–नृपादि–चरित्र–चित्रणेन—"रामादिवत् प्रवर्तितव्यं, न रावणादिवत्" इत्यादि समुपदेशार्थं कविभिर्नाटकानि विरचितानि । "कवि" शब्दश्च—"कविर्मनीषी परिभूः स्वयम्भुः" इति वेद–वाक्य एव दृश्यते । इत्येष सारसारोऽनधिगत–साहित्य–तत्त्वानां विनेयानां शिक्षार्थमुपन्यस्यते । कलेवर–वृद्धि–भयाच्च नाति प्रतन्यते ।

## अर्वाचीनानां मतम् ?

नाटकानामारम्भविषये पाश्चात्यविदुषां विभिन्नानि मतानि सन्ति । तानि च समासतोऽत्र प्रदर्श्यन्ते—

१—'शर्मण्यदेश'–( 'जर्मन' ) स्थानां "श्रीपिशेल" ( *Pischel* ) महोदयानां मते 'काष्ठ-पुत्तलिकानां नृत्यमेव' ( *Puppet show* ) नाटकाना-मादिकारणम् ।

२—दक्षतराः ( डाक्टर ) "श्रीरिजवे" ( *Ridgeway* ) महानुभावाः—

"प्रेतात्मनां प्रसादनार्थमेव 'ग्रीक' देशे, नाटकानि कुर्वन्ति स्म, तेषामनुकरणमेव शनैः-शनैर्भारतेऽप्यायातम्। श्रीकृष्ण-रामलीलास्वेवमेव भवतीति समर्थितवन्तः।

३—केचिद् विज्ञाः "ग्रीक" देशस्यैवेमां नाटक-सम्पत्तिं भारत-हस्तगता-माकलयन्ति। भारतीयनाटकेषु "यवनिका" शब्दप्रयोग एवात्र तेषां युक्तिमूलकः।

४—अपरे पुनर्महाशया "मेपोल"—संज्ञकनृत्यानुसारेणैव ( *Maypole* ) नाटकानां प्रवृत्तिरभूदिति विश्वसन्ति।

५—दक्षतरा "श्रीकीथ" ( *Keith* ) महाभागाश्च प्राकृतिकपरिवर्तनस्य भावात्मकरूपे प्रदर्शनार्थमेव नाटकानां मूलमभ्युपगच्छन्ति।

६—"श्रीपिशेल पण्डिता" अन्यामपि कल्पनां चित्रयन्ति स्व-मस्तिष्क मन्दिरे। तथाहि—छाया-नाटकेभ्यः ( *Shadow Play* ) प्रवृत्तेयं नाटक-पद्धतिरिति।

दक्षतराः "श्रील्यूडर्स" ( *Luiders* ) महोदयाः "श्रीकानो" ( *Konow* ) महाशयाश्च एताननुमोदन्ते।'

परमेतानि मतानि बाल-कौतुकान्येव ; न च पुष्टतमप्रमाणोपनिबद्धानि। प्रत्युत यथार्थगवेषणया सर्वथा विरुद्धानि। निराकृतानि च बहुभिर्विवेकिभिः। "यवनिका"-शब्दश्च "यवन"—देशादागतानां वस्त्राणां प्रयोगोऽत्र भवति स्मेत्येव सूचयति। वस्तुतस्तु—शुद्धशब्दस्तु—"जवनिका" "यमनिका" वास्ति। अपभ्रष्टो "यव-निके"ति। प्राचीन-भारतेन साकमन्यदेशानां व्यवहार आसीदेव। श्रीकविकुल-गुरुभिः श्रीकालिदासचरणैश्च "शकुन्तला"नाटके—

"चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य।"

इति "चीन" देश-समागत-वस्त्राणां प्रयोगः पताकासु संकीर्तितः।

तस्मात् प्राचीन-नवीनमतानां पर्यालोचन-पीयूष-पानोद्बुद्धैर्भारतीयसिद्धान्त-रक्षाधिकृतैः सर्वथा बद्धपरिकरैर्भूत्वा पूर्वसिद्धान्तः स्थिरीकृतः, स एवास्माभिरादर्तव्यः।

अपि च—"ग्रीक" देशोद्भवेषु नाटकेषु भारतीयनाटकेषु च महदन्तरमस्ति। तथा हि—

१—भारतीयनाटकानि सुखान्तानि, न तु तथा "ग्रीकनाटकानि।"

२—भारतीय नाटकेषु केवलं कार्यैक्यं भवति, तत्रत्येषु च—स्थान,—काल,—कार्यैक्यता भवन्ति। तत्रत्यानि नाटकानि—एकस्मिन्नेव काले, एकस्यैवोद्देशस्य च पूर्त्यै समभिनीयन्ते ; न च तथा भारतीयनाटकानि।

३—भारतीयनाटकानि रङ्गमञ्चेऽभिनीयन्ते । "ग्रीकनाटकानि" च बहिःस्थाने 'प्रतिसीराम्' ( 'कनात' ) आयोज्यैव भवन्ति ।

ततो नेमानि ततो गृहीतानीति निश्चितः पन्थाः ।

## कवि-परिचयः ।

"मृच्छकटिककर्ता" कविवरः "श्रीशूद्रकः" सकल-कला-कुशलः, लोक-शास्त्र-तत्त्वावगाहन-गम्भीर-धीः, अमित-प्रतिभः, संस्कृत-साहित्य-गगने लब्ध-साधुप्रतिष्ठः समभवत् । स्वपरिचय-विषये स्वयमेव 'सूत्रधार'-मुखादात्म-परिचयं निबबन्ध ।

परं केचन पाश्चात्यपण्डिताः एभिः "पद्यैरेवैतस्य कवेरनन्तरं केन-चिदुल्लिखितानीमानि पद्यानीति" विभ्राम्यन्ति । स्वयमेव "अग्निं प्रविष्टः" इत्युल्लेखस्यानौचित्य-परिहार-प्रकारस्तु तस्य गणित-शास्त्र-बलात् तथा सम्भवती-त्यस्माभिस्तत्र टीकायां सूक्तः ।

अस्य "मृच्छकटिकतोऽ"तिरिक्तस्य कस्यचिद् ग्रन्थस्य प्रणयने किमपि प्रमाणं नोपलभ्यते । अस्मिन् प्रकरणे कविरसौ सर्वात्मना निज-बुद्धि-वैभवं प्रकटितवान्, यत् सत्यमेकेनैव रत्नेन कवि-परिषदि चाकचक्यमिव सञ्जनितमनेन महात्मना !

सुरभारती-संवर्धन-सेवन-परेषु परःशतेषु भूपेष्वमितप्रभावस्यास्य वैलक्षण्यं वैचक्षण्यञ्चास्ते । अस्य कवेर्नाम देववाणी-निबद्धेषु प्रबन्धेषु समुपलभ्यते । "काद-म्बर्याम्"—"विदिशा", "कथासरित्सागरे"—"शोभावती", "वैतालपञ्चविंश-त्याम्"—"वर्धमान" नगरञ्चेमानि स्थानानि राजधानीत्वेन वर्णितानि । "कथा-सरित्सागरे"-"केनचिद् विप्रेणासन्नमृत्यवे राज्ञे स्वप्राणाः समर्पिताः" इति, "हर्ष-चरितेऽ"पि च—"चन्द्रकेतोः शत्रुत्वेनास्य" कीर्तनम्, 'राजतरङ्गिणी"-कारो-ऽप्येनं कविवरं स्थिरनिश्चयं स्वीचकार । "स्कन्दपुराणा"नुसारञ्च "श्रीविक्रमादित्यात् सप्तविंशतिवर्षपूर्वं "शूद्रकस्य" शासन-कालः । इत्येवं यत्र-तत्र परां प्रसिद्धिं गतोऽयं महानुभावः ।

केचित् पुनरमुं कल्पित-पात्रमेव स्वीकुर्वन्ति । तदपरे "दण्डि"-निर्मितम्, अन्ये च—"रामिल"-"सौमिल"-कविभ्यां विरचितं "मृच्छकटिकं"

स्वीकुर्वन्ति। एवमस्य कवयितुर्विषयेऽस्य कृति-विषये च विदुषां मनसि शङ्का-पङ्क-कलङ्क-सम्पर्कश्चिराय स्थितोऽपि भारतीयविद्वज्जन-प्रणीत-युक्ति-सलिलैः प्रक्षालितः, इति सर्वमवदातम्।

## कस्मिन् देवे कवेर्भक्तिः ?

महामतेरस्य पराभक्तिः श्रीहरि-हरयोरभेदबुद्धया समासीदिति-"पर्यङ्क-ग्रन्थि-", "पातु वो नीलकण्ठस्य-" इति पद्ययुगलेन नान्दी-पाठे, "जयति वृषभकेतुः—" इति दशमाङ्कस्थित (४५) पद्ये च, "मेघो जलार्द्रं—", "केशव-गात्रश्यामः-" इति पञ्चमाङ्क (२-३) पद्ययोर्दर्शनेन स्फुटीभवति। सनातन-धर्म-प्रतिपादितदेवान्तर पूजायाम्; बलि-प्रदान-प्रमुखेषु सत्कार्येष्वप्यभियोग आसीदेवेति "चारुदत्तादि" पात्रेष्वभिव्यक्तम्।

## कवेर्निवासः कः ?

कवेरस्य निवास-विषये यद्यप्यभिधया किमपि स्फुटं प्रमाण नोपलभ्यते तथापि—"उज्जयिन्ये"व प्रमाणत्वेन निश्चीयते। "अवन्तिपुर्यां द्विजसार्थवाहः—" इत्यादिश्लोकेना"वन्तिका"स्थ "चारुदत्तस्य" वर्णनेन तथा सम्भाव्यमानत्वात्।

वस्तुतस्तु-कवयो वसुधाकुटुम्बावलम्बिनो भवन्ति। "गुणाः पूजास्थानमि"-त्युक्त्या गुणानां प्रकटनमेव तेषां प्रधानं तत्त्वमिति स्वदेश-काल-विषये संस्कृत-संस्कृति-समुपासकानामौदासीन्यमेव प्रायशः प्रतीतिपथमवतरति। कीर्ति-कलेवराः कवयः सार्वदिकाः, देश-जात्यादि-सम्प्रदायतो भिन्ना एव भवन्ति। अतो महा-नुभावानां तेषाममराः कृतय एव परीक्षा-निकषे स्फारीभवन्ति, किं देशादि-परीक्षयेति शम्।

## कवेः कालः कः ?

अस्मिन् विषये प्रमाणत्वेनोपलभ्यमाना युक्तयो बहिरङ्गाऽन्तरङ्ग-प्रमाणतयाऽधो विन्यस्यन्ते—

१—'अष्टम'शताब्द्यां लब्धजनिना श्रीमता "वामनाचार्येण" स्व-निर्मित-"काव्यालङ्कारसूत्रवृत्तौ" "शूद्रकादिरचितेषु प्रबन्धेषु" इति, "द्यूतं हि नाम पुरुष-स्यासिंहासनं राज्यम्" इति "मृच्छकटिक"-वाक्यञ्च समुद्धृतम्। 'सप्तम'

शतकोद्भूतेन "श्रीमता दण्डिना" स्वकीये "काव्यादर्शे"—"लिम्पतीवतमोऽङ्गानि"—इति "मृच्छकटिकस्य" प्रथमाङ्कस्थ (३४) पद्यमुद्धृतम्, इति बहिरङ्ग-प्रमाणात् कथयितुं शक्यते यत् 'सप्तम' शतकात् पूर्वमेवास्य रचना-कालः ।

२—"चारुदत्त"-वध-दण्ड-विधाने च "मनू"क्तं प्रमाणमुपन्यस्यता—

"अयं हि पातकी विप्रो न बध्यो मनुरब्रवीत् ।
राष्ट्रादस्मात्तु निर्वास्यो विभवैरक्षतैः सह ॥" [ ९।३९ ]
"न जातु ब्राह्मणं हन्यात् सर्वपापेष्वपि स्थितम् ।
राष्ट्रादेनं बहिः कुर्यात् समग्रधनमक्षतम् ॥" [मनु०८ अ०३८]

"मनो"रपरवर्तित्वं सूच्यते । मनोः कालश्च "विक्रमात्" पूर्वं 'द्वितीय'शतकं स्वीक्रियते । "भास"-कृत "दरिद्र-चारुदत्त"माश्रित्यैव "मृच्छकटिक"-रचना "जाते"त्युक्तिमङ्गीकृत्य "भास-जन्मतः 'तृतीय' शतकात् परतरमस्य कालो निश्चीयते ।

३—"मृच्छकटिके"—

"अङ्गारकविरुद्धस्य प्रक्षीणस्य बृहस्पतेः ।
ग्रहोयमपरः पार्श्वे धूमकेतुरिवोत्थितः ॥"

'मंगलस्य' 'बृहस्पते' विरुद्धत्वमुक्तम्, "वराहमिहिरेण" च ज्यौतिःशास्त्र-पुङ्गवेन पुनरनयोः सौहार्दमभ्युपेतम् । "जीवेन्दूष्णकराः कुजस्य सुहृदः" ( बृहज्जातकम्—२।१६ । ) इति ततः पूर्ववर्तिभिः कैश्चिज्ज्यौतिषाचार्यैरनयोः शत्रुत्वमेवाङ्गीकृतमिति सिद्धान्तपर्यालोचनेनापि 'तृतीय' शतकोत्पन्नमासादनन्तरं, 'षष्ठ' शतकजातात् "वाराहमिहिरात्"पूर्ववर्तित्वं "श्रीशूद्रकस्या"न्तरङ्ग-प्रमाणैर्निश्चीयते ।

४—"मृच्छकटिके"—"चाणक्य' नाम्नः । समुपलम्भाद् 'गुप्तकाला'नन्तरमेवास्य कवेः कालः, इति निश्चीयते ।

निष्कर्षसारस्तु—"विक्रम"-'प्रथम'शतकात् 'पञ्चम' शतकं यावदस्य रचना-कालः, इति ।

## कवेः कृतिः ?

अस्य कवेरमरा कृतिः "मृच्छकटिकम्" नाम प्रकरणम् । "मृदः = मृत्तिकायाः शकटिका यत्र तत्" इति व्युत्पत्त्या—

"नाम कार्यं नाटकस्य गर्भितार्थप्रकाशकम् ।" इति नियमेन च नामकरणम् ।

"चारुदत्तस्य" सेविकया "रदनिकया" तत्पुत्राय क्रीडितुं मृण्मयी शकटिका निर्माय दत्ता । तस्यामेव च "वसन्तसेनया" स्वाङ्गेभ्योऽवतार्य, रुदते बालकाय, "सौवर्णीं शकटिकां निर्मापये"त्युक्त्वा, निजाभूषणानि दत्तानि । तान्येव चार्य-"चारुदत्तवधाभियोगसमये प्रत्यर्पयितुं "वसन्तसेना"—गृहे जिगमिषो "विदूषकस्य" कक्षातो निर्गतानि सन्ति, सापराधतां "चारुदत्तस्य" समर्थितवन्ति । आभूषणाना-मभावे कदाचिदभियोगस्य शैथिल्यमपि सम्भाव्येत । ततश्च 'मृण्मयी शकटिकैव' सर्वोपद्रव—मूलभूतेति कवेराकूतम् ।

## काव्य-निकषः ।

सा चेयमस्य कवेः कृतिरति प्रसन्नया शैल्या निबद्धा, मधुरा, सरसा, मनो-ग्राहिणी, आत्मप्रसादिनी चास्ते । संस्कृत—साहित्य—निकुञ्जे सामाजिक—परिस्थिति—चित्रण—निपुणं नाटकमेवंविधं किमपि नास्तीति निःशङ्कं वक्तुं शक्यते ।

सर्वे भावाः समुचितया शैल्या स्थितिं लभमाना लोचनाञ्चलं चुम्बन्ति, पद्यानां सारल्यं सुमधुरत्वञ्च प्रेक्षकाणां पाठकानाञ्च मनांस्यावर्जयितुमद्वितीयमेव । यत्र—तत्र रसानां झरी "मृद्वीकामध्यनिर्यन् मसृणरस—झरी"—मप्यधरी-करोति । कथा—प्रसारस्तु भगवत्या भागीरथ्याः प्रवाह इवाविच्छिन्नरूपेण प्रवहन् कामपि चेतसो विच्छित्तिं जनयति । अलङ्काराणां सम्यक् सन्निवेशेऽपि कविः सफल—प्रयास एव । स्वभाव—मधुरा कनकद्रवमपि विद्रावयन्ती कम-नीयकाया राज—ललनेव सरसरचना—विन्यासेन चिरं कौतुकं सम्वर्धयन्ती सम्मद-रसं समर्पयन्तीवानुक्षणं लक्ष्यते । अस्य कवेरादावन्ते च मधुरत्वात् "नालिकेर-पाक" एव । पाकाश्च नवविधा भवन्ति । १—"पिचुमन्द" २—"बदर" ३—"मृद्वीका" ४—"वार्ताक" ५—"तिन्तिडी" ६—"सहकार" ७—"क्रमुक" ८—"त्रपुस" ९—"नालिकेर" भेदात् । विस्तारस्तु—"काव्यमीमांसायाः" पञ्चमाध्याये द्रष्टव्यः ।

प्रकरणमिदमतीव मनोहरमणी—रमणीयम् । अत्र कवि—कल्पिते कथावस्तुनि कवेः प्रतिभा—विकासः सुविशद एव । कविकुलगुरोः "श्रीकालिदासस्य", "श्रीभव भूते"श्च नाटकतोलनेऽपि "श्रीशूद्रकस्य" स्थानमनुपमेव । तयोर्विरचितेषु सर्वाङ्ग—

सौन्दर्याद्भुतेष्वपि कवि–कल्पित–वृत्तान्ताभावात्, राज–प्रासादोपयोगित्वाच्च न तथा रुचि–चमत्कारो यथा ललित–कल्पना–प्रसूते, सामाजिक–परिस्थिति–परिचायके, प्रतिपद–स्पृहणीयेऽस्मिन् प्रकरणे। कविरसौ सार्वदेशिकः, सर्वजनप्रियः, सुधारवादी च, कालिदास–भवभूती च भारतीयतां न परित्यजतः। अत्र च कविना सत्यप्रेम–कथा रमणीयतया निबद्धा। वास्तविकं प्रेम सर्वत्र विजयि भवतीति समुपदेशश्च प्रदर्शितः।

क्वचिदत्र द्यूतकर–सभिक–स्वभावः, अपरत्र च–चारुदत्त–मैत्रेय–शर्विलकानां मनोमोहकः प्रसङ्गः, क्वचिद् वेश्या–भवन–सम्पदुत्कर्षः, क्वचिद् "विदूषकस्य" स्नानशाटिका–वर्णन–नैपुण्य–विकासः, एकत्र शृङ्गारः, अन्यत्र च हासः, रक्षाधिकारि–कर्णाटक–कलहः क्वचिच्चेतश्चमत्करोति, क्वचित्पुनः "शकार"–दुराचारोऽपि रोमहर्षकरः, वधाभियोग–विचारे चाधिकरणिकस्य बुद्धि–वैशिष्ट्येऽपि न्यायकरणे शैथिल्यं, राज्ञोऽविवेकित्वञ्च सर्वेषां मनो हरत्येव। किम्बहुना—सूक्ष्मतमा अपि भावाः सर्वत्रानिर्वचनीयां रमणीयतामावहन्ति। अन्ते च "वसन्तसेना"—समागमेन समुचिते स्थाने कविः स्व कौशलमाविश्चकार। "मुद्राराक्षस"–निर्मातुः "श्रीविशाखदत्तस्येव" नास्य भूयराकाराणां छन्दसां भूयान् प्रयोगः "श्रीहर्ष"–निर्मिता "रत्नावली" यद्यपि कवेरुत्कृष्टा रचना विभाति, तथापि तत्र केवलं राज–समाज–वर्णनमात्रेणैव कविः स्वकीयं प्रतिभा–चारुत्वमलमाविश्चकार। कथावस्तु च नाति रुचिरम्। "सागरिका समुद्रे पोतभङ्गान्निमग्ना, पुनर्दैववशाल्लब्धा, महाराजमभजत्," इत्येव कथाभागो महाभागस्य महाकवेः। नाटकदृशा पञ्चमाङ्कस्य निष्प्रयोजनत्वेऽपि वर्णनात्मकतया रुचिरत्वमेव। क्वचिद् व्याकरणाशुद्धयोऽपि समागतास्तथापि गुणे दृक्पातः कार्यः। किं बहुना—यथा–यथा परीक्षा–निकषे घृष्यते, तथा–तथा समुज्ज्वलमेव भवति नाटक–हेमेदमिति जोषमास्यते।

## कवि–समये सामाजिकी स्थितिः।

तदानीं भारते सर्वत्र ब्राह्मण–धर्मस्य प्रचार आसीदेव, परं "बौद्धधर्म"–प्रचारोऽप्यासीत्। लोका देवानां पूजनं बलि–प्रदानञ्च कुर्वन्ति स्म। वैश्या इव ब्राह्मणा अपि व्यापार–परा आसन्। वेश्याना गृहेष्वपि केचन ब्राह्मण–ब्रुवाः

पूजनादिमकुर्वन् । धनिनां प्रभावेण सर्वस्मिन्नपि देशे सुख–सम्पत्तिरासीत् । वेश्यानां गृहिणीत्व-स्वीकृतावपि न दोषं पश्यन्ति स्म जनाः । द्यूत–प्रक्रियापि प्रावर्तत । वेदानामाघोषः, यज्ञानामारम्भश्चाप्यासीदित्येवं सर्वथा सुखिनि समाजेऽधिकरणिका राज-चाटुकारिभ्यः "शकारादि"भ्यो बिभ्यति स्म । अभियोगे च निर्विचारं त्वरा क्रियते स्म । दास–प्रथापि जागर्ति स्म ।

## प्रकरणेऽत्र को रसः ?

अत्र प्रकरणे सम्भोग–शृङ्गारो रसः प्रधानभूतः ।
अन्ये च करुण–हास्यादयोऽङ्गभूता एव ।
"शृङ्गार"–रसस्य लक्षण साहित्यदर्पणे—
"शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः ।
उत्तम—प्रकृतिप्रायो रसः शृङ्गार इष्यते ॥
परोढां वर्जयित्वाऽत्र वेश्यांश्चाननुरागिणीम् ।
आलम्बनं नायिकाः स्युर्दक्षिणाद्याश्च नायकाः ॥
चन्द्र–चन्दन–रोलम्ब–रुताद्युद्दीपनं मतम् ।
भ्रूविक्षेपकटाक्षादिरनुभावः प्रकीर्तितः ॥
त्यक्त्वौग्र्यमरणालस्यजुगुप्सा व्यभिचारिणः ।
स्थायिभावो रतिः, श्यामवर्णोऽयं विष्णुदैवतः ॥" इति ॥

स च—विप्रलम्भ—सम्भोगतया द्विविधः ।

## रसस्य सामान्य–स्वरूपं तु—

"आलम्बनविभावेनालम्बितः, उद्दीपनविभावेनोद्दीपितः, अनुभावेनानुभावितः, व्यभिचारि–( सञ्चारि ) भावेन व्यभिचारितः, सामाजिकानां हृदये 'वासना' रूपेण स्थितः स्थायिभावः कार्यरूपे परिणमन् सन् "रस"–रूपतामाधत्ते" इति ।

विभावादयश्च लोके कारण–कार्य–निमित्तकारणानि, काव्येनाटके चालौकिक–विभावनादिव्यापारतया विभावानुभावव्यभिचारि–( सञ्चारिभाव )-रूपाणि भवन्ति ।

## नायकादि निरूपणम् ।

अस्मिन् प्रकरणे नायकः "श्रीचारुदत्तः" । नायक-लक्षणञ्च यथा साहित्य-दर्पणे—

"त्यागी, कृती, कुलीनः, सुश्रीको रूपयौवनोत्साही ।
दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्य-शीलवान् नेता ॥" इति ॥

स चात्र 'धीरप्रशान्तः' । तल्लक्षणञ्च यथा तत्रैव—

"सामान्यगुणैर्भूयान् द्विजादिको 'धीरशान्तः' स्यात् ।"
"शकार"श्चात्र 'प्रतिनायकः'—तत्स्वरूपञ्च यथा— ॥ इति ॥
"धीरोद्धतः, पापकारी, व्यसनी प्रतिनायकः ।" इति ।

"शकार"—स्वरूपञ्च यथा—

"मदमूर्खताभिमानी, दुष्कुलतैश्वर्य-संयुक्तः ।
सोऽयमनूढाभ्राता, राज्ञः श्यालः "शकार" इत्युक्तः ॥" इति ।
"विदूषक" "विट" "चेटाः" क्रमशस्तयोः सहायभूताः ।

"विदूषक"—लक्षणं यथा—

"कुसुम—वसन्ताद्यभिधः, कर्म्मवपुर्वेशभाषाद्यैः ।
हास्यकरः कलहरति "विदूषकः" स्यात् स्वकर्मज्ञः ॥" इति ।

"विटस्य" लक्षणञ्च यथाः—

"सम्भोगहीनसम्पद् "विट"स्तु धूर्तः कलैकदेशज्ञः ।
वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम् ॥" इति ॥

"चेट"स्तु सेवकः प्रसिद्ध एव ।

नायिके चात्र—कुलजा, मध्या च । "धूता" स्वकीया, अनुरक्ता "वसन्तसेना" पूर्वं वेश्या, पश्चात् स्वकीया चेति ।

तल्लक्षणञ्च यथा—

"अथ नायिका त्रिविधा स्वाऽन्यासाधारणस्त्रीति ।
नायक—सामान्यगुणैर्भवति यथासम्भवैर्युक्ता ॥" इति ॥

## सन्धि-सन्ध्यङ्ग-घटनम् ।

सन्धयो नाट्ये पञ्चविधा भवन्ति । मुख, प्रतिमुख, गर्भ, विमर्श, उपसंहार-सन्धिभेदात् । चतुःषष्टि च सन्ध्यङ्गानि । कविरयं यथायथं सन्धीनां तदङ्गानाञ्च संघटनेऽपि परं प्रावीण्यं प्रादर्शयत् ।

"सन्धि" सामान्य-स्वरूपं यथा—

"अवान्तरैकार्थसम्बन्धः "सन्धि" रेकान्वये सति ।" इति ।

"मुख"—सन्धे—र्लक्षणं यथा—

"यत्र बीज—समुत्पत्ति, र्नानार्थ—रस—सम्भवा ।
प्रारम्भेण समायुक्ता, त"न्मुखं" परिकीर्तितम् ॥"

"प्रतिमुख"—सन्धि—लक्षणम्—

"फलप्रधानोपायश्च, मुख—सन्धि—निवेशिनः ।
लक्ष्यालक्ष्य इवोद्भेदो, यत्र "प्रतिमुखञ्च" तत् ॥"

"गर्भसन्धि"—लक्षणम् —

"फलप्रधानोपायस्य, प्रागुद्भिन्नस्य किञ्चन ।
"गर्भो" यत्र समुद्भेदो, ह्रासान्वेषणवान् मुहुः ॥"

"विमर्ष—सन्धि"—लक्षणम्—

"यत्र मुख्य—फलोपायः, उद्भिन्नो गर्भतोऽधिकः ।
शापाद्यैः सान्तरायश्च, स "विमर्ष" इति स्मृतः ॥"

"उपसंहार" ( निर्वहण ) सन्धि—लक्षणम्ः—

"बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ।
एकार्थमुपनीयन्ते, यत्र "निर्वहणं" हि तत् ॥"

"बीजस्य" लक्षणम्—

"अल्पमात्रं समुद्दिष्टं, बहुधा यद्विसर्पति ।
फलस्य प्रथमो हेतु, "बीजं" तदभिधीयते ॥"

अत्रायं सारः—कविः स्वरचनायां ( नाटकादौ ) "मुख"सन्धेरङ्गभूतं "कार्योपक्षेपं" करोति । "बीज" रूपं वस्तु निर्दिशति, "मुख"सन्धौ संक्षेपतया

"बीज"मुपन्यस्तं "प्रतिमुखसन्धौ" विस्तृतं करोति, "गर्भ-सन्धौ" च तस्य गूढं फलमुद्भेदयति, "विमर्ष-सन्धौ" च तद् विवेचयति, "उपसंहार-सन्धौ" च पुनरुपसंहृत्य सफलं करोति।

## चरित्र-चित्रणम्।

कविरयं पात्राणां चरित्र-चित्रणेऽपि चित्रं स्वमति-वैभवं प्रकटितवान्। केषाञ्चित् संक्षिप्तचरित्राणि विन्यस्यन्ते। तत्रादौ "श्रीचारुदत्तः" समवतार्यते—

**आर्यचारुदत्तः**-

परमोदारचरितः, सहृदयशिरोमणिः, धर्मप्राणः, गृहस्थ-धर्म-पालन-रुचिः, सन्ध्योपासन-बलि-प्रदानादि-कर्मकाण्ड-पण्डितः, सुहृद्, बन्धुरबन्धूनाम्, समाश्रयः प्रणयस्य, आदर्श-नागरिकः, धीरप्रशान्तः, शरणागतवत्सलः। "विटस्य" मुखेन कविर्वर्णयति तं महानुभावम्—

"दीनानां कल्पवृक्षः, स्वगुणफलनतः, सज्जनानां कुटुम्बी,
आदर्शः शिक्षितानाम्, सुचरित-निकषः, शील-वेला-समुद्रः।
सत्कर्ता, नावमन्ता, पुरुष-गुण-निधिर्दक्षिणोदारसत्त्वो,
ह्येकः श्लाघ्यः स जीवत्यधिकगुणतया चोच्छ्वसन्तीव चान्ये॥"

दारिद्र्याभिभूतोऽपि—"मम गृहेऽतिथयो नायान्ति, सुहृदोऽपि नानुरज्यन्ते" इत्येवं परिदेवनां प्रदर्शयन् कामौदार्यसम्पदमात्मनो न प्रदर्शयति ?

"एतत्तु मां दहति, यद्गृहमस्मदीयं,
क्षीणार्थमित्यतिथयः परिवर्जयन्ति।
संशुष्क-सान्द्र-मद-लेखमिव भ्रमन्तः,
कालात्यये मधुकराः करिणः कपोलम्॥"

"सत्यं न मे विभवनाशकृताऽस्ति चिन्ता,
भाग्यक्रमेण हि धनानि भवन्ति यान्ति।
एतत्तु मां दहति नष्टधनाश्रयस्य,
यत्सौहृदादपि जनाः शिथिलीभवन्ति॥"

दारिद्र्यस्य वर्णनमतीव मनोमुग्धकारि "चारुदत्तस्य"—
"अहो ! निधनता सर्वापदामास्पदम्।"

गृहस्थ–धर्म–धुरीणतां, देवेषु दृढां बुद्धिञ्च प्रदर्शयति—

"तपसा, मनसा, वाग्भिः, पूजिता बलिकर्मभिः ।
तुष्यन्ति शमिनां नित्यं, देवताः, किं विचारितैः ?"

"वसन्तसेनायाः" सुवर्णभाण्डमपहृत्य गते शर्विलके "असौ वराकः कृतार्थो गतः" इति प्रसन्नस्य कथनं सर्वथाभिनन्दनीयचरितत्वं द्योतयति ।

मिथ्यारोपान्मृत्युदण्डमुपलभ्यापि "शकार"–मोक्षणार्थं—

"शत्रुः कृतापराधः, शरणमुपेत्य पादयोः पतितः ।
शस्त्रेण न हन्तव्यः, उपकारहतस्तु कर्तव्यः ॥"

आश्चर्य–जनकं मानवता–निदर्शनं स्थापयामास । यत्सत्यम्—"चारुदत्त"स्य चरित्रमादर्शभूतभारतीयब्राह्मणोचितमेव प्रतिभाति ।

## वसन्तसेना—

बहुभिः सगुण–गणैरभिभूषिता शरणागतवात्सल्यञ्च तस्या "संवाहक"–परित्राणादशस्वर्णार्थमात्मनीनकटकार्पणेन व्यक्तीभवति । वेश्या सत्यप्यादर्शप्रेमिका, मातुरादेशादपि धन–सम्पन्नमपि "शकारं" परित्यज्य, प्रवहण–विपर्यासेन 'पुष्प-करण्डक' मुपेत्य दुर्वृत्तस्य तस्य हस्तान्मृत्युमालिङ्ग्यापि सत्यप्रेम्णो मूल्यं दत्तवती । केनापि पुण्यप्रभावेन पुनरुज्जीविता ।

"वसन्तसेना" स्वभाव–माधुरी–परिपूर्णा, सेवकेष्वपि परां प्रीतिमकरोत् । प्रेम–राग–वशंगता "चारुदत्त"–गेहं गच्छन्ती कीदृशं प्रीति–रीति–सिद्धान्तमवर्णयत् ? मनागामीलित–लोचनाञ्चला आचामन्तु पीयूषरसं सहृदया !

"गर्ज वा वर्ष वा शक्र ! मुञ्च वा शतशोऽशनिम् ।
न शक्या हि स्त्रियो रोद्धुं, प्रस्थिता दयितं प्रति ॥"
"यदि गर्जति वारिधरो, गर्जतु तन्नाम, निष्ठुराः पुरुषाः ।
अयि विद्युत् ! प्रमदानां, त्वमपि च दुःखं न जानासि ?"

## धूता—

"चारुदत्तस्य" धर्मपत्नी, सच्चरित्रा, वन्दनीयादर्शप्रतिमूर्तिः, स्नेहाकरा, स्व–'रत्नावली'मनल्पमूल्यामल्पमूल्यस्यापि स्वर्णभाण्डस्य कृते पत्युश्चरित्र–रक्षार्थमर्पितवती । यस्या बलेन दरिद्रोऽपि "चारुदत्त" आत्मानमदरिद्रं मन्यते कथयति च—

"विभवानुगता भार्या, सुखदुःखसुहृद्भवान् ।
सत्यं च न परिभ्रष्टं, यद्दरिद्रेषु दुर्लभम् ॥"

**रोहसेनः—**

बालोऽप्यबालचरितः । पितुः स्नेह–परवशः पितृमरणं स्वापघातेन निवारयितु-मिच्छति स्म ।

**मैत्रेयः—**

यथार्थसुहृदसौ, नान्यनाटकीयविदूषकवद्भोजनमात्रबद्धस्नेहः, "चारुदत्त"स्य शब्दैः—

"सर्वकालमित्रं मैत्रेयः", सुखे–दुःखे च समानव्यसनशीलः । परिहासपेशलः । "चारुदत्तं" गणिकाप्रसङ्गान्निवर्तयितुमतीव हृद्यं वचनमाह—

"गणिआ णाम पादुअन्तरपविट्ठा विअ लेड्डुआ दुक्खेण उण णिराकरी-अदि ।"

'चेटेन' सह वार्तालाप–प्रसङ्गोऽस्य परिहास–चातुरीं सूचयति—

"अहं दे मुण्डे गोड्डुं दइश्शम्" इत्यादि ।

"वसन्तसेना–समागम"–सूचनां ददानः—

"घणिओ दे आअदो"

इति श्रुत्वा—

"कुतोऽस्मत्कुले घनिकः ?"

इति "चारुदत्त"स्योत्तरेऽतीव हृदय–हारिणीं वाचं प्रयुञ्जानः प्रज्ञा–चातुर्यं व्यञ्जयति ।

"जइ कुले णत्थि, ता दुआरे अत्थि ।"

कीदृशी मार्मिकताऽत्रास्ति !

**शर्विलकः—**

बहुविध–भावानां सम्मिश्रणशाली, ब्राह्मण–कुले समुद्भूतोऽपि गणिका "मद-निका"ऽर्थे "चारुदत्त"–गृहे चौर्यं करोति । चौर्यकर्मण्यपि कुशलतां प्रकाशयति । परं स्वमित्र"स्यार्यकस्य" बन्धन–समाचारं श्रुत्वा "मदनिका"–परित्यागे क्लेश–लेशमपि नाजीगणत् । किं बहुना, राज्य–परिवर्तनमपि कृतवान् ।

**मदनिका—**

परमचतुरा, "वसन्तसेनायाः" शब्देषु—

"परहिअअग्गहण–पण्डिआ मदणिआ क्खु"

"शर्विलकेन" सह वार्तालाप–प्रकरणेऽतीव स्त्रीजनोचितं वाक्चातुर्यमस्याः सर्वामपि रमणीयां मूर्तिं प्रेक्षकाणां पुरतः सजीवामिवाद्यापि समुपस्थापयति।

**शकारस्तु—**

प्रकरणस्यास्य सौन्दर्याधाने प्रधानं निदानम्। मद–मूर्खताभिमानस्य साक्षात् प्रतिमा, धाष्टर्यस्यागारः, कुलाङ्गारः, चारुदत्तस्याकारणवैरी, स्वयमेव बलाद् "वसन्तसेनां"मारयित्वा स्व–दोषं "चारुदत्तस्य" शिरसि निचिक्षेप। अस्त-व्यस्तभाषी, सर्वथाऽऽत्मश्लाघानिरतः।

"अपार्थं, मक्रमं व्यर्थं, पुनरुक्तं, हतोपमम्।
लोक–न्याय–विरुद्धञ्च "शकार"–वचनं विदुः॥"

इति नियमस्य मूर्तिमानादर्शः।

**विटः—**

"शकारस्य" सहायोऽपि दुराचारानावहः, "वसन्तसेना"—मारणे "शकारस्या"तीव भर्त्सनामकरोत्। दुःखितो भूत्वा जहौ च तम्। उदात्तताऽस्य चरित्रेऽपि।

**स्थावरकः—**

नीच–कुलोत्पन्नोऽपि निन्दितकार्य–करणे भीत–भीतः, "चारुदत्तस्य" वध–घोषणामाकर्ण्य तस्य प्राण–परित्राणार्थं प्रासादान्निपतितः सन् स्व–कर्तव्य–पालनं सम्यगकरोत्।

**अधिकरणिकः—**

साधु–स्वभावोऽपि दोष–विवेके क्षिप्रकारी, "शकारा"द्भीतः।

**"दर्दुरक"–"माथुर"–"संवाहक"–"चन्दनकार्यकादीनां"—**

चरित्र–चित्रणेऽपि कविः समुचितां शैलीमात्मसाच्चकार।

एवं सर्वेषां पात्राणां स्व–स्वरूपानुरूपमेव चरित्रं परिकल्पितवान् कविरसौ। अध्ययनतोऽनुभवन्ति प्रेक्षका अस्य सरसतामविच्छिन्नप्रवाहताञ्च।

**निष्कर्षस्तु—**

श्रीमता कविना घटनानां घात–प्रतिघाते, कथायाः क्रमिक–विकासे, पात्राणां विन्यासे, भावानुसारं भाषा–विस्तारे च यादृशी चातुरी समधिगता, न तादृशी नाटकान्तरेषु। अस्य सर्वाण्यपि पात्राणि लौकिक–भाव–भरितानि, निरतिशय–कौशलं प्रदर्शयन्ति। यदि "लौकिकविज्ञान–कालेज"स्योपाधिना प्रकरणमिदं सत्क्रियेत, मन्ये, नानौचित्यं किमपि स्यादिति संक्षेपः।

## 'मृच्छकटिक''स्येतिहासः।

आसीदुज्जयिन्यां सर्व–सुगुणोपेतश्चारुदत्तो विप्रः, स पूर्वं धनी, अनन्तरञ्च काल–क्रमतो निर्धनः सञ्जातः। "वसन्तसेना" च तत्रत्या वेश्या सम्पन्ना सत्यपि तस्मिन्ननुरक्ता। राज्ञः श्यालः "शकारो" "वसन्तसेनां" स्व–करपञ्जरे निग्रहीतुं बहु प्रयत्नमकरोत्, परं नैष्फल्यमेवाधिजगे! विट–चेट–शकारैरनुबद्धा "वसन्तसेना" कदाचित् सघनान्धकारे सहसा "चारुदत्तस्य" द्वारे बलि–प्रदानार्थं "रदनिकया" समुद्घाटिते गेहे प्रविष्टा। एभिश्च धूर्तै"र्वसन्तसेना–"भ्रान्त्या "रदनिका" गृहीता, "विदूषकेणा"गत्य सर्वमपि वृत्तान्तमवगत्य भर्त्सितः "शकारः" स–निर्वेदं स–भयञ्च "वसन्तसेना मम हस्ते देया नोचेन्मरणान्तिको वैरो भविष्यतीति" "चारुदत्तं" प्रति सन्देशमुवाच। "वसन्तसेना" चात्मनो भूषणं "चारुदत्तस्य" गेहे न्यास–रूपेण स्थापितवती।

एकदा "शर्विलक"नामा ब्राह्मण–तनयश्चौर्य–कर्मणि प्रवीणो गणिका "मदनिका"र्थं "चारुदत्त"–भवने प्रविश्य न्यस्ताभरणं "मैत्रेय"–हस्ताज्जहार। समर्पयामास च "मदनिका"–प्रेरणया "वसन्तसेनायै"।

"वसन्तसेना" "विदूषक"–हस्तेन प्रेषितां 'रत्नावलीं' गृहीत्वा प्रदोषे "चारु–दत्त"मभिससार प्रातः "रोहसेनं" "चारुदत्त"–तनयं, रुदन्तं दृष्ट्वा मृण्मय–शकटिकायामेवात्मनोऽङ्गेभ्योऽवतार्याभरणानि स्थापयामास। "एभिः सौवर्णी शकटिकां निर्मापये"ति च कथयामास।

सा च तदनु 'प्रवहण–विपर्यासेन' "शकारस्य" प्रवहणमारुह्य 'पुष्पकरण्डको–द्याने' गता, "शकारेण" चाभ्यर्थ्यमानापि तत्कृत–प्रेम–प्रस्तावमनङ्गीकुर्वाणा वज्रदृढ–बाहुभ्यां ग्रीवामामोट्य विपन्नेव कृता। भूतपूर्वद्यूतकरेण "संवाहकेन",

"वसन्तसेनया" स्व–कटकार्पणतोऽभिरक्षितेन, सम्प्रति जात–वैराग्येण गृहीत-बौद्ध–भिक्षुवेषेण, सा कथञ्चित्प्राप्तजीवा विहिता।

"शकार"श्चाधिकरणमण्डपे गत्वा मिथ्यारोपेण "चारुदत्तं" "वसन्तसेना–घातिनं" परिकल्प्य मृत्यु–दण्ड–भाजनं चकार। यावदेवासौ शूलमारोपयितुं नीयते, तावदेव भिक्षुणा सह सम्प्राप्ता "वसन्तसेना" सर्वमपि वस्तुतत्त्वमावेदितवती। गोपाल–दारकेणा"र्यकेण" च यज्ञ–स्थानगतो राजा कथावशेषतां नीतः। "शकार"श्च तदाज्ञया बधाय निगृहीतोऽप्यार्य "चारुदत्ता"नुकम्पया परिमोचितः।

"वसन्तसेनां" "चार्यचारुदत्तः" परिणिनाय। अन्ते सत्य–प्रेम्णो विजयः। इति दिक्।

—०❀०—

## अङ्कानां कथासारः।

तत्र—

### प्रथमाङ्क-सारः।

[ प्रथमोऽङ्कः—"अलङ्कार–विन्यासः"। अस्मिन् "वसन्तसेनया" स्वकीयाऽलङ्कार "श्चारुदत्तस्य" गृहे "न्यास"–रूपेण धृतः। ]

तत्रादौ 'नान्दी'–पाठानन्तरं "सूत्रधारो" निजभार्यया सहोत्सव–प्रसङ्गे वार्तालापं करोति, प्रावार–हस्तं "मैत्रेयं" निमन्त्रयितुं प्रस्तौति, स च सर्वथा तं निषेधति।

"चारुदत्त–विदूषकयोः" परस्परं दारिद्र्य–विषयमवलम्ब्य वार्ता–प्रसङ्गे क्रियमाणे बहिर्विट–चेट–शकारैरनुस्त्रियमाणा "वसन्तसेना" "विट"–वचना-"च्चारुदत्त"–भवनं समीपे विज्ञाय, झटिति बलिदानार्थमुद्घाटित–द्वारे तत्र प्रविशति। "विदूषक–शकारयो" र्वाग्विवादानन्तरं गतेषु सर्वेषु विदूषकोऽन्तःप्रविश्य "इयं वसन्तसेना" इति "चारुदत्त" प्रबोधयति, सा चात्मनोऽलङ्कारं "न्यास"–रूपेण तत्र स्थापयति, "चारुदत्त–विदूषकाभ्या" मनुसृता स्व–भवनं प्रयाति।

### द्वितीयाङ्क-सारः।

[ द्वितीयोऽङ्कः—"द्यूतकर-संवाहकः"। अस्मिन् "संवाहक"–नामा कोऽपि

"चारुदत्त"-सेवको द्यूतकरः संवृत्तः, स च दश-सुवर्ण-मुद्रार्थं "माथुर-सभिकाभ्यां" निरुद्धः, "वसन्तसेनया" च ऋणान्मोचितः । ]

"वसन्तसेना" स्वचेट्या "मदनिकया" सह "चारुदत्त" सम्बन्धे विचार-विमर्शं करोति । भूतपूर्व-"चारुदत्तस्य" सेवकः "संवाहकः" स्वामिनो निर्धनत्वाद् द्यूतसेवी संवृत्तः । द्यूतकर-माथुर-सभिकाभ्यां सन्निरुद्धो दश-सुवर्ण-मुद्राणां कृते, विविध-प्रकारेणात्मनो मोचनार्थं चेष्टमानोऽपि "दर्दुरक"-सङ्केतेन "वसन्तसेना"-भवनं प्रविशति । सा च विदित-वृत्तान्ता तं स्व-कटक-प्रदानेन मोचयति । बहिरागतश्च "संवाहको" "वसन्तसेना"-हस्तिना निगृहीतः, तस्याः सेवकेन च "कर्णपूरेण" गजमाहत्य स मोचितः, "आर्यचारुदत्तेन" च कर्णपूराय" स्व-प्रावारः पारितोषिकरूपेणोपहृतः, स च तेन "वसन्तसेना"-प्रसादनार्थं "मदनिका"-प्रेरणया तस्यै दत्तः । "संवाहकश्च" बौद्धभिक्षुः सञ्जातः ।

## तृतीयाङ्क-सारः ।

[ "सन्धिच्छेदो"नामायमङ्कः । अत्र "चारुदत्त"-भवने सन्धिं विच्छिद्य "शर्विलक" नामा चौरः "वसन्तसेनायाः" सुवर्णभाण्डमपजहार । ]

संगीतं श्रुत्वा "मैत्रेय-चारुदत्तौ" स्व-गेहमागच्छतः । "वर्धमानकः" पाद-प्रक्षालनं करोति । क्रमशो निद्रया चुम्बित-लोचनेषु तेषु, "मदनिकार्थं" चौर्य-चिकीर्षया "शर्विलकः सन्धिच्छेदपूर्वकं तत्र प्रविष्टः । गो-ब्राह्मण-काम्ययाऽभिशप्तु प्रेरित इव सदयं "विदूषक"-हस्तादाचिच्छेद भूषणं "वसन्तसेनया" न्यस्तम् । "रदनिका" समाक्रन्दाच्च मुक्तनिद्र"श्चारुदत्त" श्चौर-साफल्ये सन्तुतोष । "विदूषकं" 'रत्नावली'-प्रदानार्थं "वसन्तसेना"न्तिकं प्रेषयामास ।

## चतुर्थाङ्क-सारः ।

[ "मदनिका-शर्विलक" संज्ञोऽयमङ्कः । अत्र "मदनिका-शर्विलकयोः" पारस्परिकं सम्मेलनं समजनि । ]

प्रत्यूषे "शर्विलको" "मदनिका"-समीपमुपेतः । चौर्य-समाचारेण सन्तप्तां विदित-वेदितव्यां तामुपलक्ष्य स्त्री-चारित्र्यं तदनुवर्तित्वं च निनिन्द । "कर्णे एव निति" ज्ञात-निखिल-तत्त्वो "वसन्तसेनाया" हस्ते सुवर्णाभरणं समर्पयामास, ततश्च "मदनिकां" स्व-हस्तवर्तिनीं कृत्वा यावदेव प्रचलितः, तावदेव स्वसुहृ"दार्यकस्य"

बन्धन-वृत्तान्तं निशम्य तां "रेभिलस्य" गृहं नेतुं शकटवाहकमादिदेश, स्वयञ्चा-र्यक-मोक्षणाय प्रचचाल । "विदूषक"श्चापि प्रविष्टः प्रकोष्ठाष्टकं वर्णयित्वा "वसन्तसेनायै" 'रत्नावली' ददौ ।

## पञ्चमाङ्क—सारः ।

[ "दुर्दिन"नामकेऽस्मिन्नङ्के "विट—वसन्तसेनयो"र्बहुविधं मेघ—विद्युद्-वर्णनं, "वसन्तसेनाया""श्चारुदत्तस्य" समीपेऽभिसारार्थं प्रयाणञ्च वर्णितम् । ]

## षष्ठाङ्क—सारः ।

[ "प्रवहण—विपर्यय"—संज्ञकेऽस्मिन्नङ्के प्रवहणस्य विपर्यासेन "वसन्तसेनया" "शकार"—प्रवहणारोहणम् । "आर्यकस्य" च "चारुदत्त"—प्रवहणारोहणं वर्णितम् ।]

प्रातः प्रबुद्धा वसन्तसेना । दारकं "रोहसेनं" "चारुदत्तस्य" पुत्रमादाय "रदनिका" समायाता । मृच्छकटिकायां सन्यस्याभरणानि "वसन्तसेना" बहिर्गन्तुं संस्करोत्यात्मानम् । यानास्तरणं विस्मृतं पुनरानेतुं गतो "वर्धमान-कश्चेटः" । एतस्मिन्नेव व्यतिकरे "शकारस्य" सेवको रथमादायागतः । ग्राम—शकटैरवरुद्धे मार्गे "चारुदत्तस्य" बहिर्द्वारे रथं संस्थाप्य चक्र—परिवर्तनं कृत्वा समागतः, आरूढा च "वसन्तसेना", जगाम च पुष्पकरण्डकोद्यानम् ।

"चारुदत्त"—चेटश्च रथमादायागच्छति, "आर्यक"—स्तत्रारुह्य गतः । मार्गे च "वीरक—चन्दनकाभ्यां" द्रष्टुं कर्णाटक—कलहः कृतः । ययुः सर्वे यथेष्ट—स्थानानि ।

## सप्तमाङ्क—सारः ।

[ "आर्यकापहरण"—संज्ञकेऽस्मिन्नङ्के— "आर्यक"स्यापहरणं, चारुदत्तेन सह तत्सम्भाषणञ्च वर्णितम् । ]

## अष्टमाङ्क—सारः ।

[ "वसन्तसेना—मोटन"नामायमङ्कः । अत्र "शकार"—द्वारा वसन्तसेनाया मारण—प्रयासो वर्णितः । ]

भिक्षुः संवाहकः स्व—धर्म—गीतानि गायति । शकारस्तं ताडयितुमिच्छति, कथंकथमपि विटस्तं निवारयति । "स्थावरकः कथन्नागतः !" इति चिन्ता—

चुम्बित–चित्तं शकारं विट उपवन–वर्णनेनाराधयति । समागते च तस्मिन् रथवाहके वसन्तसेनामवलोक्य स्वानुरोधमपि तिरस्कुर्वन्तीं तां हन्तुमुद्यतः शकारो विट–चेटौ ततोऽन्यत्र प्रेषयति । बलाद् बाहुभ्यां ग्रीवा मामोड्य मारयित्वा पत्रैराच्छादितवान् । विटोऽपि तं सम्भर्त्स्य गतः । चेटोऽपि रथेन सह तेन प्रेषितः । भिक्षुणा च वसन्तसेना समुपसेविता ।

## नवमाङ्क–सारः ।

[ अयमङ्कः—"व्यवहारा"भिधः । अस्मिन् शकार—कृत—व्यवहार—विचारः कृतः । ]

"शोधनकस्य" प्रवेशानन्तरं शकारः प्रविश्य आत्मकृतं वसन्तसेना–मारणं चारुदत्त–शिरसि पातयितुमधिकरणमण्डपे व्यवहारं लेखयति । वसन्तसेना–माता, चारुदत्तश्चाहूयेते । विदूषकोऽपि वसन्तसेनाया आभूषणजातं प्रत्यावर्तयितुं जिगमिषुः, समाचारं श्रुत्वा समायाति, शकारस्य सन्ताडन–प्रतिताडन–समये तस्य कक्षान्तरतो निष्पतद्भिराभूषणैः । विनिश्चितेऽपराधे मृत्यु–दण्डभाग् भवति चारुदत्तः ।

## दशमाङ्क–सारः ।

चाण्डाल–युगलेनानीयमानश्चारुदत्तः क्रियमाणायां घोषणायां पश्चात्तापमनुभवति । विदूषकः, तत्पत्नी, सुतश्चैते सर्वेऽपि तमनुमर्तुं चेष्टन्ते । स्थावरकश्चेटोऽपि 'डिण्डिम'–नादमुपश्रुत्य प्रासादान्निपतति चारुदत्तं मोचयितुं, परं विफलप्रयासो भवति । भिक्षुणा सह वसन्तसेना समागच्छति । आर्यको यज्ञ–वाट–गतं नृपं निहन्ति । शर्विलकस्तमभिषेचयति । शकारो मारणार्थं निगृहीतः, परं चारुदत्तानुकम्पया परिमोचितः । सानन्दं "वसन्तसेना–चारुदत्तयोः" प्रेमसम्बन्धो विवाह–बन्धनतया सुदृढो भवति । वास्तविक–प्रीतेर्विजयः । 'भरतवाक्येन' सहैव प्रकरणः परिपूर्णो जायते ।

इति संक्षिप्ताङ्क–कथा–सारः ।

—०❀०—

## प्रतिपात्रं—

## भाषा-विवेकः ।

यद्यपि नाट्कादिषु संस्कृत, प्राकृत, अपभ्रंश- भेदेन भिन्ना भाषाः प्रयुज्यन्ते । तत्र सुरभारती "संस्कृतम्" ।

प्राकृते च—

"मागधी, अवन्ती, प्राच्या, शौरसेनी, अर्धमागधी, वाह्लीका, दाक्षिणात्या" चेति सप्तभाषा भवन्ति । महाराष्ट्रादयश्च केवलं काव्येष्वेव प्रयुज्यन्ते ।

अपभ्रंशे—

"शाकारी, आभीरी, चाण्डाली, शावरी, द्राविडी, उड्रजा, हीना चे"ति सप्तभाषाः प्रयुज्यन्ते, तथापि "मृच्छकटिके" तु संस्कृतम् । "शौरसेनी, अवन्तिका, प्राच्या, मागधी" एताः प्राकृतभाषाश्चतस्रः, "शाकारी, चाण्डाली, शावरी, "ढक्क"देशीया च, एता "अपभ्रंश"भाषाश्चतस्रः । एवं मिलित्वाष्टविधा भाषाः प्रयुक्ताः—।

| भाषा-नाम | पात्र-नाम | विशेष-परिचयः । |
|---|---|---|
| "प्राकृत"-भाषाः "शौरसेनी"-पाठका एकादश सन्ति— | सूत्रधारः, नटी, रदनिका, मदनिका, वसन्तसेना, तदीया जननी, चेटी, कर्णपूरकः, चारुदत्त-धर्मपत्नी, शोधनकः, श्रेष्ठी । | "शौरसेन्याम्", "अवन्त्याम्" "प्राच्या"श्च-दन्त्य-'सकारः', |
| "अवन्ती"-पाठकौ द्वौ स्तः- | "वीरकः", "चन्दनकश्च" । | "अवन्त्याम्" 'रेफः' लोकोक्तीनां बाहुल्यम्, |
| "प्राच्या"-पाठक एकः— | "विदूषकः" । | "प्राच्यां" 'स्वार्थिकः ककारः', |
| "मागधी"-पाठका षट् सन्ति— | "संवाहकः, शकारः, वसन्तसेना-चारुदत्तानां चेटाः ( त्रयः ) भिक्षुः, रोहसेनश्च । | "मागध्याम्"-तालव्य-'शकारः' प्रायेण प्रयुज्यते । |

| भाषा-नाम | पात्र-नाम | विशेष-परिचयः। |
|---|---|---|
| "अपभ्रंश"भाषाः- | | |
| "शाकारी"-पाठकः- | राष्ट्रियः शकारः। | "अपार्था"दिदोषजातम्, "शकार"-बाहुल्यम्। |
| "चाण्डाली"-पाठकौ- | चाण्डालौ। | रेफस्य 'लकारता च'। |
| "ढक्क"-पाठकौ- | माथुर-द्यूतकरौ। | "वकार" प्रायिकेयम्। |
| "संस्कृत"-पाठकाः- | "चारुदत्तः, सूत्रधारः (कार्यवशादसौ प्राकृतामपि प्राच्यां पठति।) आर्यकः, शर्विलकः, अधिकरणिकादयः"। | "संस्कृत" प्रायत्त्वम्, दन्त्य-तालव्य 'सकार' 'शकार' प्रायत्त्वम्। |

विशेष-सूचना :—

(१) 'शबर'-पात्राभावान्नात्र "शाबरी" प्रयुक्ता।

(२) "महाराष्ट्री" च काव्येष्वेव प्रयुज्यते।

## "चारुदत्त"-"मृच्छकटिकयोः पारस्परिकः सम्बन्धः।

महाकवि "श्रीभास"-प्रणीत "चारुदत्त"मवलम्ब्यैव "मृच्छकटिकम्" प्रारब्धमिति बहूनां मतम्। तत्र साम्ये विद्यमानेऽपि महद् वैचित्र्यमस्ति। तन्निरीक्षणेन तु अनुमिन्वन्ति विज्ञाः—"उभयोरेककर्तृत्वम्"। तत्र रचना-विन्यासः, प्राकृतम्, छन्दोरचना, नाटकीय-घटनानां वैलक्षण्यञ्चोदाहरणतया मनाक् क्रियते—

## रचना-विन्यासः।

| चारुदत्ते— | मृच्छकटिके— |
|---|---|
| १-'नान्दी' नास्ति। | १-'नान्दी' विद्यते। |
| २-नाटककर्तुर्नामादि नास्ति। | २-सर्वं वर्तते। |
| ३-विच्छिन्नकायता | ३-सम्पूर्णता |

| "चारुदत्ते"— | "मृच्छकटिके"— |
| --- | --- |
| ४—नायकस्यैवाङ्केषु निर्देशः । | ४—"चारुदत्त" नायकस्य नाम-निर्देशः । |
| ५—तत्समाः, तद्भवाश्च शब्दाः । | ५—देशीशब्दाः प्रयुक्ताः—<br>[ 'छिविअ', 'दक्केहि' प्रभृतयः । ] |

## प्राकृतम्—

"चारुदत्तस्थ" प्राकृतं "मृच्छकटिका" पक्षेया प्राचीनं प्रतिभाति । तथाहि—

| "चारुदत्ते"— | "मृच्छकटिके"— |
| --- | --- |
| १—गेहं गच्छिअ जाणामि | १—गेहं गदुअ जाणामि । |
| २—कप्रम् ( सं०—वयम् ) | २—अम्हे । |
| ३—तुअं ( सं०—त्वम् ) | ३—तुमं । |
| ४—तव गेहं पविठा । | ४—तुह गेहं पविट्ठा । |
| ५—इद तस्स गेहं । | ५—वामदो तस्स चलं । |

## छन्दो-रचना ।

"चारुदत्ता" पेक्षया "मृच्छकटिके" छन्दोरचना प्रशस्यतरा । तथा हि—

| "चारुदत्ते"— | "मृच्छकटिके"— |
| --- | --- |
| १—"यथान्धकारादिव दीप-दर्शनम्" ।<br>[ "यथा", "इवयोः" पुनरुक्तिः ] | १—"घनान्धकारेष्विव दीप-दर्शनम् ।"<br>[ पद-माधुरी । ] |
| २—"यो याति दशां दरिद्रताम्" ।<br>[ दशां दरिद्रामि" त्युचितम् । ] | २—"यो याति नरो दरिद्रताम् ।"<br>[ बन्धन-सौष्ठवम् । ] |
| ३—"क्लिन्नखर्जूर-पाण्डुः" ( इन्दुः )<br>[ उपमा असंस्कृता ] | ३—"कामिनी-गण्ड-पाण्डुः" ।<br>[ सुसंस्कृता । ] |
| ४—"शौर्यं न कार्कश्यता" । | ४—"चौर्यं न शौर्यं हि तत् ।" |
| ५—"विषाणकोटीव निमज्जमाना" ।<br>[ व्याकरण-वैपरीत्यम् । ] | ५—'तीक्ष्णं विषाणाग्रमिवावशिष्टम् ।"<br>[ व्याकरणानुपालनम् । ] |

## नाटकीय-घटना ।

घटनानां संकलनेऽपि महद् वैचित्र्यमुभयत्र वर्तते । तथाहि—

| "चारुदत्ते"— | "मृच्छकटिके"— |
| --- | --- |
| १—"विदूषकस्य" 'स्वगता' दारम्भः । | १—"चारुदत्त"-वाक्यात्— "भवतु, तिष्ठ तावदहं समाधिं निर्वर्तयामि ।" इति । |
| २—"सलज्जको मदनिकामुच्चैराकारयति । | २—"वयस्य ! समाप्तजपोऽस्मि" इति चारुदत्तोक्तौ "वसन्तसेना"भ्यन्तरं प्रविशति । |
| ३—"चन्द्रोदयास्तयो समय-विषयो नोचितः ।" | ३—समुचितः । |

एभिरुदाहरणै"र्मृच्छकटिक"—पूर्ववर्तिता "चारुदत्त"स्यावश्यं वक्तुं शक्यते । यथावदनुकरणे केनापि कारणेन भवितव्यमेव । स्व-कृतस्य पर-कृतस्य वा संस्कृतिस्तु कृतैवेति निर्विवाद-कथनम् ।

### प्रकरणे समागतानां गुणानां रीतीनाञ्च स्वरूपाणि निरूप्यन्ते ।

"माधुर्य"—गुणस्य लक्षणम्:—

"चित्तद्रवीभावमयो ह्लादो माधुर्यमुच्यते ।"

"ओजो" गुणस्य लक्षणम्:—

"ओजश्चित्तस्य विस्तार-रूपं दीप्तत्वमुच्यते ।"

"प्रसाद" गुणस्य लक्षणम्:—

"चित्तंव्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः ।
स प्रसादः समस्तेषु रसेषु रचनासु च ॥"

"रीतीनां संक्षिप्तं स्वरूपम्"—

"गौडी" डम्बरबन्धा स्याद्, "वैदर्भी" ललितक्रमा ।
"पाञ्चाली" मिश्रभावेन, "लाटी" तु मृदुभिः पदैः ॥"

अत्र—विशेषतया "प्रसादो" गुणः, "लाटी" च रीतिः ।

## "अस्मिन् प्रकरणे वृत्तिः का ?"

नाटकादौ चतस्रो वृत्तयः प्रयुज्यन्ते । ताश्च—"नाट्य–मातृकाः" इत्युच्यन्ते । यथा माता । सन्ततिं पुष्णाति तथैवैता अपि नाटकं पुष्णन्ति ।

"शृङ्गारे "कौशिकी", वीरे "सात्त्वत्यारभटी" पुनः ।
रसे रौद्रे च बीभत्से, वृत्तिः सर्वत्र भारती ॥
चतस्रो वृत्तयो ह्येताः सर्वनाट्यस्य मातृकाः ।
स्युर्नायकादि—व्यापार—विशेषा नाटकादिषु ॥"

अत्र च—शृङ्गारस्य प्राधान्यात् "कौशिकी" वृत्तिः । तस्याः स्वरूपं यथा—
"या श्लक्ष्ण–नेपथ्य–विशेषचित्रा, स्त्री–सङ्कुला पुष्कल–नृत्य–गीता ।
कामोपभोग—प्रभवोपचारा, सा "कौशिकी" चारु–विलास–युक्ता ॥"
[ क्वचिच्च–"कौशिकी"ति पाठः । ]
अस्याश्चत्वार्यङ्गानि भवन्ति । तथा हि—
"नर्म[1], च नर्मस्फूर्जो[2], नर्मस्फोटोऽथ[3] नर्मगर्भश्च[4] । चत्वार्यङ्गान्यस्याः–" इति ।

## "प्रकरणेऽस्मिन् समागतानां सुभाषितानां संग्रहः ।"

### [ प्रथमोऽङ्कः ]

( १ ) "शून्यमपुत्रस्य गृहं, चिरशून्यं नास्ति यस्य सन्मित्रम् ।
मूर्खस्य दिशः शून्याः सर्वं शून्यं दरिद्रस्य ॥" [ १–८ ]

( २ ) "सुखं हि दुःखान्यनुभूय शोभते, घनान्धकारेष्विव दीपदर्शनम् ।
सुखात्तु यो याति नरो दरिद्रताम् , धृतः शरीरेण मृतः स जीवति ॥"[ १–१० ]

( ३ ) "अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम् ।" [ १–११ ]

( ४ ) "दारिद्र्याद्ध्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसो,
निस्तेजाः परिभूयते परिभवान्निर्वेदमापद्यते ।
निर्विण्णः शुचमेति शोकपिहितो बुद्ध्या परित्यज्यते,
निर्बुद्धिः क्षयमेत्यहो ! निधनता सर्वापदामास्पदम् ॥" [ १–१४ ]

( ५ ) "तपसा, मनसा, वाग्भिः पूजिताः बलिकर्मभिः ।
तुष्यन्ति शमिनां नित्यं देवताः किं विचारितैः ?" [ १–१६ ]

( ६ ) "न पुष्पमोषमर्हत्युद्यानलता ।"

( ७ ) "गुणः खल्वनुरागस्य कारणं, न पुनर्बलात्कारः ।"

(८) "मा दुर्गत इति परिभवो नास्ति कृतान्तस्य दुर्गतो नाम।
चरित्रेण विहीन आढ्योऽपि च दुर्गतो भवति ॥" [ १–४३ ]

(९) "यदा तु भाग्यक्षयपीडितां दशाम्, नरः कृतान्तोपहितां प्रपद्यते।
तदास्य मित्राण्यपि यान्त्यमित्रताम्, चिरानुरक्तोऽविरज्यते जनः ॥"[१–५३]

(१०) "न युक्तं परकलत्रदर्शनम्।"

(११) "पुरुषेषु न्यासा निक्षिप्यन्ते, न पुनर्गेहेषु।"

## [ द्वितीयोऽङ्कः ]

(१२) "दरिद्रपुरुषसंक्रान्तमनाः खलु गणिका लोकेऽवचनीया भवति।"

(१३) "किं हीनकुसुमं सहकारपादपं मधुकर्यः पुनः सेवन्ते ?"

(१४) "द्यूतं हि नाम पुरुषस्यासिंहासनं राज्यम्!"

(१५) "य आत्मबलं ज्ञात्वा भारं तुलितं वहति मनुष्यः।
तस्य स्खलनं न जायते न च कान्तारगतो विपद्यते ॥" [ २–१४ ]

(१६) "दुर्लभा गुणा विभवाश्च। अपेयेषु तडागेषु बहुतरमुदकं भवति।"

(१७) "सत्कारधनः खलु सज्जनकस्य न भवति चलाचलं धनम्?
यः पूजयितुमपि न जानाति स पूजाविशेषमपि जानाति ?" [ २–१५ ]

## [ तृतीयोऽङ्कः ]

(१८) "सुजनः खलु भृत्यानुकम्पकः स्वामी निर्धनकोऽपि शोभते।
पिशुनः पुनर्द्रव्यगर्वितो दुष्करः खलु परिणामदारुणः ॥" [ ३–१ ]

(१९) "सस्यलम्पटबलीवर्दो न शक्यो वारयितु–
मन्यप्रसक्तकलत्रं न शक्यं वारयितुम्।
द्यूतप्रसक्तमनुष्यो न शक्यो वारयितुम्,
योऽपि स्वाभाविकदोषो न शक्यो वारयितुम् ॥" [ ३–२ ]

(२०) "वीणा हि नामा समुद्रोत्थितं रत्नम्।"

(२१) "यज्ञोपवीतं हि नाम ब्राह्मणस्य महदुपकरणद्रव्यम्।"

(२२) "अनतिक्रमणीया भगवती गोकाम्या ब्राह्मणकाम्या च।"

(२३) "शङ्कनीया हि लोकेऽस्मिन् निष्प्रतापा दरिद्रता।" [ ३–२४ ]

(२४) "भगवन् कृतान्त! पुष्करपत्रपतितजलबिन्दुचञ्चलैः
क्रीडसि दरिद्रपुरुषभागधेयैः।"

(२५) "आत्मभाग्यक्षतद्रव्यः स्त्रीद्रव्येणानुकम्पितः ।
अर्थतः पुरुषो नारी या नारी सार्थतो पुमान् ॥" [ ३–२७ ]

[ चतुर्थोऽङ्कः ]

(२६) "आर्ये ! किं य एव जनो वेशे प्रतिवसति स
एवालोकदक्षिणो भवति ?"

(२७) "सखीजनचित्तानुवर्त्यबलाजनो भवति ।"

(२८) "स्वैर्दोषैर्भवति हि शङ्कितो मनुष्यः ।" [ ४–२ ]

(२९) "साहसे श्रीः प्रतिवसति ।"

(३०) "इह सर्वस्वफलिनः कुलपुत्रमहाद्रुमाः ।
निष्फलत्वमलं यान्ति वेश्याविहगभक्षिताः ॥" [ ४–१० ]

(३१) अयं च सुरताचालः कामाग्निः प्रणयेन्धनः ।
नराणां यत्र हूयन्ते यौवनानि धनानि च ॥" [ ४–११ ]

(३२) "अपण्डितास्ते पुरुषा मता मे, ये स्त्रीषु च श्रीषु च विश्वसन्ति ।
श्रियो हि कुर्वन्ति तथैव नार्यो, भुजङ्गकन्यापरिसर्पणानि ॥" [४–१२]

(३३) "स्त्रीषु न रागः कार्यो रक्तं पुरुषं स्त्रियः परिभवन्ति ।
रक्तैव हि रन्तव्या विरक्तभावा तु हातव्या ॥" [ ४–१३ ]

(३४) "एता हसन्ति च रुदन्ति च वित्तहेतो—
विश्वासयन्ति पुरुषं न च विश्वसन्ति ।
तस्मान्नरेण कुल-शील-समन्वितेन,
वेश्याः श्मशानसुमना इव वर्जनीयाः ॥" [ ४–१४ ]

(३५) "समुद्रवीचीव चलस्वभावाः, सन्ध्याभ्रलेखेव मुहूर्तरागाः ।
स्त्रियो हृतार्थाः पुरुषं निरर्थं निष्पीडितालक्तकवत्यजन्ति ॥" [ ४–१५ ]

(३६) "न पर्वताग्रे नलिनी पुरोहति न गर्दभा वाजिधुरं वहन्ति ।
यवाः प्रकीर्णा न भवन्ति शालयो न वेशजाताः शुचयस्तथाङ्गनाः ॥"
[ ४–१७ ]

(३७) "स्त्रियो हि नाम खल्वेता निसर्गादेव पण्डिताः ।
पुरुषाणां तु पाण्डित्यं शास्त्रैरेवोपदिश्यते ॥" [ ४–१९ ]

(३८) "न चन्द्रादातपो भवति ।"

(३९) "निशायां नष्टचन्द्रायां दुर्लभो मार्गदर्शकः ।" [ ४–२१ ]

(४०) "गुणेष्वेव हि कर्तव्यः प्रयत्नः पुरुषैः सदा ।
गुणयुक्तो दरिद्रोऽपि नेश्वरैरगुणैः समः ॥" [ ४–२२ ]

(४१) "गुणेषु यत्नः पुरुषेण कार्यो, न किञ्चिदप्राप्यतमं गुणानाम् ।
गुणप्रकर्षादुडुपेन शम्भोरलङ्घ्यमुल्लङ्घितमुत्तमाङ्गम् ॥" [ ४–२३ ]

(४२) "द्वयमिदमतीव लोके प्रियं नराणां सुहृच्च वनिता च ।" [ ४–२५ ]

(४३) "कथं हीनकुसुमादपि सहकारपादपान्मकरन्दबिन्दवो निपतन्ति ?"

## [ पञ्चमोऽङ्कः ]

(४४) अकन्दसमुत्थिता पद्मिनी, अवञ्चको वणिक्, अचौरः सुवर्णकारः, अकलहो ग्रामसमागमः, अलुब्धा गणिकेति दुष्करमेते सम्भाव्यन्ते ।"

(४५) "गणिका नाम पादुकान्तरप्रविष्टेव लेष्टुका दुःखेन पुनर्निराक्रियते ।"

(४६) "सर्वत्र यान्ति पुरुषस्य चलस्वभावाः ।
खिन्नास्ततो हृदयमेव पुनर्विशन्ति ॥" [ ५–८ ]

(४७) "कामो वामः ।"

(४८) "मेघा वर्षन्तु, गर्जन्तु, मुञ्चन्त्वशनिमेव वा ।
गणयन्ति न शीतोष्णं रमणाभिमुखाः स्त्रियः ॥" [ ५–१६ ]

(४९) "न शक्या हि स्त्रियो रोद्धुं प्रस्थिता दयितं प्रति ।" [ ५–३१ ]

(५०) "धनैर्वियुक्तस्य नरस्य लोके, किं जीवितेनादित एव तावत् ।
यस्य प्रतीकारनिरर्थकत्वात्, कोपप्रसादा विफलीभवन्ति ॥" [ ५–४० ]

(५१) "पक्षविकलश्च पक्षी, शुष्कश्च तरुः, सरश्च जलहीनम् ।
सर्पोद्धृतदंष्ट्रस्तुल्यं लोके दरिद्रश्च ॥" [ ५–४१ ]

(५२) "शून्यैर्गृहैः खलु समा पुरुषा दरिद्राः ।
कूपैश्च तोयरहितैस्तरुभिश्च शीर्णैः ।
यद्दृष्टपूर्वजनसङ्गम – विस्मृताना–
मेवं भवन्ति विफलाः परितोषकालाः ॥" [ ५–४२ ]

## [ षष्ठोऽङ्कः ]

(५३) "वरं व्यायच्छतो मृत्युर्न गृहीतस्य बन्धने ।" [ ६–१७ ]

(५४) "त्यजति तं किल जयश्रीर्जहति च मित्राणि बन्धुवर्गश्च ।
भवति च सदोपहास्यो यः खलु शरणागतं त्यजति ॥" [ ६-१८ ]

(५५) "भीताभयप्रदानं ददतः परोपकाररसिकस्य ।
यदि भवति भवतु नाशस्तथापि खलु लोके गुण एव ॥" [ ६-१९ ]

## [ सप्तमोऽङ्कः ]

(५६) "न कालमपेक्षते स्नेहः ।"

(५७) "स्वात्मापि विस्मर्यते !" [ ७-७ ]

## [ अष्टमोऽङ्कः ]

(५८) "विषमा इन्द्रियचौरा हरन्ति चिरसञ्चितं धर्मम् ।" [ ८-१ ]

(५९) "पञ्चजना येन मारिता अविद्यां मारयित्वा ग्रामो रक्षितः ।
अबलः क्व चण्डालो मारितोऽवश्यमपि स नरः स्वर्गं गाहते ॥" [ ८-२ ]

(६०) "शिरो मुण्डितं, तुण्डं मुण्डितं,
चित्तं न मुण्डितं किमर्थं मुण्डितम् !
यस्य पुनश्च चित्तं मुण्डितं
साधु सुष्ठु शिरस्तस्य मुण्डितम् ॥" [ ८-३ ]

(६१) "विपर्यस्तमनश्चेष्टैः शिलाशकलवर्ष्मभिः ।
मांसवृक्षैरियं मूर्खैर्भारा क्रान्ता वसुन्धरा ॥" [ ८-६ ]

(६२) "स्त्रीभिर्विमानितानां कापुरुषाणां विवर्धते मदनः ।
सत्पुरुषस्य स एव तु भवति मृदुर्नैव वा भवति ॥" [ ८-९ ]

(६३) "दुष्करं विषमौषधीकर्तुम् ।"

(६४) "अग्राह्या मूर्धजेष्वेताः स्त्रियो गुणसमन्विताः ।
न लताः पल्लवच्छेदमर्हन्त्युपवनोद्भवाः ॥" [ ८-२१ ]

(६५) "किं कुलेनोपदिष्टेन शीलमेवात्र कारणम् ।
भवन्ति सुतरां स्फीताः सुक्षेत्रे कण्टकिद्रुमाः ॥" [ ८-२६ ]

(६६) "विविक्तविश्रम्भरसो हि कामः ।" [ ८-३० ]

(६७) "सुचरितचरितं विशुद्धदेहं,
न हि कमलं मधुपाः परित्यजन्ति ॥" [ ८-३२ ]

(६८) "यत्नेन सेवितव्यः पुरुषः कुलशीलवान् दरिद्रोऽपि ।
शोभा हि पणस्त्रीणां सदृशजनसमाश्रयः कामः ॥" [ ८-३३ ]
(६९) "धिक् प्रीतिं परिभवकारिकामनार्याम् ।" [ ८-४१ ]
(७०) "हस्तसंयतो मुखसंयत इन्द्रियसंयतः स खलु मनुष्यः ।
किं करोति राजकुलं ? तस्य परलोको हस्ते निश्चलः ॥" [ ८-४७ ]

## [ नवमोऽङ्कः ]

(७१) न ह्याकृतिः सुसदृशं विजहाति वृत्तम् ।" [ ९-१६ ]
(७२) "यथैव पुष्पप्रथमे विकाशे, समेत्य पातुं मधुपाः भवन्ति ।
एवं मनुष्यस्य विपत्तिकाले छिद्रेष्वनर्था बहुली भवन्ति ॥" [ ९-२६ ]
(७३) "सत्येन सुखं खलु लभ्यते, सत्यालापे न भवति पातकम् ।
"सत्य"मिति द्वे अप्यक्षरे मा सत्यमलीकेन गूहय ॥" [ ९-३५ ]
(७४) "ईदृशे व्यवहाराग्नौ मन्त्रिभिः परिपातिताः ।
स्थाने खलु महीपाला गच्छन्ति कृपणां दशाम् ॥" [ ९-४० ]
(७५) "ईदृशैः श्वेतकाकीयै राज्ञः शासनदूषकैः ।
अपापानां सहस्राणि हन्यन्ते च हतानि च ॥" [ ९-४१ ]
(७६) "मूले छिन्ने कुतः पादपस्य पालनम् ?"
(७७) "नृणां लोकान्तरस्थानां देहप्रतिकृतिः सुतः ।" [ ९-४२ ]

## [ दशमोऽङ्कः ]

(७८) "सर्वः खलु भवति लोके लोकः सुखसंस्थितानां चिन्तायुक्तः ।
विनिपतितानां नराणां प्रियकारी दुर्लभो भवति ॥" [ १०-१५ ]
(७९) "अमौक्तिकमसुवर्णं ब्राह्मणानां विभूषणम् ।
देवतानां पितृणाञ्च भागो येन प्रदीयते ॥"
(८०) "अभ्युदयेऽवसाने तथैव रात्रिंदिवमहतमार्गा ।
उद्दामेव किशोरी नियतिः खलु प्रत्येषितुं याति ॥"
(८१) "राहुगृहीतोऽपि चन्द्रो न वन्दनीयो जनपदस्य ?"
(८२) "येऽभिभवन्ति साधुं ते पापास्ते च चाण्डालाः ।"
(८३) "इदं तत्स्नेहसर्वस्वं सममाढ्यदरिद्रयोः ।
अचन्दनमनौशीरं हृदयस्यानुलेपनम् ॥"

(८४) "हन्त ! ईदृशो दासभावः, यत्सत्यं कमपि न प्रत्याययति !"

(८५) "आर्यचारुदत्त ! गगनतले प्रतिवसन्तौ चन्द्रसूर्यावपि विपत्तिं लभेते, किम्पुनर्मरणभीरुका मानवा वा ? लोके कोऽप्युत्थितः पतति । कोऽपि पतितोऽप्युपतिष्ठते ।"

(८६) "अहो ! प्रभावो प्रियसङ्गमस्य,
मृतोऽपि को नाम पुनर्म्रियेत !"

(८७) "सर्वत्रार्जवं शोभते ।"

(८८) "शत्रुः कृतापराधः शरणमुपेत्य पादयोः पतितः ।
शस्त्रेण न हन्तव्यः, उपकारहतस्तु कर्तव्यः ॥"

(८९) "समीहितसिद्ध्यै प्रवृत्तेन ब्राह्मणोऽग्रे कर्तव्यः ।"

(९०) "अम्भोजिनी लोचनमुद्रणं किं भानावनस्तङ्गमिते करोति !"

(९१) "कांश्चित्तुच्छयति प्रपूरयति वा कांश्चिन्नयत्युन्नतिं,
कांश्चित्पातविधौ करोति च पुनः कांश्चिन्नयत्याकुलान् ।
अन्योन्यं प्रतिपक्षसंहतिमिमां लोकस्थितिं बोधय-
न्नेष क्रीडति कूपयन्त्रघटिकान्यायप्रसक्तो विधिः ॥"

## "मृच्छकटिक"स्थ-पात्राणां परिचयः ।

### पुरुषाः

| | |
|---|---|
| सूत्रधारः— | एतन्नामा प्रधाननटः । |
| चारुदत्तः— | नायकः । |
| मैत्रेयः— | विदूषकः । |
| वर्धमानकः— | चारुदत्तस्य सेवकः । |
| संस्थानकः<br>शकारः | राजश्यालकः । |
| विटः— | शकारस्य सहचरः । |
| स्थावरकः— | शकारस्य दासः । |
| आर्यकः— | गोपाल-दारकः । |
| शर्विलकः— | प्रसिद्धश्चौरः । |
| संवाहकः<br>भिक्षुः | चारुदत्तस्य पूर्व-परिचारकः, बौद्धभिक्षुश्च । |

चन्दनकः
वीरकः } प्रधानरक्षकौ ।

विटः— वसन्तसेनायाः परिचारकः ।

बन्धुलाः— गणिका-दारकाः ।

कुम्भीलकः— वसन्तसेनाया भृत्यः ।

चाण्डालौ— 'अवन्ती' नगरीस्थौ चाण्डालौ ।

माथुरः— सभिको द्यूतपतिः ।

द्यूतकरः
दर्दुरकः } द्यूतकरौ ।

कर्णपूरकः— वसन्तसेना-सेवकः ।

अधिकरणिकः— न्यायाधीशः ।

श्रेष्ठी— 'व्यवहार-प्रस्तोता' । [ "पेशकार" इति प्रसिद्धः । ]

कायस्थः— 'व्यवहार-लेखकः' ।

शोधनकः— न्यायालयस्य परिशोधकः ।

रोहसेनः— चारुदत्तस्य पुत्रः ।

( स्त्रियः )

"धूता"-
वधूः }— आर्यचारुदत्तस्य 'धर्मपत्नी' ( ब्राह्मणी ) ।

वसन्तसेना— नायिका ।

माता
वृद्धा } वसन्तसेनाया माता ।

मदनिका— वसन्तसेनायाः सेविका ।

रदनिका— चारुदत्तस्य परिचारिका ।

चेटी— वसन्तसेनायाः सेविका ।

**रङ्गेऽनुपस्थितानामत्र नामतो निर्दिष्टानां पात्राणां परिचयः ।**

पालकः— "अवन्ती"-नृपः ।

रेभिलः— सङ्गीताचार्यः ।

सिद्धः— "आर्यकस्य" राज्य-प्राप्त्युपदेशकः ।

❀ श्रीहरिः ❀

# मृच्छकटिकम्

## [ "श्री प्रियम्वदा"ख्य संस्कृत-हिन्दी-टीकोपेतम् ]

### प्रथमोऽङ्कः ।

**पर्यङ्कग्रन्थिबन्धद्विगुणितभुजगाश्लेषसंवीतजानो-**
**रन्तःप्राणावरोधव्युपरतसकलज्ञानरुद्धेन्द्रियस्य ।**

अथ टीकाकृन्मङ्गलम्—

भाले स्थिता हसति यस्य सपत्नभावाद्,
गङ्गाङ्कगां गिरिसुतामिव शुभ्रफेनैः ।
कामं प्रपूरयति यश्च तयोः सदैव,
तं शङ्करं शिवकरं सततं समीडे ॥

अथ तत्रभवान् महाकविः शूद्रकः "मृच्छकटिकं" नाम प्रकरणं चिकीर्षुरादौ मङ्गलरूपां नान्दीमवतारयति । तत्र भगवतः श्रीशशिशेखरस्य समाधिं वर्णयति— पर्यङ्केति । पर्यङ्कस्य = परितः अङ्कबन्धनात्मकासन–विशेषस्य, ग्रन्थेः बन्धाय द्विगुणितो = द्विगुणीकृतः, यो भुजगः = सर्पः, तस्य आश्लेषेण = वेष्टनेन, संवीते = संयते, जानुनी = ऊरुभागौ यस्य तस्य, अन्तः = हृदयाभ्यन्तरे, प्राणानां अवरोधेन = निरोधेन, व्युपरतं = विशेषरूपेण विश्रान्तम् यत् सकलं ज्ञानं, तेन हेतुना रुद्धानि = स्वविषयेभ्यो निरुद्धानि, इन्द्रियाणि यस्य तस्य, आत्मनि

नान्दी

"अङ्ग-संयमन-रूप आसन-विशेष के लिए दुहरे सर्पों के लिपटने से संयत घुटनों वाले तथा अन्दर ही अन्दर प्राणावरोध करने से ज्ञान के केन्द्रीभूत हो जाने

**आत्मन्यात्मानमेव व्यपगतकरणं पश्यतस्तत्त्वदृष्ट्या,**
**शम्भोर्वः पातु शून्येक्षणघटितलयब्रह्मलग्नः समाधिः ॥ १ ॥**

---

=स्वस्मिन् व्यपगतकरणं=शान्तेन्द्रियं यथा स्यात्तथा तत्त्वदृष्ट्या आत्मानं =परमेश्वरं, पश्यतः=ध्यायतः, शून्येन=संसरणरहितेन, ईक्षणेन=निराकार-स्यावलोकनेन, अथवा—शून्यस्य निर्गुणस्य परब्रह्मणो ध्यानेन, घटितः=सम्पादितः यो लयः=यल्लीनता तेन ब्रह्मणि लग्नः=संलग्नः शम्भोः=शिवस्य, समाधिः =चित्तवृत्तिनिरोधः, वः=युष्मान् सामाजिकान् , पातु=रक्षतु ।

---

के कारण शान्त इन्द्रियों वाले एवं अपने में स्वयं ही अन्तःदृष्टि से निराकार परमेश्वर के ध्यान से ब्रह्म में तल्लीन रहने वाले भगवान् शङ्कर की समाधि आप-लोगों ( सामाजिकों ) की रक्षा करे । ( आशय यह है—कि योगिजन समाधि के समय अपने घुटनों को बाँधा करते हैं इसीलिए भगवान् शङ्कर ने भी सर्पों से 'जानु संय-मन' तथा शून्य दृष्टि से शान्त भाव होकर मनोवृत्तियों पर निग्रह किया है । साथ ही—अन्तर्दृष्टि से उन्होंने इन्द्रियों को बाह्य-विषयों से सर्वथा रोक लिया है—इस प्रकार महामहिम शान्त शिव की समाधि आपका कल्याण करे ) ।" ॐ ॥ १ ॥

---

ॐ यहाँ हमारे मत में तो—भगवान् शङ्कर की समाधि वर्णन से—"वसन्त सेना" का समागम होने पर भी तत्वदृष्टि से संसार को शून्य देखने वाले तथा—"तावदहं समाधिं निर्वर्तयामि"

कहने वाले विरक्त "चारुदत्त" में पाप का लेश भी नहीं है" यह अर्थ अभिव्यक्त होता है ।

अथवा—

"निरपराध पर 'संयत-चरण' मृत्युदण्ड का अनुभव करने वाले "चारुदत्त" की भी शङ्कर जी ने रक्षा की" यह अर्थ निकलता है । ☐

अत्रेदं तत्त्वम्—समाधिसमये योगिनः केनापि योगपट्ट-संज्ञकेन दोरकेण स्वकीयमासनं स्थिरीकर्तुं जानु-संयमनं कुर्वन्ति, ततो भगवता शङ्करेणापि सर्पेणैव तथा जानु-संयमनं कृत्वाऽऽसनस्थिरता सम्पादिता। शून्यनेत्रदर्शनेन च सर्वथा शान्तभावेनात्मनि परमेश्वर-ध्यानं विधातुं समाहितमनसा चित्त-वृत्ति-निरोधो विहितः। अन्तर्दृशा तेन वाह्य-विषयेभ्य इन्द्रियाणि सम्यङ् निरुद्धानि। एवं-विधस्य शान्तात्मनः शिवस्य समाधिः सर्वेषां वः शिवाय स्तादिति भावः।

अत्र प्रकृतस्य राज्ञो न्याय-प्रक्रियारूप-वस्तुव्यञ्जनाऽपि जायते। शान्तचेतसो हि राजानो न्यायव्यवस्थां कर्तुं प्रभवन्ति, एकेन चान्यायदृशा चारुदत्तस्य वधः समाज्ञप्तः, तत्त्वदर्शिना च नवीनेनार्यकेण राज्ञा समुचितन्यायः कृतः, इति नाटकीयवस्तुनः प्रतीतिर्भवति।

अत्र कविनिष्ठा श्रीशङ्करविषयिणी रतिः प्रधानम्। समाधे रक्षणकर्तृत्वमसम्भवीति समाधिसम्पन्नो भगवान् रक्षां करोत्विति पर्यालोचनात् पर्यायोक्तोऽलङ्कारः, प्रकारान्तरेण प्रकृतार्थसूचनात्। तल्लक्षणं च यथा—

"पर्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते" इति।

आडम्बरबन्धत्वाद् गौडी रीतिः। "गौडी डम्बरबन्धा स्या"दिति तल्लक्षणात्। विकटबन्धात् ओजो गुणः। स्रग्धरा च्छन्दः। लक्षणं यथा—"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्।" इति। मगणस्य पूर्वं निवेशात् वर्णगणादिशुद्धिः, काव्यस्य श्रीप्राप्तिरूपञ्च फलं प्रदर्शितं कविना। "मोभूमिर्यंजल"—मिति साहित्य-सिद्धान्तात्।

वयन्तु—"शम्भोः समाधि-वर्णनेन समाधिनिष्ठस्य चारुदत्तस्य वसन्तसेना-समागमेऽपि तत्त्व-दृष्ट्या सर्वं शून्यं जगत् पश्यतो निर्लिप्तस्य पाप-सम्पर्क-लेशोऽपि

---

[] अथवा—

"शान्त-चित राजा ही न्याय कर सकते हैं। पहिले, "पालक" राजा ने अन्याय दृष्टि से "चारुदत्त" के वध का आदेश दिया परन्तु अभिनव नृपति "आर्यक" ने उचित न्याय किया" इस नाटकीय अर्थ का भी प्रतिपादन होता है।

अपि च,—

**पातु वो नीलकण्ठस्य कण्ठः श्यामाम्बुदोपमः ।**
**गौरीभुजलता यत्र विद्युल्लेखेव राजते ॥ २ ॥**

---

नास्तीति वस्तु व्यज्यते" इति विभावयामः । सहृदयानां हृदयमत्र प्रमाणम् । वक्ष्यति च चारुदत्तः—"भवतु, तिष्ठ, तावदहं समाधिं निर्वर्तयामि" इत्येतेन समाधि-निरतता चारुदत्तस्य स्फुटीभवत्येवेति ।

अथवा—मृत्युदण्डे निगडितचरणयुगलस्यापराधं विनापि तथाविधमनुचितं प्राणदण्डमनुभवतः श्रीचारुदत्तस्य समाधिनिष्ठेन भगवता रक्षा विहितेति काव्यानुकूलोऽप्यर्थो ध्वन्यते इति दिक् ॥ १ ॥

मंगलान्तरं रचयति—पातु वः, इति । भगवतः श्रीशङ्करस्य श्यामाम्बुदतुल्यः श्रीजगदम्बाया विद्युत्तुल्यभुज-सम्पर्कात् स-तडिन्मेघसमः कण्ठो युष्माकं रक्षां करोतु ।

अत्रापि वसन्तसेना-सम्प्राप्ति-समये चारुदत्त-वसन्तसेनयोस्तादृगवस्थोचित-परस्परकण्ठाश्लेषं वस्तु व्यज्यते ।

अत्र गौरी-भुजयोर्लतात्वारोपात् रूपकालङ्कारः, श्यामाम्बुदोपमः, इत्यत्र चोपमेति तयोः संसृष्टिः । रूपकलक्षणञ्च—

"रूपकं रूपितारोपाद् विषये निरपह्नवे ।" इति ।

उपमालक्षणञ्च यथा—

"साम्यं वाच्यमवैधर्म्यं वाक्यैक्ये उपमा द्वयोः ।" इति ।

---

"भगवान् शङ्कर का श्यामवर्ण-मेघ के समान कण्ठ आप लोगों की रक्षा करे, जिसमें श्री पार्वती जी की भुजलता विद्युत् की रेखा के समान सुशोभित होती है ।" ॥ २ ॥❀

---

❀ इससे—"वसन्तसेना के प्राप्त हो जाने पर वैसी अवस्था में उचित चारुदत्त और "वसन्तसेना" का समागम" भी ध्वनित होता है ।

( नान्द्यन्ते )

सूत्रधारः—अलमनेन परिषत्कुतूहलविमर्दकारिणा परिश्रमेण । एवं-

---

संसृष्टिश्च—"मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते" इति लक्षण-लक्षिता, तिलतण्डुलित-न्यायेनैकत्र द्वयोर्बहूनां वाऽलङ्काराणां सम्मिश्रणात् भवति। लाटी रीतिः।

"लाटी तु मृदुभिः पदैः" इति लक्षणात् । प्रसादो गुणः । तत्स्वरूपञ्च यथा—

चित्तं व्याप्नोति यः क्षिप्रं, शुष्केन्धनमिवानलः ।
स प्रसादः समस्तेषु रसेषु रचनासु च ॥ इति"

अनुष्टुप् च्छन्दः । तल्लक्षणं यथा—

"श्लोके षष्ठं गुरु ज्ञेयं, सर्वत्र लघु पञ्चमम् ।
द्वि-चतुष्पादयोर्ह्रस्वं, सप्तमं दीर्घमन्ययोः" इति ॥ २ ॥

नान्द्यन्ते सूत्रधार इति । नन्दयति=प्रसादयति । सामाजिकानां मनांसीति, नान्दी । तस्याः स्वरूपञ्च यथा साहित्यदर्पणे—

"आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते ।
देवद्विजनृपादीनां, तस्मान्नान्दीति कथ्यते ॥
पदैर्युक्ता द्वादशभिरष्टभिर्वा पदैरुत ॥"

इत्युक्तलक्षणानुरूपमस्मिन् प्रकरणेऽष्टपदा नान्दी । "पद" शब्देनात्र श्लोकपादो गृह्यते । द्वयोः श्लोकयोरष्टौ पादाः । एकस्मिन् पद्ये चत्वारः पादा भवन्तीति सिद्धान्तात् ।

सूत्रधारलक्षणञ्च—

"नाट्योपकरणादीनि "सूत्र"मित्यभिधीयते ।
सूत्रं धारयतीत्यर्थे सूत्रधारो निगद्यते ॥"

नाटकस्य प्रबन्धकः सूत्रधारो भवतीति निष्कर्षः ।

अलमिति । परिषीदन्ति, इति व्युत्पत्त्या पारिषद्यानां=प्रेक्षकाणां कुतूहलस्य

---

[ नान्दी के अनन्तर ]

सूत्रधार—दर्शकों की उत्सुकता के विघातक इस परिश्रम को बन्द करो ।

महमार्यमिश्रान् प्रणिपत्य विज्ञापयामि—यदिदं वयं मृच्छकटिकं नाम प्रकरणं प्रयोक्तुं व्यवसिताः। एत्कविः किल,—

---

=उत्कण्ठायाः विमर्द-कारिणा=विघ्नाधायकेन, अनेन परिश्रमेणालम्। इदानीमधिकाधिकनान्दीपाठप्रदर्शनेन नवीनवस्तु समालोकनार्थं समागतानां प्रेक्षकमहानुभावानामौत्सुक्य-विघातो नोचितः, इति भावः। आर्यमिश्रान्=सम्माननीयान् सामाजिकमहाभागान्, प्रणिपत्य=प्रणामं कृत्वा, विज्ञापयामि=निवेदयामि, यदधुना वयं "मृच्छकटिकं" नाम प्रकरणं प्रयोक्तुम्=अभिनेतुम्, व्यवसिताः =सुसज्जिताः।

"मृच्छकटिकम्" इति चारुदत्तपुत्रस्य क्रीडनार्थं मृदा निर्मिता शकटिका दत्ता, तस्यामेव च, रुदिते तस्मिन् बाले वसन्तसेनया स्वाङ्गेभ्योऽवतार्यालङ्कारा धृताः, "एभिः सौवर्णीं शकटिकां निर्मापये"त्युक्त्वा, अत एवैतस्यैतन्नाम कृतम्।

प्रकरणलक्षणञ्च यथा—साहित्यदर्पणे—

भवेत् प्रकरणे वृत्तं, लौकिकं कविकल्पितम्।
शृङ्गारोऽङ्गी नायकस्तु, विप्रोऽमात्योऽथवा वणिक्॥
सापाय-धर्म-कामार्थ-परो धीरप्रशान्तकः।
नायिका कुलजा क्वापि, वेश्या क्वापि द्वयं क्वचित्॥
तेन भेदास्त्रयस्तस्य तत्र भेदस्तृतीयकः।
कितव-द्यूतकारादि विटचेटक-सङ्कुलः ॥ इति ॥

इदं प्रकरणमपि नाटकप्रकृतिकत्वात् "रूपक"मेव। "तद्रूपारोपात्तु रूपक"मिति लक्षणात्। विटचेटादि-सङ्कुलत्वात् तृतीयो भेदोऽत्र ज्ञेयः। नायकश्च धीर-प्रशान्तश्चारुदत्तः। तल्लक्षणञ्चोक्तं दर्पणे—

"सामान्यगुणैर्भूयान्, द्विजादिको धीरशान्तः स्यात्" इति।

---

मैं सम्माननीयों की सेवा में नमस्कार पूर्वक निवेदन करता हूँ—कि हम "मृच्छकटिक" नामक प्रकरण का अभिनय करने के लिए उद्यत हैं। इसके रचयिता कवि—

**द्विरदेन्द्रगतिश्चकोरनेत्रः परिपूर्णेन्दुमुखः सुविग्रहश्च ।**
**द्विजमुख्यतमः कविर्बभूव प्रथितः शूद्रक इत्यगाधसत्त्वः ॥ ३ ॥**

---

धूता ( कुलजा ) वसन्तसेना ( वेश्या ) चात्र नायिके । शेषं नाटकलक्षणवद् बोद्धव्यम् । तल्लक्षणञ्च—

"नाटकं ख्यातवृत्तं स्यात्, पञ्चसन्धिसमन्वितम् ।
विलासद्ध्र्यादि गुणवद्, युक्तं नानाविभूतिभिः ॥
सुख–दुःखसमुद्भूति—नानारसनिरन्तरम् ।
पञ्चादिका दशपरास्तत्राङ्काः परिकीर्तिताः ॥
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् ।
दिव्योऽथ दिव्यादिव्यो वा, गुणवान् नायको मतः ॥
एक एव भवेदङ्गी श्रृङ्गारो वीर एव वा ।
अङ्गमन्ये रसाः सर्वे कार्ये निर्वहणेऽद्भुतम् ॥
चत्वारः पञ्च वा मुख्याः कार्यव्यापृतपूरुषाः ।
गोपुच्छाग्रसमाग्रन्तु बन्धनं तस्य कीर्तितम् ॥ इति ॥

सूत्रधारः कवेः परिचयं ददान आह—द्विरदेति । अत्र गद्योक्तं ( चूर्णकोक्तम् ) "एतत् कविः किलेति" समन्वेति । एतस्य प्रकरणस्य निर्माता कविः द्विरदेन्द्रस्य =द्वौ रदौ ( दन्तौ ) यस्य तस्य गजेन्द्रस्य गतिरिव गतिर्यस्य तादृशः चकोरस्य =रमणीये नेत्रे इव नेत्रे यस्य सः परिपूर्णचन्द्रतुल्यमुखः सुन्दरस्वस्थशरीरः अगाधबलवीर्यसम्पन्नः द्विजेषु=क्षत्रियेषु मुख्यतमः । "द्विज"शब्देन "त्रयो वर्णा द्विजातयः" इत्युक्तेः ब्राह्मण-क्षत्रिय-वैश्यास्त्रयोऽपि गृह्यन्ते । प्रथितः= प्रसिद्धः कविः=काव्यकलाकुशलो मनीषिः "शूद्रकः" इति नामा बभूवेति । बाह्याभ्यन्तरमनोहरस्य विज्ञस्य कवेः कृतिरपि तथाविधैव भविष्यतीति विज्ञै- र्विज्ञेयमिति कथनस्याशयः ॥

---

"मतङ्ग के समान गति, चकोर के समान नेत्र, पूर्ण चन्द्रमा के समान तथा सुन्दर स्वस्थ शरीर वाले एवं अतुलित बलशाली क्षत्रियश्रेष्ठ प्रसिद्ध कवि "शूद्रक" थे" ॥ ३ ॥

अपि च,—

**ऋग्वेदं सामवेदं गणितमथ कलां वैशिकिं हस्तिशिक्षां,**
**ज्ञात्वा शर्वप्रसादाद्व्यपगततिमिरे चक्षुषी चोपलभ्य ।**
**राजानं वीक्ष्य पुत्रं परमसमुदयेनाश्वमेधेन चेष्ट्वा,**
**लब्ध्वा चायुः शताब्दं दशदिनसहितं शूद्रकोऽग्निं प्रविष्टः ॥४॥**

---

और भी—

"ऋग्वेद, सामवेद, गणित, ( नृत्य-गायन आदि ) कलाओं में कुशल, वैशिकी तथा हस्तिशास्त्र की शिक्षा का ज्ञान तथा भगवान् शङ्कर के अनुग्रह से अज्ञानान्धकार-रहित नेत्रों को पाकर, अपने पुत्र को राज्य कार्य में दक्ष जान तथा बड़े उत्साह के साथ अश्वमेध यज्ञ कर सौ वर्ष तथा दस दिन की आयु पाकर 'शूद्रक' अग्नि में प्रविष्ट हो गये।" ❀ ॥ ४ ॥

---

❀कुछ लोगों का कथन है कि 'ग्रन्थकार की मृत्यु के अनन्तर यह श्लोक 'सूत्रधार' ने अपनी ओर से कहा है, क्योंकि कोई लेखक स्वयं अपनी मृत्यु का वृतान्त कैसे लिख सकता है !" परन्तु हमको यह मत मान्य नहीं। हम अपने मत ( 'शूद्रकोऽग्निं प्रविष्टः' ) की पुष्टि के लिए कुछ समाधान देते हैं—

( क ) गणितज्ञ होने के नाते 'शूद्रक' ने अपने "अग्नि-प्रवेश" के विषय में जान लिया होगा।

अथवा—( ख ) "सर्वस्वार" नामक यज्ञ में 'अग्नि-प्रवेश' शास्त्र-सम्मत है। ( उन्होंने 'सर्वस्वार' यज्ञ का निश्चय किया होगा, जिसकी समाप्ति का दिन यही जानकर ग्रन्थकार ने ऐसा लिख दिया )।

अथवा—( ग ) हमारे मत में तो—

"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन !" इस भगवद् वाक्य के अनुसार 'अग्नि' का अर्थ यहाँ "ज्ञानाग्नि" है, जिसके अनुसार "ज्ञानाग्नि-प्रवेश" ( अर्थात्—ब्रह्मानन्द की अनुभूति ) यह भाव सूचित होता है।

अपि च,—

**समरव्यसनी प्रमादशून्यः ककुदं वेदविदां तपोधनश्च ।**

---

अत्रोपमालङ्कारः । माधुर्यं गुणः । वैदर्भी रीतिः । मालभारिणी च्छन्दः । तल्लक्षणं यथा—

"विषमे ससजा यदा गुरू चेत् सभरा येन तु मालभारिणीयम् ॥ इति ॥३॥

कवेः शिक्षादिकं वर्णयितुमुपक्रमते—ऋग्वेदमिति । अस्य कविः ऋग्वेदादिपण्डितः, गणितशास्त्रसम्पादितदैवज्ञभावः, चतुःषष्टि–( काव्यानुकूलाः ) कलाकुशलः, वैशिकीं ( वेश्याजन-सम्बद्धां ) अथवा वेशः = अग्निवेशो नामा कश्चिन्नृपस्तन्निर्मितां शिक्षामधिजग्मिवान्, हस्तिलक्षणाभिज्ञः, सन् भगवतः शङ्करस्यानुग्रहेणाज्ञानतिमिरशून्ये लोचने समधिगत्य, स्वात्मजञ्च राज्यकार्यसम्पादनदक्षं विदित्त्वा, महता समुदयेन = सम्पदुद्योगशक्ति–समृद्धेनाश्वमेधेन भगवन्तं सर्व-जगन्नाथं समभ्यर्च्य, दशदिनाधिक-शतवर्षमायुरुपलभ्यान्तेऽग्निं प्रविष्टः । अग्नि-प्रवेशोऽपि गणित-शास्त्रबलात् स्वयं ज्ञातः । "सर्वस्वार"—संज्ञके यज्ञे चाग्निप्रवेशः शास्त्रसम्मतः । तेन प्रकरणे सूत्रधार-मुखादिदं कथनं न दुष्यति । अथवा—"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन !" इति भगवदुक्तिमनुसृत्य "अग्नि"पदेनात्र ज्ञानाग्नि–प्रवेशः = ( ब्रह्मानन्दानुभूतिः ) = सूचितः । इति तु वयम् । यत्तु केचित्—ग्रन्थनिर्माणानन्तरं सूत्रधारेणेदं वचनं स्वयमुक्तमिति स्वचञ्चुचापल्यचतुराश्चिन्वन्ति,तत्तु सर्वथा शास्त्रमहिमानभिज्ञत्वविजृम्भणमात्रमेव तेषाम् ।

अत्र काव्यत्वोचितस्वरूपाभावान्नालङ्कारादि चर्चौचिता । स्रग्धरा छन्दः । लक्षणमुक्तं प्राक् ॥ ४ ॥

पुनरपि शूद्रकं वर्णयति सूत्रधारः—समरव्यसनीति । शूद्रको नृपः समराङ्गणप्रचारचतुरः, सर्वथा सर्वेषु कार्येषु प्रमादरहितः, वेदज्ञेषु ककुदः = श्रेष्ठः

---

और भी—

"शूद्रक" युद्ध-प्रिय, आलस्य-रहित, वेदज्ञों में श्रेष्ठ, तपस्वी तथा शत्रुओं को

**परवारणबाहुयुद्धलुब्धः क्षितिपालः किल शूद्रको बभूव ॥५॥**

अस्यां च तत्कृतौ,--

**अवन्तिपुर्यां द्विजसार्थवाहो युवा दरिद्रः किल चारुदत्तः ।**
**गुणानुरक्ता गणिका च यस्य वसन्तशोभेव वसन्तसेना ॥६॥**
**तयोरिदं सत्सुरतोत्सवाश्रयं नयप्रचारं व्यवहारदुष्टताम् ।**

---

[ प्राधान्ये राजलिंगे च वृषाङ्के ककुदोऽस्त्रियामित्यमरः । ] तपस्वी, परेषां = शत्रूणां वारणरूपे बाहुयुद्धे प्रसक्तः पृथिव्याः पालने दत्तचित्तो बभूवेति सारः ।

अनेनास्य राज्ञः सर्वगुणशालित्वरूपं वस्तु व्यज्यते । मालभारिणी च्छन्दः । लक्षणं पूर्वमुक्तम् ॥ ५ ॥

अस्मिन् प्रकरणे कविः किं वर्णितवानित्याशयेनाह—अवन्तीति । उज्जयिनी-नगरे द्विजश्रेष्ठः कश्चित् पूर्वधनिको युवकः "चारुदत्त"नामा प्रतिवसति स्म । यस्य गुणैरनुरक्ता वसन्तस्य शोभेवातिसुन्दरी "वसन्त-सेना" वेश्या चाप्यासीत्तत्रैव ॥ अत्रोपमालङ्कारः । लाटी रीतिः । प्रसादो गुणः । उपेन्द्रवज्रा च्छन्दः । तल्लक्षणं यथा—

"उपेन्द्रवज्रा जतजास्ततो गौ" इति ॥ ६ ॥

अधुना काव्य-विषयं संक्षेपतो निर्वक्ति—तयोरिति । अस्मिन् प्रकरणे शूद्रको नृपः किं-किं वर्णितवान् ? इति जिज्ञासायामाह—तयोरुभयोरपि पूर्वोक्तयोरार्यचारु-दत्त-वसन्तसेनयोः श्रेष्ठ-सुरत-सम्बन्धम्, नीति-रीति-प्रचारम्, तदानीन्तनस्य व्यवहा-

---

पीछे हटाने वाले बाहुयुद्ध के इच्छुक राजा थे ।" ॥ ५ ॥

और उनकी इस कृति में—

"उज्जयिनी नगरी में पहिला धनी, परन्तु सम्प्रति दरिद्र, द्विजश्रेष्ठ "चारुदत्त" रहता था, जिसके गुणों से अनुरक्त—वसन्त की शोभा के समान "वसन्त सेना" भी ( वहाँ थी )" ॥ ६ ॥

"उन दोनों का—अच्छे समागम, नीति का प्रचार, तात्कालिक अधिकारियों का दुर्व्यवहार, दुष्टों का स्वभाव तथा भवितव्यता ( होनहार ) का प्राबल्य—यह

**खलस्वभावं भवितव्यतां तथा चकार सर्वं किल शूद्रको नृपः ॥७॥**

( परिक्रम्यावलोक्य च ) अये, शून्येयमस्मत्संगीतशाला, क नु गताः कुशीलवा भविष्यन्ति । ( विचिन्त्य ) आं, ज्ञातम् ;

**शून्यमपुत्रस्य गृहं चिरशून्यं नास्ति यस्य सन्मित्रम् ।**
**मूर्खस्य दिशः शून्याः सर्वं शून्यं दरिद्रस्य ॥ ८ ॥**

---

रस्य दुष्टताम् = राज्ञां नयविदाञ्चासमीक्ष्यकारिताम्, खलानां स्वभावं, तथा भवितव्यताञ्चेत्यादिकं काव्य-शैल्या निबबन्ध । कविरसौ स्वसमाजस्य सर्वमपि चरित्रं, शोभनमशोभनं वा कविताञ्चले प्राञ्जलिरूपेण परमेण बुद्धिचातुर्येण नियोजितवान् । अत्र स्वभावोक्तिरलङ्कारः । तल्लक्षणं यथा—

"स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम्," इति । वंशस्थं च्छन्दः । तल्लक्षणं यथा—"जतौ तु वंशस्थमुदीरितं जरौ ।" इति ॥ ७ ॥

अये—इति । अस्माकमियं संगीतशाला शून्या वर्तते । किं कारणम् ? संगीतशालायां कार्यकर्तारः कुशीलवाः = नटाः कुत्र गता भविष्यन्ति ? किंचिद् विचार्य कथयति—"आं ज्ञातम् = अहो ! ज्ञातवानस्मि, सर्वमपि वृत्तजातम् ! यतः—

अन्यत् कारणमहं न पश्यामि, केवलं मम दारिद्र्यहेतोरेव ते नटाः क्वचिद्गता भवेयुः । अहो ! धिगिदं दरिद्रत्वम्, इति निरूपयति—शून्यमिति । अपुत्रस्य = पुत्ररहितस्य गृहं शून्यम्, गृहस्य शोभा पुत्रेणैव भवति, इति भावः । यस्य साधुः

---

सब कुछ "शूद्रक" ने उपनिबद्ध कर दिया है ।" ॥ ७ ॥

( घूमकर देखते हुए ) ओह ! हमारी संगीतशाला शून्य है ! नट कहाँ गए होंगे । ( सोचकर ) हाँ जाना ।

"पुत्ररहित का घर शून्य है, जिसके कोई मित्र नहीं विशेषतः उसका घर नितान्त शून्य है, मूर्ख के लिए दशों दिशाएँ शून्य हैं, परन्तु दरिद्र के लिए तो सब-कुछ सूना है । ( यही कारण है कि मेरे नट मुझे निर्धन समझकर स्वेच्छापूर्वक विचरण करते हैं । ) ॥ ८ ॥

कृतं च संगीतकं मया। अनेन चिरसंगीतोपासनेन ग्रीष्मसमये प्रचण्ड-दिनकरकिरणोच्छुष्कपुष्करबीजमिव प्रचलिततारके क्षुधा ममाक्षिणी खटखटायेते। तद्यावद्गृहिणीमाहूय पृच्छामि, अस्ति किंचित्प्रातराशो न

---

-सुहृन्नास्ति, तस्य गृहन्तु वस्तुतश्चिर-शून्यमस्ति। मूर्खस्य च जनस्य तु दिशः सर्वा अपि शून्या एव सन्ति, न च कोऽपि तस्यादरं करोति। दरिद्रस्य च मानवस्य सर्वमपि सर्वदा शून्यमेवास्ते। ततो ममाधन्यस्य दरिद्रतयैव निर्भीका इतस्ततः प्रसरन्ति सर्वेऽपि कार्यकर्तारः, किं मया विधेयम्? इति भावः। अत्राप्रस्तुत–प्रशंसा, दीपकालङ्कारौ लक्षणञ्च क्रमशो ज्ञेयम्।

"क्वचिद्विशेषः सामान्यात्, सामान्यं वा विशेषतः।
कार्यान्निमित्तं, कार्यञ्च हेतोरथ समात् समम्॥
अप्रस्तुतात् प्रस्तुतञ्चेद्गम्यते पञ्चधा ततः।
अप्रस्तुप्रशंसा स्यात्।" इति।

"अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते।
अथ कारकमेकं स्यादनेकासु क्रियासु चेत्॥ इति।

प्रसादो गुणः। लाटी रीतिः। आर्या च्छन्दः। तल्लक्षणञ्च यथा—

"यस्याः पादे प्रथमे, द्वादशमात्रास्तथा तृतीयेऽपि।
अष्टादशद्वितीये, चतुर्थके पञ्चदश साऽऽर्या॥" इति॥८॥

अनेनेति। मया बहुकालं यावत् संगीतस्याभ्यासः कृतः। अनेन संगीत-स्योपासनेन क्षुधा=बुभुक्षया प्रचलिते=प्रकर्षेण स्वस्थानाद् बहिर्गन्तुमुद्यते इव तारके=कनीनिके ययोस्ते तथाभूते ममाक्षिणी=लोचने, ग्रीष्मकाले प्रचण्डस्यातितीक्ष्णस्य दिनकरस्य=सूर्यस्य किरणैः=मरीचिभिः उच्छुष्कं=अत्य-

---

मैंने गान-वाद्य कर लिया। संगीत का बहुत देर तक अभ्यास करने के कारण भूख से जिनकी पुतलियाँ बाहर को निकल पड़ती हैं ऐसी मेरी आँखें ग्रीष्म ऋतु में सूर्य की प्रचण्ड किरणों के द्वारा सुखाये गये कमल के बीज की भाँति खट-खटा रही हैं। इसलिए गृहिणी को बुलाकर पूछता हूँ, कि कुछ प्रातराश ( कलेवा ) है

वेति। एषोऽस्मि भोः, कार्यवशात् प्रयोगवशाच्च प्राकृतभाषी संवृत्तः। अविद अविद भोः! चिरसंगीदोवासणेण सुक्खपोक्खरणालाईं विअ मे बुभुक्खाए मिलाणाइं अंगाइं। ता जाव गेहं गदुअ जाणामि, अत्थि किं पि कुडुंबिणीए उववादिदं ण वेत्ति। ( परिक्रम्यावलोक्य च ) एदं तं अम्हाणं गेहं, ता पविसामि। ( प्रविश्यावलोक्य च ) हीमाणहे, किं णु खु अम्हाणं गेहे अवरं विअ संविहाणअं वट्टदि। आआमि-तंडुलोदअप्पवाहा रच्छा, लोहकडाहपरिअत्तणकसणसारा किदविसेसआ विअ जुअदी अहिअदरं सोहदि भूमी। सिणिद्धगंघेण उद्दीविअंती विअ अधिअं बाधेदि मं बुभुक्खा। ता किं पुव्वविढत्तं णिहाणं उप्पण्णं भवे। आदु अहं ज्जेव्व बुभुक्खादो ओदाणमअं जीअलोअं पेक्खामि। णत्थि किल पादरासो अम्हाणं गेहे। पाणच्चअं बाधेदि मं बुभुक्खा। इध सव्वं णवं विअ संविहाणं वट्टदि। एक्का वण्णअं पीसेदि, अवरा सुमणाओ गुंफेदि। ( विचिन्त्य ) किं ण्णेदं। भोदु कुडुंबिणिं सद्दाविअ परमत्थं जाणिस्सं

---

धिकशुष्कं पुष्करस्य = कमलस्य बीजमिव, खटखटायेते = खट-खटेति ध्वनिङ्कुरुतः। यथा शुष्कं कमलबीजं करे कृत्वा सञ्चालितं सदतिमात्रं खट-खटशब्दं करोति, तथैव बुभुक्षया मम नेत्रे अपि ध्वनिं कुरुत इति भावः। अतिसंगीतश्रमेण क्षुधितोऽस्मीति निष्कर्षः। प्रातराशः = प्रातर्भोजनम्। कार्यवशात् प्रयोगवशाच्च मयेदानीं संस्कृतभाषां परित्यज्य प्राकृतभाषिणा भूयते। शुष्कपुष्करस्य = कमलस्य नालानीव ममाङ्गानि म्लानिं भजमानानि सन्ति। [ अत्र "अविद-अविद" इति निर्वेदसूचकोऽव्ययः। "हीमाणहे" इति च विस्मयबोधकं पदमिति ध्येयम्। ] संविधानकम् = कार्यारम्भोद्योगः। आयामो = दैर्घ्यम्, आयामी = दीर्घः, तण्डुलानामुदकप्रवाहो धौत-तण्डुलजलं यस्यां तादृशी रथ्या

---

या नहीं। मैं अब कार्य एवं प्रयोगवश प्राकृतभाषी हो गया हूँ। अरे! अरे! बहुत देर से संगीत का अभ्यास करने से मेरे अङ्ग सूखे कमल नाल के समान कुम्हला गये हैं। तो मैं जाकर पता लगाता हूँ कि गृहिणी ने कुछ बनाया है या

( नेपथ्याभिमुखमवलोक्य । ) अज्जे ! इदो दाव । [ अविद, अविद भोः ! चिरसंगीतोपासनेन शुष्कपुष्करनालानीव मे बुभुक्षया म्लानान्यङ्गानि । तद्यावद्गृहं गत्वा जानामि, अस्ति किमपि कुटुम्बिन्या उपपादितं न वेति । इदं तदस्माकं गृहम्, तत्प्रविशामि । आश्चर्यम् । किं नु खल्वस्माकं गृहेऽपरमिव संविधानकं वर्तते । आयामितण्डुलोदकप्रवाहा रथ्या लोहकटाहपरिवर्तनकृष्णसारा कृतविशेषकेव युवत्यधिकतरं शोभते भूमिः । स्निग्धगन्धेनोद्दीप्यमानेवाधिकं बाधते मां बुभुक्षा । तत्किं पूर्वार्जितं निधानमुत्पन्नं भवेत् । अथवाऽहमेव बुभुक्षात ओदनमयं जीवलोकं पश्यामि । नास्ति किल प्रातराशोऽस्माकं गृहे । प्राणाधिकं बाधते मां बुभुक्षा । इह सर्वं नवमिव संविधानकं वर्तते । एका वर्णकं पिनष्टि, अपरा सुमनसो ग्रथ्नाति । किन्त्विदम् । भवतु, कुटुम्बिनीं शब्दाय्य परमार्थं ज्ञास्यामि । आर्ये ! इतस्तावत् । ]

---

=प्रतोली वर्तते । लौहकटाहकषणेन कृष्णसारा विचित्रा, कृतः=सम्पादितो विशेषकः=तिलक-रचना यया तथाविधा युवतीव विशेषरूपेण शोभते भूमी । निधानम्=कोषः । वर्णकम्=कस्तूर्यादि सामग्रीजातम् । सुमनसः=

---

नहीं । ( घूम तथा देखकर ) यह हमारा घर है इसलिए प्रवेश करता हूँ । ( प्रविष्ट हो देखकर ) आश्चर्य है ! कि हमारे यहाँ दूसरे ही प्रकार का क्रिया-कलाप हो रहा है । चावलों का पानी ( माँड ) दूर तक बह रहा है, लोहे की कड़ाही के माँजने से काले-काले पानी से भूमि तिलकरचना से सुशोभित तरुणी के समान सुशोभित हो रही है । (भोजन के) स्निग्ध गन्ध से प्रदीप्त होकर भूख मुझको और भी पीड़ित कर रही है । अतः क्या कोई पूर्व-सञ्चित कोष मिल गया है अथवा क्षुधार्त मैं ही सम्पूर्ण जगत् को अन्नमय देख रहा हूँ । हमारे घर कलेवा करने के लिए कुछ नहीं है और क्षुधा मुझे अत्यधिक पीड़ित कर रही है । यहाँ नये ही ठाठ हैं । कोई सुगन्धित द्रव्य पीस रही है और कोई फूल गूँथ रही है । ( सोचकर ) यह क्या है ? अस्तु; गृहिणी को बुलाकर वास्तविक बात का पता लगाता हूँ । ( नेपथ्य की ओर देखकर ) आर्ये ! जरा इधर आओ !

नटी—( प्रविश्य । ) अज्ज ! इअं म्हि । [ आर्य ! इयमस्मि । )

सूत्रधारः—अज्जे ! साअदं दे । [ आर्ये ! स्वागतं ते । ]

नटी—आणवेदु अज्जो को णिओओ अणुचिट्ठीअदु त्ति । [ आज्ञापयत्वार्यः को नियोगोऽनुष्ठीयतामिति । ]

सूत्रधारः—अज्जे ! ( 'चिरसंगीदोवासणेण' इत्यादि पठित्वा । ) अत्थि किं पि अम्हाणं गेहे असिदव्वं ण वेत्ति । [ आर्ये ! अस्ति किमप्यस्माकं गेहेऽशितव्यं न वेति ।

नटी—अज्ज ! सव्वं अत्थि । [ आर्य ! सर्वमस्ति । ]

सूत्रधारः—किं किं अत्थि ? । [ किं किमस्ति ? । ]

नटी—तं जधा—गुडोदणं घिअं दहीं तंडुलाइं, अज्जेण अत्तव्वं

---

पुष्पाणि । शब्दाप्य=आहूय । परमार्थम्=वास्तविकमर्थम् । नेपथ्यम्=यत्र नटाः सुसज्जिताः सन्तो रूपपरिवर्तनादिकं कुर्वन्ति, तत् स्थानम् "नेपथ्य"मुच्यते नाटकीयभाषायाम् । "आर्ये!" इति नटीसम्बोधनम् । "वाच्यौ नटी-सूत्रधारावार्यनाम्ना परस्परम् ।" इति सिद्धान्तादुभयोरपि "आर्ये !", इति, "आर्य !" इति च सम्बुद्धिपदे युक्ते ।

आज्ञापयतु–इति । आज्ञाप्रदानेनानुग्राह्योऽयं जनः, को नियोगः=आज्ञा, अनुष्ठीयताम्=मया पाल्यताम् ? नटी परिहासपूर्वकं सन्दिग्धवचनमुच्चारयति—

---

नटी—( प्रवेश कर ) आर्य ! उपस्थित हूँ !

सूत्रधार—आर्ये ! तुम्हारा स्वागत है !

नटी—आर्य ! आज्ञा दें, किस आदेश का पालन किया जाय !

सूत्रधार—आर्ये ! ( 'चिरसंगीतोबासणेण' आदि पढ़कर ) हमारे घर में कुछ भोक्तव्य पदार्थ है या नहीं ?

नटी—आर्य ! सब कुछ है ।

सूत्रधार—क्या-क्या है ?

नटी—उदाहरणार्थ—गुड, भात, घृत, दही तथा चावल आदि आपका

रसाअणं सव्वं अत्थि त्ति । 'एवं ते देवा आसासेंतु [ तद्यथा—गुडौदनं घृतं दधि तण्डुलाः, आर्येणात्तव्यं रसायनं सर्वमस्तीति । एवं तव देवा आशासन्ताम् । ]

सूत्रधारः—किं अम्हाणं गेहे सव्वं अत्थि ? आदु परिहससि ? । [ किमस्माकं गेहे सर्वमस्ति ? अथवा परिहससि ? । ]

नटी—( स्वगतम् ) परिहसिस्सं दाव । ( प्रकाशम् ) अज्ज ! अत्थि आवणे । [ परिहसिष्यामि तावत् । आर्य ! अस्त्यापणे । ]

सूत्रधारः—( सक्रोधम् ) आः, अणज्जे ! एव्वं ते आसा छिज्जिस्सदि । अभावं अ गमिस्ससि । जं दाणि अहं वरंडलंबुओ विअ दूरं उक्खिविअ पाडिदो । [ आः अनार्ये ! एवं तवाशा छेत्स्यति । अभावं च गमिष्यसि । यदिदानीमहं वरण्डलम्बुक इव दूरमुत्क्षिप्य पातितः । ]

---

एवं ते—इति । आर्येण भोक्तव्यं घृत-गुडादिकं सर्वमस्त्विति ते देवा आशासन्ताम् =प्रार्थ्याः । देवानां प्रार्थनया सर्वं लप्स्यते, इति विद्यमानोऽपि गुडादि-पदार्थो देवानां प्रार्थनया लभ्यः, इति परिहासः ।

सूत्रधारः स्वपत्न्याः परिहास-पेशलमपि वचनं निशम्य तथाऽसंविदानः सक्रोधमाह—आः अनार्ये ! इति । अनार्ये ! एवं कथनेन तवाशा विच्छिन्ना भविष्यति, सर्वथाऽभाव एव सर्वेषां पदार्थानां तव गेहे भविष्यति, यतस्त्वयाऽहं वरण्डलम्बुक

---

भोक्तव्य सब कुछ है । इसलिए देवताओं की अभ्यर्थना करनी चाहिए ।

सूत्रधार—क्या हमारे घर सब कुछ है ? या परिहास कर रही हो ?

नटी—( स्वागत ) तो परिहास करूँगी । ( प्रकाश में ) आर्य ! बाजार में है ।

सूत्रधार—( सक्रोध ) ऐ अनार्ये ! इस प्रकार तेरी आशाएं नष्ट हो जायँगी तथा तेरे घर सब कुछ अभाव ही रहेगा । क्योंकि तूने 'वरण्ड लम्बुक' ( ढेंकली ) की भाँति मुझे एकदम आशाओं से दूर गिरा दिया । (अर्थात्:—जिस प्रकार जल लेने के अनन्तर ढेंकली का पत्थर या मिट्टी वाला भाग नीचे डाल दिया जाता है वैसे ही तूने मेरी आशाओं को इतना ऊँचाकर एकपदे एव उनका विघात कर दिया है । )

नटी—मरिसेदु मरिसेदु अज्जो, परिहासो खु एसो । [ मर्षतु मर्षत्वार्यः, परिहासः खल्वेषः । ]

सूत्रधारः—ता किं उण इमं णवं विअ संविहाणअं वट्टदि ? । एक्का वण्णअं पीसेदि, अवरा सुमणाओ गुंफेदि, इअं अ पंचवण्णकुसुमोवहार-सोहिदा भूमी । [ तत्किं पुनरिदं नवमिव संविधानकं वर्तते ? । एका वर्णकं पिनष्टि, अपरा सुमनसो गुम्फति, इयं च पञ्चवर्णकुसुमोपहारशोभिता भूमिः । ]

नटी—अज्ज ! उववासो गहिदो । [ आर्य ! उपवासो गृहीतः । ]

सूत्रधारः—किंणामधेओ अअं उववासो ? । [ किंनामधेयोऽयमुप-वासः ? । ]

---

इव सुदूरमुत्क्षिप्य पुनर्निपातितः । केचित् कर्षकाः कूपादिभ्यो जलं गृहीतुमेकस्मिन् लम्बमाने महति कोष्ठ उदञ्चनं ( "डोल"-संज्ञकं पात्रम् ) बद्ध्वा जलसेकं क्षेत्रेषु कुर्वन्ति, तस्य काष्ठस्य पृष्ठभागे च भारयुक्तो मृण्मयखण्डः पाषाणशकलं वा बंध्यते, जलादानसमये चोर्ध्वमुत्क्षिप्तः समृण्मययुक्तोऽन्तिमो भागो गृहीते जले पुनर्वेगेन परिक्षिप्यते "स वरण्डलम्बुकः" इत्युच्यते । हिन्दीभाषायां च "ढेकली" इति कथ्यते । यथाऽसौ भागः उत्क्षिप्य निक्षिप्यते, तथैवाहमपि त्वया साशवचनेन समाश्वासितोऽपि निराकृतः । इति भावः ।

अथवा पक्वेष्टकचिते गृहे "ढूला"—संज्ञको भागस्तत्कर्मकरैर्निबध्यते, पश्चाच्च परिक्षिप्यते, स एव "वरण्डलम्बुकः" इत्यपि केषाञ्चित्सम्मतम् ।

सक्रोधं सूत्रधारं ज्ञात्वाऽपराधक्षमापनार्थं निवेदयति—मर्षतु—इति । आर्य ! मया परिहासः कृतः । ततो, ममापराधः क्षम्यताम् । मर्षणीयोऽयं जन इति भावः ।

---

नटी—आर्य क्षमा करें ! यह परिहास है ।

सूत्रधार—तो फिर किसलिए यह नयी व्यवस्था हो रही है कि कोई सुगन्धित पदार्थ पीसती है और कोई माला गूँथती है । तथा यह भूमि रंग-बिरङ्गे पुष्पों से शोभित क्यों है ?

नटी—आज उपवास ग्रहण किया है ।

सूत्रधार—इस उपवास का क्या नाम है ?

नटी—अहिरूअवदी णाम । [ अभिरूपपतिर्नाम । ]

सूत्रधारः—अज्जे ! इहलोइओ आदु पारलोइओ ? । [ आर्ये ! इहलौकिकोऽथवा पारलौकिकः ? । ]

नटी—अज्ज ! पारलोइओ । [ आर्य ! पारलौकिकः । ]

सूत्रधारः—( सरोषम् । ) पेक्खंतु पेक्खंतु अज्जमिस्सा, ममकेरकेण भत्तपरिव्वएण पारलोइओ भत्ता अण्णेसीअदि । [ प्रेक्षन्तां प्रेक्षन्तामार्यमिश्राः, ! मदीयेन भक्तपरिव्ययेन पारलौकिको भर्तान्विष्यते । ]

नटी—अज्ज ! पसीद पसीद । तुमं ज्जेव्व जम्मंतरे वि भविस्ससि त्ति उववसिदम्हि । [ आर्य ! प्रसीद प्रसीद । त्वमेव जन्मान्तरेऽपि भविष्यसीत्युपोषिताऽस्मि । ]

---

पारलौकिकं भर्तारमुद्दिश्याद्य मयोपवासः कृतः, इति नटी-वचनं श्रुत्वा सूत्रधारः सक्रोधमाह—प्रेक्षन्तामिति । महानुभावाः ! अवलोकयन्तु भवन्तः—मदीयेन भक्तस्य = ओदनादेरन्नस्य व्ययेन पारलौकिको भर्ताऽन्विष्यतेऽनयेति भावः ।

अत्र भर्तृपरिवर्तनेन राज्ञः पालकस्य परित्यागोऽपि सूच्यते नवीनस्यार्यकस्य नृपतेः सम्प्राप्तिश्च ।

---

नटी—इसका 'अभिरूपवति' नाम है । ( इसका प्रयोजन अपने अनुकुल भर्ता प्राप्त करना है । )

सूत्रधार—आर्ये ! यह ऐहिलौकिक है या पारलौकिक ?

नटी—आर्य । पारलौकिक ।

सूत्रधार—( रोष के साथ ) आर्यगण ! आप देखें । मेरा भात आदि व्यय कर पारलौकिक पति ढूँढा जा रहा है । अर्थात्—धन मेरा व्यय करती है और ढूँढ रही है * पारलौकिक भर्ता को । )

नटी—आर्य ! प्रसन्न हों ! 'दूसरे जन्म में आप ही मेरे पति हों' ( इसलिए यह व्रत कर रही हूं । )

---

*यहाँ—"स्वामी के परिवर्तन" से राजा "पालक" का परित्याग तथा नवीन नृपति "आर्यक" का प्रतिष्ठा पाना" इस नाटकीय सूत्रधार की भी पुष्टि होती है । कर रही हूं । )

सूत्रधारः—अध अअं उववासो केण दे उवदिट्ठो ? । [ अथायमुपवासः केन तवोपदिष्टः ? ]

नटी—अज्जस्स ज्जेव्व पिअवअस्सेण जुण्णवुड्ढेण । [ आर्यस्यैव प्रियवयस्येन जूर्णवृद्धेन । ]

सूत्रधारः—( सकोपम् । ) आः दासीए उत्ता जुण्णवुड्ढा, कदा णु हु तुमं कुविदेण रण्णा पालएण णववहूकेसहत्थं विअ ससुअंधं कप्पिज्जंतं पेक्खिस्सं । [ आः दास्याःपुत्र जूर्णवृद्ध ! कदा नु खलु त्वां कुपितेन राज्ञा पालकेन नववधूकेशहस्तमिव ससुगन्धं छेद्यमानं प्रेक्षिष्ये । ]

नटी—पसीददु अज्जो । अज्जस्स ज्जेव्व पारलोइओ अअं उववासो अणुचिट्ठीअदि । ( इतिं पादयोः पतति । ) [ प्रसीदत्वार्यः । आर्यस्यैव पारलौकिकोऽयमुपवासः अनुष्ठीयते । ]

सूत्रधारः—अज्जे ! उट्ठेहि । कधेहि एत्थ उववासे केण कज्जं ? । [ आर्ये ! उत्तिष्ठ । कथयात्रोपवासे केन कार्यम् ? । ]

---

जूर्णवृद्धेनायमुपवासो मह्यमुपदिष्टः, इति नटीमुखादाकर्ण्य सकोपमाह सूत्रधारः—आः, इति । दास्याः पुत्र ! जूर्णवृद्ध ! स समयः कदा आगमिष्यति ? यदा राजा पालकस्तव वधाज्ञां दास्यति । स यथा नववधूभ्यो भृशं कुपितस्तासां वधमनुचितं मत्वा तासां सुगन्धितं केशपाशं कर्तयति, तथैव त्वामपि । [ एतेन संहाराङ्के श्रीचारुदत्तस्य वधाज्ञा सूच्यते । ]

---

सूत्रधार—तुम्हें यह उपवास किसने बताया है ?

नटी—आपके ही प्रियमित्र "जूर्णवृद्ध" ने ।

सूत्रधार—अरे दासीपुत्र ! जूर्णवृद्ध ! मैं कब कुपित हुए राजा 'पालक' के द्वारा नववधू के शपाश की भाँति तुझे विच्छिन्न किया जाता हुआ देखूँगा । †

नटी—आर्य ! प्रसन्न हों । आपके लिए ही यह पारलौकिक उपवास है ।
( चरणों में गिर पड़ती है । )

सूत्रधार—आर्ये ! उठो । बताओ कि इस उपवास में क्या करना चाहिए ?

---

† इससे—"श्री चारुदत्त के बध की आज्ञा की भी सूचना मिलती है ।"

नटी—अम्हारिसजणजोग्गेण बम्हणेण उवणिमंतिदेण । [ अस्मादृशजनयोग्येन ब्राह्मणेनोपनिमन्त्रितेन । ]

सूत्रधारः—अदो गच्छदु अज्जा । अहं पि अम्हारिसजणजोग्गं बम्हणं उवणिमंतेमि । [ अतो गच्छत्वार्या । अहमप्यस्मादृशजनयोग्यं ब्राह्मणमुपनिमन्त्रयामि ।

नटी—जं अज्जो आणवेदि । ( इति निष्क्रान्ता । ) [ यदार्य आज्ञापयति । ]

सूत्रधारः—( परिक्रम्य ) हीमाणहे, ता कधं मए एव्वं सुसमिद्धाए उज्जइणीए अम्हारिसजणजोग्गो बम्हणो अण्णेसिदव्वो ? । ( विलोक्य । ) एसो चारुदत्तस्स मित्तं मित्तेओ इदो ज्जेव्व आअच्छदि । भोदु, पुच्छिस्सं दाव । 'अज्ज मित्तेअ ! अह्माणं गेहे असिदुं अग्गणी भोदु अज्जो । [ आश्चर्यम्, तस्मात्कथं मयैवं सुसमृद्धायामुज्जयिन्यामस्मादृशजनयोग्यो ब्राह्मणोऽन्वेषितव्यः ? एष चारुदत्तस्य मित्रं मैत्रेय इत एवागच्छति । भवतु, प्रक्ष्यामि तावत् । अद्य मैत्रेय ! अस्माकं गृहेऽशितुमग्रणीर्भवत्वार्यः । ]

( नेपथ्ये )

भो ! अण्णं बम्हणं उवणिमंतेदु भवं; वावुडो दाणिं अहं । [ भोः ! अन्यं ब्राह्मणमुपनिमन्त्रयतु भवान् ; व्यापृत इदानीमहम् । ]

---

नटी—अपने अनुरूप ब्राह्मण को निमन्त्रित करना चाहिए ।

सूत्रधार—अच्छा, अब तुम जाओ । मैं भी अपने योग्य किसी ब्राह्मण को निमन्त्रित करता हूँ ।

नटी—जो आज्ञा ! [ चली जाती है । ]

सूत्रधार—( घूमकर ) आश्चर्य है ! इस सुसमृद्ध 'उज्जयिनी' में अपने अनुरूप ब्राह्मण कैसे ढूँढ़ना चाहिए ? ( देखकर ) यह "चारुदत्त" का मित्र "मैत्रेय" इधर ही आ रहा है । अस्तु, इससे पूछता हूँ । आर्य मैत्रेय ! हमारे घर भोजन करने के लिए अग्रेसर हों । ( हमारा निमन्त्रण स्वीकार करें ) ।

( नेपथ्य में )

ऐ ! आप किसी दूसरे ब्राह्मण को निमन्त्रित करें—मैं इस समय कार्यासक्त हूँ ।

सूत्रधारः—अज्ज ! संपण्णं भोअणं णीसवत्तं च । अवि अ दक्खिणा वि दे भविस्सदि । [ आर्य ! सम्पन्नं भोजनं निःसपत्नं च । अपि च दक्षिणापि ते भविष्यति । ]

( पुनर्नेपथ्ये )

भो, जधा दाणिं पढमं ज्जेव्व पच्चादिट्ठोसि, ता को दाणिं दे णिब्बंधो पदे पदे मं अणुबंधेदुं ? । [ भोः, यदिदानीं प्रथममेव प्रत्यादिष्टोऽसि, तत्क इदानीं ते निर्बन्धः पदे पदे मामनुरोद्धुम् ? । ]

सूत्रधारः—पच्चादिट्ठो म्हि एदिणा । भोदु, अण्णं बम्हणं उवणिमंतेमि । ( इति निष्क्रान्तः ) [ प्रत्यादिष्टोऽस्म्येतेन । भवतु, अन्यं ब्राह्मणमुपनिमन्त्रयामि । ]

---

अस्माकं गृहे भोक्तुं भवानग्रणीर्भवतु, इति सूत्रधारवचनं "अन्यं ब्राह्मणमुपनिमन्त्रय, अहमिदानीं व्यापृतः = कार्यान्तरे 'संलग्नोऽस्मि 'न ममावकाशो भोक्तुमिति" मैत्रेयनिराकृतोऽपि सूत्रधारः पुनः कथयति—आर्येति । आर्य, मैत्रेय, भोजनन्तु निष्पन्नम् । तत्र विलम्बो नास्ति । किञ्च—निःसपत्नम् = शत्रुरहितम् । ब्राह्मणः कोऽप्यन्यो नास्ति तत्र, भवानेव भोक्ष्यते । अपि च दक्षिणापि भविष्यत्येव, ततः किमिति ब्राह्मणेन भवता निमन्त्रणं परित्यज्यते ! इति मर्मवचनम् ।

पुनः प्रत्याख्यातुं ( निषेधं कर्तुम् ) सूत्रधारः कथयति—भो इदानीमिति । भद्र ! मया प्रथममेव प्रत्यादिष्टः = निराकृतोऽसि । तदिदानीं पदे-पदे मामनुरोद्धुं कोऽयं तव निर्बन्धः = आग्रहातिरेकः ? त्वया कश्चिदन्यो ब्राह्मणोऽन्वेष्टव्यः इति भावः । ( निष्क्रान्तः ) इति कथयित्वा सूत्रधारो बहिर्गतः ।

---

सूत्रधार—आर्य ! भोजन तैयार है तथा किसी दूसरे ब्राह्मण से रहित है (तुम्हारे अतिरिक्त और कोई ब्राह्मण वहाँ नहीं है) और तुम्हें दक्षिणा भी मिलेगी ।

( पुनः नेपथ्य में )

अरे ! जब एक बार निषेध कर दिया तो "पद-पद पर मेरा अनुरोध करने वाला" यह तुम्हारा कैसा हठ है ?

सूत्रधार—मुझे तो इसने निषेध कर दिया है । अस्तु; किसी दूसरे ब्राह्मण को निमन्त्रित करता हूँ । [ चला जाता है । ]

इत्यामुखम् ।

( प्रविश्य प्रावारहस्तः )

मैत्रेयः—( 'अण्णं बम्हणं' इति पूर्वोक्तं पठित्वा ) अधवा, मए वि मित्तेण परस्स आमंतणआइं पक्खिदव्वाइं । हा अवत्थे ! तुलीअसि । जो णाम अहं तत्थभवदो चारुदत्तस्स रिद्धीए अहोरत्तं पअत्तसिद्धेहिं उग्गारसुरहिगंधेहिं मोदएहिं ज्जेव्व आसिदो अब्भंतरचदुस्सालअदुए उवविट्ठो मल्लक्कसदपरिवुदो चित्तअरो विअ अंगुलीहिं छिविअ छिविअ अवणेमि ।

---

इत्यामुखम् । इति ।

वर्णनीयो विषयो यत्र संक्षिप्तरूपेणोपन्यस्यते सा प्रस्तावना "आमुखं" वेति नाटकीयभाषायामुच्यते । यथा चोक्तं साहित्यदर्पणे—

"नटी विदूषको वापि, पारिपार्श्विक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥
चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुता क्षेपिभिर्मिथः ।
"आमुखं" तत्तु विज्ञेयं, नाम्ना प्रस्तावनापि सा ॥" इति ।

सा प्रस्तावना पञ्चप्रकारा भवति । तथा चोक्तं दर्पणे—

"उद्घात्यकः, कथोद्घातः, प्रयोगातिशयस्तथा ।
प्रवर्तका—वलगिते, पञ्च प्रस्तावनाभिधाः ॥ इति ।

अत्र च "कथोद्घात"—रूपा प्रस्तावना । तल्लक्षणञ्च यथा—

"सूत्रधारस्य वाक्यं वा, समादायार्थमस्य वा ।
भवेत् पात्रप्रवेशश्चेत् "कथोद्घातः" स उच्यते ॥

विशेष-भेदादिलक्षणादिपरिज्ञानार्थे दर्पणं शरणीक्रियताम् ।
अत्र त्वेतावदेवापेक्षिकम् ।

[ इति "आमुखम्" "प्रस्तावना वा" ]

प्रावारः = उत्तरीयं वस्त्रम् हस्ते यस्य स तथाविधो मैत्रेयः, समागत्य स्वकीयं

---

❀ आमुख ❀

[ उत्तरीय वस्त्र को हाथ में लिए हुए प्रवेश कर ]

णअरचत्तरवुसहो विअ रोमंथाअमाणो चिट्ठामि, सो दाणिं अहं तस्स दलिद्ददाए जहिं तहिं चरिअ गेहपारावदो विअ आवासणिमित्तं इध आअच्छामि । एसो अज्जचारुदत्तस्स पिअवअस्सेण जुण्णवुड्ढेण जादीकुसुमवासिदो पावारओ अणुप्पेसिदो सिद्धीकिददेवकज्जस्स अज्जचारुदत्तस्स उवणेदव्वो त्ति । ता जाव अज्जचारुदत्तं पेक्खामि । ( परिक्रम्यावलोक्य च ) एसो अज्जचारुदत्तो सिद्धीकिददेवकज्जो गिहदेवदाणं बलिं हरेतो इदो ज्जेव्व आअच्छदि । [ अथवा मयापि मैत्रेयेण परस्यामन्त्रणकानि समीहितव्यानि । हा अवस्थे ! तुलयसि । यो नामाहं तत्रभवतश्चारुदत्तस्य ऋद्ध्याऽहोरात्रं प्रयत्नसिद्धैरुद्गारसुरभिगन्धिभिर्मोदकैरेवाशितोऽभ्यन्तरचतुःशालकद्वार उपविष्टो मल्लकशतपरिवृतश्चित्रकर इवाङ्गुलीभिः स्पृष्ट्वा स्पृष्ट्वापनयामि । नगरचत्वरवृषभ इव रोमन्थायमानस्तिष्ठामि, स इदानीमहं तस्य दरिद्रतया यत्र तत्र चरित्वा गृहपारावत इवावासनिमित्तमत्रागच्छामि । एष चार्यचारुदत्तस्य प्रियवयस्येन

---

भावं प्रकटयति—**अथवेति** । हन्त ! समयस्य प्रभावं ज्ञातुं कस्यापि सामर्थ्यं नास्ति । योऽहं पूर्वं चारुदत्तस्य सम्पत्तिकालेऽनेकानि मल्लकानि = पात्रविशेषाणि स्पर्शमात्रेणैव दूरीकरोमि स्म, नगरचत्वरे स्थितो वृषभ इव रोमन्थमाचरामि स्म, सोऽहमद्य तस्य दरिद्रतयाऽन्येषां निमन्त्रणं स्वीकर्तुं प्रभवामि ? हा ! अवस्था मां तुलयति = तुलनार्थं यतते । ( तूलयसीति ) पाठे तु तूलवन्मां लघुं करोति । इति सर्वस्याशयः । शेषः पाठः सरलः ।

---

**मैत्रेय**—( "अण्णं बह्मणं" आदि पूर्वोक्त वाक्यों को पढ़ता हुआ ) अथवा, मुझ मैत्रेय को भी दूसरों के निमन्त्रणों की इच्छा करनी पड़ेगी ! हा अवस्थे ! तू मुझे ऐसा करने के लिए बाध्य कर रही है ! जो मैं पहिले "चारुदत्त" के समृद्धिकाल में रात-दिन बड़े प्रयत्न से बने हुए तथा उद्गार में सुगन्धि लाने वाले मोदकों को खाकर अन्दर के चतुःशाला के द्वार पर बैठा हुआ सैकड़ों भोजन के पात्रों को चित्रकार की भाँति छू-छूकर दूर रख देता था तथा नगर के चबूतरे पर बैठकर साँड़ की भाँति जुगाली किया करता था आज वही मैं उसके दरिद्र हो जाने के कारण इधर उधर चुनकर पालतू कबूतर की भाँति केवल निवास-मात्र के

जूर्णवृद्धेन जातीकुसुमवासितः प्रावारकोऽनुप्रेषितः सिद्धीकृतदेवकार्यस्यार्यचारुदत्त-स्योपनेतव्य इति। तद्यावदार्यचारुदत्तं पश्यामि। एष आर्यचारुदत्तः सिद्धीकृतदेव-कार्यो गृहदेवतानां बलिं हरन्नित एवागच्छति।]

(ततः प्रविशति यथानिर्दिष्टश्चारुदत्तो रदनिका च)

चारुदत्तः—(ऊर्ध्वमवलोक्य सनिर्वेदं निःश्वस्य च)

**यासां बलिः सपदि मद्गृहदेहलीनां,**
**हंसैश्च सारसगणैश्च विलुप्तपूर्वः।**
**तास्वेव संप्रति विरूढतृणाङ्कुरासु,**

---

विधिवैपरीत्याद् विगतधनः परिखेदमनुभवन् सविषादं स्वभवनस्थितश्चारुदत्तः प्राक्तनीमवस्थां स्मरन् कथयति—यासामिति।

अयमाशयः—मम गृहस्य बहिर्भागे देहलीनां सविधे बल्यन्नं पूर्वं हंसाः सारसाश्च भक्षयन्ति स्म, हन्त! तासां देहलीनां संस्काराभावात् तृणानामङ्कुरा बाहुल्येन सञ्जाताः। तत्र निपातितानां पूजादिकार्ये प्रदत्तानां बल्यन्नबीजानां भक्षणं कीटादय एव कुर्वन्ति। यत्र हंसा अपि समागत्य भोजनादिसत्कारं लभन्ते विधिविडम्बनादद्य तत्र तृणानां संस्कारोऽपि नैव भवति। अत्रैकत्र देहलीभागे

---

के लिए यहाँ आता हूँ। आज "चारुदत्त" के प्रियमित्र "जूर्णवृद्ध" ने चमेली के पुष्पों से सुवासित दुपट्टा भेजा है (और कहा है कि—) "संध्या-वन्दनादि से निवृत्त होने पर "चारुदत्त" को दे देना।" इसलिए मैं "आर्य चारुदत्त" को देखता हूँ। (घूमकर देखते हुए) यह "चारुदत्त" देवकार्य से निवृत्त होकर गृह-देवताओं की बलि लेकर इधर ही आ रहा है।

[तदनन्तर पूर्वनिर्दिष्ट "चारुदत्त" तथा "रदनिका" का प्रवेश होता है।]

चारुदत्त—(उदासीन भाव से आकाश की ओर देखते हुए लम्बा श्वास खींचकर)

"जिस मेरे घर की देहलियों की बलि के अन्न का पहिले सारस तथा हंस भक्षण किया करते थे, आज उन्हीं घास जमी हुई (देहलियों में) देवकार्य में दिये हुए बीजों की अञ्जलि आज कीड़े ही खाते हैं। अर्थात्—जहाँ पहिले

**बीजाञ्जलिः पतति कीटमुखावलीढः ॥ ९ ॥**

( इति मन्दं मन्दं परिक्रम्योपविशति )

विदूषकः—एसो अज्जचारुदत्तो । ता जाव संपदं उवसप्पामि । ( उपसृत्य ) सोत्थि भवदे । वड्ढदु भवं । [ एष आर्यचारुदत्तः । तद्यावत्साम्प्रतमुपसर्पामि । स्वस्ति भवते । वर्धतां भवान् । ]

चारुदत्तः—अये ! सर्वकालमित्रं मैत्रेयः प्राप्तः । सखे ! स्वागतम् । आस्यताम् ।

विदूषकः—जं भवं आणवेदि । ( उपविश्य ) भो वअस्स ! एसो दे पिअवअस्सेण जुण्णवुड्ढेण जादीकुसुमवासिदो पावारओ अणुप्पेसिदो सिद्धीकिदद्देवकज्जस्स अज्जचारुदत्तस्स तुए उवणेदव्वो त्ति । ( समर्पयति )

---

हंसानां तृणाङ्कुरेषु कीटादीनां सद्भावात् पर्यायालङ्कारः । तल्लक्षणञ्च यथा—

"क्वचिदेकमनेकस्मिन्ननेकं चैकगं क्रमात् ।
भवति क्रियते वा चेत्तदा पर्याय इष्यते ॥ इति ॥

प्रसादो गुणः । पाञ्चाली रीतिः । वसन्ततिलका च्छन्दः । तल्लक्षणं यथा—
"उक्ता वसन्ततिलका तभजा जगौ गः ॥ इति ॥ ६ ॥

---

हंस तथा सारस बल्यन्न ग्रहण करते थे आज उन देहलियों का संस्कार भी नहीं होता है । ) ॥९॥

[ ऐसा कहते हुए धीरे-धीरे घूमकर बैठ जाता है । ]

विदूषक—ये आर्य "चारुदत्त" हैं । तो मैं अब इनके पास जाता हूँ ( पास जाकर ) आपके लिए 'स्वस्ति' है ! आपका अभ्युदय हो !

चारुदत्त—अरे* सब काल के मित्र ( सुख-दुःख में भी मित्र ) "मैत्रेय" आ गये हैं ! मित्र ! स्वागत है ! बैठिए !

विदूषक—जो आप कहते हैं ! ( बैठकर ) मित्र ! यह तुम्हारे प्रिय सखा

---

* "चारुदत्त" के "सर्वकालमित्रं" सम्बोधन से 'विदूषक' का सच्चा मित्र होना सूचित होता है । "मैत्रेय" केवल सुख का ही साथी नहीं है प्रत्युत वह तो मित्र की विपत्ति में भी भाग लेने वाला सच्चा सुहृद् है ।

[ यद्भवानाज्ञापयति । भो वयस्य ! एष ते प्रियवयस्येन जूर्णवृद्धेन जातीकुसुमवासितः प्रावारकोऽनुप्रेषितः सिद्धीकृतदेवकार्यस्यार्यचारुदत्तस्य त्वयोपनेतव्य इति । ]

( चारुदत्तो गृहीत्वा सचिन्तः स्थितः )

विदूषकः—भो ! किं इदं चिंतीअदि ? । [ भोः, किमिदं चिन्त्यते ? । ]

चारुदत्तः—वयस्य !

**सुखं हि दुःखान्यनुभूय शोभते,**
**घनान्धकारेष्विव दीपदर्शनम् ।**
**सुखात्तु यो याति नरो दरिद्रतां,**
**धृतः शरीरेण मृतः स जीवति ॥ १० ॥**

जाति-कुसुमैः सुवासितं प्रावरकमुपलभ्य "कदाचिदहमेवेदृशानि वस्त्राण्यन्येभ्योऽर्पयामि स्म, परं भाग्यदोषादन्ये जना मामनुकम्पन्ते साम्प्रतमिति चिन्तितः सन् खेदमनुभवन् वदति चारुदत्तः—सुखं हीति । मित्र मैत्रेय ! अहमेवं चिन्तयामि, यत् पूर्वं दुःखानि सम्यगनुभूय सुखोपभोगः शोभमानो भवति, यथा सघनान्धकारे समागच्छतो जनस्य पदे-पदे आघात-प्रत्याघात-खेदमनुभवतो दीपदर्शनं सुखजनकं भवति; किन्तु सुखभोगानन्तरं यो जनो दुःखानि भुङ्क्ते, निश्चितं मन्यताम्-स शरीरमात्रेण धृतोऽपि वस्तुतो मृतः सन् जीवति । ततश्च ममापि

"जूर्णवृद्ध" ने चमेली के पुष्पों से सुवासित उत्तरीय ( मेरे पास ) भेजा है ( और कहा है कि—) "संध्या-वन्दनादि से निवृत्त होने पर "चारुदत्त" को इसे दे देना।" ( दे देता है । )

[ "चारुदत्त" लेकर चिन्तित हो जाता है । ]

विदूषक—मित्र ! क्या सोच रहे हो ?

चारुदत्त—मित्र !—

"दुःखों का अनुभव करके ही सुख अच्छा लगत्ता है जैसे सघन अन्धकार में दीपक का प्रकाश सुखकर होता है । परन्तु सुख भोगने के अनन्तर जो मनुष्य दरिद्रता आदि दुःखों का अनुभव करता है वह शरीर से रहता हुआ भी वस्तुतः मरा हुआ ही जीता है । ( आज मेरी भी यही अवस्था है । )" ॥१०॥

विदूषकः—भो वअस्स ! मरणादो दालिद्दादो वा कदरं दे रोअदि ? ।
[ भो वयस्य ! मरणाद्दारिद्र्याद्वा कतरत्ते रोचते ? । ]

चारुदत्तः—वयस्य !

**दारिद्र्यान्मरणाद्वा मरणं मम रोचते न दारिद्र्यम् ।**
**अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम् ॥ ११ ॥**

विदूषकः—भो वअस्स ! अलं संतप्पिदेण । पणइजणसंकामिदविहवस्स सुरजणपीदसेसस्स पडिवच्चंदस्स विअ परिक्खओ वि दे अहिअदरं रमणीओ । [ भो वयस्य ! अलं संतप्तेन । प्रणयिजनसंक्रामितविभवस्य सुरजन-

---

सम्प्रति जीवनस्येयमेव दशा वर्तते । अत्रोपमा, अप्रस्तुतप्रशंसा, विरोधाभासादयोऽलङ्काराः । प्रसादो गुणः । लाटी रीतिः । वंशस्थं च्छन्दः । "जतौ तु वंशस्थमुदीरितं जरौ ।" इति लक्षणात् ॥ १० ॥

"दारिद्र्य-मरणयोः कतरत् तुभ्यं रोचते ? इति विदूषकस्य प्रश्नं समादधानो वदति—दारिद्र्यादिति । सखे ! दारिद्र्यापेक्षया तु मह्यं मृत्युरेव रोचते, यतो मरणे स्वल्प एव क्लेशो जायते । दारिद्र्यावस्थायान्तु यावज्जीवनं क्लेशदावानलदाहः । इति भावः ! अत्रार्थान्तरन्यासोऽलङ्कारः । आर्या च्छन्दः ॥११॥

भो वयस्य ! इति । विदूषकः कथयति—भो मित्र ! सन्तापं मा कुरु । त्वया स्वविभवेनानेके प्रणयिनः सन्तर्पिताः । देवैः परिपीता मृतः प्रतिपदश्चन्द्रोऽपि परसन्तोषकरणात् क्षीणोऽपि यथा शोभते, तथा भवानपि । तदेव धनं, धनम्, येनान्ये सुखिनो भवन्ति । इति भावः ।

---

विदूषक—मित्र ! मरण या दरिद्रता में से तुम्हें कौन-सा अच्छा लगता है ?

चारुदत्त—मित्र !

"मुझे दरिद्रता और मरण में से मरण अच्छा लगता है, दरिद्रता नहीं; क्योंकि मरण में तो थोड़ा ही कष्ट होता है, परन्तु दारिद्र्य तो यावज्जीवन दुःख देने वाला होता है" ॥११॥

विदूषक—वयस्य ! संतप्त मत होओ ! मित्रों को अपना धन बाँट देने वाले

पीतशेषस्य प्रतिपच्चन्द्रस्येव परिक्षयोऽपि तेऽधिकतरं रमणीयः । ]

चारुदत्तः—वयस्य ! न ममार्थान्प्रति दैन्यम् पश्य,—

**एतत्तु मां दहति यद्गृहमस्मदीयं,**
**क्षीणार्थमित्यतिथयः परिवर्जयन्ति ।**
**संशुष्कसान्द्रमदलेखमिव भ्रमन्तः,**
**कालात्यये मधुकराः करिणः कपोलम् ॥ १२ ॥**

विदूषकः—भो वअस्स ! एदे खु दासीए पुत्ता अत्थकल्लवत्ता वरडा-भीदा विअ गोवालदारआ अरण्णे जहिं जहिं ण खज्जंति तहिं तहिं

---

एतद्वचनं श्रुत्वा स्वदुःखकारणं निरूपयति—एतत्तु—इति । वयस्यधनं प्रति मम खेदो नास्ति सर्वातिशायि दुःखन्तु ममैतत् प्रतिभाति, यत् अतिथय इदानीं "क्षीणधनमेतद्गृह" मिति विदित्वा नायान्ति । भ्रमन्तोऽपि भ्रमराः कालात्यये = समये व्यतीते सति संशुष्कमदलेखं = यत्र मदस्य लेखा शुष्का, एवं-विधं, करिणो = गजस्य कपोलं यथा परित्यजन्ति । ये एव सर्वदा विभवे, प्रतिदिन-मायान्ति, ते एवाधुना दूरतो व्रजन्ति, इत्येव ममातितमां दुःखकारणमिति भावः ।

अत्रोपमालङ्कारः । माधुर्यं गुणः । वैदर्भी रीतिः । वसन्ततिलका च्छन्दः । तल्लक्षणञ्च—यथा—"उक्ता वसन्ततिलका तभजा जगौ गः ॥" इति ॥१२॥

विदूषकलक्षणञ्च—

"कुसुमवसन्ताद्यभिधः, कर्मवपुर्वेषभाषाद्यैः । हास्यकरः, कलहरतिर्विदूषकः स्यात् स्वकर्मज्ञः ॥" स्वकर्म = भोजनादि । इति ॥ समवेदनां प्रकटयन् विदूषकः

---

तुम्हारी यह दरिद्रता भी, देवताओं के द्वारा पीने से बचे हुए प्रतिपदा के चन्द्रमा की भाँति, सुन्दर लगती है ।

चारुदत्त—मित्र ! मुझे धन के प्रति खेद नहीं है । देखो—

"मुझे सबसे बड़ा दुःख तो यह है कि आज अतिथिगण हमारे घर को "यह धनरहित है" यह समझकर छोड़ देते हैं । वैसे ही जैसे कि पहिले ( हाथी के मदपूर्ण गण्डस्थल के चारों ओर ) मँडरानेवाले भ्रमर कुछ समय पश्चात् गाढ़े मद की लेखा के सूख जाने पर हाथी के कपोल (गण्डस्थल) को छोड़ देते हैं" ॥१२॥

गच्छंति । [ भो वयस्य ! एते खलु दास्याःपुत्रा अर्थकल्यवर्ता वरटाभीता इव गोपालदारका अरण्ये यत्र यत्र न खाद्यन्ते तत्र तत्र गच्छन्ति । ]

चारुदत्तः—वयस्य !

**सत्यं न मे विभवनाशकृतास्ति चिन्ता,**
**भाग्यक्रमेण हि धनानि भवन्ति यान्ति ।**
**एतत्तु मां दहति नष्टधनाश्रयस्य,**

---

कथयति—एते-इति । भो मित्र ! एते दुष्टा अर्थाः = धनानि, कल्यवर्ताः = प्रातःकाल—भोजनानीव, प्रातराशा इव, तत्रैव गच्छन्ति यत्र न खाद्यन्ते, यत्रोपभोगो नास्ति, तत्र धनानि स्थितिं लभन्ते, यत्र च भोक्तारः सन्ति, तत्र न गच्छन्ति । यथा गोपाल—दारकाः = गोपालानां बालाः वरटाभिः = दंशनकारिणीभिः ( बर्रं, भिरड़, ततइया ) संज्ञकाभिः भीताः वनेषु पलाय्य तत्रैव यान्ति यत्र ते ताभिर्न खाद्यन्ते । इति विपरीतमिव प्रतिभाति जगत् तत्त्वमिति भावः ।

पुनरपि सन्तापमनुविन्दन्नाह चारुदत्तः—सत्यमिति । वयस्य ! अहं सत्यं कथयामि—धनविनाश--चिन्तालेशतोऽपि मम नास्ति । भाग्य-क्रमेण धनानामागमनं, गमनं वा भवत्येव । इदन्तु मां विशेषरूपेण दहति, यत् यस्य धनाश्रयो नष्टः, तस्य नष्ट-धनस्य पुरुषस्य सौहृदादपि जनाः शिथिलादरा भवन्ति । मया सह

---

विदूषक—मित्र ! ये दुष्ट धन प्रातराश ( कलेवे ) की भाँति वहीं जाते हैं जहाँ इनका उपभोग नहीं होता । ( जहाँ उपभोग नहीं होता वहाँ रहते हैं और जहाँ उपभोगकर्ता होते हैं वहाँ नहीं जाते हैं ) ठीक उसी प्रकार, जैसे कि ततैयों से डरे हुए गोपालों के बच्चे जंगल में वहीं जाकर छिपते हैं जहाँ कि उनके द्वारा खाये ( काटे ) नहीं जाते ।

चारुदत्त—सखे !

"सचमुच मुझे धन के नष्ट हो जाने की बिल्कुल चिन्ता नहीं है क्योंकि भाग्यवश धन आते तथा जाते हैं; परन्तु सबसे दुःखकर बात तो यह है कि धनहीन मुझसे, मेरे परिचित मित्र मित्रता में ढील दे रहे हैं । ( जो पहिले मेरे साथ

यत्सौहृदादपि जनाः शिथिलीभवन्ति ॥ १३ ॥

अपि च,—

दारिद्र्याद्ध्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसो,
निस्तेजाः परिभूयते परिभवान्निर्वेदमापद्यते ।
निर्विण्णः शुचमेति शोकपिहितो बुद्ध्या परित्यज्यते,
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥ १४ ॥

ये परमां मित्रतां कुर्वन्ति, ते सम्प्रति वार्तालापेऽपि पापमाकलयन्ति इत्येव विशेषपरितापः । धनरहितस्य जीवनमेव मुधेति भावः ।

अत्र काव्यलिंगालङ्कारः । प्रसादो गुणः । वैदर्भी रीतिः । वसन्ततिलका च्छन्द ॥ १३ ॥

धनमन्तरा सर्वेष्वपि कार्यकलापेष्वन्तरायः समापततीति निर्दिशति—दारिद्र्या-दिति । दरिद्रः पुमान् सर्वदाऽन्यैः सह वार्ताकरणेऽपि लज्जामनुभवति, ह्री-परिगतः =लज्जायुक्तश्च तेजसः परिभ्रष्टो भवति, निस्तेजाः =तेजोरहितः सर्वैरपि परिभूयते =तिरस्क्रियते । सर्वेऽपि जनास्तेजःशून्यं तिरस्कुर्वन्तीति भावः । परिभवात् = तिरस्काराच्च निर्वेदम् = विरक्तिभावमापद्यते = प्राप्नोति । निर्विण्णः = सततं चिन्ता-न्वितः खिन्नमनाः सन् शोकेन पिहितो भवति, शोकाच्छन्नश्च बुद्ध्या परित्यज्यते ।

घनिष्ठ मित्रता रखते थे आज वे ही मेरी निर्धनता में मुझसे वात भी नहीं करना चाहते हैं । ) ॥१३॥

और भी—

"मनुष्य दरिद्रता के कारण लज्जा का अनुभव करता है और लज्जित रहने वाला तेज-रहित हो जाता है, निस्तेज व्यक्ति सर्वत्र तिरस्कृत होता है, तिरस्कृत व्यक्ति उदासीनता का अनुभव करता है, विरक्त मानव शोक को प्राप्त हो जाता है, शोकार्त होने के कारण वह बुद्धिहीन हो जाता है और बुद्धिहीन होने के कारण मनुष्य का नाश हो जाता हैं । ओह ! निर्धनता सम्पूर्ण विपत्तियों की मूल है । ( यही कारण है कि पतित से पतित व्यक्ति भी धनी होने के कारण आदरणीय हो जाता है परन्तु उच्च व्यक्ति भी धनहीन होने के कारण नहीं पूजा जाता)" ॥१४॥

विदूषकः—भो वअस्स ! तं ज्जेव अत्थकल्लवत्तअं सुमरिअ अलं संतप्पिदेण । [ भो वयस्य ! तमेवार्थकल्यवर्तं स्मृत्वालं सन्तापितेन । ]

चारुदत्तः—वयस्य ! दारिद्र्यं हि पुरुषस्य,—

**निवासश्चिन्तायाः परपरिभवो वैरमपरं,**
**जुगुप्सा मित्राणां स्वजनजनविद्वेषकरणम् ।**
**वनं गन्तुं बुद्धिर्भवति च कलत्रात् परिभवो,**

---

बुद्धिहीनश्च क्षयं विनाशम्, एति = प्राप्नोति । ततो निश्चितमिदं यत्, निर्धनता सर्वासां विपदां पदं वर्तते । अत एव संसारे पापीयान् पुरुषोऽपि धनयुक्तः सन् पूज्यते । पूज्योऽपि, सर्वैः सुगुणैर्विभूषितोऽपि न पूज्यते । इति भावः ।

अत्र पूर्वपूर्वस्य वस्तुन उत्तरोत्तरं प्रति कारणत्वात् कारणमालाऽलङ्कारः । तस्य लक्षणं यथा दर्पणे—

"परं परं प्रति यदा पूर्वपूर्वस्य हेतुता । तदा कारणमाला स्यात् ॥" इति ॥

प्रसादो गुणः । लाटी रीतिः । शार्दूलविक्रीडितं च्छन्दः । तल्लक्षणं च यथा—

"सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्" इति ॥ १४ ॥

पुनरपि दारिद्र्यस्य विपत्प्रदत्त्वं प्रकाशयति—निवास इति । अत्र—"दारिद्र्यं हि नाम पुरुषस्य" इति गद्यभागोऽन्वेति । दरिद्रता हि पुरुषस्य विविधानां चिन्तानां निवासः, धनरहितः पुरुषः सर्वदा चिन्ताचुम्बित-चित्त एव भवति कथं मया कार्यं कार्यमिति । परः = उत्कृष्टः परिभवः = तिरस्कारः । सर्वेऽपि तस्य तिरस्कारं कुर्वन्ति । अपरमिदं वैरमेव । मित्राणां जुगुप्सा = घृणा । मित्राणि घृणां कुर्वन्ति । स्वजनैः सह विद्वेषस्य करणम् = विधानमेव । निर्धनश्च जनो वनं गन्तुं विचारयति ।

---

विदूषक—सुहृद्वर ! उसी धन का स्मरण करके सन्तप्त मत होओ ।

चारुदत्त—मित्र ! पुरुष की दरिद्रता—

"चिन्ता का निवास स्थान, बड़े अपमान की कर्त्री, वैर की कारण, मित्रों द्वारा भी निन्दा की हेतु और परिजनों के द्वारा ही द्वेष कराने वाली है । ( इसके कारण उदासीनता से ) मनुष्य की वन में जाने की बुद्धि हो जाती है ( यहाँ तक कि अर्धाङ्गिनी कहलाने वाली ) स्त्री भी तिरस्कार करने लगती है । इस प्रकार

**हृदिस्थः शोकाग्निर्न च दहति संतापयति च ॥१५॥**

**तद्वयस्य ! कृतो मया गृहदेवताभ्यो बलिः । गच्छ, त्वमपि चतुष्पथे मातृभ्यो बलिमुपहर ।**

**विदूषकः—ण गमिस्सं । [ न गमिष्यामि । ]**

**चारुदत्तः—किमर्थम् ? ।**

**विदूषकः—जदो एव्वं पूइज्जंता वि देवणा ण दे पसीदंति, ता को गुणो देवेसु अच्चिदेसु ? ।** [ यत एवं पूज्यमाना अपि देवता न ते प्रसीदन्ति, तत्को गुणो देवेष्वर्चितेषु ? । ]

**चारुदत्तः—वयस्य ! मा मैवम्, गृहस्थस्य नित्योऽयं विधिः;**

---

भार्याऽपि तिरस्करोति तम् । सर्वदा हृदि स्थितः शोकाग्निदाहन्तु न जनयति, परं सन्तापयति । अतो ज्ञायते एकस्मिन् दारिद्र्ये समागते, सर्वा अपि विपदः स्वयमेव समायान्ति । अत एव—"न बन्धुमध्ये धनहीनजीवनम्" इत्युक्तिरक्षरशश्चरितार्था ।

अत्रातिशयोक्तिः, उल्लेखश्चालङ्कारौ । प्रसादो गुणः । लाटी रीतिः । शिखरिणी च्छन्दः । तल्लक्षणं यथा—"रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी॥"इति ॥१५॥

एवं प्रतिदिनं पूजिता अपि देवास्त्वयि प्रसादं न कुर्वन्ति, अत एतेषां पूजनेन

---

सदा ही अन्तःस्थित शोकाग्नि हृदय को जलाती नहीं, परन्तु ( रह-रहकर ) सन्तप्त करती रहती है । ( अतः यह निश्चित है कि एक दरिद्रता के आने पर सारी आपत्तियाँ आ जाती हैं । )" ॥१५॥

मित्र ! मैंने गृह-देवताओं के लिए बलि सम्पादित कर दी है ( इसलिए ) तुम भी चौराहे पर जाकर देवी-देवताओं को इसे दे आओ ।

**विदूषक—मैं नहीं जाऊँगा ।**

**चारुदत्त—क्यों ?**

**विदूषक—क्योंकि प्रतिदिन इस प्रकार पूजित देवता तुम पर प्रसन्न नहीं होते तो उनकी पूजा से क्या लाभ है ?**

**चारुदत्त—मित्र ! ऐसा मत कहो ! यह तो गृहस्थ की नित्य विधि है ।**

**तपसा मनसा वाग्भिः पूजिता बलिकर्मभिः ।**
**तुष्यन्ति शमिनां नित्यं देवताः किं विचारितैः ? ॥१६॥**

तद्गच्छ, मातृभ्यो बलिमुपहर ।

विदूषकः—भो ! ण गमिस्सं; अण्णो को वि पउंजीअदु । मम उण बम्हणस्स सव्वं ज्जेव्व विपरीदं परिणमदि । आदंसगदा विअ छाआ वामादो दक्खिणा दक्खिणादो वामा । अण्णं च एदाए पदोसवेलाए इध राअग्गे मणिआ विडा चेडा राअवल्लहा अ पुरिसा संचरंति । ता मंडूअलुद्धस्स कालसप्पस्स मूसिओ विअ अहिमुहावत्थिदो वज्झो दाणिं भविस्सं । तुमं इध उवविट्ठो किं करिस्ससि ? । [ भोः ! न गमिष्यामि; अन्यः कोऽपि प्रयुज्यताम् । मम पुनर्ब्राह्मणस्य सर्वमेव विपरीतं परिणमति । आदर्शगतेव छाया वामतो दक्षिणो दक्षिणतो वामा । अन्यच्चैतस्यां प्रदोषवेलाया-

---

को लाभः, ततश्च नाहं मातृभ्यो बलिं दातुं गच्छामीति विदूषकस्योक्तिं निराकुर्वन्नाह—वयस्येति । मित्र ! एवं त्वया न वक्तव्यम् । यतो गृहस्थानां कृते शास्त्रकारैरयं नित्यो विधिः सुनिश्चितः । नित्यस्य विधेरकरणे पाप-पङ्क-कलङ्क-सम्पर्को भवतीति भावः ।

**तपसेति** । तपसा, मनसा, वाग्भिः = वाचा बलिकर्मभिश्च परिपूजिता देवाः शमिनां = गृहस्थानां कृते सन्तुष्टा भवन्ति । एवं सुनिश्चितेऽपि शास्त्रकाराणां वचने किं विचारः क्रियते भवता ? अतो गम्यताम्, मातृभ्यो बलिर्दीयताम् । अनुष्टुप्छन्दः । लक्षणमुक्तं प्राक् ॥ १६ ॥

**भो न गमिष्यामीति** । यथा आदर्शे दक्षिणभागो वामे वामश्च दक्षिणे

---

"तपसा, वाचा, मनसा तथा बलि आदि के प्रदान करने से देवता गृहस्थों पर सदा प्रसन्न रहते हैं । ( इसलिये जाओ— ) सोचने-विचारने से क्या लाभ ?" अतः जाओ ! देवी-देवताओं को बलि दे आओ ॥१६॥

**विदूषक**—मैं नहीं जाऊँगा—किसी दूसरे को नियुक्त कर दीजिए । जिस प्रकार शीशे में दक्षिण भाग वाम और वाम दक्षिण दिखाई देता है; उसी प्रकार मुझ

मिह राजमार्गे गणिका विटाश्चेटा राजवल्लभाश्च पुरुषाः संचरन्ति। तस्मान्मण्डूक-लुब्धस्य कालसर्पस्य मूषिक इवाभिमुखापतितो वध्य इदानीं भविष्यामि। त्वमिह उपविष्टः किं करिष्यसि ?।]

चारुदत्तः—भवतु, तिष्ठ तावत्; अहं समाधिं निर्वर्तयामि।

( नेपथ्ये )

तिष्ठ वसन्तसेने! तिष्ठ।

( ततः प्रविशति विटशकारचेटैरनुगम्यमाना वसन्तसेना )

---

-दृश्यते, एवमेव ममाधन्यस्य सर्वमपि विपरीतं भवति। अतो नाहं गच्छामि। किं च रात्रौ राजमार्गे विट-चेट-शकारादयश्च भ्रमन्ति "नासूचितस्य प्रवेशः कार्यः" इति नाट्यसिद्धान्तमनुसृत्य विटादीनां प्रवेशः सूचितः। किञ्च मण्डूकलुब्धस्य सर्पस्य मुखे यथा सम्मुखादागतो मूषको निपतति, एवमेव कदाचिदहं तेषां चक्रे निपतितो मा भूवम्। त्वमत्र स्थितः किं करिष्यसि ? इति विदूषकोक्तिसारः।

इत्थं श्रुतविदूषकवचनश्चारुदत्तः पुनराह—भवतु इति। आस्ताम्, तावत्, पूर्वमहं समाधिं = चित्तवृत्तिनिरोधं कृत्वा ध्यानं करोमि। अनन्तरं यत्करणीयम्, तत् करिष्यामः, इति भावः।

ततः प्रविशति—इति। एभिरनुगम्यमाना वसन्तसेना प्रविशति। विटस्य

---

ब्राह्मण का सब कुछ कार्य ही विपरीत हो जाता है। और दूसरी बात यह है कि प्रदोष-काल में सड़कों पर वेश्याएँ, विट, चेट तथा राजा के प्रिय पुरुष घूमते हैं। कहीं मैं, मेंढक के इच्छुक सर्प के मुख में चूहे की भाँति, उनके हाथों में पड़कर वध्य हो गया तो ? आप यहाँ बैठे-बैठे क्या कर लेंगे ?

चारुदत्त—अच्छा, थोड़ा ठहरो! तबतक मैं ध्यान ( समाधि ) करता हूँ। ( उसके बाद जो कुछ करणीय है वह करेंगे )।

[ नेपथ्य में ]

ठहरो, वसन्तसेने! ठहरो!

[ तदनन्तर "विट"-"शकार"-"चेट" आदि से अनुगत "वसन्तसेना" का प्रवेश होता है। ]

विटः—वसन्तसेने ! तिष्ठ तिष्ठ,

किं त्वं भयेन परिवर्तितसौकुमार्या,
नृत्यप्रयोगविशदौ चरणौ क्षिपन्ती ।
उद्विग्नचञ्चलकटाक्षविसृष्टदृष्टि-,
र्व्याधानुसारचकिता हरिणीव यासि ॥ १७ ॥

लक्षणम् यथा—

"सम्भोगहीनसम्पद् विटस्तु धूर्तः कलैकदेशज्ञः ।
वेशोपचारकुशलो, वाग्मी मधुरोऽथ वहुमतो गोष्ठ्याम् ॥" इति ।

चेटः = सेवकः ।

शकारस्य स्वरूपं यथा—

"मदमूर्खताभिमानी, दुष्कुलतैश्वर्यसंयुक्तः ।
सोऽयमनूढा भ्राता, राज्ञः श्यालः शकार इत्युक्तः ॥"

अपार्थम्, अप्रासंगिकञ्च सर्वदा भाषतेऽयं शकारः । शाकारीं = शकारबहुलां भाषाञ्च वदति इत्यखिलमपि स्फुटीभविष्यत्येवानुपदम् ।

स्वभावेनैव गजगामिनीमपि भीतामितस्ततोऽवलोकयन्तीं त्वरितगमनां वसन्तसेनामुद्दिश्य विटः कथयति—किं त्वमिति । वसन्तसेने ! त्वं भयेन ( हेतुना ) परिवर्तितं सौन्दर्यं यस्या सा, निसर्गसुकुमारापि भीत्या सुकुमारतां परावृत्येव गच्छसि ? अथवा भयं गृहीत्वा सौकुमार्यं त्वया प्रत्यर्पितमिति परिवृत्तिमिव विधाय धावसि ? नृत्यप्रयोगे = नृत्य—कर्मणि, विशदौ = स्वच्छौ ( कुशलौ ) चरणौ क्षिपन्ती = अस्तव्यस्तपापं यथा स्यात्तथा पादपातं कुर्वन्ती, उद्विग्नेन =

विट—वसन्तसेने ! ठहरो ! ठहरो !

"भय से सुकुमारता को छोड़कर, नृत्यकर्म में अत्यन्त कुशल चरणों को अस्त-व्यस्त रूप से रखती तथा घबराहट के कारण चञ्चल कटाक्षों को छोड़ती हुई, व्याध के पीछा करने से भयभीत हरिणी की भाँति कहाँ जा रही हो ? ( हम तो तुम्हारे प्रेम-पाश में फँसकर ही तुम्हारा अनुगमन कर रहे हैं । किसी प्रकार की शङ्का मत करो । )" ॥१७॥

शकारः—च्यिश्ट वशंतशेणिए ! च्यिश्ट,

किं याशि धावशि पलाअशि पक्खलंती,
वाशू ! पशीद ण मलिस्सशि च्यिश्ट दाव ।
कामेण दज्झदि हु मे हडके तवश्शी,
अंगाललाशिपडिदे विअ मंशखंडे ॥ १८ ॥

[ तिष्ठ वसन्तसेनिके ! तिष्ठ,

किं यासि धावसि पलायसे प्रस्खलन्ती,
वासु ! प्रसीद न मरिष्यसि तिष्ठ तावत् ।

---

भीतेन चञ्चलेन कटाक्षेण अपाङ्गविलोकनेन विसृष्टा = परिक्षिप्ता दृष्टिर्यया सा, व्याधस्यानुसारेण—अनुगमनेन चकिता = त्रस्ता हरिणीव = मृगीव किं = कथम् यासि = गच्छसि ? वयं त्वत्प्रेमणि निबद्धास्त्वामनु गच्छामः । त्वया भयं नैव कार्यमिति भावः । अत्रोपमा, परिवृत्तिश्चालङ्कारौ । परिवृत्तिलक्षणञ्च—

"परिवृत्तिर्विनिमयः, समन्यूनाधिकैर्भवेत् ।" इति । माधुर्यं गुणः । वैदर्भी रीतिः । वसन्ततिलका च्छन्दः ॥१७॥

शकारोऽपि "शाकारीं"भाषां प्रयुज्य स्वकीयप्रेमप्रकाशं कुर्वन्नाह—किं यासीति । शकारस्योक्तौ सर्वत्रापि ।

"अपार्थमक्रमं व्यर्थं पुनरुक्तं हतोपमम् ।
लोकन्यायविरुद्धञ्च, शकारवचनं विदुः ॥"

---

*शकार—वसन्तसेने ! ठहर ! ठहर !

"ऐ सुन्दरि ! तू गिरती-पड़ती क्यों भाग रही है ? जरा ठहर जा—मर नहीं जायगी । ( देख तो— ) यह बेचारा मेरा हृदय-अङ्गारों पर पड़े हुए मांसखण्ड की भाँति—कामदेव से दग्ध हो रहा है ।" ॥१८॥

---

* "मद-मूर्खताभिमानी" "शकार" की भाषा 'शाकारी' है । उसकी भाषा में पुनरुक्त, व्यर्थ, लोकविरुद्धता, इतिहास-विरुद्धता आदि दोषों की भरमार है ( परन्तु इन्हें दोष नहीं मानना चाहिए ) ।

कामेन दह्यते खलु मे हृदयं तपस्वि,
अङ्गारराशिपतितमिव मांसखण्डम् ॥ ]

चेटः—अज्जुके ! चिट्ठ, चिट्ठ,

**उत्ताशिता गच्छशि अंतिका मे,**
**शंपुण्णपच्छा विअ गिम्हमोरी ।**
**ओवग्गदी शामिअभश्टके मे,**
**वण्णे गडे कुक्कडशावके व्व ॥ १९ ॥**

[ आर्ये ! तिष्ठ तिष्ठ,
उत्त्रासिता गच्छस्यन्तिकान्मम संपूर्णपक्षेव ग्रीष्ममयूरी ।
अववल्गति स्वामिभट्टारको मम वने गतः कुकुटशावक इव ॥ ]

इति नियमात् व्यर्थता, क्रमराहित्यम्, पुनरुक्तिः, इत्यादयो दोषा न दोषायेति ज्ञेयम् । वासूः = सुन्दरी, "बाला स्याद् वासूः" इत्यमरः । तपस्वि = वराकम् हृदयम् । शेषं स्पष्टार्थम्; अत्रोपमाऽलङ्कारः । वसन्ततिलका च्छन्दः ॥१८॥

चेटोऽप्याह—उत्त्रासितेति । मे = मम अन्तिका = ज्येष्ठा भगिनी ( अन्तिका भगिनी ज्येष्ठा, इत्यमरः । ) सम्पूर्णपक्षा ग्रीष्मकालस्य मयूरीव उत्त्रासिता = भीतभीता सती किं = किमर्थं यासि ? वने गतः कुकुटस्य = शावकः = बाल इव ममायं स्वामी शकारः अववल्गति = ससंभ्रमं तव समीपे समागच्छति । अनुकम्प्यतामयं भवत्वेति भावः । अत्रोपमाऽलङ्कारः । इन्द्रवज्रा च्छन्दः । तल्लक्षणं यथा—

"स्यादिन्द्रवज्रा यदि तौ जगौ गः ।" इति ॥१९॥

**चेट—आर्ये ! ठहरो !**

"बहिन जी ! तुम ( हमारे पास से ) डर कर ग्रीष्म-ऋतु की मयूरी की भाँति पंखों को एकत्रित कर क्यों जा रही हो ? यह हमारा स्वामी 'शकार' मुर्गे के बच्चे की भाँति तुम्हारा पीछा कर रहा है ।" ॥१९॥

---

यहाँ से आगे "शकार" बड़ी ही विचित्रता से अपना प्रेम प्रदर्शित करेगा । वह गर्व का मूर्तिमान् स्वरूप है । उसमें दया का सर्वथा अभाव है । इतने पर भी वह "वसन्त सेना" को अपने वश में करना चाहता है ।

विटः—वसन्तसेने ! तिष्ठ तिष्ठ,

किं यासि बालकदलीव विकम्पमाना,
रक्तांशुकं पवनलोलदशं वहन्ती ।
रक्तोत्पलप्रकरकुड्मलमुत्सृजन्ती,
टङ्कैर्मनःशिलगुहेव विदार्यमाणा ॥ २० ॥

शकारः—चिट्ठ वशंतशेणिए ! चिट्ठ,

मम मअणमणंगं मम्मथं वड्ढअंती,
णिशि अ शअणके मे णिद्दअं आक्खिवंती ।
पशलशि भअभीदा पक्खलंती खलंती,
मम वशमणुजादा लावणश्शेव कुंती ॥ २१ ॥

पुनर्विटः कथयति—किं यासीति । वसन्तसेने ! त्वं कम्पिता बालकदलीव पवनेन लोला = चञ्चला, दशा = वस्त्रप्रान्तो यस्य तादृशं रक्तवर्णमंशुकं = वस्त्राञ्चलं वहन्ती = धारयन्ती, टङ्कैः = पाषाणदारणैः ( "टङ्कः पाषाणदारणः" इत्यमरः ) [ छैनीति भाषायां प्रसिद्धम् ] विदार्यमाणा = खण्डिता, मनःशिलायाः "मनसिल" इति संज्ञया प्रसिद्धस्य धातुविशेषस्य गुहा इव, रक्तोत्पलानां = रक्तवर्णकमलानाम्, प्रकरः = समूहः, तस्य कुड्मलम् = कलिकामिव उत्सृजन्ती = परित्यजन्ती किमिति यासि ? तव गमनसमये पवनवशाच्चलितं चेलाञ्चलं रक्तकमलानां परिक्षिप्यमाणं मुकुलकुलमिव चकास्ति । त्वञ्च मनःशिलागुहेव शोभते । अत्रोत्प्रेक्षा, उपमा चालङ्कारौ । उत्प्रेक्षालक्षणञ्च—"भवेत् सम्भावनोत्प्रेक्षा, प्रकृतस्य परात्मना" इति । प्रसादो गुणः । लाटी रीतिः । वसन्ततिलका छन्दः ॥२०॥

विट—वसन्तसेने ! ठहरो ! ठहरो !

"तुम नई कदली ( केले ) के समान काँपती तथा पवन से चञ्चल छोरों वाले लाल दुपट्टे को धारण करती हुई छैनियों से काटी गई "मनसिल" की गुफ़ा की भाँति लाल-लाल कमलों की कलियों को बिखेरती-सी क्यों लाल उत्तरीय बिखरती हुई कमल-कलिकाओं सा सुशोभित हो रहा है । )" ॥ २० ॥

[ तिष्ठ वसन्तसेने ! तिष्ठ,—

मम मदनमनङ्गं मन्मथं वर्धयन्ती,
निशि च शयनके मम निद्रामाक्षिपन्ती ।
प्रसरसि भयभीता प्रस्खलन्ती स्खलन्ती,
मम वशमनुयाता रावणस्येव कुन्ती ॥ ]

विटः—वसन्तसेने !

**किं त्वं पदैर्मम पदानि विशेषयन्ती,**
**व्यालीव यासि पतगेन्द्रभयाभिभूता ।**
**वेगादहं प्रविसृतः पवनं न रुन्ध्यां,**
**त्वन्निग्रहे तु वरगात्रि ! न मे प्रयत्नः ॥२२॥**

स्वकीयमूर्खतां विशेषरूपेण प्रकाशयन् शकारो वसन्तसेनां ब्रूते—ममेति । मम मदनं वर्धयन्ती, रात्रौ, निर्दयं मम शय्यायां निपतन्ती, त्वमिदानीं भीता रावणस्य वशे कुन्तीव मम वशमनु यातासीत्यादिकं सर्वमपि वाक्यं निरर्थकम्, पुनरुक्तञ्चेति शकारस्य स्वरूपं सम्यङ्निरूपितं कविनेति तत्त्वम् । मालिनी च्छन्दः । तल्लक्षणं यथा—"ननमयययुतेयं, मालिनी भोगिलोकैः" इति ॥२१॥

अतिवेगेन गच्छन्तीं तामवलोक्य पुनरपि विटः प्राह—किं त्वमिति । वसन्तसेने ! गरुडभीता सर्पिणीव स्वपदैर्मम पदचालनमपि तिरस्कुर्वाणा प्रयासि ?

शकार—वसन्तसेने ! ठहर ! ठहर !

"मेरे कामदेव ( अनङ्ग, मन्मथ ) को बढ़ाती तथा रात्रि में शय्या पर मेरी निद्रा में विघ्न डालती हुई रावण के वश में आई हुई कुन्ती की भाँति अब मेरे हाथों में पड़कर तू भयभीत हो गिरती-पड़ती भाग रही है ।" ॥२१॥

विट—वसन्तसेने !

"तुम गरुड़ से भयभीत सर्पिणी की भाँति अपने चरणों को मुझसे भी अधिक वेग से रखती हुई क्यों जा रही हो ? यदि मैं चलूँ तो अपने वेग से पवन को भी रोक सकता हूँ; परन्तु सुन्दरि ! मेरा यत्न तुम्हें पकड़ने के लिए नहीं है । ( मैं तुम्हें पकड़ना नही चाहता इसलिए मुझसे मत डरो । )" ॥२२॥

शकारः—भावे भावे !

**एशा णाणकमूशिकामकशिका मच्छाशिका लाशिका,**
**णिण्णाशा कुलणाशिका अवशिका कामस्स मंजूशिका ।**
**एशा वेशवहू शुवेशणिलआ वेशंगणा वेशिआ,**
**एशे शे दशणामके मयि कले अज्जावि मं णेच्छदि ॥२३॥**

[ भाव भाव !
एषा नाणकमोषिकामकशिका मत्स्याशिका लासिका,
निर्नासा कुलनाशिका अवशिका कामस्य मञ्जूषिका ।
एषा वेशवधूः सुवेशनिलया वेशाङ्गना वेशिका,
एतान्यस्या दश नामकानि मया कृतान्यद्यापि मां नेच्छति ॥ ]

यद्यहं वेगात् प्रचलामि तदा स्ववेगेन पवनमपि निरोद्धुं शक्नुयाम्, परं सुन्दरि ! तव निग्रहे मम प्रयत्नो नास्ति ! त्वया मत्तो न भेतव्यम् । वसन्ततिलका च्छन्दः । उपमालङ्कारः ॥२२॥

पुनरपि शकारो विटमुद्दिश्य कथयति— भावेति । विद्वन् ! ( भावो विद्वान्, इत्यमरः ) मया एतस्या दशनामानि कृतानि, तथापि वार्तामात्रेणापीयं मां नेच्छति, आश्चर्यम् ! तानि च दशनामानि, यथा—१–नाणकमूशिकामकशिका = नाणकस्य उत्तमरत्नादिकं मुष्णातीति यस्तस्य कामं कशन्ती उत्तमरत्नाद्यपहर्तॄणां तस्कराणां कामोपभोगेच्छामियं पूरयति । २–मच्छाशिका = मत्स्याशनं करोति । ३–लाशिका =

शकार—भाव !—

"मैंने इसके—( १ ) "नाणकमूशिकामकशिका" ( उत्तम रत्नादि चुरानेवालों की कामेच्छा को पूरा करने वाली ) ( २ ) "मच्छाशिका" ( मछली खाने वाली ) ( ३ ) "लशिका" ( नृत्य करने वाली ) ( ४ ) "निर्नासा ( सम्मानरहिता ) ( ५ ) "कुलनाशिका" ( ६ ) "अवशिका" ( किसी के वश में न आने वाली ) ( ७ ) "काम की पिटारी" ( ८ ) "सुवेशनिलया" ( अच्छा वेश रखनेवाली ) ( ९ ) "वेशाङ्गना" तथा ( १० ) "वेशिका"—ये दश नाम रख दिये हैं आश्चर्य है कि इतने पर भी यह मुझे नहीं चाहती ।" ॥२३॥

विटः—

प्रसरसि भयविक्लवा किमर्थं प्रचलितकुण्डलघृष्टगण्डपार्श्वा ।
विटजननखघट्टितेव वीणाजलधरगर्जितभीतसारसीव ॥ २४ ॥

शकारः—

झाणज्झणंतबहुभूश्शणशद्दमिश्शं,
किं दोव्वदी विअ पलाअशि लामभीदा ? ।
एशे हलामि शहश त्ति जधा हणूमे,
विश्शावशुश्श बहिणिं विअ तं शुभद्दं ॥२५॥

[ झणज्झणमिति बहुभूषणशब्दमिश्रं किं द्रौपदीव पलायसे रामभीता ? ।
एष हरामि सहसेति यथा हनूमान्विश्वावसोर्भगिनीमिव तां सुभद्राम् ॥ ]

नर्तनशीला । ४—नाशवती । ५—कुलविनाशिका । ६—कस्यापि वशे नायान्ती । ७—कामस्य मञ्जूशिका = कामपेटी । शेषं स्पष्टम् । अत्र शार्दूलविक्रीडितं वृत्तम् ॥२३॥

पुनरपि विटः कथयति—प्रसरसि—इति । विटजनानां नखाग्रेण वाद्यमाना वीणेव, मेघगर्जनेन भीता सारसीव भययुक्ता, प्रचलद्भ्यां कर्णाभरणाभ्यां घृष्टकपोलपार्श्वभागा सती किमिति धावसि ? कस्त्वां बलाज्जिघृक्षति ? भयवत्या भवत्या न भवितव्यम् । अत्रोपमालङ्कारः । पुष्पिताग्रा च्छन्दः । तल्लक्षणं यथा—"अयुजि नयुगरेफतो यकारो, युजि च न जौ जरगाश्च पुष्पिताग्रा ॥ इति ॥२४॥

**विट—**

"विट आदियों के नख के अग्रभाग से बजाई वीणा, ( अथवा ) मेघों के गर्जन से डरी हुई सारसी की भाँति चलने के कारण कुण्डलों से अपने कपोलस्थल को घिसाती हुई भय से व्याकुल होकर क्यों भाग रही हो ? ॥२४॥

**शकार—**

"अपने आभूषणों का "झन-झन" शब्द करती हुई तू राम से डरी द्रौपदी की भाँति कहाँ जा रही है ? जैसे "हनूमान्" जी ने "विश्वावसु" की बहिन "सुभद्रा" का हरण कर लिया था वैसे ही मैं भी बलपूर्वक सहसा तुझे हरता हूँ ।" ॥२५॥

चेटः—

**लामेहि अ लाअवल्लहं तो क्खाहिशि मच्छमंशकं ।**
**एदेहिं मच्छमंशकेहिं शुणआ मडअं ण शेवंदि ॥२६॥**

[ रमय च राजवल्लभं ततः खादिष्यसि मत्स्यमांसकम् ।
एताभ्यां मत्स्यमांसाभ्यां श्वानो मृतकं न सेवन्ते ॥ ]

विटः—भवति वसन्तसेने !

**किं त्वं कटीतटविनेशितमुद्वहन्ती,**
**ताराविचित्ररुचिरं रशनाकलापम् ।**
**वक्त्रेण निर्मथितचूर्णमनःशिलेन,**
**त्रस्ताद्भुतं नगरदैवतवत्प्रयासि ॥ २७ ॥**

---

सूचना :—२५–२६ संज्ञकौ श्लोकौ न व्याख्यानमर्हतः । सरलौ मूलत एव ज्ञेयौ । क्रमशः—वसन्ततिलका, आर्या च वृत्ते ।

विटो वदति—किं त्वमिति । त्वं ताराणां विन्यासेन विचित्ररुचिरं कटीतटे संस्थापितं रसनाकलापं वहन्ती मनःशिलाचूर्णमपि येन पराभूतम्, एवंविधेन मुखेनोपलक्षिता नगरदेवतेव त्रस्ताद्भुतं यथा स्यात्तथा = अद्भुतप्रकारेण त्रस्ता सती कथं प्रयासीति भूयो भूयः कथितापि त्वं स्वभयस्य हेतुं कथं न ब्रवीषीति भावः । अत्रोत्प्रेक्षालङ्कारः । वसन्ततिलका छन्दः ॥२७॥

---

चेट—

"इस राजवल्लभ से रमण करो तदनन्तर मछली और मांस खाओ ! इन मछली और मांस के लाभ से कुत्ते मुर्दे नहीं खाते ।" ॥२६॥

विट—वसन्तसेने !—

"तुम सितारे आदियों से जड़ी हुई तगड़ी को कटि-प्रदेश में धारण करती हुई, अपने मुख की शोभा से "मनसिल" के चूर्ण को भी तिरस्कृत करती हुई बड़े विचित्र प्रकार से डरकर "नगरदेवी" की भाँति क्यों जा रही है ? ( बार-बार पूछने पर भी भय का कारण नहीं बतलाती हो । )" ॥ २७ ॥

शकारः—

**अम्हेहिं चंडं अहिशालिअंती वणे शिआली विअ कुक्कुलेहिं ।**
**पलाशि शिग्घं तुलिदं शवेग्गं शवेंटणं मे हलअं हलंती ॥ २८ ॥**

[ अस्माभिश्चण्डमभिसार्यमाणा शृगालीव कुक्कुरैः ।
पलायसे शीघ्रं त्वरितं सवेगं सवृन्तं मम हृदयं हरन्ती ॥ ]

वसन्तसेना—पल्लवआ पल्लवआ ! परहुदिए परहुदिए ! । [ पल्लवक पल्लवक ! परभृतिके परभृतिके ! ]

शकारः—( सभयम् ) भावे भावे ! मणुश्शे मणुश्शे ! । [ भाव भाव ! मनुष्या मनुष्याः ! । ]

विटः—न भेतव्यं न भेतव्यम् ।

वसन्तसेना—माहविए माहविए ! । [ माधविके माधविके ! । ]

विटः—( सहासम् ) मूर्ख ! परिजनोऽन्विष्यते ।

शकारः—भावे भावे ! इत्थिअं अण्णेशदि । [ भाव भाव ! स्त्रियमन्वेषयति । ]

---

अस्माभिरिति । शकारकथनस्यायमाशयः । यथा वने कुक्कुरैरभिसार्यते क्रोष्ट्री, तथैव तथाविधैरस्माभिस्त्वमिति सवेगं मम हृदयं वेष्टन-सहितं गृहीत्वा कथं

---

शकार—"हमारे द्वारा, वन में कुत्तों से पीछा की गई शृगाली के समान—अनुसृत होकर शीघ्र ही वेग पूर्वक मेरे हृदय को समूल खींचती हुई क्यों भाग रही है ?" ॥ २८ ॥

वसन्तसेना—पल्लवक ! पल्लवक ! परभृतिके ! परभृतिके !

शकार—( डर कर ) भाव ! मनुष्य है मनुष्य ! ( इसके साथ मनुष्य भी हैं । )

विट—डरो मत !

वसन्तसेना—माधविके ! माधविके !

विट—( हँसकर ) मूर्ख ! अपने परिजनों को ढूँढ रही है !

शकार—भाव ! स्त्री को ढूँढ रही है ?

विटः—अथ किम् ।

शकारः—इश्थिआणं शदं मालेमि । शूले हगे । [ स्त्रीणां शतं मारयामि । शूरोऽहम् । ]

वसन्तसेना—( शून्यमवलोक्य ) हद्धी हद्धी, कधं परिअणो वि परिब्भट्टो । एत्थ मए अप्पा शअं ज्जेव्व रक्खिदव्वो । [ हा धिक् हा धिक्, कथं परिजनोऽपि परिभ्रष्टः । अत्र मयात्मा स्वयमेव रक्षितव्यः । ]

विटः—अन्विष्यतामन्विष्यताम् ।

शकारः—वशंतशेणिए ! विलव विलव पलहुदिअं वा पल्लवअं वा शव्वं वा वशंतमाशं । मए अहिशालिअंतीं तुमं के पलित्ताइश्शदि ? ।

**किं भीमशेणे जमदग्गिपुत्ते कुंतीशुदे वा दशकंधले वा ।**
**एशे हगे गेण्हिय केशहश्ते दुश्शाशणश्शाणुकिदिं कलेमि ॥२९॥**

---

प्रयासि ? वेष्टनम् = बन्धनवस्त्रम् ॥ अत्रोपमालङ्कारः । उपजाति वृत्तम् । द्वयोर्वृत्तयोरेकत्र मेलनादुपजातिर्भवति ॥२८॥

---

विट—हाँ !

शकार—स्त्रियाँ तो सैकड़ों मार सकता हूँ । मैं शूर हूँ ।

वसन्तसेना—( परिजनों से शून्य देखकर ) हाय ! क्या परिजन भी पीछे छूट गये हैं ? यहाँ मुझे स्वयं अपनी रक्षा करनी चाहिए ।

विट—ढूँढो, ढूँढो !

शकार—वसन्तसेने ! यथेच्छ विलाप करो ! चाहे "परभृतिका" का अथवा "पल्लवक" का या सम्पूर्ण वसन्त मास का ही । मेरे साथ अभिसरण करती हुई तुझको कौन छुड़ा सकता है ?

"क्या जमदग्निपुत्र "भीमसेन" अथवा कुन्तीपुत्र "दशकन्धर" ( तुझको छुड़ायेगें ? ) ( देख ! ) मैं अभी तेरे केश पकड़ कर "दुःशासन" का अनुकरण करता हूँ" ॥ २९ ॥

णं पेक्ख णं पेक्ख,—

अशी शुतिक्खे वलिदे अ मश्तके,
कप्पेम शीशं उद मालएम वा ।
अलं तवेदेण पलाइदेण,
मुमुक्खु जे होदि ण शे खु जीअदि ॥३०॥

[ वसन्तसेनिके ! विलप विलप परभृतिकां वा पल्लवकं वा सर्वं वा वसन्तमासम् । मयाभिसार्यमाणां त्वां कः परित्रास्यते ? ।

किं भीमसेनो जमदग्निपुत्रः कुन्तीसुतो वा दशकन्धरो वा ।
एषोऽहं गृहीत्वा केशहस्ते दुःशासनस्यानुकृतिं करोमि ॥

ननु प्रेक्षस्व ननु प्रेक्षस्व,

असिः सुतीक्ष्णो वलितं च मस्तकं कल्पये शीर्षमुत मारयामि वा ।
अलं तवैतेन पलायितेन मुमूर्षुर्यो भवति न स खलु जीवति ॥ ]

वसन्तसेना—अज्ज ! अबला खु अहं । [ आर्य ! अबला खल्वहम् । ]

विटः—अत एव ध्रियसे ।

शकारः—अतो ज्जेव्व ण मालीहशि । [ अत एव न मार्यसे । ]

वसन्तसेना—( स्वगतम् ) कधं अणुणओ वि से भअं उप्पादेदि ? । भोदु, एव्वं दाव । ( प्रकाशम् ) अज्ज ! इमादो किंपि अलंकरणं तक्कीअदि । [ कथमनुनयोऽप्यस्य भयमुत्पादयति । भवतु एवं तावत् । आर्य ! अस्मात्किमप्यलंकरणं तर्क्यते ।

---

देख न—"अपनी पैनी तलवार से तेरा सिर काट कर तुझे मार डालता हूँ । इसलिए तेरा भागना व्यर्थ है क्योंकि जिसकी मृत्यु आ जाती है वह जीवित नहीं रहता" ॥ ३० ॥

वसन्तसेना—आर्य ! मैं तो अबला हूँ ।

विट—तभी तो जीवित हो ।

शकार—इसीलिए तो मारी नहीं जा रही है ।

वसन्तसेना—( स्वगत ) क्यों, इसका अनुनय भी भय उत्पन्न करता है ? अस्तु; ऐसा करती हूँ । ( प्रकाश में ) आर्य ! क्या आप मुझसे आभूषण लेंगे ?

विटः—शान्तं पापं शान्तं पापम्। भवति वसन्तसेने ! पुष्पमोषमर्हत्यु-द्यानलता। तत्कृतमलंकरणैः।

वसन्तसेना—ता किं खु दाणिं। [ तत्किं खल्विदानीम्। ]

शकारः—हग्गे वरपुलिशमणुश्शे वाशुदेवके कामइदव्वे। [ अहं वर-पुरुषमनुष्यो वासुदेवः कामयितव्यः। ]

वसन्तसेना—( सक्रोधम् ) संतं पावं। अवेहि, अणज्जं मंतेशि। [ शान्तं पापम्। अपेहि, अनर्हं मन्त्रयसि। ]

शकारः—( सतालिकं विहस्य ) भावे भावे ! पेक्ख दाव। मं अंतलेण शुशिणिद्धा एशा गणिआदालिआ णं। जेणमं भणादि—'एहि। शंते शि। किलिंते शि' त्ति। हग्गे ण गामंतलं वा ण णगलंतलं वा गडे। अज्जुके ! शवामि भावश्श शीशं अत्तणकेहिं पादेहिं। तव ज्जेव्व पश्चाणुपश्चिआए आहिंडंते शंते किलिंते म्हि शंवुत्ते। [ भाव भाव ! प्रेक्षस्व तावत्। मामन्तरेण

---

किमु मत्तः किमप्यलङ्करणं वाञ्छन्ति भवन्तः ? इति निशम्य विटो वदति—न पुष्पेति। वसन्तसेने ! उद्यानस्य लतायाः शोभा पुष्पैरेव भवति। ततस्तस्याः पुष्पाणि विज्ञैर्नापहरणीयानि। तथैव तव शरीरसौन्दर्यसाधनान्यलङ्करणानि नापेक्षितानि। इति भावः।

---

विट—अमङ्गल दूर हो ! अयि वसन्तसेने ! "उद्यानलता का पुष्पापहरण उचित नहीं।" इसलिए आभूषणों के विषय में कुछ मत कहो। ( वाटिका-वल्लरी की शोभा कुसुम-दल से ही होती है। अतः किसी भी विज्ञ व्यक्ति को उसके पुष्प नहीं नोंचने चाहिए। वैसे ही तुम्हारे शरीर के शोभाधायक अलङ्कारों का अपहरण हम लोगों के लिए अपेक्षणीय नहीं है। )

वसन्तसेना—तो अब क्या करूँ ?

शकार—मुझ सत्पुरुष 'वासुदेव' की कामना कर !

वसन्तसेना—( सक्रोध ) चुप ! चुप ! दूर हो ! नीच बात कहता है !

शकार—( तालियाँ बजाकर हँसता हुआ ) भाव ! देखो तो, यह वेश्या की

सुस्निग्धैषा गणिकादारिका ननु । येन मां भणति–'एहि । श्रान्तोऽसि । क्लान्तोऽसि' इति । अहं न ग्रामान्तरं न नगरान्तरं वा गतः । भट्टालिके ! शपे भावस्य शीर्षमात्मीयाभ्यां पादाभ्याम् । तवैव पृष्ठानुपृष्ठिकयाहिण्डमानः श्रान्तः क्लान्तोऽस्मि संवृत्तः । ]

विटः—( स्वगतम् ) अये, कथं शान्तमित्यभिहिते श्रान्त इत्यवगच्छति मूर्खः ? । ( प्रकाशम् ) वसन्तसेने ! वेशवासविरुद्धमभिहितं भवत्या । पश्य,—

**तरुणजनसहायश्चिन्त्यतां वेशवासो,**
**विगणय गणिका त्वं मार्गजाता लतेव ।**
**वहसि हि धनहार्यं पण्यभूतं शरीरं,**
**समम्रुपचर भद्रे ! सुप्रियं वाप्रियं वा ॥३१॥**

---

वसन्तसेनावचनं वेश्याजनविरुद्धमिति विटो वदति—**वेशवासेति** । वेश्यागृहे निवसतो वेश्याजनस्य विरुद्धस्य ।

विटो वेश्याजनविरुद्धत्वं समर्थयति—**तरुणेति** । वसन्तसेने ! विचारं कुरु ।

---

पुत्री हृदय से तो मुझमें अनुरक्त है; जिससे मुझे कहती है कि—"आओ ! तुम थक गये हो।" बाई जी ! मैं अपने पैरों से भाव ( विट ) के शिर की शपथ खाकर कहता हूँ कि मैं न तो किसी दूसरे गाँव में गया और न किसी नगर में ही । केवल तुम्हारे पीछे-पीछे चलता हुआ ही थक गया हूँ ।

विट—( स्वयं ही ) अरे, यह मूर्ख "शान्त" इसको "श्रान्त" ( थका हुआ ) समझ रहा है !

( प्रकाश में ) वसन्तसेने ! तुमने यह बात वेश्याजन के विरुद्ध कही है । देखो—

"सोचो तो, वेश्या के घर में निवास युवकों के द्वारा ही सिद्ध होता है ! तुम अपने को मार्ग में उगी हुई लता समझो ! तुम्हारा यह शरीर 'धनहार्य' है ( जो धन देता है उसका ही यह शरीर मोल लिया हुआ हो जाता है । ) इसलिए भद्रे ! प्रिय हो चाहे अप्रिय सबका समान ही सत्कार करो !" ॥ ३१ ॥

अपि च,—

**वाप्यां स्नाति विचक्षणो द्विजवरो मूर्खोऽपि वर्णाधमः,**
**फुल्लां नाम्यति वायसोऽपि हि लतां या नामिता बर्हिणा ।**
**ब्रह्मक्षत्रविशस्तरन्ति च यया नावा तयैवेतरे,**
**त्वं वापीव लतेव नौरिव जनं वेश्यासि सर्वं भज ॥३२॥**

वसन्तसेना—गुणो खु अणुराअस्स कारणं, ण उण बलक्कारो । [ गुणः खल्वनुरागस्य कारणम्, न पुनर्बलात्कारः । ]

शकारः—भावे भावे ! एशा गब्भदाशी कामदेवाअदणुज्जाणादो पहुदि ताह दलिद्दचालुहत्ताह अणुलत्ता ण मं कामेदि । वामदो तश्श घलं । जधा तव मम अ हश्तादो ण एशा पलिब्भंशदि तधा कलेदु

वेशवासः=वेश्यागृहे निवासः, तरुणजनानां साहाय्येनैव प्रचलति । त्वन्तु मार्गे जाता लतेवासि । सर्वेषामेव त्वयि समानोऽधिकारः । तवेदं शरीरं धनेन दत्तेन हार्यम् । यो हि धनं ददाति, तस्यैवेदं पण्यभूतं क्रय्यतुल्यं तव वपुरस्तीति त्वया तु सर्वेषामुपचारः = सेवासत्कारः समानरूपेण कर्तव्यः ।

अत्रोपमाऽलङ्कारः । काव्यलिंगाप्रस्तुतप्रशंसे च । मालिनी छन्दः । प्रसादो गुणः । लाटी रीतिः ॥३१॥

पुनरपि समर्थयति–वाप्यामिमि । वाप्यां द्विजोऽद्विजो वा स्नात्येव, न कोऽपि

और भी—"बावड़ी में पण्डित ब्राह्मण और मूर्ख शूद्र भी स्नान करता है ( परन्तु इसका कोई विचार नहीं करता ) जिस प्रफुल्लित लता को मयूर झुकाता है उसको कौआ भी बैठकर नँवा देता है । जिस नाव से ब्राह्मण क्षत्रिय पार उतरते हैं उसी से अन्य भी पार पहुँच जाते हैं । इसलिए तुम वापी लता तथा नौका की भाँति वेश्या होने के नाते ( धन देने वाले ) सभी व्यक्तियों का सम्मान करो !" ॥ ३२ ॥

वसन्तसेना—"गुण ही अनुराग का कारण होते हैं बलात्कार नहीं" ( इसलिए ही "चारुदत्त" में मेरा प्रेम है और गुणहीन होने से "शकार" में नहीं । )

शकार—भाव !.भाव ! जन्म भर की दासी कामदेव के मन्दिर तथा उद्यान

भावे । [ भाव भाव ! एषा गर्भदासी कामदेवायतनोद्यानात्प्रभृति तस्य दरिद्रचारु-दत्तस्यानुरक्ता न मां कामयते । वामतस्तस्य गृहम् । यथा तव मम च हस्तान्नैषा परिभ्रश्यति तथा करोतु भावः । ]

विटः—( स्वगतम् ) यदेव परिहर्तव्यं तदेवोदाहरति मूर्खः । कथं वसन्तसेनार्यचारुदत्तमनुरक्ता ? । सुष्ठु खल्विदमुच्यते—'रत्नं रत्नेन संगच्छते' इति । तद्गच्छतु, किमनेन मूर्खेण । ( प्रकाशम् ) काणेलीमातः ! वामतस्तस्य सार्थवाहस्य गृहम् ।

---

विचारः । या लता मयूरेण नामिता, काकोऽपि तामेव स्वोपवेशनेन नामयत्येव, यया नौकया द्विजास्तरन्ति, तदन्येऽपि तथैव; अतः उक्तदृष्टान्तेन त्वं वेश्याऽसि सर्वमेव धनप्रदातारं जनं भजेति भावः । एकस्य बहूपमानात्—अत्र मालोपमाऽलङ्कारः । प्रसादो गुणः । लाटी रीतिः । शार्दूलविक्रीडितं छन्दः ॥३२॥

गुण इति । वसन्तसेना कथयति—गुणेनानुरागो भवति, न पुनर्बलात्कारेण । ततश्च चारुदत्तो गुणी, नायमिति नाहमस्मिन्ननुरक्तेति हृदयम् ।

शकारमुखाद् वसन्तसेना चारुदत्तेऽनुरक्तेति निशम्य रत्नस्य संगतिः, यत् सत्यम्, रत्नेन साकमेव भवतीत्येव युक्तम् । उभाविमौ रत्नतुल्यौ, एतयोः संयोगः स्पृहणीय एवेति मत्वा शकारं तारस्वरेण पृच्छति वसन्तसेनाऽपि यथावगतार्था भवेत् ।

काणेलीमातः—इति । व्यभिचारिणी स्त्री "काणेली" इति कथ्यते, अवि-

---

में जाने से उस दरिद्र "चारुदत्त" में अनुरक्त हो गई है—और मुझे नहीं चाहती । उसका घर बायीं ओर है । ऐसा काम करो जिससे यह मेरे और तुम्हारे हाथ न निकलने पाये ।

विट—( स्वयं ही ) जो बात छोड़ने की है वही कह रहा है ! क्या "वसन्तसेना" "आर्य चारुदत्त" में अनुरक्त है ? यह ठीक ही कहा है—

"रत्न की संगति ( सच पूछो तो ) रत्न से ही होती है ।" ( ये दोनों रत्न-तुल्य हैं अतः—) मिलें ! इस मूर्ख से क्या प्रयोजन ? ( प्रकाश में ) शकार ! क्या "चारुदत्त" का घर बायीं ओर है ?

शकारः—अध इं। वामदो तश्श घलं। [ अथ किम्। वामतस्तस्य गृहम्। ]

वसन्तसेना—( स्वगतम् ) अम्महे, वामदो तस्स गेहं त्ति जं सच्चं, अवरज्झंतेण वि दुज्जणेण उवकिदं, जेण पिअसंगमं पाविदं। [ आश्चर्यम्, वामतस्तस्य गृहमिति यत्सत्यम्, अपराध्यतापि दुर्जनेनोपकृतम्, येन प्रियसंगमः प्रापितः। ]

शकारः—भावे भावे! बलिए खु अंधआले माशलाशिपविश्टा विअ मशिगुडिआ दीशंती ज्जेव्व पणश्टा वशंतशेणिआ। [ भाव भाव! बलीयसि खल्वन्धकारे माषराशिप्रविष्टेव मसीगुटिका दृश्यमानैव प्रनष्टा वसन्तसेना। ]

---

वाहिता वा। ततः काणेली माता, यस्य, तत्सम्बुद्धौ हे काणेलीमातः = शकार! किं वामतश्चारुदत्तस्य गृहमस्ति?

वसन्तसेना तथा श्रुत्वा स्वगतमाह—अहो! इति। आश्चर्यम्! अनेन दुर्जनेनापि "वामतस्तस्य सार्थवाहस्य गृहमि"ति कथयता प्रियसंगप्रापणेन मम महानुपकारः कृतः।

अत्र "आनन्दो वाञ्छितागमः" इति निर्वहणसन्धेरङ्गं प्रतिपादितम्।

अन्धकारस्याधिक्यं वर्णयति शकार :—भावे भावे! इति। भाव! बलीयसि = महति अन्धकारे वसन्तसेना न दृश्यते, यथा माषाणां राशौ = समूहे निपातिता मसीगुटिका = मसेर्निर्मिता गुटिका = गोलिकेव तत्समानवर्णतया पृथक् प्रतीतिपथं नायाति। केचित्तु "मसीगुटिका" = कीटविशेष इति प्रतिपादयन्ति।

---

शकार—हाँ, उसका घर बायीं ओर है!

वसन्तसेना—( स्वयं ही ) आश्चर्य है! उनका घर बायीं ओर है! सच तो यह है कि अपराध करते हुए भी इन दुष्टों ने बहुत उपकार किया है जिससे कि प्रिय सङ्गम हो गया है!

शकार—भाव! भाव! इस महान् अन्धकार में "वसन्तसेना" उड़दों के ढेर में मसीनिर्मित ( रोशनाई आदि की बनी ) गोली की भाँति दिखाई देती हुई ही तिरोहित हो गई!

विटः—अहो, बलवानन्धकारः । तथा हि,—

**आलोकविशाला मे सहसा तिमिरप्रवेशविच्छिन्ना ।**
**उन्मीलितापि दृष्टिर्निमीलितेवान्धकारेण ॥३३॥**

अपि च,—

**लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।**
**असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥३४॥**

---

विटोऽपि तमसो बाहुल्यं वर्णयति—आलोकेति । अहो ! प्रबलोऽन्धकारः, यतः आलोके = प्रकाशे विशाला मम दृष्टिः सहसा तिमिरे प्रविष्टा सती विच्छिन्नेव जाता । नेत्रे समुन्मीलिते यद्यपि, तथापि अन्धकारवशादनुन्मीलिते इव वर्तेते । प्रत्यक्षं प्रत्यालोकसापेक्षचक्षुषः कारणतेति मयाद्य ज्ञातम् । यतः प्रकाशे एव मम दृष्टेर्माहात्म्यम्, न त्वन्धकारे इति भावः । अत्रोत्प्रेक्षाऽलङ्कारः । आर्या च्छन्दः ॥३३॥

पुनरपि तमसो वैशिष्ट्यं सूचयति—लिम्पतीवेति । अन्धकारो ममाङ्गानि लिम्पतीव, यथा केनापि गोमयादिद्रवद्रव्येण गृहादेर्लेपनं क्रियते, तथैवान्धकारोऽपि लेपनमिव करोति । नभः = आकाशम्, अञ्जनस्य वृष्टिमिव करोति । आकाशात्तमोरूपेण मन्ये, अञ्जनस्य वृष्टिर्भवति । असतः पुरुषस्य सेवा यथा निष्फला जायते, तथैव ममेयं दृष्टिरपि निष्फलेव सम्पन्नेति भावः ।

अत्रोपमोत्प्रेक्षयोः संसृष्टिरलङ्कारः । अनुष्टुप् च्छन्दः । माधुर्यं गुणः । वैदर्भी रीतिः ॥३४॥

---

**विट—ओह ! बड़ा घना अन्धकार है ! क्योंकि:—**

"प्रकाश में विस्तृत मेरी दृष्टि सहसा अन्धकार में प्रवेश करने से विच्छिन्न हो गई है । मेरी खुली हुई दृष्टि भी अन्धकार से बन्द-सी हो रही है" । ॥ ३३ ॥

और भी—"अन्धकार अङ्गों को अवलिप्त कर रहा है आकाश (मानों) अञ्जन की वर्षा कर रहा है, असज्जन पुरुष की सेवा की भाँति मेरी दृष्टि विकल हो रही है । (अर्थात्—जैसे असत्पुरुष की सेवा व्यर्थ ही होती है वैसे ही मेरी दृष्टि अन्धकार में कुछ नहीं देख पाती—यह विफल हो रही है ।" ॥ ३४ ॥

शकारः—भावे भावे ! अण्णेशामि वशंतशेणिअं। [ भाव भाव ! अन्विष्यामि वसन्तसेनिकाम् । ]

विटः—काणेलीमातः ! अस्ति किंचिच्चिह्नं यदुपलक्षयसि ?

शकारः—भावे भावे ! किं विअ ? [ भाव भाव ! किमिव ? । ]

विटः—भूषणशब्दं सौरभ्यानुविद्धं माल्यगन्धं वा ?

शकारः—शुणामि मल्लगन्धं, अंधआलपुलिदाए उण णाशिआए ण शुव्वत्तं पेक्खामि भूशणशद्दं । [ श्रृणोमि माल्यगन्धम्, अन्धकारपूरितया पुनर्नासिकया न सुव्यक्तं पश्यामि भूषणशब्दम् । ]

विटः—( जनान्तिकम् ) वसन्तसेने !

**कामं प्रदोषतिमिरेण न दृश्यसे त्वं,**

---

विटः शकारं पृच्छति कथमन्विष्यसि वसन्तसेनाम् ? चिह्नाभावात् । भूषणेति । भूषणानां शब्दोऽस्ति = ध्वनिरस्ति किमु ? किं वा सौरभ्येण = सुगन्धेन, अनुविद्धम् = सहितं, माल्यानां = केशपाशनिहितानां कुसुमानां गन्धं वा ( उपलक्षयसीति पूर्वतः क्रियापदं सन्निकृष्यते )

शकार उत्तरयति—श्रृणोमीति । स्वमूर्खतया असम्बद्धमिव किमपि कथयति— माल्यगन्धन्तु श्रृणोमि, परमन्धकारपरिपूर्णतया नासिकया सुव्यक्ततया भूषणशब्दं न पश्यामि । शब्दः श्रूयते, न च गन्धः । अस्य तु विपरीतमतेः सर्वं विपरीतमेव भवतीति नाश्चर्यम् ।

---

शकार—भाव ! मैं "वसन्तसेना" को खोज रहा हूँ ।

विट—शकार ! क्या कोई चिन्ह है जिससे पता लगा रहे हो ?

शकार—कैसा चिह्न ?

विट—आभूषणों की खनखनाहट अथवा सौरभयुक्त मालाओं का गन्ध ?

शकार—मालाओं का गन्ध तो सुनता हूँ; परन्तु अन्धकार की अधिकता के कारण आभूषणों की झङ्कार स्पष्ट नहीं देखता ।

विट—( प्रेक्षकों के पास ) वसन्तसेने !—

"यद्यपि प्रदोष के इस घने अन्धकार में मेघ-गर्भित विद्युत् की भाँति तुम

सौदामिनीव　जलदोदरसंधिलीना ।
त्वां सूचयिष्यति तु माल्यसमुद्भवोऽयं,
गन्धश्च भीरु ! मुखराणि च नूपुराणि ॥३५॥

श्रुतं वसन्तसेने ! ।

वसन्तसेना—( स्वगतम् ) सुदं गहिदं च । ( नाट्येन नूपुराण्युत्सार्यं माल्यानि चापनीय किञ्चित्परिक्रम्य हस्तेन परामृश्य ) अम्मो, भित्तिपरामरिससूचिदं पक्खदुआरअं खु एदं । जाणामि अ संजोएण गेहस्स संवुदं पक्खदुआरअं । [श्रुतं गृहीतं च । अहो, भित्तिपरामर्शसूचितं पक्षद्वारकं खल्वेतत् ।

---

विटः शकारस्याशयं विज्ञाय (जनान्तिकं) कथयति वसन्तसेनाम्—काममिति । यदि कस्यचिदन्यस्याप्रतिपादनीयमुच्यते करमुत्थाप्य, अनामिकाञ्चानमय्य, तदा "जनान्तिकमि" त्युच्यते । तथा चोक्तं लक्षणम् दर्पणे—

"त्रिपताक-करेणान्यानपवार्यान्तरा　कथाम् ।
अन्योन्यामन्त्रणं यत् स्याज्जनान्ते तज्जनान्तिकम् ॥" इति ।

विटोक्तेराशयः—वसन्तसेने ! अन्धकारवशाद् जलदानां = मेघानां मध्ये निवसन्ती विद्युल्लतेव यद्यपि त्वं नोपलक्ष्यसे, तथापि तव भूषणानां शब्दो माल्यानां गन्धश्च सूचयिष्यति त्वाम् । अतः आत्मरक्षार्थं कालोचितं क्रियतां किमपीति सौजन्यात् प्रकटीकरोति स्वाशयम् । मुखराणि = ध्वनियुक्तानि, नूपुराणि = अलङ्कारविशेषाणि । अत्रोपमालङ्कारः । वसन्ततिलका च्छन्दः ॥३५॥

---

दिखाई नहीं दे रही हो तथापि मालाओं का गन्ध तथा आभूषणों का शब्द तुम्हें सूचित कर देगा ( इसलिए अपने परित्राण के योग्य साधनों का उपयोग करो ! )" ॥ ३५ ॥

वसन्तसेने ! सुन लिया ?

वसन्तसेना—( स्वयं ही ) सुना और समझ भी लिया !

[ अभिनय से नूपुरों को उतार तथा मालाओं को दूर कर, कुछ घूमकर हाथ से ढूँढती ( टटोलती ) हुई ] अहो ! दीवार छूने से यह पक्षद्वार ( खिड़की )

जानामि च संयोगेन गेहस्य संवृत्तं पक्षद्वारकम् । ]

चारुदत्तः—वयस्य ! समाप्तजपोऽस्मि । तत्सांप्रतं गच्छ । मातृभ्यो बलिमुपहर ।

विदूषकः—भो, ण गमिस्सं । [ भोः, न गमिष्यामि । ]

चारुदत्तः—धिक्कष्टम् ,—

**दारिद्र्यात्पुरुषस्य बान्धवजनो वाक्ये न संतिष्ठते,**
**सुस्निग्धा विमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः ।**
**सत्त्वं ह्रासमुपैति शीलशशिनः कान्तिः परिम्लायते,**
**पापं कर्म च यत्परैरपि कृतं तत्तस्य संभाव्यते ॥३६॥**

समाप्तजपश्चारुदत्तो विदूषकं बलिप्रदानाय पुनः कथयति, स च नाङ्गीकरोतीत्यालक्ष्य दारिद्र्य-दावानलदग्ध इव चारुदत्तो दारिद्र्यमाहात्म्यं वर्णयति—**दारिद्र्यादिति** । दारिद्र्यप्रसादात् बन्धुजनोऽपि पुरुषस्य वाक्ये न तिष्ठति, प्रीतिस्निग्धा अपि सुहृदो वैमुख्यं भजन्ते, आपदः समन्तात् स्फारीभवन्ति = विस्तृताः सम्भवन्ति, सत्त्वस्य = बलस्य च ह्रासो भवति, शीलरूपस्य चन्द्रस्य कान्तिः परितो म्लाना सञ्जायते । यच्च पापं कर्म परैरपि क्रियते, तत् तस्य दरिद्रजनस्यैव सम्भाव्यते । ततो दारिद्र्यस्य माहात्म्यं विशेषरूपेण वक्तुं न पार्यते, इति तत्त्वम् । अत्र रूपकालङ्कारः । शार्दूलविक्रीडितं च्छन्दः ॥३६॥

प्रतीत होता है । संयोगवश, मैं समझती हूँ कि यह बन्द है !

**चारुदत्त**—मित्र मैं भजन कर चुका हूँ । इसलिए जाओ देवी-देवताओं को बलि दे आओ !

**विदूषक**—मैं न जाऊँगा !

**चारुदत्त**—हा ! खेद है !—

"दरिद्रता के कारण बन्धु-बान्धव भी वश में नहीं रहते, प्रेमी विमुख हो जाते तथा आपत्तियाँ बढ़ जाती हैं, बल क्षीण एवं शीलरूपी चन्द्रमा की कान्ति म्लान हो जाती है और जो पापयुक्त कार्य दूसरे लोग करते हैं उनका सन्देह भी दरिद्र पर ही किया जाता है।" ॥ ३६ ॥

अपि च,—

**सङ्गं नैव हि कश्चिदस्य कुरुते संभाषते नादरात्।**
**संप्राप्तो गृहमुत्सवेषु धनिनां सावज्ञमालोक्यते।**
**दूरादेव महाजनस्य विहरत्यल्पच्छदो लज्जया,**
**मन्ये निर्धनता प्रकाममपरं षष्ठं महापातकम् ॥३७॥**

अन्यदपि दारिद्र्यस्य प्रभुत्वं वर्णयति—सङ्गमिति । कश्चिदपि भद्रपुरुषो दारिद्र्योपेतस्य संगतिमपि नैव करोति, आदरपूर्वकं भाषणमपि न विधत्ते, धनिनां गृहे उत्सवेषु यदि गच्छति, तर्हि एनं सर्वेऽपि जनाः सावज्ञम् = स-तिरस्कारं अल्पच्छदः = अल्पवस्त्रः सन् महाजनानां पार्श्वमपि गन्तुं लज्जते, ततोऽहं मन्ये, निर्धनता निःसन्देहं षष्ठं महापातकम् अस्ति । पापानि विविधानि सन्ति, तथापि विशेषपातकप्रदानि पञ्चोग्रपापानि तत्रभगवता श्रीमनुना कथितानि—

"ब्रह्महत्या सुरापानं, स्तेयो गुर्वङ्गनागमः ।
चत्वारि पातकान्याहुः, संसर्गश्चापि तैः सह ॥" इति ।

क्वचित् "महान्ति" इति पाठः। अत्र च दरिद्रतायाः षष्ठविधपातकत्वमुत्प्रेक्ष्यते। अत्रेदं तत्त्वम्—यथा कोऽपि विज्ञो जनः महापातकपुञ्जेन सह प्रीतिं नैव करोति, तथैव दरिद्रमपि जनं लोको दूरतस्त्यजति। अत्रोत्प्रेक्षालङ्कारः। प्रसादो गुणः। लाटी रीतिः। शार्दूलविक्रीडितं छन्दः ॥३७॥

**और भी**—"दरिद्र व्यक्ति के साथ कोई सङ्गति नहीं करता और न आदरपूर्वक बोलता ही है, उत्सवों में धनशालियों के घर पहुँच जाने पर तिरस्कारपूर्वक देखा जाता है और वस्त्रहीन होने के कारण बड़े-बड़े पुरुषों के पास जाने में लज्जा का अनुभव करता है ( इन सब बातों के आधार पर ) मैं समझता हूँ कि निर्धनता छठा महापातक है। ( यद्यपि पाप अनेक हैं तथापि मुख्य ये पाँच ही हैं-(१) ब्रह्महत्या (२) सुरापान (३) चोरी (४) गुरु पत्नी के साथ समागम तथा (५) इनके साथ सम्पर्क। जिस प्रकार कोई बुद्धिमान् मनुष्य इन पातकों से स्नेह नहीं करता उसी प्रकार निर्धन मनुष्य से भी कोई बात नहीं करता )" ॥ ३७ ॥

अपि च,—

**दारिद्र्य ! शोचामि भवन्तमेवमस्मच्छरीरे सुहृदित्युषित्वा ।**
**विपन्नदेहे मयि मन्दभाग्ये ममेति चिन्ता क्व गमिष्यसि त्वम् ॥ ३८ ॥**

भूयोऽपि निर्वेदं प्रकटयति—दारिद्र्येति । हे दारिद्र्यबन्धो ! तव विषयेऽहमनुदिनं शोचामि, यत् त्वं मम शरीरे "अयं मे परमः सुहृदि"ति बुद्ध्या सुचिरं निवासं कृतवानसि, किन्तु मयि मन्दभाग्ये विपन्नदेहे=मृते सति, त्वं कुत्र गमिष्यसि ? इत्येवास्ति प्रबला चिन्ता ।

अत्र सर्वेषां सुहृदामनाथानां नाथो विपद्बन्धुश्चारुदत्तः स्वजीवने कमपि न निवारितवान्, इति तु निश्चप्रचमेव, आगामिनीं विपत्तिमुपलक्ष्यापि स्वसुहृन्निवासचिन्तासन्तानसन्तप्तोऽपि बभूवेति "औदार्यातिशयं वस्तु, कविनिबद्धवक्तृप्रौढोक्तिसिद्धं वस्तुना व्यज्यते । अत्र "दारिद्र्य"स्य नपुंसकत्वाद् "भवन्त" मिति पुंस्त्वकथनं कवेः प्रमादमभिव्यनक्ति । अथवा—दारिद्र्ये बन्धुत्वारोपणार्थं मत्वा तथा ( पुंस्त्वं ) प्रयुक्तवानिति समाधानम् । ( तं भवम्=उत्पत्तिम्, ) इति केषाञ्चिद् व्याख्यानन्तु सर्वैरपि टीकाकारैर्निराकृतम् । इन्द्रवज्रोपेन्द्रवज्रासम्मिश्रणादुपजातिः । तल्लक्षणम्—यथा—

"स्यादिन्द्रवज्रा यदि तौ जगौ गः," इति "इन्द्रवज्रा" "उपेन्द्रवज्रा जतजास्ततो गौः", इति "उपेन्द्रवज्रा", "अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" इत्थं किलान्यास्वपि मिश्रितासु, वदन्ति जातिष्विदमेव नाम ॥" इति ॥३८॥

और भी—"दारिद्र्य ! मैं तुम्हारे विषय में ही सोचता रहता हूँ कि तुम मित्र समझ कर मेरे शरीर में रहे हो, परन्तु मुझ हतभाग्य के मर जाने पर कहाँ जाओगे ?—मुझे यही चिन्ता है ।" ❀ ॥ ३८ ॥

---

❀ इस पद्य से "आर्य चारुदत्त" की अनुपम उदारता प्रकट होती है । उन्होंने अपने जीवन में किसी को भी निराश होकर नहीं जाने दिया—उन्होंने तो सदा ही दीनों को हृदय से लगाया । मृत्यु के बाद बेचारा "दारिद्र्य" कहाँ रहेगा ?" यह विचार "उदार चारुदत्त" के ही उपयुक्त है ! उनके अतिरिक्त कौन विपत्ति का भी सुख देने की कल्पना करेगा ? यह उनकी उदारता का उत्कृष्ट आदर्श है !

विदूषकः—( सवैलक्ष्यम् ) भो वअस्स ! जइ मए गंतव्वं, ता एसा वि मे सहाइणी रदणिआ भोदु । [ भो वयस्य ! यदि मया गन्तव्यम्, तदेषापि मम सहायिनी रदनिका भवतु ।

चारुदत्तः—रदनिके ! मैत्रेयमनुगच्छ ।

चेटी—जं अज्जो आणवेदि । [ यदार्य आज्ञापयति । ]

विदूषकः—भोदि रदणिए ! गेण्ह बलिं पदीवं च । अहं अवावुदं पक्खदुआरअं करेमि । ( तथा करोति ) [ भवति रदनिके ! गृहाण बलिं प्रदीपं च । अहमपावृतं पक्षद्वारकं करोमि । ]

वसन्तसेना—मम अब्भुववत्तिणिमित्तं विअ अवावुदं पक्खदुआरअं । ता जाव पविसामि । ( दृष्ट्वा ) हद्धी हद्धी, कधं पदीवो । ( पटान्तेन निर्वाप्य प्रविष्टा ) [ ममाभ्युपपत्तिनिमित्तमिवापावृत्तं पक्षद्वारकम् । तद्यावत्प्रविशामि । हा धिक् हा धिक्, कथं प्रदीपः ? ]

चारुदत्तः—मैत्रेय ! किमेतत् ? ।

---

सवैलक्ष्यम् = सलज्जम् ।

अपावृतमिति । पक्षद्वारमुद्घाट्यामि, अभ्युपपत्तिनिमित्तम् = अनुकम्पार्थम् ।

पटान्तेन = स्ववस्त्रस्य प्रान्तभागेन, निर्वाप्य = दीपं शान्तं कृत्वा ।

---

विदूषक—( लज्जित होकर ) मित्र ! यदि मुझे ही जाना है तो यह 'रदनिका' मेरे साथ चले । ( 'रदनिका' को मेरे साथ जाने दो ! ) ।

चारुदत्त—रदनिके ! "मैत्रेय" के साथ जाओ !

रदनिका—जो आर्य आज्ञा देते हैं !

विदूषक—रदनिके ! बलि और दीपक को ले लो ! मैं दरवाजा खोलता हूँ ( द्वार खोलता है । )

वसन्तसेना—मेरे पर अनुकम्पा करने के लिए ही मानों पक्षद्वार खुला है । ( देख कर ) खेद है ! खेद है ! क्या दीपक है ? ( कपड़े के छोर से बुझाकर प्रविष्ट हो जाती है ) ।

चारुदत्त—मैत्रेय ! यह क्या है ?

विदूषकः—अवावुदपक्खदुआरएण पिंडीभूदेण वादेण णिव्वाविदो पदीवो। भोदि रदणिए ! णिक्कम तुमं पक्खदुआरएण। अहंपि अब्भंतर-चदुस्सालादो पदीवं पज्जालिअ आअच्छामि। ( इति निष्क्रान्तः ) [ अपावृतपक्षद्वारेण पिण्डीभूतेन वातेन निर्वापितः प्रदीपः ! भवति रदनिके ! निष्काम त्वं पक्षद्वारकेण। अहमप्यभ्यन्तरचतुःशालातः प्रदीपं प्रज्वाल्यागच्छामि। ]

शकारः—भावे भावे ! अण्णेशामि वशंतशेणिअं। [ भाव भाव ! अन्वेषयामि वसन्तसेनिकाम्। ]

विटः—अन्विष्यतामन्विष्यताम्।

शकारः—( तथा कृत्वा ) भावे भावे ! गहिदा गहिदा। [ भाव ! भाव ! गृहीता गृहीता। ]

विटः—मूर्ख ! नन्वहम्।

शकारः—इदो दाव भविअ एअंते भावे च्चियश्टदु। ( पुनरन्विष्य चेटं गृहीत्वा। भावे ! भावे ! गहिदा गहिदा। [ इतस्तावद्भूत्वा एकान्ते भावस्तिष्ठतु। भाव भाव ! गृहीता गृहीता ! ]

---

दीपनिर्वापकारणं प्रकटयति मैत्रेयः—अपावृतद्वारकेणेति। कपाटोद्घाटनात् पिण्डीभूतेन = एकत्रीभूतेन ( महता ) वातेन = पवनेन निर्वापितः = प्रशमितः प्रदीपः। अभ्यन्तरचतुःशालातः = अभ्यन्तरे = गृहान्तरे, चतुःशालातः = भवनात्।

---

विदूषक—पक्षद्वार के किवाड़ खुलने के कारण एकत्रित पवन के वेग से दीपक बुझ गया है। रदनिके ! तुम द्वार से बाहर निकलो ! मैं अन्दर के घर से दीपक जलाकर आता हूँ। [ चला जाता है। ]

शकार—भाव ! मैं "वसन्तसेना" को ढूँढता हूँ !

विट—ढूँढो ! ढूँढो !

शकार— [ वैसा करके ( ढूँढकर ) ] भाव ! पकड़ ली ! पकड़ ली।

विट—मूर्ख यह मैं हूँ !

शकार—आप इधर होकर एकान्त में खड़े हो जायँ ! ( पुनः खोजकर 'चेट' को पकड़ कर ) भाव ! पकड़ ली !

चेटः—भश्टके, चेडे हग्गे । [ भट्टारक ! चेटोऽहम् । ]

शकारः—इदो भावे, इदो चेडे । भावे चेडे, चेडे भावे । तुम्हे दाव एअंते च्चियश्ट । ( पुनरन्विष्य रदनिकां केशेषु गृहीत्वा । ) भावे भावे ! शपदं गहिदा गहिदा वशंतशेणिआ ।

**अन्धआले पलाअंती मल्लगंधेण शूइदा ।**
**केशविंदे पलामिश्टा चाणक्केणेव्व दोव्वदी ॥३९॥**

[ इतो भावः इतश्चेटः । भावश्चेटः चेटो भावः । युवां तावदेकान्ते तिष्ठतम् । भाव भाव ! सांप्रतं गृहीता गृहीता वसन्तसेनिका ।

अन्धकारे पलायमाना माल्यगन्धेन सूचिता ।
केशवृन्दे परामृष्टा चाणक्येनेव द्रौपदी ॥ ]

विटः—

**एषासि वयसो दर्पात्कुलपुत्रानुसारिणी ।**
**केशेषु कुसुमाढ्येषु सेवितव्येषु कर्षिता ॥४०॥**

---

शकारेण गृहीतां ( रदनिकां ) वसन्तसेनैव गृहीतेति मत्वा खिन्नः सभ्यो विटो वसन्तसेनामुद्दिश्य कथयति—एषासि—इति । हन्त ! वयसः = यौवनावस्थायाः, दर्पात् = गर्वात्, कुलपुत्रानुसारिणी = चारुदत्तानुसारिणी, त्वमनेन मूर्खेण कुसुमैः

---

चेट— स्वामिन् ! मैं तो 'चेट' हूँ !

शकार—इधर 'भाव' ( विट ) खड़े हों और इधर 'चेट' । "भाव" ! "चेट !" "चेट !" "भाव !" तुम दोनों इधर एकान्त में खड़े हो । ( पुनः ढूँढकर 'रदनिका' के केशों को पकड़ कर ) भाव ! भाव ! अब मैंने ( वास्तव में ) "वसन्तसेना" को पकड़ लिया है !

"माल्यगन्ध से सूचित, अन्धकार में भागती हुई "वसन्तसेना" को मैंने "चाणक्य" द्वारा गृहीत "द्रौपदी" की भाँति केशों को छूकर पकड़ लिया है ! ॥ ३९ ॥

विट—"यौवन के गर्व से "चारुदत्त" का अनुसरण करने वाली यह तुम

शकारः—

**एशाशि वाशु ! शिलशि ग्गहीदा केशेशु बालेशु शिलोलुहेशु ।**
**अक्कोश विक्कोश लवाहिचंडं शंभुं शिवं शंकलमीशलं वा ॥४१॥**

[ एषासि वासु ! शिरसि गृहीता केशेषु बालेषु शिरोरुहेषु ।
आक्रोश विक्रोश लपाधिचण्डं शंभुं शिवं शंकरमीश्वरं वा ॥ ]

रदनिका—( सभयम् ) किं अज्जमिस्सेहिं ववसिदं ? । [ किमार्यमिश्रैर्व्यवसितम् ? । ]

विटः—काणेलीमातः ! अन्य एवैष स्वरसंयोगः ।

शकारः—भावे भावे ! जधा दहिभत्तलुद्धाए मज्जालीए शलपलिवत्ते

---

सुरभितेषु सेवनीयेषु ( चारुदत्तद्वारा संभोगकाले सत्कार्येषु केशेषु करगृहीतेषु ) कर्षिताऽसि ! इति सर्वथाऽनुचितं सञ्जातम् । परमत्र तवाप्यपराधः । यौवनदर्पेणास्मानुपेक्ष्य चारुदत्तं सेवितुं कामयसे, अत एवानेनैव मा कुष्टेति भावः ॥ ४० ॥

किमार्येति । केशेषु निगृहीता चारुदत्तस्य सेविका रदनिका सभयं कथयति—आर्यमिश्रैः = माननीयैः किं व्यवसितम् = कृतम् ? सर्वथा आर्यैरप्यनार्यमाचरितम् । इति भावः ।

अन्यस्याः कस्याश्चित् स्वरसंयोगः प्रतीयते, इति विटवचनं निशम्य शकारः कथयति—भावेति । भाव! यथा दध्नः उपरिभागं=उत्कृष्टभागं भोक्तुं साभिलाषा मार्जारी

---

सुगन्धित तथा ( "चारुदत्त" द्वारा सम्भोग में ) सेवनीय केशों को ( इसके द्वारा ) पकड़ कर खींची गई हो" ॥ ४० ॥

शकार—"सुन्दरि ! तू मेरे द्वारा केशों ( बालों और शिरोरुहों ) में पकड़ ली गई है ! अब चाहे तू रो-धो ! विलाप और चीत्कार कर ! और चाहे शिव ( शम्भु, चण्ड, शङ्कर या ईश्वर ) का स्मरण कर ! ( तेरा मेरे हाथों से छूटना असम्भव है ! )" ॥ ४१ ॥

रदनिका—( भय से ) यह आप सम्माननीयों ने क्या कर डाला ?

विट—शकार ! यह तो दूसरा ही शब्द है ।

होदि, तधा दाशीए धीए शलपलिवत्ते कडे। [ भाव भाव ! यथा दधि-भक्तलुब्धाया मार्जारिकायाः स्वरपरिवृत्तिर्भवति, तथा दास्याः पुत्र्या स्वरपरिवृत्तिः कृता । ]

विटः—कथं स्वरपरिवर्तः कुतः कृतः ? । अहो चित्रम्, अथवा किमत्र चित्रम् ? ।

**इयं रङ्गप्रवेशेन कलानां चोपशिक्षया ।**
**वञ्चनापण्डितत्वेन स्वरनैपुण्यमाश्रिता ॥४२॥**

( प्रविश्य )

---

स्वरपरिवर्तनं करोति, तथैव दास्याः पुत्र्या अनया वसन्तसेनयाऽपि अस्माकं परिवञ्चनार्थमेवं स्वरपरिवृत्तिः कृता। कथमिति । विटोऽपि स्वरपरिवर्तनवार्तया च मत्कृत इव ब्रूते—अहो ! स्वरपरिवर्तनेनानया वैचित्र्यं सम्पादितम् ? अथवा नाऽत्र किमपि चित्रमिति समर्थयति—अथवेति । विकल्पान्तरं स्वीकृत्य कथयति—नात्र किमपि चित्रम्—यतः स्वरनैपुण्ये तु वस्तुतः इयं कुशलास्ति, स्वभावेनैव स्त्रियाः कुशलत्वं भवति, तथापि विशेषतोऽस्याः स्वरनैपुण्ये हेतुमाह—इयमिति । रङ्गप्रवेशेन = नाट्यशालाप्रवेशेन, कलानां = नृत्यसंगीतादीनां शिक्षया, लोकानां वञ्चनापाण्डित्येन च स्वरपरिवर्तनं कर्तुं पाण्डित्यप्रकर्षमाश्रितेत्यत्र नाश्चर्यं किमपीति भावः । अत्र काव्यलिङ्गमलङ्कारः । तल्लक्षणं यथा—"हेतोर्वाक्यपदार्थत्वे काव्यलिंगं निगद्यते ।" इति अनुष्टुप् छन्दः ॥ ४२ ॥

---

शकार—भाव ! जैसे दही का उत्कृष्टभाग खाते समय ( बिल्ली ) स्वर-परिवर्तन कर आवाज़ बदल लेती है वैसे ही ( हमारे बचने के लिए ) दुष्टा ने स्वर बदल लिया है !

विट—क्या स्वर बदल लिया ! ओह आश्चर्य है ! अथवा इसमें आश्चर्य ही क्या है !

"नाट्यशाला में प्रवेश तथा सङ्गीत-आदि कलाओं की शिक्षा प्राप्त करने से इसने लोगों की वञ्चना करने वाली स्वर बदलने की निपुणता प्राप्त कर की है !" ॥ ४२ ॥

( प्रवेश कर )

विदूषकः—ही ही भोः, पदोसमंदमारुदेण पशुवंधोवणीदस्स विअ छागलस्स हिअअं, फुरफुराअदि पदीवो। ( उपसृत्य रदनिकां दृष्ट्वा ) भो रदणिए ! [ आश्चर्यं भोः, प्रदोषमन्दमारुतेन पशुबन्धोपनीतस्येव छागलस्य हृदयम्, फुरफुरायते प्रदीपः। भो रदनिके ! ]

शकारः—भावे भावे ! मणुश्शे मणुश्शे। [ भाव भाव ! मनुष्यो मनुष्यः। ]

विदूषकः—जुत्तं ण्णेदं, सरिसं ण्णेदं, जं अज्जचारुदत्तस्स दलिद्ददाए संपदं परपुरिसा गेहं पवेसिअंति। [ युक्तं नेदम्, सदृशं नेदम्, यदार्यचारुदत्तस्य दरिद्रतया सांप्रतं परपुरुषा गेहं प्रविशन्ति। ]

रदनिका—अज्ज मित्तेअ ! पेक्ख मे परिहवं। [ आर्य मैत्रेय ! प्रेक्षस्व मे परिभवम्। ]

---

विदूषकः पवन-चालितं दीपमादाय कथयति—प्रदोषेति। प्रदोषकालिकमन्द-पवनेनायं दीपः पशूनां वधस्थानमुपेतस्य छागस्य = अजस्य हृदयमिव फुर-फुरायते= कम्पते। अथवा-पशुबन्धः काष्ठ-विशेषः, तिर्यङ्निर्मिते काष्ठशिरसि पशोः शिरः सम्प्रवेश्योपरि भागे चापरं काष्ठार्गलमिव दत्त्वा सम्यगचालिनं पशुं सम्पाद्य वधिकाः घातयन्ति, तत्र तथाविधं काष्ठमवलोक्यैव छागस्य ( अन्येषामपि पशूनाम् ) हृदयं भयाद् वेपते, तथैवास्य दीपस्याप्यद्य तादृशी दशा वर्तते इति भावः।

---

विदूषक—आश्चर्य है ! प्रातःकालीन मन्द-मन्द समीर से, पशुओं के वध्यस्थान पर लाए हुए बकरे के हृदय की भाँति यह दीपक फुरफुरा ( काँप ) रहा है ! ( पास जा "रदनिका" को देखकर ) रदनिके !

शकार—भाव ! भाव ! मनुष्य है ! मनुष्य !

विदूषक—यह उचित नहीं ! यह ठीक नहीं ! कि इस समय "चारुदत्त" की दरिद्रता होने के कारण पर-पुरुष घरमें घुसते हैं !

रदनिका—आर्य मैत्रेय ! मेरा यह अपमान देख लो !

विदूषकः—किं तव परिहवो आदु अम्हाणं ? । [ किं तव परिभवः अथवाऽस्माकम् ? । ]

रदनिका—णं तुम्हाणं ज्जेव्व । [ ननु युष्माकमेव । ]

विदूषकः—किं एसो बलक्कारो ? । [ किमेष बलात्कारः ? । ]

रदनिका—अध इं । [ अथ किम् । ]

विदूषकः—सच्चं । [ सत्यम् । ]

रदनिका—सच्चं । [ सत्यम् । ]

विदूषकः—( सक्रोधं दण्डकाष्ठमुद्यम्य ) मा दाव । भो, सके गेहे कुक्कुरो वि दाव चंडो भोदि, किं उण अहं बम्हणो । ता एदिणा अम्हारिसजण-भाअधेअकुडिलेण दंडकट्ठेण दुट्ठस्स विअ सुक्खाणवेणुअस्स मत्थअं दे पहारेहिं कुट्टइस्सं । [ मा तावत् । भोः, स्वके गेहे कुक्कुरोऽपि तावच्चण्डो भवति, किं पुनरहं ब्राह्मणः । तदेतेनास्मादृशजनभागधेयकुटिलेन दण्डकाष्ठेन दुष्टस्येव शुष्कवेणुकस्य मस्तकं ते प्रहारैः कुट्टयिष्यामि । ]

विटः—महाब्राह्मण ! मर्षय मर्षय ।

विदूषकः—( विटं दृष्ट्वा ) ण एत्थ एसो अवरज्झदि । ( शकारं दृष्ट्वा )

---

विदूषक—तुम्हारा अपमान या हमारा ?

रदनिका—तुम्हारा ही ।

विदूषक—क्या यह बलात्कार है ?

रदनिका—जी हाँ ।

विदूषक—सच ?

रदनिका—सच ।

विदूषक—( क्रोधपूर्वक डण्डा तानकर ) ऐसा मत कहो ! "अपने घर में तो कुत्ता भी शेर हो जाता है" फिर मैं तो ब्राह्मण हूँ । इसलिए अपने भाग्य के समान टेढ़े-मेढ़े इस डण्डे के प्रहार से तेरा मस्तक चकनाचूर कर डालूँगा ।

विट—महाब्राह्मण ! क्षमा करो ! क्षमा करो !

विदूषक—( विट को देख कर ) यह अपराधकर्ता नहीं है । ( "शकार"

एसो खु एत्थ अवरज्झदि। अरे रे राअसालअ संठाणअ दुज्जण दुम्मणुस्स ! जुत्तं ण्णेदं। जइ वि णाम तत्तभवं अज्जचारुदत्तो दलिद्दो संवुत्तो, ता किं तस्स गुणेहिं ण अलंकिदा उज्जइणी ?। जेण तस्स गेहं पविसिअ परिअणस्स ईरिसो उवमद्दो करीअदि।

मा दुग्गदो त्ति परिहवो णत्थि कदंतस्स दुग्गदो णाम।
चारित्तेण विहीणो अड्ढो वि अ दुग्गदो होइ ॥४३॥

[ नात्र एषोऽपराध्यति। एष खल्वत्रापराध्यति। अरे रे राजश्यालक संस्थानक दुर्जन दुर्मनुष्य! युक्तं नेदम्। यद्यपि नाम तत्रभवानार्यचारुदत्तो दरिद्रः संवृत्तः। तत्किं तस्य गुणैर्नालंकृतोज्जयिनी ?। येन तस्य गृहं प्रविश्य परिजनस्येदृश उपमर्दः क्रियते।

मा दुर्गत इति परिभवो नास्ति कृतान्तस्य दुर्गतो नाम।
चारित्र्येण विहीन आढ्योऽपि च दुर्गतो भवति ॥ ]

---

रदनिकाया उपमर्दे = तिरस्कारम् स्वस्यैव तिरस्कारं मत्वा भृशं कुपितो विदूषकश्चारुदत्तस्य दारिद्र्यादेवं सम्पन्नमिति। ज्ञात्वा च कथयति—मा दुर्गत इति। भो शकार ! त्वयेदं ज्ञातव्यम्—दुर्गत इति कृत्वा चारुदत्तस्य परिभवः क्रियते, सर्व-

---

को देखकर ) अपराधी है। अरे ! राजश्यालक ! दुर्जन ! संस्थानक ! यह उचित नहीं है ! यद्यपि पूजनीय "आर्य चारुदत्त" आज निर्धन हो गये हैं तथापि क्या उनके गुणों से "उज्जयिनी" अलङ्कृत नहीं है ? जिससे उनके घर में घुस कर सेवकों का इस प्रकार तिरस्कार कर रहा है ?

"दुर्गत ( निर्धन ) समझकर ( "चारुदत्त" का ) परिभव उचित नहीं। क्या कोई यमराज के लिए निर्धन नहीं है ? चरित्रहीन धनी भी निर्धन ही होता है। ( काल की करालता से समस्त संसार निर्धन हो सकता है, इसलिए तू अपने वैभव पर घमण्ड मत कर ! )" ॥ ४३ ॥ ❀

---

❀ इससे—"जिस दुष्ट राजा "पालक" के बल पर तू घमण्ड करता है—उसका भी शीघ्र ही दौर्गत्य होने वाला है" यह अर्थ ध्वनित होता है।

विटः—( सवैलक्ष्यम ) महाब्राह्मण ! मर्षय मर्षय । अन्यजनशङ्कया खल्विदमनुष्ठितम्, न दर्पात् । पश्य,—

**सकामान्विष्यतेऽस्माभिः**

विदूषकः—किं इअं ? । [ किमियम् ? । ]

विटः—शान्तं पापम् ।

**काचित्स्वाधीनयौवना ।**

---

थेदमनुचितम् । कृतान्तस्य = दैवस्य यमस्य वा कृतेऽस्ति किमु कोऽपि न दुर्गतः ? चारित्र्येण विहीनो धनिकोऽपि जनो दुर्गत एव भवतीति वेदितव्यम् । कालकलनया सकलोऽपि लोकः दुर्गतिग्रस्तो भवितुमर्हति, इति त्वया स्वचित्ते स्वविभवस्य गर्वो न कार्यः । इति भावः ।

अत्र प्रथमे पादे त्रयोदश मात्राः सन्तीति विषमाक्षरपादत्त्वान्नार्यालक्षणं संगतमिति गाथाच्छन्दः, तल्लक्षणम् यथा—वृत्तरत्नाकरे—

"विषमाक्षरपादत्त्वात्, पादौ रसमञ्जसं धर्मवत् ।
यच्छन्दसि नोक्तमत्र, गाथेति तत् सूरिभिः कथितम् ॥"

परमन्ये विज्ञास्तु प्रथमपादे "परिहवो" इत्यस्य स्थाने "परिहू" इति कल्पयित्वा "परिभूः" इति स्वीकुर्वन्तो द्वादशमात्रात्त्वादार्यामेव स्वीकुर्वन्त्यार्या एवात्र प्रमाणमिति ।

कथनेनानेन—"तव शकारस्य दौरात्म्यं यस्य दुश्चरित्रस्य राज्ञः पालकस्य बलेनास्ति, तस्यापि दौर्गत्यं प्रत्यासीदति," इति वस्तु ध्वन्यते ॥ ४३ ॥

विटः स्वापराधक्षमापनार्थं वास्तविकीं परिस्थितिं प्रदर्शयति—सकामेति । भो महाब्राह्मण ! नास्माकं विशिष्टोपराधोऽत्रेति त्वया रोषो न कार्यः । पश्य अस्माभिस्तु काचित्सकामा स्वाधीनयौवना वेश्या अन्विष्यते, तस्या भ्रान्त्यैवेयं गृहीता, यतो

---

विट—( लज्जित होकर ) महाब्राह्मण ! क्षमा करो !

हमने कोई और ही समझ कर यह किया है, किसी घमण्ड से नहीं । देखो—

"हम किसी सकामा स्वाधीनयौवना को खोज रहे हैं । वह ( इस अन्धकार में ) कहीं अदृश्य हो गई है ( उसी को खोजते हुए ) हमको यह चरित्र-पतन

**सा नष्टा शङ्कया तस्याः प्राप्तेयं शीलवञ्चना ॥४४॥**

**सर्वथेदमनुनयसर्वस्वं गृह्यताम्। ( इति खड्गमुत्सृज्य कृताञ्जलिः पादयोः पतति )**

**विदूषकः—सप्पुरिस ! उट्ठेहि उट्ठेहि। अआणंतेण मए तुमं उवालद्धे। संपदं उण जाणंतो अणुणेमि। [ सत्पुरुष ! उत्तिष्ठोत्तिष्ठ। अजानता मया त्वमुपालब्धः। सांप्रतं पुनर्जानन्ननुनयामि। ]**

**विटः—ननु भवानेवात्रानुनेयः। तदुत्तिष्ठामि समयतः।**

---

बलीयस्यन्धकारे सा क्वचित् प्रपलायिता। अत एवेयं शीलस्य वञ्चना = स्वचरित्र-पतनरूपा अस्माभिरद्य प्राप्ता। न वयं ज्ञानतश्चारुदत्तस्य सेविकामिमां गृहीतवन्तः। ततश्चानुनयार्थं सर्वस्वभूतं पादपतनं मया क्रियते। क्षन्तव्या वयमिति निष्कर्षः। अत्र पथ्यावक्त्रं छन्दः। तल्लक्षणं यथा—

"युजोर्जेन सरिद्भर्तुः। पथ्यावक्त्रं प्रकीर्तितम्।" इति ॥ ४४ ॥

उपालब्धः = उपालम्भस्य = आक्षेपजनिततिरस्कारस्य पात्रतां नीतः। अधिक्षिप्त इति यावत्।

अनुनयामि = प्रसादयामि, प्रसन्नं करोमि।

समयतः = शपथतः ( यदि त्वं वक्ष्यमाणं शपथं स्वीकरोषि तदोत्तिष्ठामीति भावः। ) "समयाः शपथाचारकालसिद्धान्तसंविदः" इति कोषः।

---

की कारणभूता ( "रदनिका" ) मिल गई है। ( हमने यह कार्य जान-बूझ कर नहीं किया है। )" ॥ ४४ ॥

सर्वथा इस अनुनय के सर्वस्वभूत ( प्रणाम को ) स्वीकार करिये !

[ ऐसा कहकर खड्ग को हाथ से छोड़कर, हाथ जोड़ कर पैरों पर गिर पड़ता है। ]

विदूषक—सत्पुरुष ! उठो ! मैंने अनजाने में ही तुम्हें उपालम्भ दिया है। इस समय जानकर तुमसे अनुनय करता हूँ।

विट—आप ही अनुनय के योग्य हैं ! इसलिए मैं इस बात ( शर्त ) पर उठता हूँ।

विदूषकः—भणादु भवं । [ भणतु भवान् । ]
विटः—यदीमं वृत्तान्तमार्यचारुदत्तस्य नाख्यास्यसि ।
विदूषकः—ण कधइस्सं । [ न कथयिष्यामि । ]
विटः—

**एष ते प्रणयो विप्र ! शिरसा धार्यते मया ।**
**गुणशस्त्रैर्वयं येन शस्त्रवन्तोऽपि निर्जिताः ॥४५॥**

शकारः—( सासूयम् ) किंणिमित्तं उण भावे ! एदश्श दुश्टवडुअश्श किविणं अंजलिं कदुअ पाएशु णिवडिदे ? । [ किं निमित्तं पुनर्भाव ! एतस्य

---

न आख्यास्यसि = न कथयिष्यसि ।

इमं दुस्समाचारं चारुदत्ताय न प्रकाशयिष्यामीति विदूषकवचो निशम्य तं प्रशंसन् कथयति—एष ते इति । भो विप्र ! अयं ते प्रणयो मया शिरसि धार्यते । येनानेन तव प्रणयेनैव गुणानामुत्कर्षेण च शस्त्रवन्तोऽपि वयं पराजिताः । अद्य मया ज्ञातं यद् गुणा एव विशेषतः समभ्यर्चनीया भवन्ति, न तु शस्त्र-संघ, इति भावः ।

अत्र गुणेषु शस्त्रस्य सफल आरोपः, अत एव परिणामालङ्कारः । यत्र केवलं निष्क्रियः आरोपः क्रियते ( उपमेये उपमानस्य ), तत्र रूपकालङ्कारः । यत्र सफलः समारोपः ( कार्यसाधकः ) तत्र परिणामः, इति विवेकः । शस्त्रस्य प्रयोजनं, विजयप्राप्तिः, सा च गुणैरेव सम्प्राप्तेति भावः । पथ्यावक्त्रम् छन्दः । लक्षणं गतं पूर्वस्मिन् पद्ये ॥ ४५ ॥

---

विदूषक—आप कहें ।
विट—"यदि इस वृत्तान्त को "आर्य चारुदत्त" से नहीं कहेंगे ।"
विदूषक—नहीं कहूँगा ।
विट—"ब्राह्मण देव ! आपका यह अनुग्रह मैं सिर से मानता हूँ । जिन आपने अपने गुण-रूपी शस्त्रों से ही हम सशस्त्रों को जीत लिया है ।" ॥ ४५ ॥
शकार—( असूया सहित ) भाव ! तुम किस लिए इस दुष्ट ब्राह्मण के पैरों

दुष्टबटुकस्य कृपणाञ्जलिं कृत्वा पादयोर्निपतितः ? । ]

विटः—भीतोऽस्मि ।

शकारः—कश्श तुमं भीदे ? । [ कस्मात्त्वं भीतः ? । ]

विटः—तस्य चारुदत्तस्य गुणेभ्यः ।

शकारः—के विअ तश्श गुणा जश्श गेहं पविशिअ अशिदव्वं पि णत्थि । [ के इव तस्य गुणा यस्य गृहं प्रविश्याशितव्यमपि नास्ति । ]

विटः—मा मैवम् ,—

**सोऽस्मद्विधानां प्रणयैः कृशीकृतो,**
**न तेन कश्चिद्विभवैर्विमानितः ।**
**निदाघकालेष्विव सोदको ह्रदो,**
**नृणां स तृष्णामपनीय शुष्कवान् ॥४६॥**

---

चारुदत्तस्य गुणानां प्रशंसां करोति विटः—सोऽस्मदिति । सोऽस्मद्विधानां प्रणयैरेव दुर्बलीकृतः । मित्राणाममित्राणाञ्चापि कार्यसाधनार्थमेव तस्य विभवक्षयः समजनीति भावः । तेन स्वजीवने धनैः कोऽपि न विमानितः । धनमदोऽपि तस्य मनागपि नाभूदित्यर्थः । निदाघकाले = ग्रीष्मकाले मान-

---

में—दीन हो तथा अञ्जलि बाँधकर गिर रहे हो ?

विट—मैं डर गया हूँ ।

शकार—तुम्हें किससे भय है ?

विट—उन "आर्य चारुदत्त" के गुणों से ।

शकार—उसके कौन से गुण हैं जिसके घर में जाकर भोजन भी नहीं मिलता ?

विट—ऐसा मत कहो !

"वह हम जैसों के ही प्रणय-व्यवहारों से दुर्बल ( निर्धन ) हो गये हैं ! उन्होंने किसी को भी धन के गर्व से अपमानित नहीं किया । ग्रीष्म ऋतु के जलवाले तालाब की भाँति जीवों की तृष्णा ( कार्यसाधन ) पूरी करके वे सूख गये

शकारः—( सामर्षम् ) के शे शब्भदाशीअ पुत्ते ? ।

**शूले विक्कंते पंडवे शेदकेदू ,**
**पुत्ते लाधाए लावणे इंददत्ते ।**
**आहो कुंतीए तेण लामेण जादे,**
**अश्शत्थामे धम्मपुत्ते जडाऊ ॥४७॥**

[ कः स गर्भदास्याः पुत्रः ?
शूरो विक्रान्तः पाण्डवः श्वेतकेतुः पुत्रो राधाया रावण इन्द्रदत्तः ।
आहो कुन्त्यास्तेन रामेण जातः अश्वत्थामा धर्मपुत्रो जटायुः ॥ ]

विटः—मूर्ख ! आर्यचारुदत्तः खल्वसौ,

**दीनानां कल्पवृक्षः स्वगुणफलनतः सज्जनानां कुटुम्बी,**

---

बानाम् ( नृशब्द उपलक्षणभूतः सर्वेषां जीवानाम् ) तृष्णामपनीय सोदकोऽपि कासारो यथा शुष्यति, तथैवायमपि बहूनां रक्षां विधायाद्य दुर्बलः संजातः, इति सर्वथाऽभिनन्दनीयचरितः स महानुभाव इति भावः ।

अत्रोपमाऽलङ्कारः । वंशस्थं च्छन्दः । तल्लक्षणं यथा—"जतौ तु वंशस्थमुदीरितं जरौ" इति ॥ ४६ ॥

शकारमुखादार्यचारुदत्तस्य निन्दामाकर्ण्य कुपितो विटस्तं भर्त्सयन्नाह—

---

हैं । ( जिस प्रकार निदाघ में सरोवर अपने जल से जीवों को तृप्त करके सूख जाता है उसी प्रकार "चारुदत्त" भी अपने धन से परोपकार करके आज निर्धन हो गये हैं । अतः वे प्रशंसनीय–चरित्र हैं । )" ॥ ४६ ॥

शकार—( रोष के साथ ) यह दासीपुत्र कौन है ?

"क्या यह शूरवीर पाण्डव "श्वेतकेतु" है, या राधानन्दन "रावण" है, अथवा रामचन्द्र से उत्पन्न हुआ 'कुन्तीपुत्र' "अश्वत्थामा" है, या धर्मपुत्र "जटायु" है ?"

विट—मूर्ख ! यह "आर्य चारुदत्त" हैं !

"वह दीनों के लिए कल्पतरु, अपने गुणरूपी फलों से नम्र, सज्जनों के कुटुम्बी,

**आदर्शः शिक्षितानां सुचरितनिकषः शीलवेलासमुद्रः ।**
**सत्कर्ता नावमन्ता पुरुषगुणनिधिर्दक्षिणोदारसत्त्वो,**
**ह्येकः श्लाघ्यः स जीवत्यधिकगुणतया चोच्छ्वसन्तीव चान्ये ॥४८॥**

दीनानामिति । अत्र "आर्यचारुदत्तः खल्वसौ" इति चूर्णकस्थं ( गद्यस्थम् ) पदकदम्बकमन्वेति । आर्यचारुदत्तः किल दीनानां परिपोषणाय, सर्वाभिलाषपूरणाय च कल्पवृक्षतुल्यः, स्वगुण-रूप-फलैः नतो नम्रः, सज्जनानां कृते कुटुम्बी, सर्वेषां पालकः, इति भावः । शिक्षितानामादर्शः शिक्षिताः कीदृशा भवन्तीत्यस्योत्तरेऽस्यैव नाम सर्वतः प्रथममुपस्थितं भवति, सुचरितानां कृते निकषोपलः= कषपाषाणः । शील-रूप-सिन्धोर्वेलायाः समुद्रतीरः सः । सर्वेषां सत्कर्ता, कस्यापि तिरस्कारं न कृतवान् , पुरुषगुणानां निधानम् , दक्षिणः उदार-सत्त्वः, स एव केवलं श्लाघ्यः, तस्य गुणा अधिकाः सन्तीति हेतोः स एव जयति, अन्ये तु जना उच्छ्वसन्तीव । जीवनन्तु तस्यैव, अन्येषां तु जीवनाभासतैवास्ति । त्वं तु परगुणाऽसहिष्णुतया तस्य निन्दां करोषि । परन्तु सर्वदा स्मरणीयमिदं सूक्तिरत्नम्—

"चन्द्रं हि थूत्कृतिरुपैति न शुभ्रभासम् ।" इति ।

अत्र—उल्लेखः, उपमा, रूपकम्, उत्प्रेक्षा चेत्यलङ्काराः । उल्लेख-लक्षणञ्च—

"क्वचिद् भेदाद् ग्रहीतॄणां, विषयाणां तथा क्वचित् ।
एकस्यानेकधोल्लेखः यः स उल्लेख इष्यते ॥" इति ।

रूपक-लक्षणञ्च—

"रूपकं रूपितारोपाद् विषये निरपह्नवे" इति ।

प्रसादो गुणः । वैदर्भी रीतिः । स्रग्धरा च्छन्दः । तल्लक्षणं यथा—

"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ।" इति ॥४८॥

शिक्षितों के आदर्श, सच्चरित्रों के लिए कसौटी, शील-रूपी समुद्र के वेला-स्वरूप, सबके सत्कारकर्ता, किसी का तिरस्कार न करने वाले, पुरुष-गुणों के निधान, कुशल और उदार वे ही श्लाघनीय हैं—वे ही अपने गुणोत्कर्ष से जीवित हैं; अन्य संसारी जीव तो केवल श्वास ही लेते हैं—( उनका जीवन ही जीवन है, औरों का तो केवल जीवनाभास ही है ।" ) ॥ ४८ ॥

तदितो गच्छामः ।

शकारः—अगेण्हिअ वशंतशेणिअं ? । [ अगृहीत्वा वसन्तसेनाम् ? ]

विटः—नष्टा वसन्तसेना ।

शकारः—कधं विअ ? । [ कथमिव ? । ]

विटः—

अन्धस्य दृष्टिरिव पुष्टिरिवातुरस्य,
मूर्खस्य बुद्धिरिव सिद्धिरिवालसस्य ।
स्वल्पस्मृतेर्व्यसनिनः परमेव विद्या,
त्वां प्राप्य सा रतिरिवारिजने प्रनष्टा ॥ ४९ ॥

---

वसन्तसेना कथमिव नष्टेति शकारप्रश्नस्योत्तरं ददाति विटः—अन्धस्येति । काणेलीमातः ! सा वसन्तसेना त्वां मूर्खमवाप्य वक्ष्यमाणरीत्या नष्टा । यथा अन्धस्य दृष्टिरिव, आतुरस्य = रोगादिभिः परिपीडितस्य पुष्टिरिव = शरीरस्य शक्तिरिव, मूर्खस्य जनस्य बुद्धिरिव, आलस्ययुक्तस्य पुरुषस्य सिद्धिरिव, स्वल्पस्मृतेः = स्वल्पस्मरणशक्तेः, व्यसनिनश्च परमा विद्येव सा नष्टा । तव दुष्टतैव तस्या अदर्शने निमित्तमिति हृदयम् ।

अत्र मालोपमाऽलङ्कारः, एकस्य बहूपमानत्वे सा भवति । तल्लक्षणञ्च यथा—"मालोपमा यदेकस्योपमानं बहु दृश्यते ।" इति । वसन्ततिलका च्छन्दः ॥४९॥

---

इसलिए यहाँ से चलते हैं ।

शकार—"वसन्तसेना" को विना लिए ही ।

विट—"वसन्तसेना" नष्ट ( अदृश्य ) हो गई !

शकार—कैसे ?

विट—"अन्धे की दृष्टि की भाँति, रोगी की शारीरिक शक्ति के समान, मूर्ख की बुद्धि जैसी, आलसी की सिद्धि-सी, दुर्बल स्मरण-शक्ति वाले तथा व्यसनी की विद्या की भाँति और शत्रुओं में प्रेम के समान वह तुम्हें ( तुम जैसे मूर्ख को ) पाकर अदृश्य हो गई है । ( उसके अदर्शन के मुख्य "हेतु तुम ही हो !" ॥४९॥

शकारः—अगेण्हिअ वशंतशेणिअं ण गमिश्शं। [ अगृहीत्वा वसन्तसेनां न गमिष्यामि । ]

विटः—एतदपि न श्रुतं त्वया ?

**आलाने गृह्यते हस्ती वाजी वल्गासु गृह्यते ।**
**हृदये गृह्यते नारी यदीदं नास्ति गम्यताम् ॥ ५० ॥**

शकारः—यदि गच्छशि, गच्छ तुमं। हग्गे ण गमिश्शं। [ यदि गच्छसि, गच्छ त्वम् । अहं न गमिष्यामि । ]

विटः—एवम्; गच्छामि । ( इति निष्क्रान्तः )

---

वसन्त-सेनाग्रहणमन्तरा नाहं गमिष्यामीति दुराग्रहं शकारस्य निरीक्ष्य विटः कथयति—आलाने-इति । किं भोः ! त्वया इदं न श्रुतम् ? यत् गजः आलाने = बन्धनस्तम्भे एव गृहीतुं शक्यते, अश्वश्च वल्गासु = कविकासु मुखरज्जुषु, इति यावत्, नारी च हृदये एव गृहीतुं युज्यते, यदीदं साधनं नास्ति, तर्हि गम्यताम् । अत्रावस्थानेन को लाभः ?

अत्र निदर्शनालङ्कारः । तल्लक्षणञ्च यथा—

"सम्भवद्वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् ।
यत्र बिम्बानुबिम्बत्वं, बोधयेत् सा निदर्शना ॥" इति ।

अत्र वारत्रयमेकस्यैव "गृह्यते" इत्यस्य पदस्य पाठात् "अनवीकृतः" दोषः । पथ्यावक्त्रं छन्दः । लक्षणमुक्तं प्राक् ॥५०॥

---

शकार—"वसन्तसेना" को लिए बिना मैं न जाऊँगा ।

विट—क्या तुमने यह नहीं सुना ?—

"हाथी आलान ( बन्धनस्तम्भ ) से, घोड़ा लगाम से तथा नारी हृदय से ही वश में की जा सकती है । यदि हृदय नहीं है तो जाओ ! ( आनन्द करो ! यहाँ खड़े रहने से क्या लाभ है !" ) ॥ ५० ॥

शकार—यदि तुम जाते हो तो जाओ ! मैं नहीं जाऊँगा !

विट—अच्छा ! जाता हूँ ! [ चला जाता है । ]

शकारः—गडे क्खु भावे अभावं । ( विदूषकमुद्दिश्य । ) अले काकपद-शीशमस्तका दुश्टवडुअका ! उवविश उवविश । [ गतः खलु भावोऽभावम् । अरे काकपदशीर्षमस्तक दुष्टबटुक ! उपविशोपविश । ]

विदूषकः—उववेसिदा जेव्व अम्हे । [ उपवेशिता एव वयम् । ]

शकारः—केण ? । [ केन ? । ]

विदूषकः—कअंतेण । [ कृतान्तेन । ]

शकारः—उट्ठेहि उट्ठेहि । [ उत्तिष्ठोत्तिष्ठ । ]

विदूषकः—उट्ठिस्सामो । [ उत्थास्यामः । ]

शकारः—कदा ? । [ कदा ? । ]

---

विटे गते शकारः कथयति—गतः खलु भावो = विटः अभावम् = अदर्शनम् । पुनः विदुषकमाह—अरे इति । काकपदशीर्ष-मस्तक ! काकस्य पदवत् शीर्षम् = ( शीर्षशब्देन शीर्षस्था शिखा गृह्यते ) मस्तकं ( एक एवार्थः । ) यस्य तस्य सम्बुद्धिपदमिदम् । अथवा—काकपदं शीर्षे यस्य । एतेनाशुभं काकस्य पदाघातं शिरसि तथा च शिरसि स्थितः काकोऽवश्यं मृत्युं जनयति, एवञ्च तव, तव मित्रस्य च मृत्युः सन्निहित इति भावि—अमङ्गलसूचना प्रदत्तेति भावः । अथवा—द्यूतादि-निन्दितकारी काकस्य पदवत् अ-भव्याकृतयो धूर्ताः तेषामपि शिरोभागे स्थितः = धूर्तधुरीणः, इति भावः ।

---

शकार—"भाव" ( "विट" ) अभाव को प्राप्त हो गया ( चला गया ) । ( "विदूषक" को उद्देश्य करके ) अरे ! कौए के पञ्जों के समान-सिर वाले दुष्ट ब्राह्मण ! बैठ ! बैठ !

विदूषक—बैठा ही रखे हैं ।

शकार—किसने ?

विदूषक—कृतान्त ( यमराज ) ने ?

शकार—उठ ! उठ !

विदूषक—उठेंगे ।

शकार—कब ?

विदूषकः—जदा पुणो वि देव्वं अणुऊलं भविस्सदि। [ यदा पुनरपि दैवमनुकूलं भविष्यति। ]

शकारः—अले, लोद लोद। [ अरे, रुदिहि रुदिहि। ]

विदूषकः—रोदाविदा जेव्व अम्हे। [ रोदिता एव वयम्। ]

शकारः—केण ?। [ केन ?। ]

विदूषकः—दुग्गदीए। दुर्गत्या। ]

शकारः—अले, हश हश। [ अरे, हस हस। ]

विदूषकः—हसिस्सामो। [ हसिष्यामः। ]

शकारः—कदा ?। [ कदा ?। ]

विदूषकः—पुणो वि रिद्धीए अज्जचारुदत्तस्स। [ पुनरपि ऋद्ध्यार्यचारुदत्तस्य। ]

शकारः—अले दुश्टवडुअका ! भणेशि मम वअणेण तं दलिद्दचालुदत्तकं—'एशा शशुवण्णा शहिलण्णा णवणाडअदंशणुट्ठिदा शुत्तधालिव्व वशंतशेणिआ णाम गणिआदालिआ कामदेवाअदणुज्जाणादो पहुदि तुमं अणुलत्ता अम्हेहिं बलक्कालाणुणीअमाणा तुह गेहं पविश्टा। ता जइ मम हश्ते शअं ज्जेव्व पट्टाविअ एणं शमप्पेशि, तदो अधिअलणे ववहालं विणा लहुं णिज्जादमाणाह तव मए अणुबद्धा पीदी हुविश्शदि। आदु अणिज्जाद-

---

विदूषक—जब फिर दैव अनुकूल होगा।

शकार—अरे ! रो ! रो !

विदूषक—रुला ही रखे हैं।

शकार—किसने ?

विदूषक—दुर्गति ने।

शकार—अरे हँस ! हँस !

विदूषक—हँसेंगे।

शकार—कब ?

विदूषक—पुनः "आर्य चारुदत्त" के अभ्युदय होने पर।

माणाह आमलणंतिके वेले हुविश्शदि । अवि अ पेक्ख पेक्ख,

कश्चालुका गोछडलित्तवेंटा,
शाके अ शुक्खे तलिदे हु मंशे ।
भत्ते अ हेमंतिअलत्तिशिद्धे,
लीणे अ वेले ण हु होदि पूदी ॥ ५१ ॥

शोश्तकं भणेशि, लश्तकं भणेशि । तधा भणेशि जधा हग्गे अत्तणके-लिकाए पाशादबालग्गकवोदवालिआए उवविश्टे शुणामि तधा जदि ण भणेशि, ता कवालतलप्प विश्टं कवित्थं विअ मश्तअं दे मडमडाइश्शं । [ अरे दुष्टबटुक ! भणिष्यसि मम वचनेन तं दरिद्रचारुदत्तकम्—'एषा ससुवर्णा सहिरण्या नवनाटकदर्शनोत्थिता सूत्रधारीव वसन्तसेनानाम्नी गणिकादारिका कामदे-वायतनोद्यानात्प्रभृति त्वामनुरक्तास्माभिर्बलात्कारानुनीयमाना तव गेहं प्रविष्टा । तद्यदि मम हस्ते स्वयमेव प्रस्थाप्यैनां समर्पयसि, ततोऽधिकरणे व्यवहारं विना लघु निर्यातयतस्तव मयानुबद्धा प्रीतिर्भविष्यति । अथवाऽनिर्यातयतो मरणान्तिकं

---

प्रस्थाप्य = सम्यक् संस्थाप्य । अधिकरणे = न्यायालये । व्यवहारं विना = अभियोगं विनैव । लघु = शीघ्रम् । "लघु क्षिप्रमरं द्रुतमि"ति कोषः । निर्यात-यमानस्य = प्रत्यावर्तयतः । अनुबद्धा = सर्वदा सन्नद्धा, निश्चितेति यावत् । प्रीतिः = मैत्रीभविष्यतीति भावः ।

---

शकार—अरे ! दुष्ट ब्राह्मण ! मेरे कथनानुसार उस "दरिद्र चारुदत्त" से कहना—"कि यह सोने ( के आभूषणों ) वाली, नया नाटक देखकर उठी हुई सूत्रधारी के समान "वसन्तसेना" नामिका वेश्यापुत्री कामदेव के उद्यान के मेले के दिन से तुझमें अनुरक्त है और हमारे द्वारा बलात्कार पूर्वक पीछा की जाती हुई तेरे घर में घुस गई है । इसलिए यदि तू सुरक्षापूर्वक इसको स्वयं ही मेरे हाथों में सौंप देगा तो अधिकरण ( कचहरी ) में विना अभियोग ( मुकदमा ) चलाये ही तेरी मेरे साथ घनिष्ठ मित्रता हो जायगी । अथवा, यदि न लौटायी तो

वैरं भविष्यति। अपि च प्रेक्षस्व,

कूष्माण्डी गोमयलिप्तवृन्ता शाकं च शुष्कं तलितं खलु मांसम्।
भक्तं च हैमन्तिकरात्रिसिद्धं लीनायां च वेलायां न खलु भवति पूति॥
शोभनं भणिष्यसि, सकपटं भणिष्यसि। तथा भणिष्यसि यथाहमात्मकीयायां प्रासादबालाग्रकपोतपालिकायामुपविष्टः शृणोमि। अन्यथा यदि भणसि, तदा कपाटतलप्रविष्टं कपित्थगुलिकमिव मस्तकं ते मडमडायिष्यामि। ]

---

शकारो विदूषकं प्रति अप्रस्तुतप्रशंसया कथयति—कूष्माण्डीति। गोमयलिप्तवृन्ता = यस्या वृन्ताग्रभागे गोमयस्य लेपो दीयते, एवंविधा कूष्माण्डी दूषिता न भवति। शुष्कं शाकमपि न दुष्यति, तलितम् = घृततैलादितलितं = साधितं = मासं न विकृतं भवति, हेमन्तस्य = शीततौः रात्रौ सम्पन्नं भक्तम् = अन्नम्। वेलायाम् = समये लीनायाम् = समयातिक्रमेऽपि पूति = दुर्गन्धयुक्तम्, असेवनीयं न भवतीत्यर्थः। सर्वेऽप्यमी पदार्थाः समयातिक्रमे दुष्टा न भवन्ति, परं यदि चारुदत्तः कालातिपातं करिष्यति, शीघ्रमेव वसन्तसेनां मह्यं नार्पयिष्यति, तदा मम प्रीतिर्न स्थास्यति, अतः सपदि कार्यं कार्यम्, त्वयापि विलम्बावलम्बो न विधेयः—इति भावः।

---

तेरा-मेरा मृत्युपर्यन्त वैर रहेगा। और भी देखो!—

"गोबर से लिपे हुए डण्ठलवाला पेठा, सुखाया हुआ शाक, घृत में तलाया हुआ मांस तथा शीत ऋतु की रात्रि में पकाया हुआ ओदन, समय बीत जाने पर दुर्गन्ध-युक्त नहीं होता ( ये पदार्थ उपर्युक्त विधि से तैयार किये जाने पर नहीं बिगड़ते हैं—कुछ दिन तक रह जाते हैं; परन्तु यदि "चारुदत्त" ने "वसन्तसेना" न लौटाई तो मेरा प्रेम क्षणभर भी न रहेगा।" ॥ ५१ ॥

भली भाँति कहना! बिना किसी छल-कपट से कहना। इस प्रकार कहना जिससे कि मैं अपने नये अग्रभाग वाले कबूतरों के पालने के स्थान पर ( घर के ऊपरी भाग—छज्जे पर ) बैठा हुआ सुन सकूँ। यदि किसी दूसरे प्रकार से कहा तो जैसे किवाड़ों के बीच कैथ को देकर विस्फोट करते हैं, वैसे ही तेरे शिर को 'मडमडा' ( कूट ) दूँगा।"

विदूषकः—भणिस्सं । [ भणिष्यामि । ]

शकारः—( अपवार्य ) चेडे ! गडे शच्चकं ज्जेव्व भावे । [ चेट ! गतः सत्यमेव भावः । ]

चेटः—अध इं । [ अथ किम् । ]

शकारः—ता शिग्घं अवक्कमम्ह । [ तच्छीघ्रमपक्रमावः । ]

चेटः—ता गेण्हदु भश्टके अशिं । [ तद्गृह्णातु भट्टारकोऽसिम् । ]

शकारः—तव ज्जेव्व हत्थे च्चियश्टदु । [ तवैव हस्ते तिष्ठतु । ]

चेटः—एशे भश्टालके । गेण्हदु णं भश्टके अशिं । [ एष भट्टारकः । गृह्णात्वेनं भट्टारकोऽसिम् । ]

शकारः—( विपरीतं गृहीत्वा )

**णिव्वक्कलं मूलकपेशिवण्णं खंधेण घेतूण अ कोशशुत्तं ।**

---

अत्राप्रस्तुतेन पदार्थसार्थेन वैधर्म्येण प्रस्तुतायाः प्रीतेर्विच्छेदत्त्वं सम्भाव्यते, अतोऽप्रस्तुतप्रशंसा अलङ्कारः । इन्द्रवज्रा छन्दः ॥५१॥

बालाग्रकपोतेति = बालो नवीनः अग्रभागो यस्याः तस्याम् कपोतपालिकायाम् = गृहोपरिभागे । कपालेति = कपाटान्तः कपित्थं दत्त्वा यथा विस्फोटयन्ति, तथैव तव मस्तकं मडमडेतिध्वनियुक्तं यथा स्यात्तथा त्रोटयिष्यामीति भावः ।

---

**विदूषक—कह दूँगा !**

**शकार—( हटकर ) चेट ! क्या 'विट' सचमुच ही चला गया ?**

**चेट—जी हाँ ।**

**शकार—तो शीघ्र ही चलते हैं ।**

**चेट—इसलिए आप तलवार ले लें ।**

**शकार—अपने ही हाथ में रहने दे !**

**चेट—स्वामिन् ! यह है । आप इस तलवार को ले लें ।**

**शकार—( उलटी पकड़ कर )—**

**कुक्केहिं कुक्कोहिं अ बुक्कअंते जधा शिआले शलणं पलामि ॥५२॥**

[ निर्वल्कलं मूलकपेशिवर्णं स्कन्धेन गृहीत्वा च कोशसुप्तम् ।
कुक्कुरैः कुक्कुरीभिश्च बुक्यमानो यथा शृगालः शरणं प्रयामि ॥ ]

( परिक्रम्य निष्क्रान्तौ )

विदूषकः—भोदि रदणिए ! ण हु दे अअं अवमाणो तत्थभवदो चारुदत्तस्स णिवेदइदव्वो । दोग्गच्चपीडिअस्स मण्णे दिउणदरा पीडा हुविस्सदि । [ भवति रदनिके ! न खलु तेऽयमपमानस्तत्रभवतश्चारुदत्तस्य निवेदयितव्यः । दौर्गत्यपीडितस्य मन्ये द्विगुणतरा पीडा भविष्यति । ]

रदनिका—अज्ज मित्तेअ ! रदणिआ खु अहं संजदमुही । [ आर्य

---

शकारः कोषे धृतं खड्ग गृहीत्वा चलति, कथयति च—निर्वल्कलमिति । वल्कलरहितम् , मूलकस्य पेशीवत् वर्णो यस्य तादृशं कोशे धृतं खड्गं स्कन्धे संस्थाप्य गच्छामि, यथा श्वभिः शुनीभिश्च बुक्यमानः शृगाल इव स्वशरणम्= स्वगृहं यामि = गच्छामि । उपजातिर्वृत्तम् ॥५२॥

त्वया चारुदत्तायेदं सर्वमपि वृत्तं निवेद्य तस्य मनो न खेदनीयमिति विदूषकवचनानन्तरं रदनिका ब्रवीति—आर्येति । आर्य मैत्रेय ! संयतं मुखं यस्या तादृशी रदनिकाऽस्मीति, सर्वदैव नियन्त्रिताानना भवामीति त्वं न वेत्सि ? किञ्च—रदनिका = जिह्वाऽपि संयता भवति, विशेषतो रदनानामाघात-प्रत्याघातभीत-भीतेव तिष्ठति, तद्वदहमपीति भावः ।

---

"नङ्गी तथा मूली के समान रङ्ग वाली और म्यान में रखी तलवार को कन्धे पर रख कर कुत्ते और कुत्तियों के द्वारा भोंके जाते हुए शृगाल ( गीदड़ ) की भाँति मैं घर जाता हूँ ।" ॥ ५२ ॥

[ घूमकर चले जाते हैं । ]

विदूषक—रदनिके ! तुम इस अपमान को "आर्य चारुदत्त" से मत कहना ! ( ऐसा करने पर ) मैं समझता हूँ कि दरिद्रता से पीड़ित इसकी पीड़ा दुगनी हो जायगी ।

रदनिका—आर्य मैत्रेय ! मैं मुख पर नियन्त्रण रखने वाली 'रदनिका' हूँ ।

मैत्रेय ! रदनिका खल्वहं संयतमुखी । ]

विदूषकः—एवं ण्णेदं । [ एवमिदम् । ]

चारुदत्तः—( वसन्तसेनामुद्दिश्य ) रदनिके ! मारुताभिलाषी प्रदोष-समयशीतार्तो रोहसेनः । ततः प्रवेश्यतामभ्यन्तरमयम् । अनेन प्रावारकेण छादयैनम् । ( इति प्रावारकं प्रयच्छति )

वसन्तसेना—( स्वगतम् ) कधं परिअणो त्ति मं अवच्छदि । ( प्रावारकं गृहीत्वा समाघ्राय च स्वगतं सस्पृहम् ) अम्महे, जादीकुसुमवासिदो पावारओ । अणुदासीणं से ज्जोव्वणं पडिभासेदि । [ कथं परिजन इति मामवगच्छति । आश्चर्यम्, जातीकुसुमवासितः प्रावारकः । अनुदासीनमस्य यौवनं प्रतिभासते । ]

( अपवारितकेन प्रावृणोति )

चारुदत्तः—ननु रदनिके ! रोहसेनं गृहीत्वाभ्यन्तरं प्रविश ।

---

जाति-कुसुमैः सुवासितं प्रावारकं दृष्ट्वा स्वगतमाह वसन्तसेना—अनुदासीन-मिति । एवंविधसुरभिवस्त्राच्छादनेन प्रतीयते यदस्य चारुदत्तस्य यौवनमद्याप्य-नुदासीनमिवास्ते ! मम यौवनसुखमास्वादयितुं प्रभवत्येवायमिति हृदयम् ।

---

( रदनिका = जिह्वा भी संयत ही रहती है । दाँतों के आघात–प्रतिघातों में वह भयभीत रहती है—वैसे ही मैं भी हूँ । )

विदूषक—ऐसा नहीं है ।

चारुदत्त—( वसन्तसेना को लक्ष्यकर ) रदनिके ! प्रदोषकालीन पवन से "रोहसेन" ( "चारुदत्त" का पुत्र ) ठिठुर रहा है । इसलिए इसको अन्दर पहुँचा कर यह दुपट्टा उढ़ा दो ! ( ऐसा कहकर दुपट्टा फेंक देता है । )

वसन्तसेना—क्या मुझे परिजन समझ रहे हैं ? ( दुपट्टे को सूँघकर उत्कण्ठा सहित स्वयं ही ) आश्चर्य है ! कि यह दुपट्टा चमेली के पुष्पों से सुवासित है ! ( सुगन्धित वस्त्र को देखकर प्रतीत होता है कि ) इनका यौवन आज भी उदा-सीन नहीं है । ( अर्थात्—ये आज भी यौवन-सुख के अनुभव करने के प्रति सर्वथा वीतराग नहीं हैं । ) ( दुपट्टे से ढँकती है )

चारुदत्त—रदनिके ! "रोहसेन" को लेकर अन्दर चली जाओ न ।

वसन्तसेना—( स्वगतम् ) मंदभाइणी क्खु अहं तुह अब्भंतरस्स।
[ मन्दभागिनी खल्वहं तवाभ्यन्तरस्य। ]

चारुदत्तः—ननु रदनिके! प्रतिवचनमपि नास्ति। कष्टम्,—

**यदा तु भाग्यक्षयपीडितां दशां,**
**नरः कृतान्तोपहितां प्रपद्यते।**
**तदास्य मित्राण्यपि यान्त्यमित्रतां,**
**चिरानुरक्तोऽपि विरज्यते जनः॥ ५२॥**

( रदनिकामुपसृत्य )

---

गृहाभ्यन्तर-प्रवेशायाभ्यनुज्ञाताया अपि तस्याः प्रवेशाभावान्निर्विण्णस्यार्यचारुदत्तस्य वचनं निशम्य वसन्तसेना स्वमनस्याह—मन्दभागिनीति। अहं वेश्यास्मीति हेतोर्भवतां गृहाभ्यन्तरे कथं प्रविशामि, वस्तुतो मन्दभाग्यास्मि। किञ्च—अहन्तु हृदये प्रवेष्टुं समुत्सुकास्मि; तव तु न जानामि गतिम्, कदाचिद्धार्मिकत्वान्निषेधं कुर्या इति तवाभ्यन्तरे=हृदयाभ्यन्तरे प्रवेष्टुं मम भाग्यं मन्दमिति भावः।

प्रतिवचनमप्यलभ्य खिन्नश्चारुदत्त आह—यदेति। अस्यायमाशयः—यदा मानवः स्वभाग्यक्षयात् हेतोः दुर्दैवविलासफलं दुर्दशामनुभवति, यत् सत्यम्, तदा तस्य मित्राण्यपि शत्रुतामुपयान्ति, चिरात् प्रीतिभाजनभूतोऽपि विरक्तो जायते। यतो मम परिजनोऽपि वचन-व्याघातं करोति, इति मम दौर्गत्य-दशाविपाक एवायमिति। अत्र अप्रस्तुतप्रशंसालङ्कारः। वंशस्थं छन्दः॥ ५२॥

---

वसन्तसेना—( स्वयं ही ) मैं तुम्हारे घर जाने में मन्दभागिनी हूँ! ( अथवा—मैं तो तुम्हारे हृदय में प्रवेश पाना चाहती हूँ। मैं वेश्या हूँ तुम्हारे हृदय में कैसे प्रवेश करूँ?—इसलिए हृदय-प्रवेश करने में मेरा भाग्य मन्द है )।

चारुदत्त—रदनिके! उत्तर भी नहीं है। खेद है!—

"जब मनुष्य दुर्दैव से पीड़ित होकर दुर्दशा को प्राप्त हो जाता है तब इसके मित्र भी शत्रु हो जाते हैं तथा बहुत दिनों से अनुरक्त जन भी विरक्त हो जाते हैं।"

( "रदनिका" के पास जाकर )

विदूषकः—भो, इअं सा रअणिआ । [ भोः, इयं सा रदनिका । ]

चारुदत्तः—इयं सा रदनिका । इयमपरा का ? ।

**अविज्ञातावसक्तेन दूषिता मम वाससा ।**

वसन्तसेना—( स्वगतम् ) णं भूसिदा । [ ननु भूषिता । ]

चारुदत्तः—

**छादिता शरदभ्रेण चन्द्रलेखेव दृश्यते ॥ ५४ ॥**

अथवा, न युक्तं परकलत्रदर्शनम् ।

विदूषकः—भो, अलं परकलत्तदंसणसंकाए । एसा वसंतसेणा कामदेवाअदणुज्जाणादो पहुदि भवंतमणुरत्ता । [ भोः, अलं परकलत्रदर्शनशङ्कया । एषा वसन्तसेना कामदेवायतनोद्यानात्प्रभृति त्वामनुरक्ता । ]

चारुदत्तः—अये, इयं वसन्तसेना । ( स्वगतम् )

---

रदनिकाधिया केयमन्यैव कापि धन्याऽधन्यस्य मम वस्त्रसंस्पर्शाद्दूषितेति पृच्छति चारुदत्तः—अविज्ञातेति । मम वस्त्रेणाच्छादितकाया शरदभ्रेण = शरदर्तौमेघेनाच्छादिता चन्द्रस्य लेखेव विराजमाना दृश्यते ? अथवा—परकलत्रस्य = परकीयनार्याः दर्शनमयुक्तमिति । अत्रोपमाऽलङ्कारः । पथ्यावक्त्रं छन्दः ॥५४॥

---

विदूषक—यह "रदनिका" है ।

चारुदत्त—यह "रदनिका" है ! और यह दूसरी कौन है ?—

"यह कौन अनजाने में ही मेरे वस्त्र से दूषित—"

वसन्तसेना—( स्वगत ) यह कहिए कि "भूषित हूँ"

चारुदत्त—"होकर शरत्कालीन मेघ से आच्छादित चन्द्रमा की ( सूक्ष्म ) रेखा के समान दिखाई देती है ।" ॥ ५४ ॥

अथवा, "दूसरे की स्त्री को देखना उचित नहीं ।"

विदूषक—पर-स्त्री-दर्शन की शङ्का मत करो ! यह "वसन्तसेना" कामदेवोद्यान के उत्सव से तुममें अनुरक्त है ।

चारुदत्त—यह "वसन्तसेना" है ? ( स्वगत )

**यया मे जनितः कामः क्षीणे विभवविस्तरे ।**
**क्रोधः कुपुरुषस्येव स्वगात्रेष्वेव सीदति ॥ ५५ ॥**

विदूषकः—भो वअस्स ! एसो खु राअसालो भणादि । [ भो वयस्य ! एष खलु राजश्यालो भणति । ]

चारुदत्तः—किम् ? ।

विदूषकः—एसा ससुवण्णा सहिलण्णा णवणाडअदंसणुट्ठिदा सुत्तधालि व्व वसंतसेणा णाम गणिआदालिआ कामदेवाअदणुज्जाणादो पहुदि तुमं अणुलत्ता अम्हेहिं बलक्कालाणुणीअमाणा तुह गेहं पविट्ठा । [ एषा ससुवर्णा सहिरण्या नवनाटकदर्शनोत्थिता सूत्रधारीव वसन्तसेनानाम्नी गणिकादारिका कामदेवायतनोद्यानात्प्रभृति त्वामनुरक्तास्माभिर्बलात्कारानुनीयमाना तव गेहं प्रविष्टा । ]

---

इयं वसन्तसेनेति विदूषकवचनं निशम्य खिन्नश्चारुदत्त आह—यया मे, इति । इयं वसन्तसेनाऽस्ति ? यया मम धने विनष्टे कामः प्रकटितः ! हन्त ! यथा कुपुरुषस्य क्रोधो विफलः सन् स्वाङ्गेष्वेव विलीनो भवति, तथैवाधुना कामोऽपि मयि विफलः । विभवे सत्येव कामः शोभते, दरिद्रस्य तु स सर्वथाऽपमानजनक एवेति तत्त्वम् । अत्रोपमालङ्कृतिः । पथ्यावक्त्रं छन्दः ॥५५

---

"जिसने वैभव नष्ट हो जाने पर मेरे प्रति काम प्रकट किया है । ( परन्तु खेद है ! ) जैसे निर्बल पुरुष का क्रोध अपने ही शरीर में विलीन हो जाता है ( वैसे ही कामदेव भी मुझ में व्यर्थ हो गया है । धन रहते ही काम-चर्चा अच्छी लगती है —निर्धनावस्था में नहीं । )" ॥ ५५ ॥

विदूषक—मित्र ! राजश्यालक कहता है ।

चारुदत्त—क्या ?

विदूषक—"यह सोने ( के आभूषणों ) वाली, नया नाटक देखकर उठी हुई सूत्रधारी के समान "वसन्तसेना" नामिका वेश्यापुत्री कामदेव के उद्यान के मेले के दिन से तुझ में अनुरक्त है और हमारे द्वारा बलात्कारपूर्वक पीछा की जाती हुई तेरे घर में घुस गई है—"

वसन्तसेना—( स्वगतम् ) बलक्काराणुणीअमाणेत्ति जं सच्चं, अलंकिदम्हि एदेहिं अक्खरेहिं । [ बलात्कारानुनीयमानेति यत्सत्यम्, अलंकृतास्म्येतैरक्षरैः । ]

विदूषकः—ता जइ मम हत्थे सअं ज्जेव्व पट्ठाविअ एणं समप्पेसि, ता अधिअरणे ववहारं विणा लहुं णिज्जादमाणाह तव मए अणुबद्धा पीदी हुविस्सदि । अण्णधा आमरणं वेरं हुविस्सदि । [ तद्यदि मम हस्ते स्वयमेव प्रस्थाप्यैनां समर्पयसि, ततोऽधिकरणे व्यवहारं विना लघु निर्यातयतस्तव मयानुबद्धा प्रीतिर्भविष्यति । अन्यथाऽऽमरणं वैरं भविष्यति । ]

चारुदत्तः—( सावज्ञम् ) अज्ञोऽसौ । ( स्वगतम् ) अये, कथं देवतोपस्थानयोग्या युवतिरियम् ? । तेन खलु तस्यां वेलायाम्,—

**प्रविश गृहमिति प्रतोद्यमाना,**
**न चलति भाग्यकृतां दशामवेक्ष्य ।**
**पुरुषपरिचयेन च प्रगल्भं,**
**न वदति यद्यपि भाषते बहूनि ॥ ५६ ॥**

---

देवतानामुपस्थाने योग्येयं मामनुरक्तेति स्वमनसि विचारयति चारुदत्तः—प्रविशेति । मयाऽनेकशः "गृहाभ्यन्तरे प्रविश" इति प्रेर्यमाणापि स्ववेश्यात्वा-

---

वसन्तसेना—( स्वयं ही ) सच तो यह है कि—"बलात्कारपूर्वक पीछा की जाती हुई" इन शब्दों से मैं अलङ्कृत ही हो गई हूँ ।

विदूषक—"इसलिए यदि तू सुरक्षापूर्वक इसको स्वयं ही मेरे हाथों में सौंप देगा तो अधिकरण ( कचहरी ) में बिना अभियोग ( मुकद्मा ) चलाये ही तेरी मेरे साथ घनिष्ठ मित्रता हो जायगी । अन्यथा मरणपर्यन्त के लिए वैर बँध जायगा ।"

चारुदत्त—(अवज्ञापूर्वक) यह तो मूर्ख है ! (स्वयं ही) अरे ! यह युवती देवताओं के उपस्थान के समय मुझ में उचित ही अनुरक्त हुई है, जिससे कि उस समय—

"घर में जाओ" इस प्रकार अनेक बार कहने पर भी यह अपने भाग्य की प्रतिकूलता देखकर नहीं गई । और यद्यपि यह बहुत बोलने वाली है तथापि किसी पुरुष के साथ परिचय करती हुई प्रगल्भ होकर नहीं बोलती ।" ॥५६॥

( प्रकाशम् ) भवति वसन्तसेने ! अनेनाविज्ञानादपरिज्ञातपरिजनोपचारेणापराद्धोऽस्मि । शिरसा भवतीमनुनयामि ।

वसन्तसेना—एदिणा अणुचिदभूमिआरोहणेण अवरद्धा अज्जं सीसेण पणमिअ पसादेमि । [ एतेनानुचितभूमिकारोहणेनापराद्धाऽऽर्यं शीर्षेण प्रणम्य प्रसादयामि । ]

विदूषकः—भो, दुवे वि तुम्हे सुखं पणमिअ कलमकेदारा अण्णोण्णं सीसेण सीसं समाअदा । अहं पि इमिणा करहजाणुसरिसेण सीसेण दुवेवि तुम्हे पसादेमि । [ भोः, द्वावपि युवां सुखं प्रणम्य कलमकेदारावन्योन्यं

---

वलोकनेन भाग्यवैपरीत्यमिवाधिगच्छन्तीयं न चलितवती । यद्यपि बहुभाषणशीला, तथापि पुरुषेण सह प्रगल्भतया न वदति, लज्जावशादिति सौन्दर्यातिशये स्वर्णे सुगन्धयोगः समुत्पादितः । इति भावः । अत्र पुष्पिताग्रा च्छन्दः । तल्लक्षणं च यथा वृत्तरत्नाकरे--"अयुजि न युगरेफतो यकारो, युजि च नजौ जरगाश्च पुष्पिताग्रा ।" इति ॥ ५६ ॥

चारुदत्तो वसन्तसेनामनुनयन् कथयति--अनेनेति । अविज्ञातेन परिजनबुद्ध्या कृतेन व्यवहारेण कृतापराधोऽहमिदानीं शिरसा प्रणम्य भवतीं प्रसादयामि । अत्र—प्रतिमुखसन्धेरुपन्यासो नामाङ्गं सूचितम् ।

इत्थं निशम्य स्वधार्ष्ट्यं क्षमापयन्ती वसन्तसेना प्रतिवदति--एतेनेति । आज्ञां विनैव भवतां भवने, प्रविष्टाऽस्मीति ममैव महान्तमपराधं क्षन्तुमर्हत्यार्यः । अत्र "अनुनयो" नाम नाट्यलक्षणम् । तल्लक्षणञ्च यथा—"वाक्यैः, स्निग्धैरनु-

---

( प्रकाश में ) अयि वसन्तसेने ! इस अनजान मैंने परिजन की भाँति व्यवहार करके अपराध किया है इसलिए मैं सिर से प्रणाम कर आपसे अनुनय करता हूँ ।

वसन्तसेना—( आपकी आज्ञा के बिना ) अनुचित रीति से इस भूमि ( भवन में ) पर चले आने के अपराध के कारण मैं शिरसे प्रणाम कर आपको प्रसन्न करती हूँ ।

विदूषक—अरे ! तुम दोनों ने तो धान की बालों के समान सिर से सिर

शीर्षेण शीर्षे समागतौ । अहमप्यमुना करभजानुसदृशेन शीर्षेण द्वावपि युवां प्रसादयामि । ]

( इत्युत्तिष्ठति )

चारुदत्तः—भवतु, तिष्ठतु प्रणयः ।

वसन्तसेना—( स्वगतम् ) चदुरो मधुरो अ अअं उवण्णासो । ण जुत्तं अज्ज एरिसेण इध आअदाए मए पडिवासिदुं । भोदु, एव्वं दाव भणिस्सं । ( प्रकाशम् ) अज्ज ! जइ एव्वं अहं अज्जस्स अणुग्गेज्झा ता इच्छे अहं इमं अलंकारअं अज्जस्स गेहे णिक्खिविदुं । अलंकारस्स णिमित्तं एदे पावा अणुसरन्ति । [ चतुरो मधुरश्चायमुपन्यासः । न युक्तमद्येदृशेनेहागतया मया प्रतिवस्तुम् । भवतु, एवं तावद्भणिष्यामि । आर्य ! यद्येवमहमार्यस्यानुग्राह्या तदिच्छाम्यहमिममलंकारकमार्यस्य गेहे निक्षेप्तुम् । अलंकारस्य निमित्तमेते पापा अनुसरन्ति । ]

चारुदत्तः—अयोग्यमिदं न्यासस्य गृहम् ।

वसन्तसेना—अज्ज ! अलिअं । पुरिसेसु णासा णिक्खिविअन्ति, ण उण गेहेसु ! [ आर्य ! अलीकम् । पुरुषेषु न्यासा निक्षिप्यन्ते, न पुनर्गेहेषु । ]

---

नयो भवेदर्थस्य साधनम्" इति ।

---

मिला दिया मैं भी ऊँट के बच्चे की जङ्घा के समान अपने सिर से तुम दोनों को प्रसन्न करता हूँ । [ उठता है । ]

चारुदत्त—अस्तु; प्रणय को रहने दो ।

वसन्तसेना—( स्वगत ) यह चतुर तथा मधुर बातें हैं । इस प्रकार आयी हुई मुझे आज यहाँ रहना उचित नहीं है । अस्तु; ऐसा कहती हूँ । ( प्रकाश में ) आर्य ! यदि मैं इस प्रकार आपके अनुग्रह की पात्र हूँ तो मैं श्रीमान् के घर इस आभूषण को धरोहर ( गिरवीं ) रखना चाहती हूँ । क्योंकि आभूषणों के लिए ही ये पापी मेरा पीछा करते हैं ।

चारुदत्त—यह घर धरोहर के लिए अयोग्य है ।

वसन्तसेना—आर्य ! यह मिथ्या है । "पुरुषों में धरोहर रखी जाती है—

चारुदत्तः--मैत्रेय ! गृह्यतामयमलङ्कारः ।

वसन्तसेना--अणुग्गहीद म्हि । [ अनुगृहीतास्मि ]

( इत्यलङ्कारमर्पयति )

विदूषकः—( गृहीत्वा ) सोत्थि भोदीए । ] स्वस्ति भवत्यै । ]

चारुदत्तः—धिङ् मूर्ख ! न्यासः खल्वयम् ।

विदूषकः—( अपवार्य ) जइ एव्वं ता चोरेहिं अवहरीअदु । [ यद्येवं तदा चौरैरपह्रियताम् । ]

चारुदत्तः—अचिरेणैव कालेन ।

विदूषकः—एसो से अम्हाणं विण्णासो । [ एषोऽस्या अस्माकं विन्यासः । ]

चारुदत्तः—निर्यातयिष्ये ।

वसन्तसेना—अज्ज ! इच्छे अहं, इमिणा अज्जेण अणुगच्छिज्जन्ती सकं गेहं गन्तुं । [ आर्य ! इच्छाम्यहमनेनार्येणानुगम्यमाना । स्वकं गेहं गन्तुम् । ]

चारुदत्तः—मैत्रेय ! अनुगच्छ तत्रभवतीम् ।

---

घरों में नहीं ।"

चारुदत्त—मैत्रेय ! यह अलङ्कार ले लो !

वसन्तसेना—मैं कृतार्थ हो गई हूँ ।

[ आभूषण दे देती है । ]

विदूषक—( लेकर ) आपका कल्याण हो !

चारुदत्त—मूर्ख ! यह तो धरोहर है ।

विदूषक—( दूसरी ओर ) यदि चोर चुरा ले ?

चारुदत्त—बहुत शीघ्र ही—

विदूषक—यह इनकी हमारे पास धरोहर—

चारुदत्त—भिजवा दूँगा ।

वसन्तसेना—आर्य ! मैं इन आर्य के साथ अपने घर जाना चाहती हूँ ।

चारुदत्त—मैत्रेय ! आदरणीया इनके साथ चले जाओ !

विदूषकः—तुमं ज्जेव्व एदं कलहंसगामिणीं अणुगच्छन्तो राअहंसो विअ सोहसि। अहं उण बम्हणो जहिं तहिं जणेहिं चउप्पहोवणीदो उवहारो कुक्कुरेहिं विअ खज्जमाणो विवज्जिस्सं। [ त्वमेवैतां कलहंसगामिनी-मनुगच्छन् राजहंस इव शोभसे। अहं पुनर्ब्राह्मणो यत्र तत्र जनैश्चतुष्पथोपनीत उपहारः कुक्कुरैरिव खाद्यमानो विपत्स्ये। ]

चारुदत्तः—एवं भवतु। स्वयमेवानुगच्छामि तत्रभवतीम्। तद्राज-मार्गविश्वासयोग्याः प्रज्वाल्यन्तां प्रदीपिकाः।

विदूषकः—वड्ढमाणआ ! पज्जालेहि पदीविआओ। [ वर्धमानक ! प्रज्वाल्य प्रदीपिकान्। ]

चेटी—( जनान्तिकम् ) अले, तेल्लेण विणा पदीविआओ पज्जाली-अंति। [ अरे, तैलेन विना प्रदीपिकाः प्रज्वाल्यन्ते। ]

विदूषकः—( जनान्तिकम् ) ही, ताओ खु अम्हाणं पदीविआओ अव-माणिदनिद्धणकामुआ विअ गणिआ णिस्सिणेहाओ दाणिं संवुत्ता। [ आश्चर्यम्, ताः खल्वस्माकं प्रदीपिका अपमानितनिर्धनकामुका इव गणिका

---

तैलेन विना कथं प्रज्वलिष्यन्ति दीपिकाः ? इति चेट्या उक्तिभावमनुबुध्य सोपहासं विदूषको ब्रूते—ही, ता इति। अस्माकं दीपिकाः साम्प्रतं, अपमानिता

---

विदूषक—तुम ही हंसगामिनी इनके साथ चलते हुए "राजहंस" की भाँति सुशोभित होते हो। मैं तो ब्राह्मण हूँ, चौराहों पर इधर उधर से लाये हुए उपहार की भाँति कुत्तों से काटा जाकर बड़ी विपत्ति में पड़ जाऊँगा।

चारुदत्त—ऐसा ही हो ! मैं ही सम्माननीया के साथ जाता हूँ। इसलिए सड़क पर विश्वास के योग्य 'दीपिका' ( लालटेन, डिबिया आदि ) जलवाओ।

विदूषक—वर्द्धमानक ! 'दीपिका' जलाओ !

चेटी—( सामाजिकों के पास को ) अरे ! बिना तेल के ही दीपिकाएँ जलाई जा रही हैं !

विदूषक—( सामाजिकों के पास को ) आश्चर्य है। वे हमारी दीपिकाएँ निर्धन कामुकों को अपमानित कर देने वाली वेश्याओं के समान स्नेह–( तेल )

निःस्नेहा इदानीं संवृत्ताः । ]

चारुदत्तः—मैत्रेय ! भवतु, कृतं प्रदीपिकाभिः । पश्य,—

**उदयति हि शशाङ्कः कामिनीगण्डपाण्डु-**
**र्ग्रहगणपरिवारो राजमार्गप्रदीपः ।**
**तिमिरनिकरमध्ये रश्मयो यस्य गौराः,**
**स्रुतजल इव पङ्के क्षीरधाराः पतन्ति ॥ ५७ ॥**

( सानुरागम् ) भवति वसन्तसेने ! इदं भवत्या गृहम् । प्रविशतु भवती ।

( वसन्तसेना सानुरागमवलोकयन्ती निष्क्रान्ता )

---

निर्धनाः कामुका याभिस्तादृश्यो वेश्या इव निःस्नेहाः = स्नेहेन ( प्रेम्णा ) ( तैलेन ) च रहिताः सञ्जाताः । तैलं नास्तीत्यर्थः ।

प्रदीपिकानामिदानीं नास्त्यावश्यकतेति चन्द्रोदयं वर्णयति चारुदत्तः— उदयति-इति । कामिन्याः कपोलस्थलवत् पाण्डुवर्णः, ग्रहगण-रूप-निज-परिवारेण परिवृतः सन् राजमार्गस्य प्रदीपसमः शशाङ्कः समुदेति । यस्य रश्मयोऽन्धकार-समूहे, स्रुतजले = स्रुतानि = अपगतानि जलानि यस्मात् तस्मिन् = जलरहिते, इति यावत् । पङ्के क्षीरधारावत् प्रपतन्त्य इव संलक्ष्यन्ते । अत्रोपमाऽलङ्कृतिः । मालिनी च्छन्दः । तल्लक्षणञ्च—

---

रहित हो गयी हैं । ( तेल नहीं रहा है । )

चारुदत्त—मैत्रेय ! ठहरो ! प्रदीपिकाओं को रहने दो । देखो !—

"कामिनी के कपोलस्थल की भाँति श्वेत रङ्गवाला, ग्रह-रूपी अपने परिवार के साथ राजमार्ग ( सड़क ) में दीप-तुल्य चन्द्रमा उदित हो रहा है; जिसकी श्वेत किरणें अन्धकार के समूह पर ऐसी पड़ती हैं जैसी कि जल-रहित ( काले ) कीचड़ में दूध की धाराएँ ( पड़ती हों ) ।" ॥५७॥

( अनुराग सहित ) अयि वसन्तसेने ! यह तुम्हारा घर है । अतः प्रवेश करो ।

[ "वसन्तसेना" "चारुदत्त" को अनुराग-सहित देखती हुई चली जाती है । ]

चारुदत्तः—वयस्य ! गता वसन्तसेना, तदेहि । गृहमेव गच्छावः ।

**राजमार्गो हि शून्योऽयं रक्षिणः संचरन्ति च ।**
**वञ्चना परिहर्तव्या बहुदोषा हि शर्वरी ॥ ५८ ॥**

( परिक्रम्य ) इदं च सुवर्णभाण्डं रक्षितव्यं त्वया रात्रौ, वर्धमानकेनापि दिवा ।

विदूषकः—जधा भवं आणवेदि । [ यथा भवानाज्ञापयति । ]

---

"नन मयययुतेयं मालिनी भोगिलोकैः ।" इति ॥५७॥

वसन्तसेनायां स्वगेहमुपगतायां स्वगेहेऽस्माभिरपि गन्तव्यमिति चारुदत्तः कथयति—राजमार्ग इति । शून्योऽयं राजमार्गः, यत्र तत्र रक्षिणः पुरुषाः सञ्चरन्ति, कदाचित् कोऽप्यस्माकं वञ्चनां कुर्यात् , यतो बहुदोषा = बहवो दोषा यस्यां तादृशी, शर्वरी = रात्रिः, अस्ति । रात्रावेव धूर्ताश्चौर्यादि कुकृत्यं कुर्वन्ति, अतः सावधानतया स्थेयं, सुवर्णभाण्डञ्च संरक्षणीयमिति भावः ।

अत्र "अर्थान्तरन्यासः" अलङ्कारः । लक्षणञ्चास्य-यथा दर्पणे—

"सामान्यं वा विशेषेण, विशेषस्तेन वा यदि ।
कार्यञ्च कारणेनेदं, कार्येण च समर्थ्यते ॥
साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः ॥" इति ।

पथ्यावक्त्रं च्छन्दः ॥५८॥

---

**चारुदत्त—मित्र ! "वसन्तसेना" चली गई । इसलिए आओ, हम भी घर चलें !**

**"सड़क शून्य है पहरेदार घूम रहे हैं कदाचित् कोई हमको वञ्चित कर ले ( इसलिए सावधान रहना चाहिए । क्योंकि "रात्रि बहुत-से दोषों वाली होती है ।" ॥ ५८ ॥**

**( घूमकर ) इस 'सुवर्णपात्र' की रात्रि में तुम्हें तथा दिन में "वर्धमानक" को रक्षा करनी चाहिए ।**

**विदूषक—जो आज्ञा !**

( इति निष्क्रान्तौ )

## इति मृच्छकटिकेऽलंकारन्यासो नाम प्रथमोऽङ्कः ।

अलङ्काराणां = वसन्तसेनाया आभूषणानां न्यासः = स्थापनं, यस्मिन्निति व्युत्पत्त्याऽलङ्कारन्यासो नाम प्रथमोऽङ्कः समाप्तिं गतः । अङ्कान्ते सर्वेषां पात्राणां निष्क्रमणम् नाट्यशास्त्रनियमसिद्धमिति ।

"अङ्क"—लक्षणम्—यथा दर्पणे—

"प्रत्यक्षनेतृचरितो, रसभाव-समुज्ज्वलः ।
भवेदगूढ-शब्दार्थः, क्षुद्रचूर्णकसंयुतः ॥
विच्छिन्नावान्तरैकार्थः किञ्चित्संलग्नविन्दुकः ।
युक्तो न बहुभिः कार्यैर्बीजसंहृतिमान्न च ॥
नानाविधानसंयुक्तो, नातिप्रचुरपद्यवान् ।
आवश्यकानां कार्याणामविरोधाद् विनिर्मितः ॥
नानेकदिन-निर्वर्त्य-कथया सम्प्रयोजितः ।
आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा ॥
दूराह्वानं वधो, युद्धं, राज्यदेशादिविप्लवः ।
विवाहो भोजनं, शापोत्सर्गौ मृत्यू रतं तथा ॥
दन्तच्छेद्यं नखच्छेद्य-मन्यद् व्रीडाकरञ्च यत् ।
शयनाधर-पानादि, नगराद्यवरोधनम् ॥
स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः ।
देवीपरिजनादीनाममात्य-वणिजामपि ॥
प्रत्यक्ष-चित्र-चरितैर्युक्तो भावरसोद्भवैः ।
"अन्तनिष्क्रान्त-निखिल-पात्रो"ऽङ्क"—इति कीर्तितः ॥" इति ॥

इति मृच्छकटिके "श्रीप्रियम्वदा"—ख्य टीकायां प्रथमोऽङ्को विरतः । [ १ ]

[ दोनों चले जाते हैं। ]

"प्रियम्वदा" टीकालङ्कृत "मृच्छकटिक" का "अलङ्कारन्यास" नामक

❀ प्रथम अङ्क समाप्त ❀

## द्वितीयोऽङ्कः

( प्रविश्य )

चेटी—अत्ताए अज्जआसआसं संदेसेण पेसिदम्हि । ता जाव पविसिअ अज्जआसआसं गच्छामि । ( परिक्रम्यावलोक्य च ) एसा अज्जआ हिअएण किंपि आलिहंती चिट्ठदि । ता जाव उवसप्पामि । [ मात्रार्यासकाशं संदेशेन प्रेषितास्मि । तद्यावत्प्रविश्यार्यासकाशं गच्छामि । एषार्या हृदयेन किमप्यालिखन्ती तिष्ठति । तद्यावदुपसर्पामि । ]

( ततः प्रविशत्यासनस्था सोत्कण्ठा वसन्तसेना मदनिका च )

---

अस्मिन् द्वितीयेऽङ्के सर्वतः प्रथमं वसन्तसेनाया उत्कण्ठातिशयवर्णनप्रसङ्गमवतारयितुं तस्याश्चेट्या आगमनादि समाचारं वर्णयति कविः । तत्रादौ चेटी समागत्य कथयति—अत्ताए इति । "अत्ता" इति प्राकृतस्य "माता" इति संस्कृतम् । ततश्च वसन्तसेनाया मात्रा आर्याया वसन्तसेनायाः समीपे कमपि सन्देशमादाय प्रेषितास्मि अतस्तस्याः सन्देशं श्रावयितुं तदन्तिके गच्छामि । ( सम्मुखे वसन्तसेनां चिन्ताचुम्बितचित्तां विलोक्य ) एषा आर्या वसन्तसेना स्वहृदये एव किमपि चिन्तयन्ती तिष्ठति; ततोऽस्याः सविधे समुपसर्पामि = गच्छामि । इति भावः ।

**सोत्कण्ठेति** । उत्कण्ठा सहिता वसन्तसेना प्रवेशं नाटयति । अर्थात्—यवनिकोत्पतनानन्तरं स्वासने स्थिताया वसन्तसेनायाः प्रवेशो भवति । उत्कण्ठा = औत्सुक्यम् । इष्टजनविरहे वेदनाऽनुभव इत्यर्थः । तल्लक्षणञ्च यथा—

---

[ प्रवेशकर ]

चेटी—"मुझे ( "वसन्तसेना" की ) माता ने कुछ सन्देश देकर 'आर्या' ( वसन्तसेना ) के पास भेजा है । इसलिए तब तक मैं प्रवेश करके उनके पास जाती हूँ ( घूमकर देखती हुई ) ये आर्या कुछ सोचती हुई बैठी हैं । अतः इनके पास जाती हूँ ।

[ तदनन्तर आसन पर बैठी हुई उत्कण्ठित "वसन्तसेना" तथा "मदनिका" का प्रवेश होता है । ]

वसन्तसेना—हञ्जे ! तदो तदो ? । [ चेटि ! ततस्ततः ? । ]

चेटी—अज्जए ण किंपि मंतेसि । किं तदो तदो ? । [ आर्ये ! न किमपि मन्त्रयसि । किं ततस्ततः ? ! ]

वसन्तसेना—किं मए भणिदं ? । [ किं मया भणितम् ? । ]

चेटी—तदो तदो त्ति । [ ततस्तत इति । ]

वसन्तसेना—( सभ्रूक्षेपम् ) आं, एव्वं । [ आं, एवम् । ]

---

"इष्टानवाप्तेरौत्सुक्यं, कालक्षेपासहिष्णुता ।
चित्त-ताप-त्वरा-स्वेद-दीर्घ-निश्वसितादिकृत् ॥" इति ।

हञ्जे ! इति । वसन्तसेना स्वमनसि किमपि विचारयन्ती, उन्मादितेव, चेटीं पृच्छति--"हञ्जे ! ततस्ततः" इति । इतोऽग्रे किमभूदित्याशयः । वस्तुतो न चेट्या किमपि कथितम्, अत इदं वसन्तसेनाकथनं सर्वथा अनुचितं सदुन्मादावस्था-मेव तस्या अभिव्यनक्ति ! "हञ्जे" इति प्रेष्याणां चेटीनां सम्बोधनपदमिति साहित्य-शास्त्रसिद्धान्तः । उन्मादस्वरूपश्च यथा दर्पणे—

"चित्त-सम्मोह "उन्मादः", कामशोकभयादिभिः ।
अस्थान-हास-रुदित-गीत-प्रलपनादिकृत् ॥" इति ।

उक्तां वसन्तसेनोक्तिमाकर्ण्य चेटी कथयति,--आर्ये इति । आर्ये त्वं तु किञ्चिदपि न कथितवती, पुनः किमिति पृच्छसि "ततस्ततः" इति । कस्मिंश्चिद्वार्तालाप-प्रसङ्गे प्रवृत्ते एवं पृच्छयते—ततोऽग्रे किमभूदिति ? न चात्र कश्चिद्वार्तालाप-प्रसङ्गः । ततः कीदृशीयं तव दशेति हृदयम् ।

सभ्रूक्षेपमिति । भ्रुकुटीमुन्नमय्य हृदयगतं भावं स्मरन्ती सती वसन्तसेना

---

वसन्तसेना--सखि ! उसके पश्चात् ? ( क्या हुआ ?··· )

चेटी—आर्ये ! आपने कुछ बात तो की नहीं फिर "उसके पश्चात्" क्या ?

वसन्तसेना—मैंने क्या कहा ?

चेटी—"तदनन्तर···" ( उसके बाद क्या ? )

वसन्तसेना—( भौं चढ़ाकर ) हाँ, ऐसा !

( उपसृत्य )

प्रथमा चेटी—अज्जए ! अत्ता आदिसदि—'ण्हादा भविअ देवदाणं पूअं णिव्वत्तेहि' त्ति । [ आर्ये ! माताऽऽदिशति—'स्नाता भूत्वा देवतानां पूजां निर्वर्तय' इति । ]

वसन्तसेना—हञ्जे ! विण्णवेहि अत्तं—'अज्ज ण ण्हाइस्सं । ता बम्हणो ज्जेव्व पूअं णिव्वत्तेदु' त्ति । [ चेटि ! विज्ञापय मातरम्—'अद्य न स्नास्यामि । तद्ब्राह्मण एव पूजां निर्वर्तयतु' इति । ]

---

कथयति—"आम्, एवम्" । "आम्" इति स्मरणार्थेऽव्ययपदम् । मया स्मृतम्, यदहं कथितवतीत्यर्थः ।

प्रथमा चेटी समागत्य निवेदयति—आर्ये, इति । माता आज्ञापयति—"स्नाता भूत्वा देवतानां पूजां कुरु" इति । वस्तुतस्तु नीचपात्रोक्तिरत्र मर्षणीया—"स्नात्त्वा" इत्येवोचितं वक्तुमिति भाषायाः सौन्दर्यं विलीनम् ।

मातुरादेशं श्रुत्वा सा कथयति—विज्ञापयेति । माता निवेदनीया—अहमद्य स्नानं न करिष्यामि, ततो ब्राह्मण एव पूजां निर्वर्तयतु = करोतु ।

[ एतेन प्रतीयते—तदानीं ब्राह्मणा वेश्यानामपि गृहेषु देवपूजादिकृत्यं कुर्वन्तिस्म । एवमुक्त्वा कविस्तदानीन्तनसामाजिकव्यवस्थां सूचयति, ब्राह्मणास्तु वराकाः गङ्गाजलमिव, सूर्यप्रभेव वा, सर्वस्य कल्याणसाधने नात्मानमपि गणयन्ति । ]

---

( पास जाकर )

पहली चेटी—आर्ये ! माता जी ने आदेश दिया है कि "आप स्नान करके देव-पूजा कर लें ।"

वसन्तसेना—सखि ! माता जी से निवेदन करना कि "आज मैं स्नान नहीं करूँगी; अतः ब्राह्मण ही देव-पूजन कर दे ।" ❀

---

❀ "वसन्तसेना" के इस कथन से—"उस समय ब्राह्मण वेश्याओं के घर भी देव पूजन आदि क्रिया-कलाप सम्पादित किया करते थे"—इस तात्कालिक सामाजिक परिस्थिति का ज्ञान होता है ।

चेटी—जं अज्जआ आणवेदि । [ यदार्याज्ञापयति । ]

( इति निष्क्रान्ता )

मदनिका—अज्जए ! सिणेहो पुच्छदि ण पुरोभाइदा, ता किं णेदं ? । [ आर्ये ! स्नेहः पृच्छति, न पुरोभागिता, तत्किं न्विदम् ? । ]

वसन्तसेना—मदणिए ! केरिसिं मं पेक्खसि ? । [ मदनिके ! कीदृशीं मां प्रेक्षसे ? । ]

मदनिका—अज्जआए सुण्णहिअअत्तणेण जाणामि हिअअगदं कंपि अज्जआ अहिलसदि त्ति । [ आर्यायाः शून्यहृदयत्वेन जानामि हृदयगतं कमप्यार्याभिलषतीति । ]

---

वसन्तसेनायास्तादृशीं विचित्रां दशां दृष्ट्वा मदनिका नाम्नी सैव चेटी पृच्छति—आर्ये स्नेह इति । आर्ये ! स्नेह एवं पृच्छति = स्नेहवशादेवं पृच्छामि, न पुनः पुरोभागिता = दोषदृष्टिः । "दोषैकदृक् पुरोभागी" इत्यमरः । तत् कथय, किमेतत् ? इति । तवेदृशी दशा कथं जातेति प्रीत्या पृच्छामि, न पुनस्तव दोषदर्शनार्थमिति तत्त्वम् ।

"कीदृशीं मामुत्प्रेक्षसे ?" इति वसन्तसेनावचः समाधातुमाह मदनिका—आर्याया इति । तव शून्यत्वं हृदयस्य सूचयति—कमपि पुरुषविशेषं चेतसा

---

चेटी—जो आर्या का आदेश !

[ चली जाती है । ]

मदनिका—आर्ये ! मैं स्नेहवश यह पूछती हूँ—किसी दोषदृष्टि से नहीं—कि आज कल आपकी यह कैसी दशा हो रही है ? ( "आपकी ऐसी दशा किस कारण से है" यह स्नेह के कारण पूछती हूँ; आपके किसी दोष को देखने की इच्छा से नहीं । )

वसन्तसेना—मदनिके ! तू मुझे कैसी देखती है ?

मदनिका—आपकी इस "शून्यहृदयता" से मैं अनुमान लगाती हूँ कि आप किसी हृदयस्थित जन को चाहती हैं ।

वसन्तसेना—सुट्ठु तुए जाणिदं । परहिअअग्गहणपंडिआ मदणिआ क्खु तुमं । [ सुष्ठु त्वया ज्ञातम् । परहृदयग्रहणपण्डिता मदनिका खलु त्वम् । ]

मदनिका—पिअं मे पिअं । कामो खु णाम एसो भअवं । अणुगहिदो महूसवो तरुणजणस्स । ता कधेदु अज्जआ, किं राआ राअवल्लहो वा सेवीअदि ? । [ प्रियं मे प्रियम् । कामः खलु नामैष भगवान् । अनुगृहीतो महोत्सवस्तरुणजनस्य । तत्कथयत्वार्या, किं राजा राजवल्लभो वा सेव्यते ? । ]

---

स्मरसि, तव चित्ते कोऽपि युवा प्रविष्ट इति भावः ।

स्वमनोनुकूलं वचनं निशम्याह, वसन्तसेना—सुष्ठु त्वयेति । मदनिके ! त्वया सम्यक् ज्ञातम् , सत्यमेव त्वन्तु परस्य हृदयस्य ग्रहणे ज्ञाने पण्डितासि । यतस्तव नामैव सार्थकम् । मदनः = कामः हृदयस्थो भवति, तद्ग्रहणे च तव नैपुण्यमस्त्येव । एतेन—"सहचारी विजानीयाद्धूर्ततां सहचारिणः । खग एव विजानाति खगस्य चरणौ सखे ! ।" इत्यभियुक्तोक्त्या परस्य = शर्विलकस्य हृदयग्रहणनिपुणा मदनिकापि तादृशीं कामदशामनुभवति, इत्यभिव्यज्यते, इति विज्ञा विभावयन्तु । ]

वसन्तसेनाकथनमाकर्ण्य प्रसीदन्ती मदनिका प्राह—प्रियं मे-इति । अमुना तव कथनेन मम प्रीत्यतिशयः । वसन्तसेने ! एष भगवान् = सर्वैश्वर्यशाली सर्वेषा-

---

वसन्तसेना—तूने ठीक जाना ! तू तो दूसरों के हृदय को समझने में बड़ी पण्डिता "मदनिका" है । ( अर्थात्—तेरा नाम ही सार्थक है क्योंकि मदन ( काम ) हृदय में रहता है और उसके ग्रहण करने में तू बड़ी पटु है । ) ❋

मदनिका—यह मेरे लिए प्रिय है । यह "काम" सबका उन्मादक है ! अब तो युवकों के मनोरथ सफल हो गये ! इसलिए बताइये कि क्या कोई "राजा" अथवा "राजवल्लभ" सेवित किया जा रहा है ?

---

❋ इससे—"खग जानै खग ही की भाषा" इस लोकोक्ति के अनुसार दूसरे ( "शर्विलक" ) के हृदय को आकृष्ट करने में निपुण "मदनिका" भी "वसन्तसेना" के समान ही कामदशा का अनुभव कर रही है"—इस अर्थ की अभिव्यक्ति होती है ।

वसन्तसेना—हञ्जे ! रमिदुमिच्छामि, ण सेविदुं। [ चेटि ! रन्तुमिच्छामि, न सेवितुम्। ]

मदनिका—विज्जाविसेसालंकिदो किं को वि बम्हणजुआ कामीअदि ?। [ विद्याविशेषालंकृतः किं कोऽपि ब्राह्मणयुवा काम्यते ?। ]

वसन्तसेना—पूअणीओ मे बम्हणजणो। पूजनीयो मे ब्राह्मणजनः। ]

---

मुन्मादकः कामः खलु। अद्यावधि अहमेव कामपीडिता, अद्य तु त्वमपीति हृदयम्। तरुणजनानां मधूत्सवः = वसन्तोत्सवोऽनुगृहीतः, न जाने कति तरुणास्तव तारुण्यफलं भोक्तुं सोत्का आसन्, परं तेऽकृतार्था एवाभूवन्, तव चेतसि तादृशस्य कामप्रभावस्याप्रकाशनात्, अद्य तु एकस्त्वया मनसि धृतः, शनैः शनैः अन्येषामपि तरुणानां समयोऽप्यायास्यति। द्वारोन्मेषे न जाने कियन्तः आगच्छन्ति गच्छन्ति चेति परमनैपुण्यं मदनिकायाः सूच्यते। "प्रियं मे" इति कथनेन च ममापि शर्विलक-प्राप्तिर्भविष्यति। अवश्यमेव भुक्तकामसन्तापा मामपि वेश्याबन्धनान्मोचयिष्यसीति परमनिष्कर्षः। सहृदया एवास्मदुक्तिसंवादने कुशला इति ते एव प्रष्टव्याः।

कतमस्तवाभिलषितः ? किमु ब्राह्मणः ? इति मदनिकायाः प्रश्नं समाधत्ते वसन्तसेना—पूजनीय इति। 'ब्राह्मणास्तु मे पूजनीयाः। "ब्राह्मण"—शब्देनात्र वेदशास्त्रपारगाः, तपोनिष्ठा एव ब्राह्मणा गृह्यन्ते। चारुदत्तस्य ब्राह्मणत्वेऽपि, उक्तस्वरूपत्वाभावात् तेन सह प्रीति-संयोजने न दोषलेश इति भावः।

---

वसन्तसेना—सखि ! मैं 'सेवन' नहीं प्रत्युत 'रमण' करना चाहती हूँ।

मदनिका—क्या विद्या-विनय आदि गुणों से अलङ्कृत किसी ब्राह्मण युवक को चाहती हैं ?

वसन्तसेना—ब्राह्मण तो पूजनीय हैं ( सेवनीय नहीं। ) †

---

† ब्राह्मण से आशय वेदज्ञ विद्वानों से है। "चारुदत्त" यद्यपि ब्राह्मण है तथापि उसमें उपर्युक्त स्वरूप का अभाव है। अतः उससे प्रेम करने में कोई दोष नहीं है।

मदनिका—किं अणेअणअराभिगमणजणिदविहववित्थारो वाणिअजुआ वा कामीअदि ? । [ किमनेकनगराभिगमनजनितविभवविस्तारो वाणिजयुवा वा काम्यते ? । ]

वसन्तसेना—हञ्जे ! उवारूढसिणेहं पि पणइजणं परिच्चइअ देसंतरगमणेण वाणिअजणो महंतं विओअजं दुक्खं उप्पादेदि । [ चेटि ! उपारूढस्नेहमपि प्रणयिजनं परित्यज्य देशान्तरगमनेन वाणिजजनो महद्वियोगजं दुःखमुत्पादयति । ]

मदनिका—अज्जए ! ण राआ, ण राअवल्लहो, ण बम्हणो, ण वाणिअजणो; ता को दाणिं सो भट्टिदारिआए कामीअदि ? । [ आर्ये ! न राजा, न राजवल्लभः, न ब्राह्मणः, न वाणिजजनः; तत्क इदानीं स भर्तृदारिकया काम्यते ? । ]

वसन्तसेना—हञ्जे ! तुमं मए सह कामदेवाअदणुज्जाणं गदा आसि ? ।

---

पुनर्मदनिका जिज्ञासते—किमनेकेति । अनेकेषु नगरेषु अभिगमनेन येनात्मनो व्यापारो विस्तारितः, धनसम्पत्तिश्चार्जिता, एवंविधः कोऽपि वैश्ययुवकः काम्यते = अभिलष्यते किमु भवत्येति प्रश्नस्याशयः ।

अहं तु कामोपभोगसुखं वाञ्छामि, न पुनर्धनं कस्यचिदपीति, वणिग्जनश्चानुरक्तमपि जनं परित्यज्य देशान्तरं गच्छति, तेन च महद्वियोगजन्यं दुःखं सोढव्यं भवतीति मया वणिगपि नाभिलष्यते ।

---

मदनिका—या नगरों व बस्तियों में अपने वैभव का विस्तार करने वाले किसी वणिक् युवक को चाहती हैं ?

वसन्तसेना—सखि ! स्नेह उत्पन्न करके स्नेहाकुल जनों को छोड़कर विदेशों में चले जाने के कारण "वणिक्" बहुत ही वियोग-दुःख उत्पन्न कर देते हैं । ( मैं तो रमण करना चाहती हूँ; अतः देश-विदेश में घूमने वाले किसी बनिये को नहीं चाहती । )

मदनिका—आर्ये ! न राजा, न राजवल्लभ, न ब्राह्मण और न वणिक् ही अभीप्सित है । तो आप किसे चाहती हैं ?

[ चेटि ! त्वं मया सह कामदेवायतनोद्यानं गतासीः ? । ]

मदनिका—अज्जए ! गदम्हि । [ आर्ये ! गतास्मि । ]

वसन्तसेना—तह वि मं उदासीणा विअ पुच्छसि ? । [ तथापि मामुदासीनेव पृच्छसि ? । ]

मदनिका—जाणिदं, किं सो ज्जेव जेण अज्जआ सरणाअदा अब्भुववण्णा ? । [ ज्ञातम्, किं स एव येनार्या शरणागताभ्युपपन्ना ? । ]

वसन्तसेना—किंणामहेओ खु सो ? । [ किंनामधेयः खलु सः ? । ]

मदनिका—सो खु सेट्ठिचत्तरे पडिवसदि । [ स खलु श्रेष्ठिचत्वरे प्रतिवसति । ]

वसन्तसेना—अइ ! णामं से पुच्छिदासि । [ अयि ! नामास्य पृष्टासि । ]

मदनिका—सो खु अज्जए ! सुगहीदणामहेओ अज्जचारुदत्तो णाम । [ स खलु आर्ये ! सुगृहीतनामधेय आर्यचारुदत्तो नाम । ]

वसन्तसेना—( सहर्षम् ) साहु मदणिए ! साहु । सुट्ठु तुए जाणिदं ।

---

मदनिके ! तस्मिन् दिने त्वं मया सह कामदेवायतने गतासि, "तथापि न जानासी"ति कथयति—तथापीति । तथापि=निपुणा सत्यपि, उदासीनेव=अपरिचितेव पृच्छसि ? किमु तस्मिन् दिने भाव-भङ्गया न ज्ञातं त्वया कस्मिन्नहमनुरक्तेति ? इति भावः ।

---

वसन्तसेना—सखि ! तू मेरे साथ "कामदेवायतन उद्यान" में गई थी ?

मदनिका—आर्ये ! गई थी ।

वसन्तसेना—तो भी मुझसे अपरिचित-सी होकर पूँछ रही है ?

मदनिका—जान गई ! क्या उसको ही, जिसने कि आपको शरण दी थी, ( चाहती हो ) ?

वसन्तसेना—उसका क्या नाम है ?

मदनिका—वह सेठों के चबूतरे पर रहते हैं ।

वसन्तसेना—अरी ! मैंने उसका नाम पूछा है ।

मदनिका—आर्ये ! वह स्वनामधन्य "आर्य चारुदत्त" हैं ।

[ साधु मदनिके ! साधु, सुष्ठु त्वया ज्ञातम् । ]

मदनिका—( स्वगतम् ) एव्वं दाव । ( प्रकाशम् ) अज्जए ! दलिद्दो खु सो सुणीअदि । [ एवं तावत् । आर्ये ! दरिद्रः खलु स श्रूयते । ]

वसन्तसेना—अदो ज्जेव कामीअदि । दलिद्दपुरिससंकंतमणा क्खु गणिआ लोए अवअणीआ भोदि । [ अत एव काम्यते । दरिद्रपुरुषसंक्रान्तमनाः खलु गणिका लोकेऽवचनीया भवति । ]

मदनिका—अज्जए ! किं हीणकुसुमं सहआरपादवं महुअरीओ उण सेवंति ? । [ आर्ये ! किं हीनकुसुमं सहकारपादपं मधुकर्यः पुनः सेवन्ते ? । ]

---

दरिद्रः आर्यचारुदत्तः, इति श्रूयते, पुनः कथं तादृशं भवती कामयते ? इति मदनिकोक्तिं समाधत्ते वसन्तसेना—दरिद्रपुरुषेति । दरिद्रपुरुषेण सह प्रीतिसम्बन्धं स्थापयन्ती वेश्या लोके निन्दनीया न भवतीति ज्ञात्वैव मयाऽसौ स्वीकर्तुमभिलषितः, इति भावः ।

एवंविधं वसन्तसेनामनोगतं भावमालोच्यानुचितं मन्यमाना कथयति मदनिका—आर्ये, किं हीनेति । आर्ये ! कुसुमरहितं रसालपादपं किमु कदाचिन्मधुकर्योऽभिलषन्ति ? कुसुमसम्पत्तिरेव सहकारस्य तासामाकर्षणकारणं भवतीति त्वयापि धनविभवरहितः किमु सेवनीयः ? धनमन्तरा कथं कामोपभोगसुखमुपलप्स्यते ? इति प्रश्नस्याशयः ।

---

वसन्तसेना—( सहर्ष ) वाह ! मदनिके ! वाह ! तूने ठीक जाना !

मदनिका—( स्वगत ) तो ऐसा कहूँ ! ( प्रकाश में ) आर्ये "वह तो दरिद्र है" ऐसा सुना जाता है ।

वसन्तसेना—इसीलिए तो मैं चाहती हूँ । क्योंकि दरिद्र पुरुष से स्नेह करने वाली वेश्या लोक में अनिन्दनीय होती है ।

मदनिका—आर्ये ! क्या कुसुमविहीन ( बौर रहित ) रसाल-पादप को कभी मधुकरियाँ चाहती हैं ? ( सुमन-सम्पत्ति ही उनके आकर्षण का हेतु होती है । इसी प्रकार आप भी उन धन रहित को क्यों चाहती हैं ? धन न होने पर किस प्रकार रमण-सुख मिल सकेगा ? )

वसन्तसेना—अदो ज्जेव ताओ महुअरीओ वुच्चंति। [ अत एव ता मधुकर्य उच्यन्ते । ]

मदनिका—अज्जए ! जइ सो मणीसिदो ता कीस दाणिं सहसा ण अहिसारीअदि ?। [आर्ये, यदि स मनीषितस्तत्किमर्थमिदानीं सहसा नाभिसार्यते ?। ]

वसन्तसेना—हञ्जे ! सहसा अहिसारिअंतो पंचुअआरदुब्बलदाए, मा दाव, जणो दुल्लहदंसणो पुणो भविस्सदि। [ चेटि ! सहसाभिसार्यमाणः

पुनरप्युत्तरयति वसन्तसेना—अत एवेति । यतस्ता केवलं मधु-लुब्धाः रसालं सेवन्ते, न च वास्तविकीं प्रीतिं परिचिन्वन्ति, अत एव ता "मधुकर्यः" केवलं मधु-सञ्चितं कर्तुमेव तासां सर्वोऽपि व्यापारः। नाहं तथाविधं प्रेमोचितं मन्ये । यथार्था प्रीतिर्मधुकरीतुल्यानां वेश्यानां न भवति, सा तु धर्मपत्नीनामेव सद्गृहस्थानां, ततश्चाहन्तु तस्य पत्नीत्वमेव कामये, इति परमसारः।

मदनिका पुनः पृच्छति—यदि स एवाभिलषितः ?, तर्हि किमिति विलम्बोऽवलम्बितः। सहसा किमिति नाभिसार्यते ? सङ्कोचं परित्यज्य अभिसारं कर्तुं तस्यान्तिकं गम्यताम्। इत्याशयेनाह—आर्ये यदि स इति। भावः पूर्वमुक्तः।

मार्मिकतया समाधाननिपुणा वसन्तसेना कथयति—हञ्जे, सहसेति। हञ्जे,

वसन्तसेना—इसीलिए तो वे "मधुकरी" कहलाती हैं।❀

मदनिका—यदि वही अभीप्सित हैं तो क्यों नहीं सहसा संगम करती हैं ?

वसन्तसेना—हला ! सहसा रमण करने से प्रत्युपकार करने में दुर्बल

❀ "वसन्तसेना" के इस कथन में "मधुकरी" शब्द का बहुत ही भावपूर्ण प्रयोग हुआ है। उसके कहने का आशय है कि—"मधुकरी केवल "मधु" के लोभ से ही "रसाल" का सेवन करती हैं—किसी वास्तविक प्रेम के कारण नहीं। उनका ध्येय केवल "मधु-सञ्चय" ही है। परन्तु मैं इसे अच्छा नहीं समझती। मेरा ध्येय "लूट-खसोट" नहीं, प्रत्युत "हार्दिक प्रेम" है। वह इस प्रकार नहीं मिलता ; उस प्रेम का आनन्द तो "धर्मपत्नी" बनकर ही मिल सकता है, अतः मैं "चारुदत्त" का पत्नीत्व ही चाहती हूँ।" विशेष विवरण के लिए देखिए, सं०टी०।

प्रत्युपकारदुर्बलतया, मा तावत्, जनो दुर्लभदर्शनः पुनर्भविष्यति । ]

मदनिका—किं अदो ज्जेव सो अलंकारओ तस्स हत्थे णिक्खित्तो ? ।
[ किमत एव सोऽलंकारस्तस्य हस्ते निक्षिप्तः ? । ]

---

मदनिके ! सहसाऽभिसारे प्रत्युपकारं कर्तुं दुर्बलतया ( धनं विना मम सन्तोषः कर्तुं न शक्यते इति संकोचेन लज्जित इव ) स दुर्लभ-दर्शनो "मा भूदिति धिया मया सहसाऽभिरमणं न क्रियते । शनैः स्थापिता प्रीतिरेव बद्धमूला कामपादपं सफलं करोति, प्रीति-सम्बन्धे विचारहीनता—हानिं जनयतीति सारः ।

अभिसारो हि नाम कामजनितं प्रीतिरसमास्वादयितुं स्वप्रीतिपात्रेण सह संगमः ।—अभिसारिकालक्षणञ्च यथा—

"अभिसारयते कान्तं, या मन्मथवशंवदा ।
स्वयं वाऽभिसरत्येषा धीरैरुक्ताभिसारिका ॥"

सा च कृष्णपक्षे गच्छति चेत् स्वकान्तस्यान्तिके तदा "कृष्णाभिसारिका"; शुक्लपक्षे च तथा सती "शुक्लाभिसारिका" इति द्वैविध्यमृच्छति ।

एतस्मिन् वार्तालापे कविर्मानसपर्यवेक्षणे पाण्डित्यप्रकर्षमात्मनः प्रकटितवान्, भावानामतिगूढताम्, वैदग्धी-धोरणीञ्च प्रकाशितवान् । सहसा कृता प्रीतिः शकुन्तलानाटके कविकुलगुरुणा श्रीकालिदासेनापि निन्दिता शकुन्तला-परित्याग-काले, शार्ङ्गरवः कथयति—इत्थमप्रतिहतं चापल्यं दहति ।

"अतः परीक्ष्य कर्तव्यं विशेषात् संगतं रहः ।
अज्ञातहृदयेष्वेवं वैरी भवति सौहृदम् ॥"

[ शाकु० ५ अङ्के, २७ श्लोकः ]

अलङ्कारसंस्थापनविषये मदनिका पृच्छति—किमत एवेति । किंस्विते-

---

होने के कारण पुनः दुर्लभ-दर्शन हो जायगा । ( अर्थात्—"धन के बिना मेरा सन्तोष कैसे होगा ?" इस सङ्कोच से लज्जित होकर कभी दर्शन देना भी बन्द कर दें । अतः सहसा-अभिसरण मुझको अभीष्ट नहीं । )

मदनिका—क्या इसीलिए वह अलङ्कार आपने उनके हाथ में धरोहर के रूप में रखा है ?

वसन्तसेना--हञ्जे ! सुट्ठु दे जाणिदं । [ चेटि ! सुष्ठु त्वया ज्ञातम् । ]

( नेपथ्ये )

अले भट्टा ! दशसुवण्णाह लुद्धु जूदकरु पपलीणु पपलीणु । ता गेण्ह गेण्ह । चिट्ठ चिट्ठ, दूलात्पदिट्ठो सि । [ अरे भट्टारक ! दशसुवर्णस्य रुद्धो द्यूतकरः प्रपलायितः प्रपलायितः । तद्गृहाण गृहाण । तिष्ठ तिष्ठ, दूरात्प्रदृष्टोऽसि । ]

( प्रविश्यापटीक्षेपेण संभ्रान्तः )

संवाहकः—हीमाणहे, कट्टे एशे जुदिअलभावे ।

---

तदर्थमेव सोऽलङ्कारो भवत्या तस्य महानुभावस्य हस्ते समर्पितः स्नेहसम्बन्धं स्थिरीकर्तुमिति भावः ।

वसन्तसेना तस्या विज्ञानकुशलतां प्रकाशयितुमाह—हञ्जे ! सुष्ठु—इति । मदनिके मदीयः सफलोऽपि भावस्त्वया सम्यग् ज्ञातः, अतीव निपुणासीति भावः ।

( नेपथ्ये )—इति प्रेक्षकगृहस्य पश्चाद्भागे, यत्र नटाः स्ववेषरचनां कुर्वन्ति, प्रेक्षकाणां दृष्टिश्च न निपतति तत् स्थानं "नेपथ्यं" भवति । तस्मिन् वक्ष्यमाणं, वाक्यमुच्चारयन्तौ द्यूतकाराणां सभाध्यक्षः ( सभिकः ), द्यूतकरः ( द्यूतक्रीडनकः ) इत्येतावुभावपि "संवाहक"नामानं पुरुषं द्यूतदेयं दशसुवर्णात्मकं धनमदत्त्वैव प्रपलायमानमनुरोद्धुं यतेते । तत्र माथुरस्तं द्यूतकरं संबोध्य कथयति--अरे भट्टारकेति । अरे स्वामिन् ! ( इति स्वाभाविकं तस्य वचनम् ) दश सुवर्णानां ( धारकः ) = कृते वा = रुद्धोऽवरुद्धोऽस्माभिर्द्यूतकरः ( अस्माकं हस्तान्मुक्तः सन् ) प्रपलायते । ततो गृहाणेमम् । अरे ! तिष्ठ तिष्ठ । क्व प्रयासि ? दूरात् बहोः कालात् सुदूरतो वा दृष्टोऽसि । इति ।

---

वसन्तसेना—सखि ! तूने ठीक जाना है ।

[ नेपथ्य में ]

अरे स्वामी ! यह दस सोने के मोहरों का धारक जुआरी हमारे द्वारा पकड़े जाने पर भी भाग रहा है ! पकड़ो ! पकड़ो ! अरे ! ठहर ! ठहर ! ( कहाँ जायगा ? ) बहुत देर में मिला है !

[ बिना पर्दा उठाए घबराते हुए प्रवेश कर ]

णवबंधणमुक्काए विअ,
　　गद्दहीए हा ताडिदो म्हि गद्दहीए ।
अंगलाअमुक्काए विअ शत्तीए,
　　घडुक्को विअ घादिदो म्हि शत्तीए ॥ १ ॥
लेखअवावडहिअअं शहिअं दट्ठूण झत्ति पब्भट्ठे ।
एण्हिं मग्गणिवडिदे कं णु खु शलणं पपज्जे ॥ २ ॥

ता जाव एदे शहिअजूदिअला अण्णदो मं अण्णेशंति, ताव हक्के विप्पडीवेहिं पादेहिं एदं शुण्णदेउलं पविशिअ देवीभविश्शं । [ आश्चर्यम्, कष्ट एष द्यूतकरभावः ]

नववन्धनमुक्तयेव गर्दभ्या हा ताडितोऽस्मि गर्दभ्या ।
अङ्गराजमुक्तयेव हा शक्तया घटोत्कच इव घातितोऽस्मि शक्तया ॥

---

अपटीक्षेपेणेति—पटी = यवनिका, तस्याः क्षेपं विनैव । यवनिकामोचनं विनैवेत्यर्थः । संभ्रान्तः संवाहकः प्रविशति ।

"पटीक्षेपो न कर्तव्यः, आर्त-राज-प्रवेशने ।" इति भरतमुनेरादेशः ।

द्यूतकर-कर्मणोऽतिमात्रं खिन्नः संवाहकः कथयति—हीमाणहे—इति । "हीमाणहे ।" इत्याश्चर्यसूचकमव्ययम् । आश्चर्यम् ! एष द्यूतकरभावः परमकष्टप्रदः । अस्मिन् कर्मणि सुखस्य लेशोऽपि नास्ति, इति भावः ।

द्यूतकरस्य कर्मातिदुष्टमिति प्रतिपादयितुमाह—नवबन्धनेति । अत्र "गर्दभी, "शक्तिका" इति द्यूतकर्मणि प्रयुज्यमानानां कपर्दिकानां संज्ञा । नवबन्धनादुन्मुक्ता गर्दभी यथा यं कमपि पादप्रहारेण सत्करोति तथैवानया "गर्दभ्या" =

---

संवाहक—आश्चर्य है ! यह जुआरीपना बहुत ही कष्टप्रद है ?

"जैसे बन्धन से छुटी हुई गर्दभी दूसरों को ताडित करती है वैसे ही मैं भी इस "गर्दभी" ( जूए में प्रयुक्त कौड़ी आदि ) से बुरी तरह पछाड़ा गया हूँ । इस शक्ति ( कौड़ी ) से मैं इस प्रकार आक्रान्त हुआ हूँ जिस प्रकार कि अङ्गराज "कर्ण" की "शक्ति" से "घटोत्कच" ( हुआ था ) ॥" ॥ १ ॥

लेखकव्यापृतहृदयं सभिकं दृष्ट्वा झटिति प्रभ्रष्टः।
इदानीं मार्गनिपतितः कं नु खलु शरणं प्रपद्ये ॥

तद्यावदेतौ सभिकद्यूतकरावन्यतो मामन्विष्यतः, तावदहं विपरीताभ्यां पादाभ्यामेतच्छून्यदेवकुलं प्रविश्य देवीभविष्यामि । ]

---

द्यूत-कपर्दिकया अहमपि भृशं ताडितोऽस्मि, यथा च महाभारत-युद्धे कर्णेन प्रयुक्तया शक्त्या = ( अस्त्रविशेषेण ) एकवीराऽरातिघ्न्या भीमसेनपुत्रो "हिडिम्बा"जातो घटोत्कचो हतस्तथैवानया "शक्त्या" = कपर्दिकयाऽहं हत इवास्मि। द्यूतकर्मणि सततं प्रसक्तोऽहं पर्याप्तमपमानं स्वीकृतवानिति भावः। [अयं संवाहको मागधभाषामाश्रित्य व्यवहरति। तस्याश्च प्रायेण "श"कारस्य बाहुल्यमिति ज्ञेयम्। ] अत्रोपमाऽलङ्कारः ॥१॥

पुनरपि संवाहकः स्वावस्थां प्राकृतनीं वर्णयति—लेखअ—इति । यदाऽहं द्यूतकाले दश सुवर्णं हारितवान्, तदा सभिको माथुरः कस्मिंश्चिल्लेखनकर्मण्यासक्त आसीत्, अहञ्च तथाविधं तमवलोक्य प्रभ्रष्टः = तस्मात् स्थानात् सहसा पलायितः। परमधुना मार्गे निर्गतः सन् कं पुरुषं शरणं = रक्षकं प्रपद्ये = यामि ? इदानीं मम रक्षां को विधास्यतीत्याशङ्काकुलोस्मि । अत्र गाथा च्छन्दः । लक्षणमुक्तं प्राक् ॥ २ ॥

इदानीं समयोचितं क्रियमाणस्वकर्म सूचयति—ता जावेति । ततो यावदेतौ माथुर-द्यूतकरौ मामन्वेष्टुमिहागच्छतः, तावदेवाहमस्मिन् शून्ये देवमन्दिरे विप्रतीपाभ्याम् = विपरीताभ्याम्, मन्दिरस्य द्वाराभिमुखं स्वकीयं पृष्ठभागं विधाय पश्चाद् गत्वा प्रविश्य च देवीभूत्वा = देवीप्रतिमातुल्यो भूत्वा तिष्ठामि, एवंकृते कथ-

---

"( तब तो मैं ) सभिक "माथुर" को लेख आदि में उलझा हुआ देखकर जल्दी ही ( आँख बचाकर ) भाग आया था; परन्तु इस समय बीच रास्ते में मैं किसकी शरण में जाऊँ ?" ॥ २ ॥

इसलिए जब तक ये सभिक और द्यूतकर मुझको खोजते हैं तब तक मैं उलटे पैरों से इस शून्य मन्दिर में प्रवेश कर "देवी" की प्रतिमा बन कर बैठ जाता हूँ ।

( बहुविधं नाट्यं कृत्वा तथा स्थितः )

( ततः प्रविशति माथुरो द्यूतकरश्च )

माथुरः—अले भट्टा ! दशसुवण्णाह लुद्धु जूदकरु पपलीणु पपलीणु । ता गेण्ह गेण्ह । चिट्ठ चिट्ठ । दूरात्पदिट्ठोसि । [ अरे भट्टारक ! दशसुवर्णस्य रुद्धो द्यूतकरः प्रपलायितः प्रपलायितः । तद्गृहाण गृहाण । तिष्ठ तिष्ठ, दूरात् प्रदृष्टोऽसि । ]

द्यूतकरः—

जइ वज्जसि पादालं इंदं शलणं च संपदं जासि ।
सहिअं वज्जिअ एकं रुद्दो वि ण रक्खिदुं तरइ ॥ ३ ॥

[ यदि व्रजसि पातालमिन्द्रं शरणं च सांप्रतं यासि ।
सभिकं वर्जयित्वैकं रुद्रोऽपि न रक्षितुं तरति ॥ ]

---

श्चिन्मम त्राणं सम्भाव्यते । अथवा = अदेवः, देवः सम्पद्यमानः, इति च्विप्रत्ययत्वात् देवो भूत्वेत्यर्थः ।

ततो नेपथ्योक्तम् "अले भट्टा !" इत्यादि वाक्यं पठन् माथुरो द्यूतकरश्च प्रवेशं नाट्यतः । [ इमौ माथुर-द्यूतकरौ "ढक्क"—भाषां पठतः । तस्याञ्च भाषायां प्रायेण "ब"कारस्य बाहुल्यम् । संस्कृताधिक्याच्च दन्त्य-तालव्य-( स-श )-योः प्रयोगो विशेषरूपेण भवति, इति ज्ञेयम् ]

द्यूतकरो धावन्तं तं संवाहकमनुधावन् ब्रूते—जइवज्जसि इति संवाहक ! यदि पातालं यासि, इन्द्रं वा शरणीकरोषि ?, तदापि तव रक्षा न सम्भाव्यते, अन्यस्य

---

[ विविध प्रकार से अभिनय करके प्रतिमा बनकर बैठ जाता है । ]

[ तदनन्तर "माथुर" एवं "द्यूतकर" का प्रवेश होता है । ]

माथुर—स्वामी ! दस सोने के मोहरों का धारक जुआरी हम से रोके जाने पर भी भाग गया है ! इसलिए पकड़ो ! पकड़ो ! ठहर ! ठहर ! ( कहाँ जायगा ? ) बड़ी देर में मिला है !

द्यूतकर—"यदि तू पाताल में अथवा "इन्द्र" की शरण में जाता है तो सभिक ( "माथुर" ) को छोड़कर "रुद्र" भी तेरी रक्षा नहीं कर सकता ।" ॥३॥

माथुरः—

कहिं कहिं सुसहिअविप्पलंभआ, !
पलासि ले भअपलिवेविदंगआ ! ।
पदे पदे समविसमं खलंतआ,
कुलं जसं अइकसणं कलेंतआ ॥ ४ ॥

[ कुत्र कुत्र सुसभिकविप्रलम्भक ! पलायसे रे भयपरिवेपिताङ्गक ।
पदे पदे समविषमं स्खलन्-कुलं यशोऽतिकृष्णं कुर्वन् ॥ ]

द्यूतकरः—( पदं वीक्ष्य ) एसो वज्जदि । इअं पणट्ठा पदवी । [ एष व्रजति । इयं प्रनष्टा पदवी । ]

---

तु कथैव का ? भगवान् शङ्करोऽपि तव रक्षणेऽसमर्थः । केवलं यदि रक्षां करोति, तर्हि सभिकः = अस्माकमध्यक्षो माथुर एव, नान्यः कोऽपीति माथुरस्य प्रभावाधिक्यं सूचयति । ग्रामीणत्वात्तथोक्तौ न दोषः । रक्षितुं तरति = शक्नोतीत्यर्थः । धातूनामनेकार्थत्वाभ्युपगमादत्र "तृ"धातो रक्षणार्थः स्वीकृतः । अत्र आर्या च्छन्दः ॥३॥

माथुरोऽपि तमनुगच्छन् वदति—कहिं कहिं—इति । अरे संवाहक ! सुसभिकस्य ममापि विप्रलम्भं = प्रवञ्चनां विधाय भयेन कम्पितगात्रः सन् त्वमिदानीं कुत्र प्रयासि ? ( सर्वथेदं ते कर्मातिमात्रमनुचितमिति निरूपयति सभिकः । तथाहि— ) पदे-पदे = प्रतिपदं समविषमस्थाने स्खलन् = पतन् स्वकीयं कुलम् । यशश्चातिकृष्णं कुर्वन् कुत्र गच्छसि ? तवानेन दुष्कृतेन तव वंशस्यापि महती निन्दा भविष्यति । अत्र रुचिरा च्छन्दः । तल्लक्षणञ्च यथा—

"चतुर्ग्रहैर्यति रुचिरा जभौस्जगा" इति ॥४॥

---

माथुर—"अरे ! मुझ जैसे सुसभिक को भी धोखा देने वाले ! तू भय से काँपता हुआ कहाँ जा रहा है ? मार्ग में ऊँचे-नीचे स्थलों पर गिरता-पड़ता अपने कुल की कीर्ति को कलङ्कित करता हुआ ( कहाँ जा रहा है ? )" ॥ ४ ॥

द्यूतकर—( पैरों को देखकर ) यहाँ तक गया है; और यहाँ से पदपंक्ति आगे नहीं है ।

माथुरः—( आलोक्य, सवितर्कम् ) अले, विप्पदीवु पादु । पडिमाशुण्णु देउलु । ( विचिन्त्य ) धुत्तु जूदकरु विप्पदीवेहिं पादेहिं देअउलं पविट्ठो । [ अरे, विप्रतीपौ पादौ । प्रतिमाशून्यं देवकुलम् । धूर्तो द्यूतकरो विप्रतीपाभ्यां पादाभ्यां देवकुलं प्रविष्टः । ]

द्यूतकरः—ता अणुसरेम्ह । [ ततोऽनुसरावः । )

माथुरः—एव्वं भोदु । [ एवं भवतु । ]

( उभौ देवकुलप्रवेशं निरूपयतः, दृष्ट्वान्योन्यं संज्ञाप्य )

द्यूतकरः—कधं कट्ठमयी पडिमा ? । [ कथं काष्ठमयी प्रतिमा ? । ]

माथुरः—अले, ण हु ण हु, शैलपडिमा । ( इति बहुविधं चालयति संज्ञाप्य च ) एव्वं भोदु । एहि, जूदं किलेम्ह । [ अरे, न खलु न खलु, शैलप्रतिमा । एवं भवतु । एहि, द्यूतेन क्रीडावः । ( इति बहुविधं द्यूतं क्रीडतः )

---

संवाहक-पाद-चिन्हे निरीक्ष्याह द्यूतकरः—एसो—इति । एष व्रजति = अयमनेन मार्गेण गच्छति, यतोऽस्येयं पादपङ्क्तिरभिलक्ष्यते । किञ्चिद्दूरं गत्वा च पादचिह्नमवलोक्य पुनः कथयति—इयं प्रणष्टा पदवी = अतः परं पद्धतिः नैव दृश्यते । इतोऽग्रेऽसौ नैव गतः, इति भावः । ( अन्योऽन्यम् = परस्परं संज्ञाप्य = सकेतं कृत्वा ) संवाहकं मूर्तिरूपं कृत्वोपविष्टं दृष्ट्वा द्यूतकरो वदति—कधं कट्ठमयीति । किमियं देवप्रतिमा काष्ठमयी = काष्ठनिर्मिता ?

माथुरः कथयति—अले—इति । अरे ! न खल्वियं काष्ठमयी प्रतिमा, अपि

---

माथुर—( देख कर तर्कपूर्वक ) अरे ! उलटे पैर हैं ! और यह देव-मन्दिर प्रतिमा-रहित है ! (सोचकर) धूर्त जुआरी उलटे पाँवों से मन्दिर में घुस गया है ।

द्यूतकर—तो इसका अनुसरण करते हैं ( इसका पीछा करते हैं ) ।

माथुर—ऐसा ही हो ।

[ दोनों मन्दिर-प्रवेश का अभिनय करते हैं । देखकर परस्पर संकेत कर के ]

द्यूतकर—क्या ( यह ) काठ की प्रतिमा है ?

माथुर—अरे ! नहीं ! नहीं ! पत्थर की है !

( ऐसा कह कर बहु भाँति से हिलाता है । पुनः सङ्केत कर )

संवाहकः—( द्यूतेच्छाविकारसंवरणं बहुविधं कृत्वा, स्वगतम् ) अले,

**कत्ताशद्दे णिण्णाणअश्श हलइ हडकं मणुश्शश्श ।**
**ढक्काशद्दे व्व णडाधिवश्श पब्भट्ठलज्जश्श ॥ ५ ॥**

---

तु शैलमयी = शिला = पाषाण–शकल–निर्मितास्ति । इति बहुप्रकारं चालितोऽपि यदा नासौ चचाल, तदा पुनर्द्यूतक्रीडनार्थं संज्ञां कृत्वा कथयति–एवम् भवतु = एवमेवास्तु, द्यूतक्रीडामेव कुर्वः । इति तथा कुरुतः ।

संवाहकस्तयोर्द्यूतं दृष्ट्वा स्वयमपि क्रीडनेच्छां कथं कथमपि समवरुध्य स्वगत-माह—कत्ताशद्दे–इति । द्यूतक्रीडा यया भवति, सा "कत्ते"–त्युच्यते "पाश"-संज्ञकः क्रीडनकविशेष इति यावत् । अणकः = कुत्सितः ( "कुपूय-कुत्सितावद्य-खेटगर्ह्याणकाः समाः" इत्यमरः ) न अणकः–नाणकं शोभनमित्यर्थः । "निष्क" प्रभृतिमुद्राचिह्नादिकमिति यावत् । निः = नास्ति नाणकं = शोभनं निष्कादि धनं यस्य तस्य मनुजस्त द्यूतव्यसनिनः हृदयं कत्ताशब्दः, तथा हरति, यथा प्रभ्रष्टराज्यस्य कस्यचिन्नरेशस्य हृदयं ढक्कायाः = वाद्यविशेषस्य शब्दः = ध्वनिः हरति = आकर्षति । यथा संग्रामादौ ढक्काशब्दमाकर्ण्य स्खलितराज्यस्यापि कस्यचिन्नराधिपस्य चित्तं युद्धार्थं चञ्चलं भवति, तथैव कत्ताशब्दं श्रुत्वा निर्धनस्यापि द्यूतक्रीडकस्य चित्तं धनाभावेऽपि चपलं ( क्रीडनार्थम् ) भवतीति भवः । अहमपि क्रीडितुं वाञ्छामीति तत्त्वम् । अत्रोपमाऽलङ्कारः । विपुला च्छन्दः ।

तल्लक्षणं यथा वृत्तरत्नाकरे—

---

ऐसा करें । आओ ! जुआ खेलें !

( ऐसा कह कर बहुत प्रकार से जूआ खेलते हैं । )

**संवाहक**—[ जूआ खेलने की इच्छा को बहुत प्रकार से ( जैसे तैसे ) रोक कर ( स्वयं ही ) ] अरे ! "यह "कत्ता" ( पाँसा आदि ) शब्द निर्धन मनुष्य के हृदय को इस प्रकार लुभाता है जिस प्रकार कि हाथ से राज्य निकल जाने वाले किसी राजा के हृदय में भेरी का शब्द ( युद्धादि के लिए ) लालसा उत्पन्न कर देता है ( अर्थात्—मैं भी खेलना चाहता हूँ ) ।" ॥ ५ ॥

**जाणामि ण कीलिश्शं शुमेलुशिहलपधणशण्णिहं जूअं ।**
**तह वि हु कोइलमहुले कत्ताशद्दे मणं हलदि ॥ ६ ॥**

[ अरे, कत्ताशब्दो निर्नाणकस्य हरति हृदयं मनुष्यस्य ।
ढक्काशब्द इव नराधिपस्य प्रभ्रष्टराज्यस्य ॥
जानामि न क्रीडिष्यामि सुमेरुशिखरपतनसंनिभं द्यूतम् ।
तथापि खलु कोकेलमधुरः कत्ताशब्दो मनो हरति ॥

**द्यूतकरः—मम पाठे मम पाठे ।** [ मम पाठे, मम पाठे । ]

**माथुरः—ण हु; मम पाठे मम पाठे ।** [ न खलु; मम पाठे मम पाठे । ]

**संवाहकः—** ( अन्यतः सहसोपसृत्य ) **णं मम पाठे ।** [ ननु मम पाठे । ]

---

"उल्लङ्घ्य गणत्रयमादिमं, शकलयोर्द्वयोर्भवति पादः ।
यस्यास्तां पिङ्गलनागो, विपुलामिति समाख्याति ॥" इति ॥ ५ ॥

संवाहकस्तयोर्द्यूतक्रीडनकं दृष्ट्वा तदनौचित्यं स्वस्पृहाञ्च प्रकाशयति—जाणामीति । सुमेरुपर्वतस्य शिखरात् पतनतुल्यं द्यूतं सर्वथा हानिकरमिति यद्यपि सम्यग् जानामि, तथापि कोकिलस्य मधुरः स्वर इवातितमाम् रमणीयः "कत्ता"-शब्दो मम मनो हरतीव; किं करोमि ? सर्वथाऽसमर्थोऽस्मि द्यूतव्यापारादात्मानं व्यावर्तयितुमिति भावः ! अत्रोपमाऽलङ्कारः । विपुला च्छन्दः । लक्षणमुक्तम् ॥६॥

**मम पाठे—इति** । ममायमवसरः कत्तां पातयितुमिति उभयोरपि क्रीडाकारिणोः कथनस्याशयः ।

---

"मैं यद्यपि यह जानता हूँ कि जूआ सुमेरु शिखर से गिरने के समान ( हानिकर ) है; अतः नहीं खेलूँगा; तथापि कोकिल के कलकण्ठ से निकले हुए मधुर शब्द के समान यह "कत्ता" शब्द मेरे मन को आकृष्ट कर ही रहा है । (अर्थात्—मैं द्यूत से अपने को हटाने में सर्वथा असमर्थ हूँ ) ।" ॥ ६ ॥

**द्यूतकर—मेरा दाँव है ! मेरा !**

**माथुर—नहीं, मेरा है मेरा !**

**संवाहक—( एक ओर से सहसा आकर ) अरे ! मेरा है !**

द्यूतकरः—लद्धे गोहे । [ लब्धः पुरुषः । ]

माथुरः—( गृहीत्वा ) अले पेदंडा ! गहीदोसि । पअच्छ तं दश-सुवण्णं । [ अरे लुप्तदण्ड ! गृहीतोऽसि । प्रयच्छ तद्दशसुवर्णम् । ]

संवाहकः—अज्ज दइश्शं । [ अद्य दास्यामि । ]

माथुरः—अहुणा पअच्छ । [ अधुना प्रयच्छ । ]

संवाहकः—दइश्शं । पशादं कलेहि । [ दास्यामि । प्रसादं कुरु । ]

माथुरः—अले, णं संपदं पअच्छ । [ अरे, ननु सांप्रतं प्रयच्छ । ]

संवाहकः—शिलु पडदि । [ शिरः पतति । ] ( इति भूमौ पतति )

( उभौ बहुविधं ताडयतः )

माथुरः—एसु तुमं हु जूदिअरमंडलीए बद्धोसि । [ एष त्वं खलु द्यूतकर-

---

लब्धं तं संवाहकं दश सुवर्णं याचते माथुरः, कथयति च—अले पेदण्डा ! इति । पेदण्डा, = लुप्तम् = वञ्चितं न दत्तमिति यावत्, पेदण्डम् = देयं द्रव्यम् ( दण्डनीयं धनम् ) येन तत्सम्बुद्धौ, पणीकृतदेयद्रव्यापहारिन्, इत्यर्थः । देहि तत्सुवर्णदशकम् ।

शिरः पतति = चक्रवद्भ्रमति शिरः इति यावत् ।

---

द्यूतकर—आदमी पकड़ लिया ।

माथुर—( पकड़ कर ) अरे ! चोर ! पकड़ लिया ! इसलिए वे दस मोहर दिला ?

संवाहक—आर्य ! दूँगा ।

माथुर—अभी दे !

संवाहक—दूँगा ! प्रसन्न होइए !

माथुर—अबे ! ( मैं कहता हूँ ) अभी दे !

संवाहक—सिर में चक्कर आ रहा है !

[ पृथ्वी पर गिर पड़ता है । ]

[ दोनों बहुत भाँति पीटते हैं । ]

मथुरः—तुझे ( अब तो ) जुआरियों की मण्डली ने पकड़ लिया है !

मण्डल्या बद्धोऽसि । ]

संवाहकः—( उत्थाय, सविषादम् ) कधं जूदिअलमंडलीए बद्धो म्हि ?। ही, एशे अम्हाणं जूदिअलाणं अलंघणीए शमए। ता कुदो दइश्शं ?। [ कथं द्यूतकरमण्डल्या बद्धोऽस्मि ?। कष्टम्, एषोऽस्माकं द्यूतकराणामलङ्घनीयः समयः । तस्मात्कुतो दास्यामि ? । ]

माथुरः—अले, गंधु कुलु कुलु । [ अरे, गण्डः क्रियतां क्रियताम् । ]

संवाहक—एव्वं कलेमि । ( द्यूतकरमुपस्पृश्य ) अद्धं ते देमि, अद्धं मे मुंचदु । [ एवं करोमि । अर्धं तुभ्यं ददामि, अर्धं मे मुञ्चतु । ]

द्यूतकरः—एव्वं भोदु । [ एवं भवतु । ]

संवाहकः—( सभिकमुपगम्य ) अद्धश्श गंधु कलेमि । अद्धं पि मे अज्जो मुंचदु । [ अर्धस्य गण्डं करोमि । अर्धमपि मे आर्यो मुञ्चतु । ]

---

संवाहकः सविषादं कथयति—कधमिति । अहो ! द्यूतकरमण्डल्या = समुदायेन बद्धोऽस्मि = निगृहीतोऽस्मि । ही = कष्टम् ! एषोऽस्माकमित्यस्यायं भावः—सर्वत्र द्यूतकराः प्रतारणां कुर्वन्ति, परमिदानीं प्रतारणाया अपि समयो नास्ति, एतौ मामत्यर्थं ताडयिष्यतः, धनं गृहीतुं च यतिष्येते, किं क्रियताम् ? कुतो दास्यामि दशसुवर्णकम् ? इति चिन्ताकुलस्तिष्ठति ।

गण्डः = समयः, शपथ इति यावत्, कश्चिद्विशिष्टः प्रबन्धः क्रियताम् ।

---

संवाहक—( उठकर विषादपूर्वक ) क्या द्यूतकरमण्डली से निगृहीत हूँ ! खेद है ! कि यह समय प्रतारणा ( प्रवञ्चना ) का भी नहीं है । इस लिए कहाँ से दूँगा ।

माथुर—अरे ! "गण्ड" ( शपथ, शर्त ) कर ।

संवाहक—अभी करता हूँ । ( द्यूतकर के पास जाकर ) आधा मैं तुम्हें देता हूं । आधा तुम मुझे छोड़ दो !

द्यूतकर—ऐसा ही हो ।

संवाहक—( सभिक के पास जाकर ) आधे की शर्त करता हूँ, आधा आप भी छोड़ दें !

माथुरः—को दोसु ? । एव्वं भोदु । [ को दोषः ? एवं भवतु । ]

संवाहकः—( प्रकाशम् ) अज्ज ! अद्धे तुए मुक्के । [ आर्य ! अर्धं त्वया मुक्तम् । ]

माथुरः—मुक्के । [ मुक्तम् । ]

संवाहकः—( द्यूतकरं प्रति ) अद्धे तुए वि मुक्के । [ अर्धं त्वयापि मुक्तम् । ]

द्यूतकरः—मुक्के । [ मुक्तम् । ]

संवाहकः—संपदं गमिश्शं । [ सांप्रतं गमिष्यामि । ]

माथुरः—पअच्छ तं दशसुवण्णं, कहिं गच्छसि ? । [ प्रयच्छ तं दशसुवर्णम् । कुत्र गच्छसि ? ] ।

संवाहकः—पेक्खध पेक्खध भट्टालआ ! हा, संपदं ज्जेव्व एक्काह अद्धे गंथु कडे, अवलाह अद्धे मुक्के । तहवि मं अबलं शंपदं ज्जेव्व मग्गादि [ प्रेक्षध्वं प्रेक्षध्वं भट्टारकाः ! हा, सांप्रतमेव एकस्यार्धे गण्डः कृतः, अपरस्यार्धे मुक्तम् । तथापि मामबलं सांप्रतमेव याचते । ]

---

अर्धमेकेनान्येनाप्यर्धं धनं मुक्तम्, तथाप्यन्यद् धनं मां याचेते, इत्यूर्ध्वस्वरेण लोकान् संबोध्य कथयति संवाहकः—पेक्खधेति । सर्वथाऽनुचितमिदानीं पुनर्धनस्य मत्तो मार्गणं = याचनमित्याक्रोशति ! न्यायं कुरुत महानुभावाः, इति भावः ।

---

माथुर—क्या दोष ( हर्ज ) है ? ऐसा ही सही !

संवाहक—( प्रकाश में ) आर्य ! आधा आप ने छोड़ा ?

माथुर—छोड़ा ।

संवाहक—( जुआरी से ) आधा तुमने भी छोड़ा ?

द्यूतकर—छोड़ा ।

संवाहक—( अच्छा तो ) अब जाता हूँ !

माथुर—कहाँ जाता है ? दस सोने की मोहर दे !

संवाहक—महानुभावो ! देखो ! देखो ! हा ! अभी अभी एक के आधे की शपथ की है और दूसरे ने आधा छोड़ा है । तो भी अभी ही मुझ दुर्बल से ( पुनः ) माँग रहे हैं ।

माथुरः—( गृहीत्वा ) धुत्तु ! माथुरु अहं णिउणु । एत्थ तुए ण अहं धुत्तिज्जामि । ता पअच्छ तं पेदंडआ ! सव्वं सुवण्णं संपदं । [ धूर्त ! माथुरोऽहं निपुणः । अत्र नाहं धूर्तयामि । तत्प्रयच्छ तं लुप्तदण्डक, सर्वं सुवर्णं सांप्रतम् । ]

संवाहकः—कुदो दइश्शं ? । [ कुतो दास्यामि ? । ]

माथुरः—पिदरु विक्किणिअ पअच्छ [ पितरं विक्रीय प्रयच्छ । ]

संवाहक—कुदो मे पिदा ? ! [ कुतो मे पिता ? । ]

माथुरः—मादरु विक्किणिअ पअच्छ । [ मातरं विक्रीय प्रयच्छ । ]

संवाहकः—कुदो मे मादा ? । [ कुतो मे माता ? । ]

माथुरः—अप्पाणं विक्किणिअ पअच्छ । [ आत्मानं विक्रीय प्रयच्छ । ]

संवाहकः—कलेध पशादं । णेध मं लाजमग्गं । [ कुरुत प्रसादम् । नयत मां राजमार्गम् । ]

माथुरः—पसरु । [ प्रसर । ]

संवाहकः—एव्वं भोदु । ( परिक्रामति ) अज्जा ! किणिध मं इमश्श शहिअश्श हत्थादो दशेहिं शुवण्णकेहिं । ( दृष्ट्वा आकाशे ) किं भणाध—

---

माथुर—( पकड़ कर ) धूर्त माथुर ! मैं बड़ा निपुण ( चालाक ) हूँ । यहाँ तेरी धूर्तता न चलेगी । इस लिए चोर ! वह सभी सोना इसी समय दे !

संवाहक—कहाँ से दूँ ?

माथुर—अपने पिता ( बाप ) को बेच कर दे !

संवाहक—मेरे पिता कहाँ हैं ?

माथुर—तो ( फिर ) माता को बेच कर दे !

संवाहक—मेरी माता कहाँ है ?

माथुर—तो अपने को बेचकर दें !

संवाहक—आप प्रसन्न हों ! मुझे राजमार्ग ( सड़क ) पर ले चलें !

माथुर—चल !

संवाहक—ऐसा ही हो । (घूमता है ।) "आर्यो ! मुझको इस ? "सभिक"

'किं कलइश्शशि' त्ति ? । गेहे दे कम्मकले हुविश्शं । कधं ? अदइअ पडिवअणं गदे ? । भोदु एव्वं । इमं अण्णं भणइश्शं । ( पुनस्तदेव पठति ) कधं एशे वि मं अवधीलिअ गदे । हा, अज्जचालुदत्तस्स विहवे विहडिदे एशे वट्टामि मंदभाए । [ एवं भवतु । आर्याः ! क्रीणीध्वं मामस्य सभिकस्य हस्ताद्दशभिः सुवर्णकैः । किं भणत—'किं करिष्यसि' इति ? । गेहे ते कर्मकरो भविष्यामि । कथं अदत्त्वा प्रतिवचनं गतः ? । भवत्वेवम् , इममन्यं भविष्यामि । कथं एषोऽपि मामवधीर्य गतः ? । हा, आर्यचारुदत्तस्य विभवे विघटिते एष वर्ते मन्दभाग्यः । ]

माथुरः—णं देहि । [ ननु देहि । ]

---

संवाहकं कोऽपि न क्रीणाति, एकः प्रार्थितः, सोऽपि गतः । अपरोऽपि अवधीर्य = तिरस्कृत्य = गत, इति सखेदमाह—संवाहकः—हा-इति । हा ! आर्य-चारुदत्तस्य धने विनष्टे ममेयं दशा वर्तते मन्दभाग्यस्य ! नो चेत् ममाधन्यस्येदृशी दशा नाभविष्यदिति भावः ।

अत्र ( आकाशे ) इत्यस्यायं भावः—पात्रप्रवेशं विनैव स्वयमेवाभिनेता नटादिः उक्ति-प्रत्युक्तीकरोति सामाजिकाश्च तस्यैवोक्त्या सर्वमपि समाचारं विदन्ति । तथा चोक्तं श्रीविश्वनाथेन साहित्यदर्पणस्य षष्ठपरिच्छेदे—

"किं ब्रवीषीति यन्नाट्ये, विना पात्रं प्रयुज्यते ।
श्रुत्वेवानुक्तमप्यर्थं तत् स्यादाकाशभाषितम् ॥ इति ॥

---

के हाथ से कोई दस सोने की मुहरों में ले लो ? ( आकाश की ओर देखकर ) क्या कहते हो कि—"क्या करेगा ?" तुम्हारे घर का नौकर होऊँगा । क्या बिना उत्तर दिये हुए ही चला गया ? जाने दो ! इस प्रकार मैं इस दूसरे से कहता हूँ । ( पुनः—"आर्यो ! मुझको ........" इत्यादि पढ़ता है ) क्या यह भी मेरी उपेक्षा करके चला गया ? हा ! "आर्य चारुदत्त" के वैभव का विनाश हो जाने पर मुझ भाग्यहीन की आज ऐसी दशा हो गयी है ।

माथुर—दे न !

संवाहकः—कुदो दइश्शं ? । [ कुतो दास्यामि ? । ] ( इति पतति )

( माथुरः कर्षति )

संवाहकः—अज्जा ! पलित्ताअध पलित्ताअध । [ आर्याः ! परित्रायध्वं परित्रायध्वम् । ]

( ततः प्रविशति दर्दुरकः )

दर्दुरकः—भोः ! द्यूतं हि नाम पुरुषस्यासिंहासनं राज्यम् ।

**न गणयति पराभवं कुतश्चिद्धरति ददाति च नित्यमर्थजातम् ।**
**नृपतिरिव निकाममायदर्शी विभववता समुपास्यते जनेन ॥७॥**

---

द्यूतं हि सिंहासनरहितं राज्यमिति द्यूतस्य प्रशंसां कुर्वन् दर्दुरकः कथयति—न गणयतीति । यत् सत्यम्—द्यूतं हि नाम कुतोऽपि तिरस्कारमपि न गणयति =न सम्मनुते, नित्यमेव धनसमूहमर्जयति, ददाति चान्येभ्यः, यथा राजा प्रतिदिनं धनस्यायं=प्राप्तिं पश्यति, तथैवेदमपि द्यूतं प्रत्यहं धनमागतं पश्यति । विभववता =सम्पत्तिशालिनाऽपि मानवेनेदं समुपास्यते=धनिनोऽपि स्वधनाभिवृध्यर्थं द्यूतमुपासते । ततः सत्यमुक्तम्—सिंहासनरहितं राज्यमेवेदमिति ।

अत्रोपमाऽलङ्कारः । पुष्पिताग्रा च्छन्दः । तल्लक्षणं यथा—

"अयुजि न युगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ।" इति ॥७॥

---

संवाहक—कहाँ से दूँ ।

[ गिर पड़ता है । ]

( माथुर खींचता है । )

संवाहक—आर्यो ! रक्षा करो ! रक्षा करो !

[ तदनन्तर "दर्दुरक" प्रवेश करता है । ]

दर्दुरक—अरे ! जूआ पुरुष का बिना सिंहासन का राज्य है !

"यह किसी के द्वारा तिरस्कार की चिन्ता नहीं करता । नित्य ही धन लेता तथा देता रहता है । यह तो राजा के समान आय देखता है तथा बड़े-बड़े वैभवशालियों के द्वारा भी उपासनीय है ।" ॥ ७ ॥

अपि च,—

द्रव्यं लब्धं द्यूतेनैव, दारा मित्रं द्यूतेनैव ।
दत्तं भुक्तं द्यूतेनैव, सर्वं नष्टं द्यूतेनैव ॥८॥

अपि च,—

त्रेताहृतसर्वस्वः पावरपतनाच्च शोषितशरीरः ।
नर्दितदर्शितमार्गः, कटेन विनिपातितो यामि ॥९॥

---

सर्वमपि द्यूतप्रभावादुपलब्धमिति वदति—द्रव्यमिति । द्यूतकृपयैव धनम्, भार्या, मित्राणि, दानम्, सर्वविधवस्तूनामुपभोगः, इत्यादिकं मया प्राप्यतेस्म, अधुना च द्यूते एव सर्वं हारितम्=अतोऽद्भुतप्रभावमिदमिति भावः । अत्र—विद्युन्माला च्छन्दः । तल्लक्षणं यथा—"मो मो गो गो विद्युन्माला" इति ॥ ८ ॥

द्यूते पराजितो दर्दुरकः स्वकीयां दशां वर्णयति—त्रेता-इति । अस्मिन् पद्ये केचन शब्दाः द्यूतक्रियायामेव प्रसिद्धाः तथाहि-"त्रेता = " "तीया" [ त्रीणि, सप्त, एकादश इत्यादयः "तीया" संज्ञया गृह्यन्ते ] "पावरः" = "दूआ" [ द्वे, षट्, दश प्रमुखाः "पावरः" इति कथ्यन्ते ] "नर्दितः" = "नान्दी" "नक्का" इति प्रसिद्धः [ एकः, पञ्च, नव प्रभृतयो "नान्दी"संज्ञका भवन्ति ] "कटः" = पूर्णः =पूरा" इति ख्यातः [ चत्त्वारि, अष्टौ, द्वादश आदयः "कट" नाम्ना व्यवहि-

---

और भी—

"द्रव्य जूए से ही प्राप्त किया है। मित्र—कलत्र भी जूए से ही पाये ! लेना-देना भी जूए से ही किया है । और सब-कुछ जूए से ही नष्ट कर डाला है !" ॥८॥

और भी—

"त्रेता ( जूए में प्रसिद्ध "तीया" ) से सर्वस्व हरा हुआ, "पावर" ( "दूआ" ) के कारण कृश-शरीर, "नर्दित" ( "नक्का" ) से मार्ग दिखाया जाता हुआ तथा 'कट" ( "पूरा" ) के प्रभाव से गिरता-पड़ता मैं जा रहा हूँ । ( अर्थात्—"तीया, दूआ, नक्का" के चक्कर में मैं सर्वथा मिट चुका हूँ, तथापि द्यूत-लालसा इस निन्दनीय कर्म को छोड़ना नहीं चाहती ) ।" ॥ ९ ॥

(अग्रतोऽवलोक्य) अयमस्माकं पूर्वसभिको माथुर इत एवाभिवर्तते । भवतु, अपक्रमितुं न शक्यते । तदवगुण्ठयाम्यात्मानम् । ( बहुविधं नाट्यं कृत्वा स्थितः, उत्तरीयं निरीक्ष्य )

**अयं पटः सूत्रदरिद्रतां गतो ह्ययं पटश्छिद्रशतैरलंकृतः ।**
**अयं पटः प्रावरितुं न शक्यते ह्ययं पटः संवृत एव शोभते ॥१०॥**

---

यन्ते ] ततश्च मया द्यूतक्रीडाकाले महान्ति दुःखान्यनुभूतानि । त्रेतया हृतम् = अपहृतं, सर्वस्वं = सर्वमपि द्रव्यं यस्य तादृशः । पावरस्य पातेन च शोषितं शरीरं यस्य, तथाविधः । नर्दितेन दर्शितः = प्रदर्शितो मार्गो = गृहगमनस्य मार्गो यस्य सः । कटेन विनिपातितश्च = सर्वथा पराजितश्च यामि = गच्छामि । मम तु सर्वस्वमेभिस्त्रेताप्रभृतिभिर्विनाशितम् , किं करोमि, दुरोदरव्यसनमतीव निन्दितमस्ति, तथापि त्यक्तुं न शक्यते, इति भावः । अत्रार्या च्छन्दः ॥ ९ ॥

सम्मुखे माथुरमायान्तमवलोक्य देयधनाभावात् किंकर्तव्यविमूढः, उपायमवगत्य कथयति—भवतु—इति । अस्तु, आगच्छति चेदागच्छतु, अहमात्मानमवगुण्ठयामि = वस्त्रेणात्मनः ( स्वस्य ) शरीरमाच्छादयामि । विविधप्रकारेण नाट्यं कृत्वा स्वकीयमुत्तरीयम् = आच्छादनीयं वस्त्रं शतशो जीर्णं दृष्ट्वा कथयति—अयं पटः—इति । हन्त ! केन पुनरात्मानमावृणोमि ? वस्त्रस्य तु विचित्रैव दशा वर्तते—तथा हि—अयं पटः सूत्रदरिद्रतां = सूत्राहित्यं गतः । पटे सूत्राण्येव न सन्ति । शतसंख्याकैश्छिद्रैरलङ्कृतः प्रावरितुम् = आच्छादयितुं न शक्यते, अयं पटस्तु

---

( आगे की ओर देख कर ) यह हमारा भूतपूर्व सभिक इधर ही आ रहा है । आने दो । भागा तो नहीं जा सकता । अतः अपने शरीर को ढक लेता हूँ ।

[ बहुत प्रकार से अभिनयपूर्वक वैसा ही होकर खड़ा हो जाता है । अपने दुपट्टे को देख कर ]

"( मेरे ) इस कपड़े के तागे जीर्ण हो गये तथा इस में सैकड़ों छिद्र हो गये हैं । इस से ( शरीर ) ढका नहीं जा सकता । यह तो केवल इकट्ठा किया हुआ ही सुशोभित होता है ।" ॥ १० ॥

अथवा किमयं तपस्वी करिष्यति ? । यो हि

पादेनैकेन गगने द्वितीयेन च भूतले ।
तिष्ठाम्युल्लम्बितस्तांवद्यावत्तिष्ठति भास्करः ॥११॥

माथुरः—दापय दापय । [ दापय दापय । ]

संवाहकः—कुदो दइश्शं । [ कुतो दास्यामि ? । ] ( माथुरः कर्षति )

दर्दुरकः—अये, किमेतदग्रतः ? । ( आकाशे ) किं भवानाह—'अयं द्यूतकरः सभिकेन खलीक्रियते, न कश्चिन्मोचयति' इति ? । नन्वयं

---

संवृत एव = एकत्रीकृत एव शोभते । नाममात्रस्यैवायं पटोऽस्ति । अत्र भूयोभूयः "अयं पटः" इति पाठादनवीकृतो दोषः । मूर्खजनोक्त्या वा समाधेयः । वंशस्थं च्छन्दः । तल्लक्षणञ्च यथा—"जतौ तु वंशस्थमुदीरितं जरौ ।" इति ॥ १० ॥

तपस्वी = वराकः । मम सम्मुखेऽस्याकिंचित्करत्वमिति भावः ।

स्वकीयं सामर्थ्यमेव प्रकटयति—पादेनैकेनेति । योऽहमेकेन पादेनाकाशे, अपरेण च भूमौ, लम्बायमानः सन् सूर्यास्तं यावत् स्थातुं शक्नोमि; ततो ममायं किमप्यपकर्तुं न शक्यते । पथ्यावक्त्रं च्छन्दः ॥११॥

खलीक्रियते = ताड्यते ।

---

अथवा, यह बेचारा मेरा क्या करेगा ?
जो मैं—

"अपने एक चरण से गगन में तथा दूसरे से भूमि में लम्बायमान होकर, सूर्यास्त-पर्यन्त खड़ा रह सकता हूँ । ( मुझ जैसे अलौकिक व्यक्ति का यह फटा-पुराना कपड़ा क्या उपकार करेगा ? )" ॥ ११ ॥

माथुर—दिला ! दिला !

संवाहक—कहाँ से दूँ ? [ "माथुर" खींचता है । ]

दर्दुरक—अरे ! यह सामने क्या हो रहा है ? ( आकाश में ) आप क्या कहते हैं कि—"यह जुआरी सभिक के द्वारा पीटा जा रहा है ( परन्तु ) इसे

दर्दुरो मोचयति । ( उपसृत्य ) अन्तरमन्तरम् । ( दृष्ट्वा ) अये, कथं माथुरो धूर्तः ? । अयमपि तपस्वी संवाहकः,—

**यः स्तब्धं दिवसान्तमानतशिरा नास्ते समुल्लम्बितो,**
**यस्योद्धर्षणलोष्टकैरपि सदा पृष्ठे न जातः किणः ।**
**यस्यैतच्च न कुक्कुरैरहरहर्जङ्घान्तरं चर्व्यते,**
**तस्यात्यायतकोमलस्य सततं द्यूतप्रसङ्गेन किम् ? ॥ १२ ॥**

अन्तरमन्तरम् = अपसरत, अपसरत, अहमेतेषां मध्यपातीभूत्वा न्यायोचितं कार्यं करोमि ।

अयमतीव धूर्तशिरोमणिर्माथुरः क्व ? क्व चायं वराकः संवाहकः ? उभयोरपि महद् वैषम्यम् । द्यूतकारिणः पुरुषस्य सर्वदा क्लेशजालं सन्नद्धम् , यश्च न तथाविधक्लेशसहिष्णुस्तेनास्मिन् मार्गे पदमपि न देयमित्याशयेनाह दर्दुरक—यः स्तब्धमिति । यो मानवः सूर्यास्तं यावत् निश्चलं यथा स्यात्तथा शिरो नमयित्वा ऊर्ध्वे पादौ विधाय स्थातुं न क्षमते, यस्य भूमौ समाकर्षणतः पृष्ठभागे लोष्ठाघातात् सर्वदा पृष्ठे किणो न जातः, व्रणः शुष्को न भवति । यस्य चैतज्जङ्घान्तरम् = जङ्घान्तरभागः सर्वदा श्वभिर्न चर्व्यते = धावमानस्य पृष्ठे धावन्तः सारमेयाः ( श्वानः ) पादयोर्दन्ताघातं न कुर्वन्ति, अथवा—कुक्कुरतुल्याः सभिकादयो यस्य पादत्रोटनं ( आघातप्रत्याघातद्वारा ) न कुर्वन्ति, अत्यायतं = अतितमां कोमलस्वभावस्य तस्य जनस्य सततं द्यूतप्रसङ्गेन किं फलम् ? यः सर्वदा सर्वानपि क्लेशान् , अपमानपरम्पराञ्च सोढुं समर्थः, तस्यैव मादृशस्य द्यूतक्रीडा शोभते, न त्वेवंविधस्य संवाहकसदृ-

---

कोई छुड़ा नहीं रहा है ?" अरे ! यह "दर्दुरक" छुड़ायेगा ? ( पास जाकर ) बस ! बस ! अलग हो !

( देखकर ) क्या यह धूर्त "माथुर" है और यह बेचारा "संवाहक" ?

"जो दिन भर सिर झुकाए तथा ऊपर को पैर कर नहीं ठहर सकता, तथा घसीटे जाने पर जिसकी पीठ में ढेलों से होने वाले घावों पर 'किण' ( खुरण्ड ) नहीं होता तथा भागे जाने पर जिसकी जङ्घा कुत्तों द्वारा नहीं काटी जाती उस अतिशय कोमल व्यक्ति को जूआ खेलने से क्या प्रयोजन ?

भवतु, माथुरं तावत् सान्त्वयामि। ( उपगम्य ) माथुर ! अभिवादये।

( माथुरः प्रत्यभिवादयते )

दर्दुरकः—किमेतत् ? ।

माथुरः—अअं दशसुवण्णं धालेदि। [ अयं दशसुवर्णं धारयति। ]

दर्दुरकः—ननु कल्यवर्तमेतत्।

माथुरः—( दर्दुरस्य कक्षातलल्लुण्ठीकृतं पटमाकृष्य ) भट्टा ! पश्शत पश्शत।

---

शस्य। अनयाऽप्रस्तुतचिन्ताचर्चया संवाहकस्यासामर्थ्यं स्वस्य सर्वविधदुःखसहिष्णुत्त्वरूपं वस्तु द्योत्यते। अस्य श्लोकस्यायमेव सारः—यत् द्यूतक्रीडाकार्यं सरलस्वभावानां सज्जनानां कृते तु न युक्तम्, यः सर्वविधधूर्ततायां निष्णातः स एवात्र कुशली। अत्र काव्यलिङ्गालङ्कारः। शार्दूलविक्रीडितं च्छन्दः। तल्लक्षणं यथा—

"सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्।" इति ॥१२॥

माथुरं सान्त्वयितुमुपक्रममाणो दर्दुरको दशसुवर्णमेष संवाहको धारयति-इत्याकर्ण्य कथयति—ननु इति। ननु भो माथुर ! त्वादृशस्य भद्रपुरुषस्य कृते दशसुवर्णं हिं कल्यवर्तम् = प्रातराशसमम्। कल्ये = प्रातःकाले वर्तते; इति कल्यवर्तम् = प्रातर्भोजनं यथा स्वल्पं भवति, तथेदं तव किमित्येनं ताडयसीति भावः।

---

( आशय यह है कि—द्यूतकार्य सरल नहीं है। सरल एवं सज्जनों के लिए यह उपयुक्त नहीं। इस में तो—जो अपमान, उपेक्षा, क्लेश सब कुछ सह सकता हो उसकी ही गति है। अत एव मुझ को छोड़ कर इस वेचारे "संवाहक" को द्यूतक्रीडा से क्या लाभ है ? )।" ॥ १२ ॥

अस्तु; तव तक मैं "माथुर" को सांत्वना देता हूँ। ( समीप जाकर ) "माथुर जी" नमस्कार !

( "माथुर" नमस्कार का उत्तर देता है। )

दर्दुरक—यह क्या है ?

माथुर—इस पर मेरी दस सोने की मोहरें चाहती हैं।

दर्दुरक—अजी ! यह तो प्रातराश है। ( कोई बड़ी बात नहीं है। )

माथुर—( "दर्दुरक" की बगल से लिपटे हुए वस्त्र को खींच कर )

जज्जरपडप्पावुदो अअं पुलिसो दशसुवण्णं कल्लवत्तं भणादि । [ भर्तारः ! पश्यत पश्यत । जर्जरपटप्रावृतोऽयं पुरुषो दशसुवर्णं कल्यवर्तं भणति । ]

दर्दुरकः—अरे मूर्ख ! नन्वहं दशसुवर्णान् कटकरणेन प्रयच्छामि । तत्कि यस्यास्ति धनं स किं क्रोडे कृत्वा दर्शयति ? । अरे,

दुर्वर्णोऽसि विनष्टोऽसि दशस्वर्णस्य कारणात् ।
पञ्चेन्द्रियसमायुक्तो नरो व्यापाद्यते त्वया ॥१३॥

---

दर्दुरकस्य कक्षातो जीर्णं वस्त्रमाकृष्य—पश्यन्तु महानुभावाः ! अयं दशसुवर्णमिदानीं प्रातराशं कथयति, स्वयञ्चेदृगवस्थः, तथापि न लज्जते, इति माथुरवाक्यमाकर्ण्य भृशं कुपितो दर्दुरकः प्राह—अरे मूर्खेति । अहं दशसुवर्णं कटकरणेन = तथाविधद्यूतक्रीडनेन दातुं समर्थोऽस्मि । यस्य पार्श्वे धनं भवति, स सर्वदा स्वाङ्के निधायैव भ्रमति किमु ?

किञ्च, रे मूर्ख ! माथुर ! त्वममुं वराकं पञ्चेन्द्रिययुक्तं नरं दशसुवर्णस्य कृते मारयसि ? तवेह लज्जाऽपि नास्ति ? किञ्चिद् विचारय । स्वल्पस्य द्रव्यार्थे मनुष्यस्य खेदो नातिरुचिरः । मूढतमस्यापि दर्दुरकस्येयमुक्तिः परमरमणीया, शिक्षाप्रदा च । परमेश्वरस्य सृष्टौ धनं गृहीत्वा विचारोऽपि कर्तव्यः । क्व मानवः ? क्व च काचतुल्यं धनम् ? ॥१३॥

---

महानुभावो ! देखो ! फटे हुए वस्त्र से शरीर ढकने वाला यह पुरुष दस मुहरों को "कलेवा" बतला रहा है !

दर्दुरक—अरे मूर्ख ! मैं दस मुहरें एक दाव से देता हूँ ! जिस के पास धन होता है क्या वह उसको गोदी में रख कर (संसार को) दिखलाता फिरता है ! अरे !—

"दुर्वृत्त ! माथुरक ! तू तो नष्ट हो चुका । जो कि दस मुहरों के लिए पाँच इन्द्रियों वाले (ईश्वर की अनुपम रचना) मनुष्य को मार रहा है ।"† ॥१३॥

---

† वास्तव में "दर्दुरक" का यह कथन कितना मार्मिक एवं शिक्षाप्रद है । मानव धन के लोभ में मानव का भक्षक हो जाता है ! वह इस लोभ में उस

माथुरः—भट्टा ! तुए दशसुवण्णु कल्लवत्तु । मए एसु विहवु । [ भर्त्तः! तव दशसुवर्णः कल्यवर्तः । ममैष विभवः ।

दर्दुरकः—यद्येवम् , श्रूयतां तर्हि अन्यांस्तावद्दशसुवर्णानस्यैव प्रयच्छ । अयमपि द्यूतं शीलयतु ।

माथुरः—तत्किं भोदु ? । [ तत्किं भवतु । ]

दर्दुरकः—यदि जेष्यति तदा दास्यति ।

माथुरः—अह ण जिणादि ? । [ अथ न जयति ? । ]

दर्दुरकः—तदा न दास्यति ।

माथुरः—अह ण जुत्तं जप्पिदुं । एव्वं अक्खंतो तुमं पअच्छ धुत्तआ ! । अहं पि णाम माथुरु धुत्तु जूदं मित्था आदंसआमि । अण्णस्स वि अहं ण विभेमि । धुत्ता ! खंडिअवुत्तोसि तुमं । [ अथ न युक्तं जल्पितुम् । एवमाचक्षाणस्त्वं प्रयच्छ धूर्तक ! । अहमपि नाम माथुरो धूर्तो द्यूतं मिथ्या दर्शयामि ।

---

माथुर—भाई ! तुम्हारे लिए तो यह "कलेवा" है, परन्तु मेरे लिए तो सम्पत्ति है ।

दर्दुरक—यदि ऐसा है तो सुनो । दस सोने की मुहरें इसको और दो; यह भी जूआ खेले ।

माथुर—इस से क्या होगा ?

दर्दुरक—यदि जीत जायगा तो देगा ।

माथुर—यदि न जीता ?

दर्दुरक—तो न देगा ।

माथुर—अधिक मत बोलो ! इस प्रकार ( पक्ष लेकर बोलने वाले ) धूर्त ! तुम्हीं दे दो । मैं भी धूर्त "माथुर" हूँ ! जूआ छल से खेलता हूँ । और न

---

परमपिता की उत्कृष्ट रचना-मनुष्य को भी मार डालता है । कितनी अज्ञानता है ! यदि संसार इस कथन से कुछ समझे एवं शिक्षा ग्रहण करे तो निस्सन्देह ही इस स्वार्थी संसार में "सच्चा रामराज्य" स्थापित हो जाय ।

अन्यस्मादप्यहं न बिभेमि । धूर्त ! खण्डितवृत्तोऽसि त्वम् । ]

दर्दुरकः—अरे, कः खण्डितवृत्तः ? ।

माथुरः—तुमं हु खंडिअवुत्तो । [ त्वं खलु खण्डितवृत्तः । ]

दर्दुरकः—पिता ते खण्डितवृत्तः । ( संवाहकस्यापक्रमितुं संज्ञां ददाति )

माथुरः—गोसाविआपुत्ता ! णं एव्वं ज्जेव जूदं तुए सेविदं ? । [ वेश्यापुत्र ! नन्वेवमेव द्यूतं त्वया सेवितम् ? । ]

दर्दुरकः—मयैवं द्यूतमासेवितम् ।

माथुरः—अले संवाहआ ! पअच्छ तं दशसुवण्णं । [ अरे संवाहक ! प्रयच्छ तद्दशसुवर्णम् । ]

संवाहकः—अज्ज दइश्शं, दाव दइश्शं । [ अद्य दास्यामि, तावद्दास्यामि । ]

( माथुरः कर्षति )

दर्दुरकः—मूर्ख ! परोक्षे खलीकर्तुं शक्यते, न ममाग्रतः खलीकर्तुम् ।

---

किसी से डरता हूँ ( मैं निर्भय होकर दूसरों को ठगता हूँ, मुझे कोई और नहीं ठगता ) धूर्त तू "खण्डितवृत्त" ( बेईमान ) है ।

दर्दुरक—अरे ! कौन "खण्डितवृत्त" है ?

माथुर—अरे तू !

दर्दुरक—तेरे पिता खण्डितवृत्त हैं । ( तेरा बाप बेईमान है । )

[ "संवाहक" भागने का संकेत करता है । ]

माथुर—वेश्यापुत्र ! इसी बल पर तूने जूआ खेला है ?

दर्दुरक—( हाँ, ) हमने ऐसा ही जूआ खेला है ।

माथुर—अरे ! संवाहक ! सोने की मुहरें दे !

संवाहक—आर्य ! दूँगा । दूँगा ।

[ "माथुर" घसीटता है । ]

दर्दुरक—मूर्ख ! बाद में ही इसको कष्ट दे सकता है—मेरे सम्मुख नहीं ।

( माथुरः संवाहकमाकृष्य घोणायां मुष्टिप्रहारं ददाति, संवाहकः सशोणितं मूर्च्छां नाटयन् भूमौ पतति, दर्दुरक उपसृत्यान्तरयति; माथुरो दर्दुरकं ताडयति; दर्दुरको विप्रतीपं ताडयति )

माथुरः—अले अले दुट्ट छिण्णालिआपुत्तअ ! फलं पि पाविहसि। [ अरे अरे दुष्ट पुंश्चलीपुत्रक ! फलमपि प्राप्स्यसि । ]

दर्दुरकः—अरे मूर्ख ! अहं त्वया मार्गगत एव ताडितः। श्वो यदि राजकुले ताडयिष्यसि, तदा द्रक्ष्यसि ।

माथुरः—एसु पेक्खिस्सं । [ एष प्रेक्षिष्ये । ]

दर्दुरकः—कथं द्रक्ष्यसि ? ।

माथुरः—( प्रसार्य चक्षुषी ) एव्वं पेक्खिस्सं । [ एवं प्रेक्षिष्ये । ]

( दर्दुरको माथुरस्य पांशुना चक्षुषी पूरयित्वा संवाहकस्यापक्रमितुं संज्ञां ददाति,

---

घोणायाम् = नासिकायाम् ।

विप्रतीपम् = विपरीतं यथा स्यात्तथा, ताडयति माथुरमिति शेषः ।

पांशुना = धूलिसमूहेन ।

अपक्रमितुम् = पलायितुम् ।

---

[ "माथुर" "संवाहक" को खींच कर उसकी नाक पर मुक्का मारता है। "संवाहक" खून से लथपथ होकर मूर्च्छा का अभिनय करता हुआ भूमि पर गिर पड़ता है। "दर्दुरक" समीप आकर बीच-बचाव करता है। "माथुर" "दर्दुरक" को पीटता है। "दर्दुरक" उलटा "माथुर" को पीटता है। ]

माथुर—अरे ! दुष्ट ! वेश्यापुत्र ! इसका फल भी पावेगा !

दर्दुरक—अरे मूर्ख ! तूने मुझे आज सड़क पर ही पीटा है। यदि कल 'राजकुल' ( कचहरी ) में पीटेगा तब देखना !

माथुर—हाँ देखूंगा।

दर्दुरक—कैसे देखेगा ?

माथुर—( आँखें फाड़ कर ) ऐसे देखूँगा !

[ "दर्दुरक" "माथुर" की आँखों में धूल झोंक कर "संवाहक" को भागने

माथुरोऽक्षिणी निगृह्य भूमौ पतति, संवाहकोऽपक्रामति )

दर्दुरकः—( स्वगतम् ) प्रधानसभिको माथुरो मया विरोधितः। तन्नात्र युज्यते स्थातुम्। कथितं च मम प्रियवयस्थेन शर्विलकेन, यथा किल—आर्यकनामा गोपालदारकः सिद्धादेशेन समादिष्टो राजा भविष्यति।' इति। सर्वश्चास्मद्विधो जनस्तमनुसरति। तदहमपि तत्समीपमेव गच्छामि। ( इति निष्कान्तः )

संवाहकः—( सत्रासं परिक्रम्य, दृष्ट्वा ) एंशे कश्श वि अणपावुदपक्खदुआलके गेहे। ता एत्थ पविशिश्शं ( प्रवेशं रूपयित्वा, वसन्तसेनामालोक्य ) अज्जे! शलणागदे म्हि। [ एतत् कस्याप्यनपावृतपक्षद्वारकं गेहम्। तदत्र प्रविशामि। आर्ये! शरणागतोऽस्मि। ]

वसन्तसेना—अभअं सरणागदस्स। हञ्जे! ढक्केहि पक्खदुआरअं। [ अभयं शरणागतस्य। चेटि! पिधेहि पक्षद्वारकम्। ]

---

संज्ञां = संकेतम्।

---

का संकेत करता है। "माथुर" आँखें पकड़ कर भूमि पर गिर पड़ता है। "संवाहक" भाग जाता है। ]

दर्दुरक—( स्वगत ) मैंने प्रधान सभिक "माथुर" से विरोध कर लिया है। अतः अब यहाँ ठहरना उचित नहीं है। प्रियमित्र "शर्विलक" ने मुझसे कहा भी है कि—"आर्यक" नामक कोई गोपाल-पुत्र किन्हीं सिद्ध के कथन से राजा होगा"। मुझ जैसे सब लोग उसका अनुसरण कर रहे हैं, इसलिए मैं भी उसके पास ही जाता हूँ। [ चला जाता है। ]

संवाहक—( भयपूर्वक घूमकर तथा देखकर ) यह किसी का खुले हुए द्वार-वाला घर है। अतः मैं इसमें प्रवेश करता हूँ।

[ प्रवेश का अभिनय करके "वसन्तसेना" को देखकर ]

आर्ये! शरणागत हूँ!

वसन्तसेना—शरणागत के लिए अभय हो। सखि! पक्षद्वार को बन्द कर दो!

( चेटी तथा करोति )

वसन्तसेना—कुदो दे भअं ? । [ कुतस्ते भयम् ? । ]

संवाहकः—अज्जे ! धणिकादो । [ आर्ये ! धनिकात् । ]

वसन्तसेना—हञ्जे ! संपदं अवावुणु पक्खदुआरअं । [ चेटि ! सांप्रतमपावृणु पक्षद्वारकम् । ]

संवाहकः—( आत्मगतम् ) कधं धणिकादो तुलिदं शे भअकालणं ? । शुट्ठु खु एवं वुच्चदि,—

**जे अत्तबलं जाणिअ भालं तुलिदं, वहेइ माणुश्शे ।**
**ताहं खलणं ण जायदि ण अ कंतालफडे विवज्जदि ॥१४॥**

एत्थ लक्खिदम्हि । [ कथं धनिकात्तुलितमस्या भयकारणम् ? सुष्ठु खल्वेवमुच्यते,—

---

अपावृणु = उद्घाटय ।

वसन्तसेनागृहं प्राप्य तस्याः सामर्थ्यमविदित्त्वैव स्वमनसि प्राह संवाहकः—कधमिति । कथं अस्या वसन्तसेनाया भयकारणं धनिकात् = धनवतः पुरुषस्य सकाशात्तुलितम् = तुल्यमस्ति ? अर्थात् यथाऽहं धनिकात् = माथुराद्बिभेमि, किमु तथैवेयमपि बिभेति न वा ? अथवा धनिकान्मे भयमिति वसन्तसेनया तुलितम् = आकलितम् , ज्ञातमित्यर्थः । अत एवेयं द्वारोद्घाटनार्थमाज्ञप्तवती स्वसेविकाम् । अतो मया शङ्का न कार्या । इति भावः ।

---

[ चेटी द्वार बन्द कर देती है । ]

वसन्तसेना—तुमको किससे भय है ?

संवाहक—आर्ये ! धनिक से ।

वसन्तसेना—हला ! द्वार खोल दो ।

संवाहक—क्या इसके भय का कारण धनिक के समान है ( अर्थात्—जैसें मैं "माथुर" से भयभीत हूँ क्या यह भी है या नहीं ? ) ( अथवा— ) क्या धनिक से मेरा भय "वसन्तसेना" ने जान लिया है । ( जिससे इसने चेटी को द्वारोद्घाटन की आज्ञा दी है । अतः मुझको शङ्का नहीं करनी चाहिए । ) यह ठीक ही कहा है—

य आत्मबलं ज्ञात्वा भारं तुलितं वहति मनुष्यः ।
तस्य स्खलनं न जायते न च कान्तारगतो विपद्यते ॥

अत्र लक्षितोऽस्मि । ]

माथुरः--( अक्षिणी प्रमृज्य, द्यूतकरं प्रति ) अले, देहि देहि । [ अरे, देहि देहि । ]

द्यूतकरः--भट्टा ! जावदेव अम्हे दद्दुरेण कलहायिदा तावदेव सो गोहो अवक्कंतो । [ भर्तः ! यावदेव वयं दर्दुरेण कलहायितास्तावदेव स पुरुषो-

---

अत एवेदमुचितं कथयन्ति विज्ञाः—जे अत्तबलमिति । ये आत्मनः =स्वस्य बलाबलं=सामर्थ्यमसामर्थ्यं वा, ज्ञात्वा मानवो भारं तोलयति, स भयंकरेऽपि मार्गे गच्छन् न स्खलति, न वा वनान्तःप्रविष्टोऽपि विपद्ग्रस्तो भवति । अत्र चाहमेव लक्षितोऽस्मि=लक्ष्यभूतोऽस्मि । मम भयस्य कारणमियं ज्ञातवती किंमु ? अयं धनिकः कियद्धनं मत्तो गृहीष्यतीति कदाचिदनया न विचारितं भवेत् तदा तु ममेवास्या अपि दशा भविष्यति । तथा मया स्वबलमविज्ञाय सर्वस्वं द्यूते हारितम्, इदानीञ्च कष्टमनुभवामि । कदाचिदियमपि तथा न भवेत् ?
अत्राप्रस्तुतप्रशंसाऽलङ्कारः । आर्या च्छन्दः ॥१४॥

---

"जो मनुष्य अपने सामर्थ्यानुसार भार—वहन करता है वह कभी विचलित नहीं होता और ( भयङ्कर से भयङ्कर ) वन में जाने पर भी नष्ट नहीं होता ।

( क्या "वसन्तसेना" ने मेरे भय का कारण जान लिया है ? परन्तु सम्भवतः इसने यह नहीं विचारा कि धनिक मुझसे कितना धन लेगा ? यदि ऐसा है तो निश्चय ही "वसन्तसेना" की दशा मुझ जैसी ही होगी । जैसे मैं अपने बल को, न देखकर जूएँ में सब कुछ हार बैठा हूँ कहीं इसकी दशा भी वैसी ही न हो जाय ? )" ॥१४॥

मैं ही यहाँ लक्ष्य हूँ ।

माथुर—( आँखें पोंछकर, द्यूतकर से ) अरे ! दे ! दे !

द्यूतकर—स्वामिन् ! जब हम "दर्दुरक" के साथ कलह कर रहे थे तभी वह पुरुष भाग गया ।

पक्रान्तः । ]

माथुरः—तस्स जूदकलस्स मुट्ठिप्पहालेण णासिका भग्गा आसि। ता एहि, रुहिरपहं अणुसरेम्ह । [ तस्य द्यूतकरस्य मुष्टिप्रहारेण नासिका भग्नासीत् । तदेहि, रुधिरपथमनुसरावः । ]

( अनुसृत्य )

द्यूतकरः—भट्टा ! वसंतसेणागेहं पविट्ठो सो । [ भर्तः ! वसन्तसेनागृहं प्रविष्टः सः । ]

माथुरः—भूदाइं सुवण्णाइं । [ भूतानि सुवर्णानि । ]

द्यूतकरः—लाअउलं गदुअ णिवेदेम्ह । [ राजकुलं गत्वा निवेदयावः । ]

माथुरः—एसो धुत्तो अदो णिक्कमिअ अण्णत्त गमिस्सदि । ता उअरोधेणेव्व गेण्हेम्ह । [ एष धूर्तोऽतो निष्क्रम्यान्यत्र गमिष्यति । तदुपरोधेनैव गृह्णीवः । ]

---

वसन्तसेनाया गेहं प्रविष्टः संवाहक इति निशम्य माथुर आह—भूतानीति । सुवर्णानि भूतानि = गतानि, अधुना नैव लप्स्यन्ते । को नाम वसन्तसेनागृहं प्रविष्टस्य तस्यानुधावनं कर्तुं समर्थः ? अन्यस्य कस्यचिद्गृहे प्रविष्टस्तु कदाचिल्लभ्येतापि । अतो न सुवर्णलाभसम्भावना । अथवा—शरणागतवत्सला वसन्तसेनेति कृत्वा सुवर्णानि सिद्धानि, अवश्यं सैव दास्यति । अत्रैव स्थित्योपरोधः क्रियताम् , कदाचिदितो निर्गत्य क्वचिद्गच्छेत् , इति भावः ।

---

माथुर—उस जुआरी की ( मेरे ) मुक्के के प्रहार से नासिका में चोट आ गई थी । इसलिए आओ ! रुधिरधारा का अनुसरण करते हुए चलें ।

( अनुसरण कर )

द्यूतकर—स्वामिन् ! वह तो "वसन्तसेना" के घर में घुस गया है ।

माथुर—तो अब मुहरें मिल गईं ! ( अर्थात्—अब तो मुहरें गईं ) ( अथवा—"वसन्तसेना" शरणागतवत्सला होने से कदाचित् बहुत सी मुहरें मिल जायँ । ) ।

द्यूतकर—तो राजकुल ( कोतवाली ) में चलकर कह दें ।

माथुर—यह धूर्त यहाँ से निकलकर अन्यत्र चला जायगा । अतः यहीं रहकर उसको पकड़ेंगे ।

( वसन्तसेना मदनिकायाः संज्ञां ददाति )

मदनिका—कुदो अज्जो ? को वा अज्जो ? कस्स वा अज्जो ? । किं वा वित्तिं अज्जो उवजीअदि ? कुदो वा भअं ? । [ कुत आर्यः ? को वार्यः ? कस्य वार्यः ? कां वा वृत्तिमार्य उपजीवति ? कुतो वा भयम् ? । ]

संवाहकः—शुणादु अज्जआ । अज्जए ! पाडलिउत्ते मे जम्मभूमी । गहवइदालके हग्गे । संवाहअश्श वित्तिं उवजीआमि । [ शृणोत्वार्या । आर्ये ! पाटलिपुत्रं मे जन्मभूमिः । गृहपतिदारकोऽहम् । संवाहकस्य वृत्तिमुपजीवामि । ]

वसन्तसेना—सुउमारा खु कला सिक्खिदा अज्जेण । [ सुकुमारा खलु कला शिक्षितार्येण । ]

संवाहकः—अज्जए ! कलेत्ति शिक्खिदा, आजीविआ दाणिं संवुत्ता ।

---

वसन्तसेनया प्रतिबोधितया मदनिकया नामादिके पृष्टे सति, अहं गृहपति-पुत्रः ( ग्रामाध्यक्ष-पुत्रः ) पाटलीपुत्र-नगर-वासी, शरीरमर्दकस्य वृत्तिमुपजीवामीति श्रुत्वा वसन्तसेना सोपहासमाह—सुकुमारेति । इयं सुकुमारा = कोमला कला = अङ्गमर्दनात्मिका शिक्षिता आर्येण भवता ? कस्यचिन्महापुरुषस्य सुपुत्रेण काचिदन्या वृत्तिः किमिति नोपार्ज्यते ? इयमेव कला तुभ्यं कथं रुचितेति भावः । अत्र "परिहासवचो नर्म" इति प्रतिमुखसन्ध्यङ्गं नर्मास्तीति ज्ञेयम् ।

आर्ये ! इति । संवाहको ब्रूते—मया वृत्तिलोभेनेयं कला न शिक्षिता, अपि

---

( "वसन्तसेना" "मदनिका" को सङ्केत करती है । )

मदनिका—आप कहाँ से आए हैं ? कौन हैं ? किसके ( सुपुत्र आदि ) हैं ? कौन सा व्यवसाय करते हैं और ( आपको ) किससे भय है ?

संवाहक—सुनिये ! आर्ये ! मेरी जन्मभूमि "पाटलिपुत्र है । मैं एक समृद्ध घराने का लड़का हूँ । और ( अब ) "संवाहक" ( हाथ-पैर दबाने वाला ) की वृत्ति करता हूँ ।

वसन्तसेना—आपने बड़ी ही कोमल कला सीखी है ।

संवाहक—आर्ये ! ( पहिले ) 'कला' समझकर सीखी थी परन्तु अब तो

९

[ आर्ये ! कलेति शिक्षिता, आजीविकेदानीं संवृत्ता । ]

चेटी—अदिणिव्विण्णं अज्जेण पडिवअणं दिण्णं । तदो तदो ? ।
[ अतिनिर्विण्णमार्येण प्रतिवचनं दत्तम् । ततस्ततः ? ।

संवाहकः—तदो अज्जए ! एशे णिजगेहे आहिंडकाणं मुहादो शुणिअ अपुव्वदेशदंशणकुदूहलेण इह आगदे । इह वि मए पविशिअ उज्जइणिं एक्के अज्जे शुश्शूशिदे । जे तालिशे पिअदंशणे पिअवादी, दइअ ण कित्तेदि, अवकिदं विशुमलेदि । किं बहुणा पलंतेण । दक्खिणदाए पलकेलअं विअ अत्ताणअं अवगच्छदि, शलणागअवच्छले अ । [ तत आर्ये ! एष निजगृह आहिण्डकानां मुखाच्छ्रुत्वाऽपूर्वदेशदर्शनकुतूहलेनेहागतः । इहापि मया प्रविश्योज्जयिनीमेक आर्यः शुश्रूषितः । यस्तादृशः प्रियदर्शनः प्रियवादी, दत्त्वा

---

तु "कला" इति बुध्या मयेयं शिक्षिता । ततश्च नाहं साधारणोऽङ्गमर्दकः, कलाविदस्मि । भाग्यदोषात्तु साम्प्रतं वृत्तिरियं मम जाता ! अत्र "तत्त्वार्थकथनं मार्गः" इति गर्भसन्वेरङ्गं प्रकाशितम् ।

दुःखपरिपूर्णमिव वचनं निशम्य चेटी कथयति—अदिणिविण्णमिति । आर्येणातिखेदयुक्तं वचनं प्रतिपादितम्, मन्ये, कश्चिन्महान् खेदोऽत्र सञ्जातः, इति भावः ।

आहिण्डकानामिति । = देशाटनं कुर्वतां जनानां मुखात् अस्या उज्जयिन्याः प्रशंसां श्रुत्वाऽत्रागत्य कश्चिन्महानुभावो मया सेवितः, योऽप्रियस्यापि प्रियः, गुणज्ञः, धनमर्थिने दत्त्वा न कीर्तयति, अपकारं विस्मरति, परमदक्षिणः-सदैवात्मानं परकीयमेव मन्यते, शरणागतं रक्षतीत्येवमादिगुण-गणसुशोभितः, इति सकलस्य प्रवट्टकस्य भावः ।

---

यह 'आजीविका' ही बन गई ।

चेटी—आपने बहुत ही उदास होकर उत्तर दिया है । तदनन्तर ?

संवाहक—आर्यें ! तदनन्तर पथिकों के मुख से वर्णन सुनकर, नये स्थान को देखने की इच्छा से यहाँ आया । इस "उज्जयिनी" में मैंने एक महानुभाव की सेवा की जो बड़े ही दर्शनीय, मधुरभाषी किसी को कुछ देकर उसका कीर्तन

न कीर्तयति, अपकृतं विस्मरति । किं बहुना प्रलपितेन । दक्षिणतया परकीयमिवात्मानमवगच्छति, शरणागतवत्सलश्च ।

चेटी—को दाणिं अज्जआए मणोरहाहुत्तस्स गुणाइं चोरिअ उज्जइणिं अलंकरेदि ? । [ क इदानीमार्याया मनोरथाभिमुखस्य गुणांश्चोरयित्वोज्जयिनीमलंकरोति ? । ]

वसन्तसेना—साहु हञ्जे ! साहु; मए वि एव्वं ज्जेव्व हिअएण मंतिदं । [ साधु चेटि ! साधु । मयाप्येवमेव हृदयेन मन्त्रितम् । ]

चेटी—अज्ज ! तदो तदो ? । [ आर्य ! ततस्ततः ? । ]

संवाहक—अज्जए ! शे दाणिं अणुक्कोशकिदेहिं पदाणेहिं...। [ आर्ये ! स इदानीमनुक्रोशकृतैः प्रदानैः... । ]

वसन्तसेना—किं उवरदविहवो संवुत्तो ? । [ किमुपरतविभवः संवृत्तः ? । ]

---

अत्यर्थं गुणप्रशंसया मुग्धेव सती चेटी पृच्छति—कोऽयमपरः आर्याया मनोरथान्तरस्यार्यचारुदत्तस्य गुणान् चोरयित्वाऽत्रोज्जयिन्यां निवसति ? अस्माभिस्तु ततोऽन्यः कोऽप्येवंविधो नाकर्णितः ।

तस्यावस्थां वर्णयन्नाह संवाहकः—अज्जए-इति । आर्ये ! सोऽधुना अनुक्रोशकृतैः = दयया कृतैः सम्प्रदानैः = दीनजनेभ्यो दत्तैः ( धनैरिति शेषः ) ।

---

न करनेवाले तथा अपने प्रति किए गये अपकार को भुलाने वाले हैं । अधिक कहने से क्या लाभ ? अत्यन्त कुशल होने के कारण वे पराई वस्तु को भी अपना ही समझते हैं तथा शरणागतवत्सल हैं ।

चेटी—ऐसा कौन है जो इस समय आर्या ( "वसन्तसेना" ) के प्रिय ( "चारुदत्त" ) के गुणों का अपहरण कर "उज्जयिनी" को अलङ्कृत कर रहा है ?

वसन्तसेना—साधु ! सखि ! साधु ! मैंने भी मनमें ऐसा ही सोचा था ।

चेटी—आर्य ! तदनन्तर ?

संवाहक—आर्ये ! "वह अब दयापूर्वक धन के दान करने से—"

वसन्तसेना—क्या निर्धन हो गये ?

संवाहकः—अणाचक्खिदे ज्जेव्व कधं अज्जआए विण्णादं ? । [ अनाख्यातमेव कथमार्यया विज्ञातम् ? । ]

वसन्तसेना—किं एत्थ जाणीअदि ? । दुल्लहा गुणा विहवा अ । अपेएसु तडाएसु बहुदरं उदअं भोदि । [ किमत्र ज्ञातव्यम् ? । दुर्लभा गुणा विभवाश्च । अपेयेषु तडागेषु बहुतरमुदकं भवति ।]

चेटी—अज्ज ! क्किंणामधेओ खु सो ? । [ आर्य ! किंनामधेयः खलु सः ? । ]

संवाहकः—अज्जे ! के दाणिं तश्श भूदलमिअंकश्श णामं ण जाणादि । शो खु शेट्ठिचत्तले पडिवशदि । शलाहणिज्जणामधेए अज्जचालुदत्ते णाम । [ आर्ये ! क इदानीं तस्य भूतलमृगाङ्कस्य नाम न जानाति । स खलु श्रेष्ठि-

---

( इत्यर्धोक्ते एव ) वसन्तसेना पृच्छति—किं उपरदेति । किमुपरतविभवः = नष्टधनः, संवृत्तः = संजातः ? अनाख्यातम् = अकथितमपि भवत्या कथमिदं ज्ञातमिति संवाहक-प्रश्नं समाधत्ते वसन्तसेना—किं एत्थेति । आर्य ! अत्र किं ज्ञातव्यम् ? गुणाः विभवाः = धनानि चैकत्र दुर्लभाः । प्रायेण गुणिनो निर्धना भवन्ति । अपेयेषु = पातुमयोग्येषु तडागेषु बहुतरम् = अत्यधिकं जलं भवति । यत्र कोऽपि प्राणी जलं न पिबति, तत्रैव जलाधिक्यं भवति, एवमेव येषु गुणाः सन्ति, तेषां सविधे धनस्याभाव एव प्रायेण दृश्यते, इति भावः ।

पुनश्चेटी तस्य पुरुषविशेषस्य नाम पृच्छति—किं णामधेओ—इति । किं नामधेयम् = नाम यस्य सः, तस्य किं नामास्ति ?

संवाहकस्तस्य प्रसिद्धत्वमाख्याति—अज्जे के इति । भूतले चन्द्रतुल्यस्य

---

संवाहक—विना कहे ही आपने कैसे जान लिया ?

वसन्तसेना—इसमें जानना ही क्या है ? “गुण और धन का एकत्र संयोग दुर्लभ होता है ।” ( प्रायः गुणी निर्धन हुआ करते हैं । ) जिनका जल पीने योग्य नहीं होता ऐसे ही तालाबों में पानी अधिक भरा रहता है ।

चेटी—आर्य ! उनका क्या शुभनाम है ?

संवाहक—आर्ये ! आज कौन उन पृथ्वी के चन्द्रमा का नाम नहीं

चत्वरे प्रतिवसति । श्लाघनीयनामधेय आर्यचारुदत्तो नाम । ]

वसन्तसेना--( सहर्षमासनादवतीर्य ) अज्जस्स अत्तणकेरकं एदं गेहं ? । हञ्जे ! देहि से आसणं । तालवेंटअं गेण्ह ! परिस्समो अज्जस्स बाधेदि । [ आर्यस्यात्मीयमेतद्गेहम् । चेटि ! देह्यस्यासनम् । तालवृन्तकं गृहाण । परिश्रम आर्यस्य बाधते । ]

( चेटी तथा करोति )

संवाहकः--( स्वगतम् ) कधं अज्जचालुदत्तस्स णामशंकित्तणेण ईदिशे मे आदले । शाहु अज्जचारुदत्तो ! शाहु, पुह्वीए तुमं एक्के जीवशि; शेषे उण जणे शशदि । ( इति पादयोर्निपत्य ) भोदु अज्जए ! भोदु; आशणे णिशीददु अज्जआ । [ कथमार्यचारुदत्तस्य नामसंकीर्तनेनेदृशो म आदरः ! । साधु आर्यचारुदत्त ! साधु, पृथिव्यां त्वमेको जीवसि । शेषः पुनर्जनः

---

नाम सर्वजनविदितमस्ति । श्रेष्ठिचत्त्वरे निवसति । श्लाघ्यनामा तत्रभवान् "चारुदत्तः" इति ।

नामश्रवणमात्रेणैव भृशं प्रसन्ना वसन्तसेना स्वासनं परित्यज्य सविनयमाह— अज्जस्सेति । आर्यस्य भवतः आत्मीयमेवेदं गृहम्, ततो यथा सुखमास्यताम् । मदनिके ! तालवृन्तम् = व्यजनमानय । आर्यस्य परिश्रमो बाधां करोत्यङ्गानामिति भावः ।

---

जानता ? वह सेठों के चबूतरे पर रहते हैं । उनका प्यारा सा नाम है "आर्य चारुदत्त" ।

वसन्तसेना—( सहर्ष आसन से उतरकर ) आर्य ! यह तो आपका अपना ही घर है । हला ! इनको आसन दे ! और पङ्खा लेकर झल । आर्य को परिश्रम पीड़ित कर रहा है ।

[ "चेटी" वैसा ही करती है । ]

संवाहक—( स्वयं ही ) क्या "आर्य चारुदत्त" के नाम लेने से ही मेरा इतना आदर है ? धन्य ! चारुदत्त ! धन्य ! इस अखिल भूतल पर एकमात्र तुम्हीं जीवित हो ; शेष ( आपसे अतिरिक्त ) जन तो केवल श्वास ही लेते हैं ( आपका ही जीवन जीवन है । ) ( पैरों पर गिरकर ) बहुत हो चुका आर्ये !

श्वसिति । भवत्वार्ये ! भवतु; आसने निषीदत्वार्या । ]

वसन्तसेना—( आसने समुपविश्य ) अज्ज ! कुदो सो धणिओ ? । [ आर्य ! कुतः स धनिकः ? । ]

संवाहकः—

**शक्कालधणे खु शज्जणे काह ण होइ चलाचले धणे ।**
**जे पूइदुं पि ण जाणादि शे पूआविशेशं पि जाणादि ॥१५॥**

[ सत्कारधनः खलु सज्जनः कस्य न भवति चलाचलं धनम् ।
यः पूजयितुमपि न जानाति स पूजाविशेषमपि जानाति ॥ ]

---

पृथिव्यामेकस्त्वमेवार्यचारुदत्त ! जीवसि, अन्यो जनस्तु केवलं श्वसित्येवेति संवाहकमुखादाकर्ण्य पुनस्तस्य गुणाधिक्यं जिज्ञासते वसन्तसेना—अज्ज, कुदो-इति । आर्य ! स एव धनिकः कुतः = कस्मात् कारणात् पृथिव्यां विशेषरूपेण जीवति ?

संवाहको वसन्तसेनायाः समाधानं कर्तुं तस्य गुणानां प्रशंसां करोति—शक्काल-धणे-इति । सज्जनानां धनं परेषां सत्काराय भवति, न तु ते स्वोपभोगार्थमेव धनं रक्षयन्ति । धनं तु सर्वदा अस्थायि भवति, यः परेषां पूजामपि न जानाति, स पूजाविशेषं जानातीति कथं मन्तव्यम् ? सन्ति लोके बहवो धनिकाः, ये कस्यापि सत्कारमपि साधारणं न कुर्वन्ति, विशेषपूजायास्तु कथैव का ? तस्मात् स एव जीवतीति मयोक्तं न मृषेति भावः । अत्राप्रस्तुतप्रशंसालङ्कारः । वैतालीयं छन्दः । तल्लक्षणं यथा—

---

बहुत हो चुका ! अब आप आसन पर विराजिये ।

वसन्तसेना—( आसन पर बैठकर ) आर्य ! वही धनिक क्यों ? ( "चारुदत्त" ही पृथ्वी पर विशेष रूप से क्यों जीवित हैं ? ) ।

संवाहक—"सज्जन पुरुष का धन सत्कार के लिए होता है । धन तो सदा अस्थायी होता है । जो ( साधारण ) पूजा भी नहीं जानता वह विशेष पूजा जानता है ( यह बात कैसे प्रत्येय है ? ) ( आशय यह है कि—सज्जनों का धन

वसन्तसेना—तदो तदो ? । [ ततस्ततः ? ।

संवाहकः—तदो तेण अज्जेण शवित्ती पलिचालके किदो म्हि । चालित्तावशेशे अ तस्सिं जूदोवजीवी म्हि शंवुत्ते । तदो भाअधेअविशमदाए दशशुवण्णअं जूदे हालिदं । [ ततस्तेनार्येण सवृत्तिः परिचारकः कृतोऽस्मि । चारित्र्यावशेषे च तस्मिन् द्यूतोपजीव्यस्मि संवृत्तः । ततो भागधेयविषमतया दशसुवर्णं द्यूते हारितम् । ]

माथुरः—उच्छादिदो म्हि, मुसिदो म्हि । [ उत्सादितोऽस्मि, मुषितोऽस्मि । ]

---

"षड्विषमेऽष्टौ समे कलाः, षट् च समे स्युर्नो निरन्तराः ।
न समोऽत्र पराश्रिता कला, वैतालीयेऽन्ते रलौ गुरुः ॥" इति ॥१५॥

पुनः स्ववृत्तान्तं श्रावयति—तदो-इति । ततस्तेन सवृत्तिः = सवेतनः परिचारकः = सेवकः कृतोऽस्मि । दैवदुर्विपाकाच्चारित्र्यवाशेषे = चारित्र्यमेवावशिष्टं तस्य, धनं विनष्टमिति यावत् । तस्मिन् महापुरुषेऽहं द्यूतसेवी जातः, दशसुवर्णात्मकं द्रव्यञ्च द्यूतेऽपहारितवानस्मि । इति मम कथाभागस्य प्रथमोऽध्यायः समाप्तिं गतः ।

माथुरः सवेदनं ब्रूते—उच्छादिदो म्हि-इति । हा हन्त ! अनेन संवाहकेनोत्सादितोऽस्मि = विनाशितोऽहम् । मुषितः = चोरितः, वञ्चितोऽस्मीति यावत् । मदीयं धनमदत्त्वैवात्र गेहे प्रविष्टः, किं कुर्याम् ?

---

परोपकार के लिए होता है—अपने लिए नहीं । संसार में अनेक धनी हैं, वे पूजा-विशेष तो दूर की बात है, किसी की साधारण पूजा भी नहीं करते । परन्तु "चारुदत्त" करते हैं । अतः वे ही विशेषरूपेण जीवित हैं ।" ) ॥१५॥

वसन्तसेना—तत्पश्चात् ?

संवाहक—उसके बाद उन्होंने मुझे वैतनिक परिचारक बना लिया । ( कुछ समय के अनन्तर ) केवल उनका चरित्रमात्र ही रह जाने पर ( निर्धन हो जाने पर ) मैं 'जुआरी' हो गया । तदनन्तर भाग्य की कुटिलता से मैंने आज दस सोने की मुहरें जूए में हरा दी ।

माथुर—लुट गया ! ठगा गया !

संवाहकः—एदे दे शहिअजूदिअला मं अणुशंधअंति। शंपदं शुणिअ अज्जआ पमाणं। [ एतौ तौ समिकद्यूतकरौ मामनुसन्धत्तः। सांप्रतं श्रुत्वार्या प्रमाणम्।]

वसन्तसेना—मदणिए! वासपादवविसंठुलदाए पक्खिणो इदो तदो वि आहिंडंति। हञ्जे! ता गच्छ। एदाणं सहिअजूदिअराणं, अअं अज्जो ज्जेव पडिवादेत्ति, इमं हत्थाभरणअं तुमं देहि। [ मदनिके! वासपादपविसंष्ठुलतया पक्षिण इतस्ततोऽप्याहिण्डन्ते। चेटि! तद्गच्छ। एतयोः सभिकद्यूतकरयोः, अयमार्य एव प्रतिपादयतीति, इदं हस्ताभरणं त्वं देहि।] ( इति हस्तात् कटकमाकृष्य चेट्याः प्रयच्छति )

चेटी—( गृहीत्वा ) जं अज्जआ आणवेदि। [ यदार्याज्ञापयति।]

( इति निष्कान्ता )

---

एतौ मामनुसन्धत्तः, अतः परतरमार्या प्रमाणमिति संवाहकवार्तां निशम्य वसन्तसेना मदनिकामाह—मदणिए—इति। वासपादपस्य = निवासवृक्षस्य, विसंष्ठुलतया = अस्तव्यस्ततया, निवासाभावात् पक्षिणः इतस्ततोऽपि आहिण्डन्ते = भ्रमन्ति। इत्यप्रस्तुतप्रशंसामाश्रित्य वदति वसन्तसेना—"आर्यचारुदत्तस्य वैभवाभावादयं महानुभावो भाग्यवैपरीत्यादितस्ततो भ्रमणं करोति, न चास्य सम्भावनापि कुतोऽपि देयधनागमस्य, इति त्वं गच्छ—अयमार्य एवार्पयतीति समभिधाय कटकमिदमर्पयाम्यामिति कटकमर्पयति।

---

संवाहक—ये ( वे दोनों ) 'सभिक' और 'द्यूतकर' मुझको खोज रहे हैं। यह सब कुछ सुनकर आप ही प्रमाण हैं।

वसन्तसेना—मदनिके! निवास-योग्य पादप के अस्त-व्यस्त हो जाने पर ( आश्रयरहित ) पक्षी इधर उधर घूमते हैं। हञ्जे! इसलिए जा! इन 'सभिक' और 'द्यूतकर' को "यह ( कटक ) आर्य ( "संवाहक" ) ही दे रहे हैं" इस प्रकार कहकर इस हाथ के आभूषण को तू दे आ।

[ हाथ से कड़ा उतारकर चेटी को दे देती है। ]

चेटी—( लेकर ) जो आज्ञा! [ चली जाती है। ]

माथुरः—उच्छादिदो म्हि, मुसिदो म्हि । [ उत्सादितोऽस्मि, मुषितोऽस्मि ।]

चेटी—जधा एदे उद्धं पेक्खंति, दीहं णीससंति, विसूरअंति अहिलहंति अ दुआरणिहिदलोअणा, तधा तक्केमि, एदे दे सहिअजूदिअरा हुविस्संति । ( उपगम्य ) अज्ज ! वंदामि । [ यथैतावूर्ध्वं प्रेक्षेते, दीर्घं निश्वसतः विचारयत अभिलपतश्च द्वारनिहितलोचनौ, तथा तर्कयामि, एतौ तौ सभिकद्यूतकरौ भविष्यतः । आर्य ! वन्दे । ]

माथुरः—सुहं तुए होदु । [ सुखं तव भवतु । ]

चेटी—अज्ज ! कदमो तुम्हाणं सहिओ ? [ आर्य ! कतरो युवयोः सभिकः ? । ]

माथुरः—

**कस्स तुहं तणुमज्झे ! अहरेण रददट्ठदुव्विणीदेण ।**
**जम्पसि मणोहलवअणं आलोअंती कडक्खेण ॥१६॥**

णत्थि मम विह्वो, अण्णत्त व्वज ।

[ कस्य त्वं तनुमध्ये ! अधरेण रतदष्टदुर्विनीतेन ।

---

कतरो युवयोः सभिकः ? इत्याकर्ण्य सभिको वदति—**कस्सेति** । हे

---

माथुर—लुट गया ! ठगा गया !

चेटी—जैसे ये दोनों ऊपर को देखते, लम्बी आहें भरते तथा खिड़की की ओर आँख लगाए हुए, बोल तथा देख रहे हैं उससे मैं अनुमान लगाती हूँ कि ये वेही 'सभिक' और 'द्यूतकर' होंगे । ( समीप पहुँचकर ) आर्य ! नमस्कार करती हूँ ।

माथुर—तुम्हें सुख हो !

चेटी—आर्य ! आपमें 'सभिक' कौन से हैं ?

माथुर—"कृशोदरि ! कटाक्ष से देखती हुई, सम्भोगकाल में कटे हुए दुर्विनीत अधर से तू किसके लिए मनोहर वाक्य बोल रही है ?

जल्पसि मनोहरवचनमालोकयन्ती कटाक्षेण ? ॥
नास्ति मम विभवः, अन्यत्र व्रज । ]

चेटी—जइ ईदिसाइं णं मंतेसि, ता ण होसि जूदिअरो। अत्थि को वि तुम्हाणं धारओ ? । [ यदीदृशानि ननु मन्त्रयसि, तदा न भवसि द्यूतकरः । अस्ति कोऽपि युष्माकं धारकः ? । ]

माथुरः—अत्थि, दशसुवण्णं धालेदि । किं तस्स ? । [ अस्ति, दशसुवर्णं धारयति । किं तस्य ? । ]

चेटी—तस्स कारणादो अज्जआ इमं हत्थाभरणं पडिवादेदि । णहि णहि, सो ज्जेव पडिवादेदि । [ तस्य कारणादार्येदं हस्ताभरणं प्रतिपादयति । नहि नहि, स एव प्रतिपादयति । ]

---

तनुमध्ये ! = कृशोदरि ! कटाक्षेण = तिर्यगवेक्षणेन, आलोकयन्ती सती, सुरतदष्टेनात एव अविनीतेन अधरेण त्वं कस्य मनोहरवचनं जल्पसि ? अथवा—एवंभूता सती त्वं कस्य ( प्रिया ) असि ? मां धानक-बुद्ध्याऽनुरञ्जयसि ? अन्यं कमपि भज, मम पार्श्वे विभवो नास्ति ॥ १६ ॥

एतदाकर्ण्य चेटी प्राह—जइ-इति । यदीदृशानि वचनानि कथयसि ? तर्हि त्वं नासि सभिकः । सभिका हि कदापि वेश्यानां सम्मुखे स्वस्य निर्धनत्वं नैव प्रकाशयन्ति, प्रत्युतेतस्ततः समानीतेन धनेन तारमयन्ति, त्वञ्चैवं ब्रवीषीति न सभिक इति भावः । अथ च वदतम्—"अस्ति कोऽपि युष्माकं धनधारकः ?"

---

मेरे पास धन नहीं है । कहीं और जा ! ( किसी और को देख ! )" ॥ १६ ॥

चेटी—यदि तुम ऐसी बातें करते हो तो जुआरी नहीं हो ( क्योंकि जुआरी वेश्याओं के सामने ऐसी दुर्बल बातें नहीं करते । )

क्या कोई आपके धन का धारक है ?

माथुर—है । दस मुहरें चाहती हैं । उसका क्या ?

चेटी—उसके लिए आर्या ( "वसन्तसेना" ) इस हस्ताभरण को देती हैं । नहीं, नहीं, वही देता है ।

माथुरः—( सहर्षं गृहीत्वा ) अले, भणेशि तं कुलपुत्तं—'भूदं तुए गंधु । आअच्छ, पुणो जूदं रमह्' । [ अरे, भणसि तं कुलपुत्रम्—'भूतस्तव गण्डः । आगच्छ, पुनर्द्यूतं रमस्व' । ] ( इति निष्क्रान्तौ )

चेटी—( वसन्तसेनामुपसृत्य ) अज्जए ! पडितुट्ठा गदा सहिअजूदिअरा । [ आर्ये ! परितुष्टौ गतौ सभिकद्यूतकरौ । ]

वसन्तसेना—ता गच्छदु अज्ज बंधुअणो समस्ससदु । [ तद्गच्छतु, अद्य बन्धुजनः समाश्वसितु । ]

संवाहकः—अज्जए ! जइ एव्वं ता इअं कला पलिअणहत्थगदा कलीअदु । [ आर्ये ! यद्येवं तदियं कला परिजनहस्तगता क्रियताम् । ]

वसन्तसेना—अज्ज ! जस्स कारणादो इअं कला सिक्खीअदि, सो ज्जेव अज्जेण सुस्सूसिदपुव्वो सुस्सूसिदव्वो । आर्य ! यस्य कारणादियं कला शिक्ष्यते, स एवार्येण शुश्रूषितपूर्वः शुश्रूषितव्यः । ]

---

इदानीं गम्यतामिति वसन्तसेनावचनं श्रुत्वा संवाहकः कथयति—अज्जए, जइ एव्वमिति । आर्ये ! यद्येवं मया गन्तव्यमेव, तर्हि एषा मदीयाऽङ्गसम्मर्दनकला स्वसेविकाया हस्तगता क्रियतां भवत्येति ।

---

माथुर—( सहर्ष लेकर ) उस उच्च कुल के पुत्र से कहो कि—"तेरा "गण्ड" ( शर्त ) हो चुका । आ ! पुनः जूआ खेलें ।"

[ चले जाते हैं । ]

चेटी—( वसन्तसेना के पास जाकर ) आर्ये ! 'सभिक' और 'द्यूतकर' सन्तुष्ट होकर गये ।

वसन्तसेना—तो अब आप भी जाइए । अपने बन्धुओं को सांत्वना दीजिए ।

संवाहक—आर्ये ! यदि ऐसा ही है तो मेरी यह ( अङ्ग दबाने की ) कला अपनी परिजन की हस्तगता करा लें ( "मदनिका" को इस कला में पारङ्गत बना लें । )

वसन्तसेना—आर्य ! जिनके लिए आपने यह कला सीखी है सेवितपूर्व उन्हीं महानुभाव की सेवा करिये ।

संवाहकः—( स्वगतम् ) अज्जआए णिउअं पच्चादिट्टो म्हि । कधं पच्चु-वकलिश्शं । ( प्रकाशम् ) अज्जए ! अहं एदिणा जूदिअलावमाणेण शक्कशमणके हुविश्शं । ता शंवाहके जूदिअले शक्कशमणके शंवुत्तेति शुमलिदव्वा अज्जआए एदे अक्खलु । [ आर्यया निपुणं प्रत्यादिष्टोऽस्मि । कथं प्रत्युपकरिष्ये ? । आर्ये ! अहमेतेन द्यूतकरापमानेन शाक्यश्रमणको भविष्यामि । तत्संवाहको द्यूतकरः शाक्यश्रमणकः संवृत्त इति स्मर्तव्यान्यार्ययैतान्यक्षराणि ।

वसन्तसेना—अज्ज ! अलं साहसेण । [ आर्य ! अलं साहसेन । ]

संवाहकः—अज्जए ! कले णिच्चए, ( इति परिक्रम्य )

**जूदेण तं कदं मे जं वीहत्थं जणश्श शव्वश्श ।**

---

अत्रायं संवाहकस्य भावः—एवंकृते लाभद्वयं स्यात्, एकस्तु—कतिचिद्दिनानि यावदत्र निवासं कृत्वा कालक्षेपं करिष्यामि, द्वितीयश्च—भवत्याः प्रत्युपकारोऽपि मया कृतो भवेत् इति ।

यस्य कृते कलेयं शिक्ष्यते त्वया, स एवार्यः पुनरपि सेवनीयः, यश्च पूर्व सेवितः, इति विदित्त्वा आर्यया निपुणं यथा स्यात्तथा प्रत्यादिष्टः = निराकृतः । "प्रत्यादेशो निराकृतिः" इति कोषः, अस्मि ।

कथं प्रत्युपकारं विधास्यामीति मनसा विचिन्त्य प्रकाशमाह—अहं एदिणा—इति । आर्ये ! अहमेतेनापमानेन बौद्धसंन्यासी भविष्यामि । भवत्यापि एतान्यक्षराणि स्मर्तव्यानि—यदहं शाक्यः = बौद्धसंन्यासी संवृत्तः, इति ।

---

संवाहक—( स्वगत ) आर्या ने बड़ी निपुणतापूर्वक मेरा निराकरण कर दिया है । कैसे प्रत्युपकार करूँगा ?

( प्रकाश में ) आर्ये ! अब मैं इस द्यूतकर के अपमान के कारण बौद्ध-सन्यासी हो जाऊँगा । इसलिए—"जुआरी "संवाहक" बौद्धसंन्यासी हो गया है" इन अक्षरों को आप स्मरण रखना ।"

वसन्तसेना—इतना साहस मत करिये ।

संवाहक—आर्ये ! मैंने निश्चय कर लिया है ।

**एण्हिं पाअडशीशे णलिन्दमग्गेण विहलिश्शं ॥१७॥**

[ आर्ये ! कृतो निश्चयः,

द्यूतेन तत्कृतं मम यद्विहस्तं जनस्य सर्वस्य ।
इदानीं प्रकटशीर्षो नरेन्द्रमार्गेण विहरिष्यामि ॥ ]

( नेपथ्ये कलकलः )

संवाहकः—( आकर्ण्य ) अले, किं ण्णेदं ? । ( आकाशे ) किं भणाध — **'एशे खु वशंतशेणआए खुंटमोडके णाम दुट्टहत्थी विअलेदि' त्ति ? । अहो, अज्जआए गंधगअं पेक्खिश्शं गदुअ । अहवा किं मम एदिणा ? । जधाववशिदं अणुचिट्ठिश्शं ।** [ अरे, किं न्विदम् ? । किं भणत—'एष खलु वसन्तसेनायाः खुण्टमोडको नाम दुष्टहस्ती विचरति' इति ? । अहो आर्याया गन्धगजं प्रेक्षिष्ये गत्वा । अथवा किं ममैतेन ? । यथाव्यवसितमनुष्ठास्यामि । ]

( इति निष्क्रान्ता )

---

"आर्ये ! साहसं मा कुरु," इति श्रुत्वा कथयति संवाहकः—जूदेण—इति । द्यूतसन्तापसन्तप्तस्य ममायं दृढो निश्चयः सञ्जातः । यतोऽनेन द्यूतव्यसनेन मम विहस्तता = ( "विहस्तव्याकुलौ समौ" इत्यमरः ) सर्वेषां समक्षे व्याकुलता सम्पादिता, अपमानश्च कृतम्, इदानीमहं भवत्या अनुकम्पया दशसुवर्णनिर्यातनात् संन्यासी सन् राजमार्गे शिरः प्रकटीकृत्य विहरिष्यामि, निर्भयः सम्भ्रमिष्यामीति भावः । आर्या च्छन्दः ॥ १७ ॥

---

"इस जूए ने मुझे सबके सामने व्याकुल बना डाला । अब मैं ( सन्यासी होने पर ) राजमार्ग पर सिर उठाकर ( निर्भय होकर ) चलूँगा ।" ॥१७॥

[ नेपथ्य में कोलाहल होता है । ]

संवाहक—( सुनकर ) अरे ! यह क्या है ? ( आकाश में ) क्या कहते हो कि—"यह "वसन्तसेना" का "खुण्टमोडक" नामक हाथी घूम रहा है ?" ओह ! आर्या ( "वसन्तसेना" ) के मदवाले हाथी को अब जाकर देखूँगा । अथवा, मुझे इससे क्या प्रयोजन ? मैं तो निर्णीत कार्य ही करता हूँ ( सन्यासी होता हूँ । ) [ चला जाता है । ]

( ततः प्रविशत्यपटीक्षेपेण प्रहृष्टो विकटोज्ज्वलवेषः कर्णपूरकः )

कर्णपूरकः—कहिं कहिं अज्जआ ?। [ कुत्र कुत्रार्या ?। ]

चेटी—दुम्मणुस्स ! किं ते उव्वेअकालणं, जं अग्गदो वट्ठिदं अज्जअं ण पेक्खसि। [ दुर्मनुष्य ! किं त उद्वेगकारणम् ! यदग्रतोऽवस्थितामार्यां न प्रेक्षसे। ]

कर्णपूरकः—( दृष्ट्वा ) अज्जए ! वंदामि। [ आर्ये ! वन्दे। ]

वसन्तसेना—कण्णऊरअ ! परितुट्ठमुहो लक्खीअसि। ता किं ण्णेदं ?। [ कर्णपूरक ! परितुष्टमुखो लक्ष्यसे तत्किं न्विदम् ?। ]

कर्णपूरकः—( सविस्मयम् ) अज्जए। वंचिदासि, जाए अज्ज कण्णऊरअस्स परक्कमो ण दिट्ठो। [ आर्ये ! वञ्चितासि, ययाद्य कर्णपूरकस्य पराक्रमो न दृष्टः ]

वसन्तसेना—कण्णऊरअ ! किं किं ?। [ कर्णपूरक ! किं किम् ?। ]

कर्णपूरकः—सुणादु अज्जआ जो सो अज्जआए खुंटमोडओ णाम दुट्टहत्थी, सो आलाणत्थंभं भंजिअ महमेत्थं वावादिअ महंतं संखोहं

---

[ तदनन्तर बिना पर्दा उठाए हुए प्रसन्न एवं बहुत ही उज्ज्वल वेष में "कर्णपूरक" प्रवेश करता है। ]

कर्णपूरक—आर्या, कहा हैं ? कहा हैं ?

चेटी—दुर्मनुष्य ! तेरे उद्वेग का क्या कारण है जो सम्मुखस्थित "आर्या" को भी नहीं देख रहा है ?

कर्णपूरक—( देखकर ) आर्ये ! प्रणाम करता हूँ !

वसन्तसेना—"कर्णपूरक !" बड़े प्रसन्नमुख दिखलाई पड़ते हो ? क्या कारण है ?

कर्णपूरक—( आश्चर्य सहित ) आर्ये ! यदि आपने आज "कर्णपूरक" का पराक्रम नहीं देखा तो वञ्चित हो गईं।

वसन्तसेना—क्या बात है ? क्या बात है ?

कर्णपूरक—सुनिये ! यह जो आपका "खुण्टमोडक" नामक दुष्ट हाथी है,

करंतो राअमग्गं ओदिण्णो। तदो एत्थंतरे उग्घुट्टं जणेण—

अवणेध बालअजणं तुरिदं आरुहध वुक्खपासादं।
किं ण हु पेक्खध पुरदो दुट्ठो हत्थी इदो एदि ॥१८॥

अवि अ,—

विचलइ णेउरजुअलं छिज्जंति अ मेहला मणिक्खइआ।
वलआ अ सुंदरदरा रअणंकुरजालपडिबद्धा ॥१९॥

तदो तेण दुट्टहत्थिणा कलचरणरदणेहिं फुल्लणलिणिं विअ णअरिं उज्जइणिं अवगाहमाणेण समासादिदो परिव्वाजओ। तच्च परिब्भट्टदंडकुंडिआभाअणं सीअरेहिं सिंचिअ दंतंतरे क्खित्तं पेक्खिअ पुणो वि उग्घुट्टं जणेण— 'हा परिव्वाजओ वावादीअदि'त्ति।

[ शृणोत्वार्या। यः स आर्यायाः खुण्टमोडको नाम दुष्टहस्ती स आलानस्तम्भं भङ्क्त्वा महामात्रं व्यापाद्य महान्तं संक्षोभं कुर्वन् राजमार्गमवतीर्णः। ततोऽत्रान्तरे उद्घुष्टं जनेन—

'अपनयत बालकजनं त्वरितमारोहत वृक्षप्रासादम्।
किं न खलु प्रेक्षध्वं पुरतो दुष्टो हस्तीत एति॥

---

दुष्टहस्तिना आलानस्तम्भं भङ्क्त्वा हस्तिपकं हत्वा राजमार्गे समागतेन सर्वाऽपि नगरी व्याकुलीकृता, तद्भयाच्च लोकैरुद्घुष्टम्—अवणेध—इति। बालकान् शीघ्रं मार्गात् दूर नयत, वृक्षाणां प्रासादानाञ्चोपरिभागे समारोहणं कुरुत, किन्न पश्यन्ति भवन्तः—सम्मुखे दुष्टो गजः समायातीति ॥ १८ ॥

दुष्टगजभीतेः किं किं भवतीति निर्दिशति—विचलइ—इति। गजभयाद्

---

वह अपना बन्धन-स्तम्भ तोड़ तथा महावत को मारकर भयङ्कर क्षोभ करता हुआ राजमार्ग पर उतर गया। तब इसी बीच में लोगों ने घोषणा की—

"बालकों को हटाओ! शीघ्र ही घरों एवं वृक्षों पर चढ़ जाओ। क्या नहीं देखते हो कि दुष्ट हाथी सामने से इधर ही आ रहा है!" ॥ १८ ॥

और भी—

"( हाथी के भय से भागती हुई रमणियों के चरणों से ) नूपुर छिन्न-भिन्न

अपि च,—

विचलति नूपुरयुगलं छिद्यन्ते च मेखला मणिखचिताः ।
वलयाश्च सुन्दरतरा रत्नाङ्कुरजालप्रतिबद्धाः ॥

ततस्तेन दुष्टहस्तिना करचरणरदनैः फुल्लनलिनीमिव नगरीमुज्जयिनीमवगाहमानेन समासादितः परिव्राजकः । तं च परिभ्रष्टदण्डकुण्डिकाभाजनं शीकरैः सिक्त्वा दन्तान्तरे क्षिप्तं प्रेक्ष्य पुनरप्युद्घुष्टं जनेन—'हा, परिव्राजको व्यापाद्यते' इति । ]

रथ्यासु त्वरितगतीनां ललनानां नुपुर-युगलं पादात् ( जातित्त्वादेकवचनम् ) पादेभ्य इत्यर्थः । विचलति । स्खलितगतितया स्वस्थानान्नूपुराणि विचलितानि जातानि, मणिखचिता = मणिजटिता नारीणां मेखला छिद्यन्ते = विच्छिन्ना भवन्ति, रत्नानामङ्कुरजालैः प्रतिबद्धाः सुन्दरतराः = मनोहरा वलयाश्च छिद्यन्ते, इत्यर्थः, सर्वा अपि नार्यो भयचकिता धावन्ति, तासामङ्गेभ्योऽलङ्कारा निपतन्ति ।

अथवा—धनिनां गजा अश्वाश्च विविधैरलङ्कारैः सुसज्जिता भवन्ति । ततश्च धावतो गजस्याङ्गेभ्य एव नूपुरयुगलं विचलति, मेखला अपि छिन्नभिन्ना भवन्ति, रत्नजटिता रमणीया वलयाश्चापि ( गजस्यैव ) छिद्यन्ते, इति भावः ।

वस्तुतस्तु पूर्व एवार्थो युक्ततरः प्रतिभाति । शेषं सहृदयहृदयप्रमाणकमिति ॥ १९ ॥

---

हो रहे हैं, मणिजटित काञ्ची ( तगड़ी ) तथा रत्नों के अङ्कुरों से जड़े हुए सुन्दर कटक भी भग्न हो रहे हैं ।"

( अथवा )—

"हाथी के पैरों में ( शोभा के लिए बाँधे गये ) नूपुर ( उसके भागने से ) भग्न हो रहे हैं तथा मेखला एवं वलय भी ( उसी की मस्ती के कारण ) टूट-फूट रहे हैं ।" ॥ १६ ॥

तदनन्तर उस दुष्ट हाथी ने सूँड़, पैरों और दातों से विकसित कमलवाले तालाब की भाँति "उज्जयिनी" को बिलोते ( रौंदते ) हुए ( एक ) सन्यासी को पकड़ लिया । उसके दण्ड-कमण्डलु को तोड़कर जल-बिन्दुओं से मुख को भिगोकर उसको ( हाथी के ) दाँतों के बीच में देख, पुनरपि नागरिकों ने चिल्लाना प्रारम्भ किया—"हा ! सन्यासी मारा जा रहा है !"

वसन्तसेना—( ससंभ्रमम् ) अहो पमादो, अहो पमादो । [ अहो प्रमादः, अहो प्रमादः । ]

कर्णपूरकः—अलं संभमेण; सुणादु दाव अज्जआ। तदो विच्छिण्ण-विसंठुलसिंखलाकलावअं उव्वहंतं दंतंतरपरिग्गहिदं परिव्वाजअं उव्वहंतं तं पेक्खिअ कण्णऊरएण मए, णहि णहि, अज्जआए अण्णपिंडउट्ठेण दासेण, वामचलणेण जूदलेक्खअं उग्घुसिअ उग्घुसिअ तुरिदं आवणादो लोहदंडं गेण्हिअ आआरिदो सो दुट्ठहत्थी । [ अलं संभ्रमेण; शृणोतु तावदार्या । ततो विच्छिन्नविसंष्ठुलशृङ्खलाकलापमुद्वहन्तं दन्तान्तरपरिगृहीतं परिव्राजकमुद्वहन्तं तं प्रेक्ष्य कर्णपूरकेण मया—नहि नहि, आर्याया अन्नपिण्डपुष्टेन दासेन, वामचरणेन द्यूतलेखकं उद्धुष्योद्धुष्य त्वरितमापणाल्लोहदण्डं गृहीत्वाकारितः स दुष्टहस्ती । ]

वसन्तसेना—तदो तदो ? । [ ततस्तः ? । ]

कर्णपूरकः—

---

अलमिति । ततः सर्वामपि नगरीमवगाहमानेन गजेन नलिनीं = कमलिनीमिव परिव्राजको गृहीतः । तस्य हस्ताच्च तदीयौ दण्ड-कमण्डलू च निपतितौ । मया च भूयो भूयः हन्त ! द्यूतकारी, परिव्राजकः सञ्जातः, स एवानेन गजेन निगृहीतः, इत्याघोषणां विधाय, आपणाल्लौहदण्डमादाय भवत्या अन्नपरिपुष्टेन मया स दुष्टगजस्ताडितः । इति सर्वस्याशयः ।

---

वसन्तसेना—( घबराहट के साथ ) ओह ! प्रमाद ! ( अतिशय ) प्रमाद !

कर्णपूरक—घबराइये नहीं; सुनिये । तब टूटी-फूटी एवं अस्त-व्यस्त जञ्जीरों को धारण करते तथा दाँतों के बीच में सन्यासी को उठाते हुए उसको ( हाथी को ) देखकर मैं "कर्णपूरक" ने नहीं, नहीं, आपके अन्न से परिपुष्ट शरीरवाले इस दास ने बाएँ चरण से द्यूत लेखक को लात से मार-मारकर शीघ्र ही बाजार में से एक लोहे का डण्डा लेकर उस दुष्ट हाथी को ललकारा ।

वसन्तसेना—तदनन्तर ?

आहणिऊण सरोसं तं हत्थि विञ्झसैलसिहराभं।
मोआविओ मए सो दंतंतरसंठिओ परिव्वाजओ ॥२०॥
[ आहत्य सरोषं तं हस्तिनं विन्ध्यशैलशिखराभम्।
मोचितो मया स दन्तान्तरसंस्थितः परिव्राजकः । ]

वसन्तसेना--सुट्ठु दे किदं; तदो तदो ? । [ सुष्ठु त्वया कृतम्; ततस्ततः ? । ]

कर्णपूरकः--तदो अज्जए ! 'साहु रे कण्णऊरअ ! साहु' त्ति एत्तिअमेत्तं भणंती, विसमभरक्कंता विअ णावा, एक्कदो पल्हत्था सअला उज्जइणी आसि । तदो अज्जए ! एक्केण सुण्णाइं आहरणट्ठाणाइं परामुसिअ उद्धं पेक्खिअ दीहं णीससिअ अअं पावारओ मम उवरि क्खित्तो । [ तत आर्ये ! 'साधु रे कर्णपूरक ! साधु' इत्येतावन्मात्रं भणन्ती, विषमभराक्रान्ता इव नौः एकतः पर्यस्ता सकलोज्जयिन्यासीत् । तत आर्ये ! एकेन शून्यान्याभरणस्थानानि परामृश्य ऊर्ध्वं प्रेक्ष्य दीर्घं निःश्वस्यायं प्रावारको ममोपरि क्षिप्तः । ]

---

आहणिऊण--इति । ततो मया स दुष्टहस्ती समाघातितः, मोचितश्च परिव्राजकः, गजोऽपि स विन्ध्यपर्वताकार आसीत् ॥ २० ॥

तदो अज्जए ! इति । ततः साधु--साध्विति व्याहृत्य सर्वापि नगरी भराक्रान्ता नौकेव एकत्रैव भागे समागता । एकेन च सज्जनेनाभरणस्थानं शून्यमालोक्य

---

कर्णपूरक--"तब मैंने विन्ध्याचल के समान ( विशालकाय ) तथा अत्यन्त क्रोधी उस हाथी पर आक्रमण करके दाँतों के बीच में पड़े हुए उस सन्यासी को छुड़ा दिया।" ॥ २० ॥

वसन्तसेना--तुमने बहुत अच्छा किया ! उसके बाद ?

कर्णपूरक--आर्ये ! तब तो "वाह ! "कर्णपूरक" ! वाह !" एकमात्र केवल यही कहती हुई, विषम-भारवाली ( एक ही ओर अधिक बोझ हो जाने वाली ) नौका के समान सम्पूर्ण "उज्जयिनी एक ओर ही एकत्रित हो गई। तदनन्तर आर्ये ! एक मनुष्य ने आभूषण पहिनने के अङ्गों को शून्य देखकर, आकाश की ओर देख तथा लम्बा श्वास खींचकर, मेरे ऊपर यह दुपट्टा फेंक दिया।

वसन्तसेना—कण्णऊरअ ! जाणीहि दाव किं एसो जादीकुसुमवासिदो पावारओ ण वेत्ति । [ कर्णपूरक ! जानीहि तावत्किमेष जातीकुसुमवासितः प्रावारको न वेति । ]

कर्णपूरकः—अज्जए ! मदगंधेण सुट्ठु तं गंधं ण जाणामि । [ आर्ये ! मदगन्धेन सुष्ठु तं गन्धं न जानामि । ]

वसन्तसेना—णामं पि दाव पेक्ख । [ नामापि तावत्प्रेक्षस्व । ]

कर्णपूरकः—इमं णामं, अज्जआ एव्व वाएदु । [ इदं नाम, आर्यैव वाचयतु । ] ( इति प्रावारकमुपनयति )

वसन्तसेना—अज्जचारुदत्तस्स । [ आर्यचारुदत्तस्य । ] ( इति वाचयित्वा सस्पृहं गृहीत्वा प्रावृणोति )

चेटी—कण्णऊरअ ! सोहदि अज्जआए पावारओ । [ कर्णपूरक ! शोभत आर्यायाः प्रावारकः । ]

कर्णपूरकः—आं, सोहदि अज्जआए पावारओ । [ आं, शोभत आर्यायाः प्रावारकः । ]

---

स्वकीयमुत्तरीयमेव ममोपरि निक्षिप्तमिति ।

---

वसन्तसेना—"कर्णपूरक !" देखो तो कि क्या यह दुपट्टा चमेली के सुमनों से सुवासित है या नहीं ?

कर्णपूरक—( हाथी के ) मद का गन्ध अधिक होने के कारण मैं इस गन्ध को भली भाँति नहीं जान पा रहा हूँ ।

वसन्तसेना—तो नाम आदि कुछ देखो !

कर्णपूरक—यह नाम आप ही बाँचे ।

[ दुपट्टा दे देता है । ]

वसन्तसेना—"आर्यचारुदत्त का"—( इतना पढ़कर वस्त्र को सस्पृह लेकर ओढ़ लेती है । )

चेटी—"कर्णपूरक !" 'आर्या' को दुपट्टा अच्छा लगता है ?

कर्णपूरक—हाँ, 'आर्या' को बहुत अच्छा लगता है ।

वसन्तसेना—कण्णऊरअ ! इदं दे पारितोसिअं। [ कर्णपूरक ! इदं ते पारितोषिकम् । ] ( इत्याभरणं प्रयच्छति )

कर्णपूरकः—( शिरसा गृहीत्वा प्रणम्य च ) संपदं सुट्ठु सोहदि अज्जआए पावारओ । [ सांप्रतं सुष्ठु शोभत आर्यायाः प्रावारकः । ]

वसन्तसेना—कण्णऊरअ ! एदाए वेलाए कहिं अज्जचारुदत्तो ?। [ कर्णपूरक ! एतस्यां वेलायां कुत्रार्यचारुदत्तः ? । ]

कर्णपूरकः—एदेण ज्जेव मग्गेण पवुत्तो गेहं । [ एतेनैव मार्गेण प्रवृत्तो गेहम् । ]

वसन्तसेना—हञ्जे ! उवरिदणं अलिंदअं आरुहिअ अज्जचारुदत्तं पेक्खेम्ह । [ चेटि ! उपरितनमलिन्दकमारुह्यार्यचारुदत्तं पश्यामः । ]

( इति निष्क्रान्ताः सर्वे )

## इति द्यूतकरसंवाहको नाम द्वितीयोऽङ्कः ।

---

उपरितनमलिन्दम् = गृहभागम् आरुह्यार्यचारुदत्त पश्यावः, इत्युक्त्वा वसन्तसेना निष्क्रान्ता । अन्ये चापीति शिवम् ।

इति मृच्छकटिके "श्रीप्रियम्वदाख्य-टीकायां द्वितीयोऽङ्कः समाप्तः ।

---

वसन्तसेना—"कर्णपूरक !" यह तुम्हारा पारितोषिक है ।

[ आभूषण देती है । ]

कर्णपूरक—( शिर से लेकर तथा प्रणामकर ) अब "प्रावारक" आपको बहुत अच्छा लगता है ।

वसन्तसेना—"कर्णपूरक !" इस समय "आर्य चारुदत्त" कहाँ हैं ?

कर्णपूरक—इसी मार्ग से घर लौटे जा रहे हैं ।

वसन्तसेना—हला ! ऊपर वाली अटारी ( मञ्जिल ) पर चढ़कर "आर्य चारुदत्त" को देखें ! [ सब चले जाते हैं । ]

"प्रियम्वदा" टीकालङ्कृत "मृच्छकटिक" का "द्यूतकरसंवाहक" नामक

❀ द्वितीय अङ्क समाप्त ❀

## तृतीयोऽङ्कः

( ततः प्रविशति चेटः )

चेटः—

सुअणे खु भिच्चाणुकंपके शामिए णिद्धणके वि शोहदि ।
पिशुणे उण दव्वगव्विदे दुक्कले क्खु पलिणामदालुणे ॥१॥

अवि अ,—

शश्शपलक्कवलद्दे ण शक्कि वालिदुं,
अण्णपशत्तकलत्त ण शक्कि वालिदुं ।
जूदपशत्तमणुश्शे ण शक्कि वालिदुं,
जे वि शहाविअदोशे ण शक्कि वालिदुं ॥२॥

का वि वेला अज्जचारुदत्तश्श गंधव्वं शुणिदुं गदश्श । अदिक्कमदि अद्धलअणी । अज्ज वि ण आअच्छदि । ता जाव बाहिलदुआलशालाए गदुअ शुविश्शं ।

[ सुजनः खलु भृत्यानुकम्पकः स्वामी निर्धनकोऽपि शोभते ।
पिशुनः पुनर्द्रव्यगर्वितो दुष्करः खलु परिणामदारुणः ॥

---

चेटः स्वकीयस्वामिनश्चारुदत्तस्य धनाभावेऽपि सद्व्यवहारेणातितमां भृत्यानुकम्पित्वादिना नितान्तं सन्तुष्टः सन्नाह—सुजनः—इति । यः स्वामी सर्वदा स्वभृत्येष्वनुकम्पां करोति, स यदि निर्धनकोऽपि भवेत्तदापि शोभाशाली भवति, यथा ममायं स्वामी तत्रार्यचारुदत्तः । परन्तु यः पिशुनः = खलः, द्रव्यगर्वितः परिणामे दारुणः स दुष्करः खलु, भृत्यवत्सल एव प्रशंसनीयो भवति, न पुनर्दुष्टप्रकृतिः । यथा "शकारः" इत्यप्यर्थो व्यञ्जनया द्योत्यते ।

---

[ तदनन्तर "चेट" प्रवेश करता है । ]

चेट—"भृत्यों पर दया रखनेवाला स्वामी निर्धन होने पर भी सुशोभित होता है । परन्तु जो दुष्ट ( स्वामी ) धन के मद में चूर रहता है वह परिणाम में बड़ा भयङ्कर होता है ।" ॥ १ ॥

अपि च,—

सस्यलम्पटबलीवर्दो न शक्यो वारयितु-
मन्यप्रसक्तकलत्रं न शक्यं वारयितुम् ।
द्यूतप्रसक्तमनुष्यो न शक्यो वारयितुं,
योऽपि स्वाभाविकदोषो न शक्यो वारयितुम् ॥

---

अत्राप्रस्तुतात् सामान्यात् प्रभोर्विशेषो मम स्वामी चारुदत्तः धनविरहितोऽपि शोभते, इति विशेषः प्रस्तुत इत्यप्रस्तुतप्रशंसालङ्कारः । तल्लक्षणञ्च यथा—

"क्वचिद्विशेषः सामान्यात्, सामान्यं वा विशेषतः ।
कार्यान्निमित्तं कार्यञ्च हेतोरथ समात्समम् ॥
अप्रस्तुतात् प्रस्तुतश्चेद्गम्यते पञ्चधा ततः ।
अप्रस्तुतप्रशंसा स्यात् ॥" इति ।

वैतालीयं छन्दः । तल्लक्षणं यथा—

"षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः ।
न समाऽत्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥" इति ॥ १ ॥

यद्यपि आर्यचारुदत्तो निर्धनस्तथापि संगीतादिकलास्वद्यापि प्रीत्यतिशयं दानेऽभिरुचिञ्च धत्ते, इत्यहमनुचितं मन्ये, इति चेटः कथयति—शस्यलम्पट— इति । परकीयक्षेत्रे शस्यभक्षणे निरतो बलीवर्दः, अन्यकान्तासक्तः पुरुषः, परपुरुषासक्ता स्त्री च, द्यूतक्रीडारतः, स्वाभाविको दोषश्चेति सर्वेऽपि वारयितुं न शक्यन्ते । "स्वभावो दुरतिक्रमः" इत्युक्तेः । अत्राप्रस्तुतप्रशंसा–दृष्टान्तालङ्कारयोः संसृष्टिः । दृष्टान्तालङ्कारलक्षणञ्च यथा—

"दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम् ।" इति ।

चतुर्दशाक्षरा शकरी जातिश्छन्दसः ॥ २ ॥

---

और भी—

"धान के खेत को खाने में प्रसक्त बैल, दूसरे की स्त्री में आसक्त मनुष्य तथा द्यूत में अनुरक्त व्यक्ति का निवारण नहीं किया जा सकता और जिसका जो स्वाभाविक दोष होता है वह भी नहीं छुड़ाया जा सकता ।" ॥ २ ॥

कापि वेलायं चारुदत्तस्य गान्धर्वं श्रोतुं गतस्य । अतिक्रामत्यर्धरजनी । अद्यापि नागच्छति । तद्यावद्बहिर्द्वारशालायां गत्वा स्वप्स्यामि । ]

( इति तथा करोति )

( ततः प्रविशति चारुदत्तो विदूषकश्च )

चारुदत्तः—अहो अहो ! साधु साधु, रेभिलेन गीतम् । वीणा हि नामासमुद्रोत्थितं रत्नम् । कुतः,—

उत्कण्ठितस्य हृदयानुगुणा वयस्या,
संकेतके चिरयति प्रवरो विनोदः ।
संस्थापना प्रियतमा विरहातुराणां,

---

संगीतं श्रुत्वा प्रत्यावर्तन-समये रेभिलस्य (गायकस्य) प्रशंसामुखेन वीणां प्रशंसति चारुदत्तः—उत्कण्ठितस्येति । अत्र वीणा हि नाम समुद्रोत्पत्तिरहितं रत्नमेवास्ति । तानि प्रसिद्धानि चतुर्दशरत्नानि समुद्रादुत्पन्नानि, वीणा च नेति केवलं भिन्नत्वम् । वीणाहि—उत्कण्ठितस्य जनस्य चेतोऽनुरञ्जिका सर्वथा आनुकूल्यं भजमाना वयस्येयमस्ति, सखी यथा चित्तं प्रसादयति, तथैव वीणापि सोत्कण्ठस्यानुरञ्जिकेति भावः । संकेतके = संकेतदायिनि प्रणयिजने चिरयति = विलम्बं कुर्वाणे, प्रवरः = श्रेष्ठो विनोदः । एकान्ते समुपविश्य यावन्नायाति प्रियजनस्तावद्वीणावादने

---

"आर्य चारुदत्त" को गाना सुनने के लिए गये हुए कितनी देर हो गई ? आधी रात बीत रही है; अब भी नहीं आये । इसलिए तब तक मैं बाहर की द्वारशाला ( ड्योढ़ी ) में जाकर सोता हूँ ।

[ वैसा ही करता है । ]

[ तदनन्तर "चारुदत्त" और "विदूषक" का प्रवेश होता है । ]

चारुदत्त—ओह ! "रेभिल" ने बहुत अच्छा गाया । 'वीणा बिना समुद्र से निकला हुआ ( अलौकिक ) रत्न है ।" क्योंकि—

"( वीणा ) उत्कंठित मनुष्य के हृदय के लिए वयस्या है, संकेत देने वाले ( प्रेमी के ) विलम्ब करने पर श्रेष्ठ विनोद है, विरहातुरों के लिए प्रिय आश्वासन

रक्तस्य रागपरिवृद्धिकरः प्रमोदः ॥३॥

विदूषकः—भो, एहि । गेहं गच्छेम्ह । [ भोः, एहि । गृहं गच्छावः । ]

चारुदत्तः—अहो, सुष्ठु भावरेभिलेन गीतम् ।

विदूषकः—मम दाव दुवेहिं ज्जेव्व हस्सं जाअदि । इत्थिआए सक्कअं पठंतीए, मणुस्सेण अ काअलीं गाअंतेण । इत्थिआ दाव सक्कअं पठंती, दिण्णणवणस्सा विअ गिट्टी, अहिअं सुसुआअदि । मणुस्सो वि काअलीं गाअंतो, सुक्खसुमणोदामवेट्टिदो वुड्ढपुरोहिदो विअ मंतं जवंतो, दिढं मे ण रोअदि । [ मम तावद्‌द्वाभ्यामेव हास्यं जायते । स्त्रिया संस्कृतं पठन्त्या,

---

नैव विनोदः कर्तुं शक्यते । विरहेण हेतुना आतुराणाम् = विरह व्यथा-विधुरितानां विरहपरितप्तानामिति यावत्, प्रियतमा = प्रेयसी संस्थापना = आश्वासयित्री । रक्तस्य = अनुरागिणश्च जनस्य कृते तु रागस्य = प्रीतेः परिवृद्धिकरः = संवर्धकः प्रमोदः = विनोदः । यथा यथा वीणेयं सेव्यते, तथा तथा मनसो विनोदनोपाय-भूतेत्याशयः सौभाग्यशालिनामेव हस्ते शोभते, वीणेति तत्त्वम् । अत एव मेघं प्रति यक्षो वदति मेघदूते--

"उत्संगे वा मलिनवसने सौम्य निक्षिप्य वीणां,
मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा ।
तन्त्रीमार्द्रां नयनसलिलैः सारयित्वा कथंचित्,
भूयोभूयः स्वयमपि कृतां मूर्च्छनां विस्मरन्ती ॥"

कुतो नु यावत् कथयामः ? प्रायेणोत्कृष्टैः कविभिः स्वीयकाव्येषु वीणावादन-प्रसंगोऽवतारितः । नारदस्य सरस्वत्याश्च वीणाप्रीतिस्तु सर्वजनप्रसिद्धेति शम् ।

अत्रैकस्यां वीणायां बहूनामारोपान्मालारूपकालङ्कारः । वसन्ततिलका च्छन्दः ॥३॥

ममेत्यादि । विदूषकः कथयति—काकली = अस्फुटो मधुरध्वनिः ।

---

देने तथा अनुरक्त जन के लिए प्रीतिवर्धक प्रमोद वितरित करनेवाली है ।" ॥३॥

विदूषक—अजी ! आओ ! घर चलें !

चारुदत्त—ओह ! "रेभिल" ने बहुत अच्छा गाया ।

विदूषक—मुझे तो संस्कृत पढ़ती हुई स्त्री तथा काकली से गाते हुए मनुष्य—

मनुष्येण च काकलीं गायता । स्त्री तावत् संस्कृतं पठन्ती, दत्तनवनस्येव गृष्टिः, अधिकं सूसूशब्दं करोति । मनुष्योऽपि काकलीं गायन्, शुष्कसुमनोदामवेष्टितो वृद्धपुरोहित इव मन्त्रं जपन्, दृढं मे न रोचते । ]

चारुदत्तः—वयस्य ! सुष्ठु खल्वद्य गीतं भावरेभिलेन । न च भवान् परितुष्टः ।

**रक्तं च नाम मधुरं च समं स्फुटं च,**
**भावान्वितं च ललितं च मनोहरं च ।**

नवनस्यप्रदानेनाधिकं सूत्कारं कुर्वन्ती नव-प्रसूता गौरिव संस्कृतं पठन्ती स्त्री मह्यं न रोचते । काकलीं गायन् मनुष्यश्च शुष्कैर्निर्गन्धैः कुसुममाल्यैः परिवेष्टितः वृद्धः पुरोहितो यथा दीर्घकालं यावन्मन्त्रान् पठति, तथैवासौ गायकोऽपि मह्यं न रोचते ।

विदूषकस्य विरक्तिमयं वचनं निशम्य रेभिलस्य गीतेनात्यधिकः सन्तुष्टश्चारुदत्तः पुनस्तस्य गीतप्रशंसां करोति—रक्तञ्चेति । वयस्य ! भावरेभिलेनाऽद्याऽतिमनोहरं गीतं गीतम्, तथापि तत्र सन्तोषो नाऽभवदित्याश्चर्यम् । वस्तुतस्तस्य गीतं रक्तम्= अनुरागवर्धकम्, माधुर्योपेतम्, समता राजितम्, क्वचिदपि विषमता नासीदित्यर्थः स्फुटम्=पदानि सुस्फुटान्यासन् पदानामुच्चारणे मनागप्यस्वच्छता नासीदित्यर्थः । भावेन=रत्यादिभावेन सहितम्, ललितं मनोहरञ्चासीत् । अथवा मम प्रशंसा-

---

इन दोनों पर ही हँसी आती है । संस्कृत पढ़ती हुई स्त्री, नई ब्याने वाली गाय के समान, अत्यधिक "सू-सू" शब्द करती है और काकली से गाता हुआ मनुष्य भी, सूखे हुए फूलों की माला पहिनने वाले वृद्ध पुरोहित की भाँति मन्त्र जपता हुआ, मुझको बिल्कुल अच्छा नहीं लगता ।

चारुदत्त—मित्र ! आज तो "रेभिल" ने बहुत ही सुन्दर गाया ! परन्तु ( इतने पर भी ) आप सन्तुष्ट नहीं हुए ।

"( वह गीत ) अनुरागवर्धक, मधुर, समतायुक्त, स्पष्ट, रत्यादि भावों से युक्त तथा अत्यन्त मनोहर था । अथवा मेरे प्रशंसा करने से क्या लाभ ? मैं

किंवा प्रशस्तवचनैर्बहुभिर्मदुक्तै-,
रन्तर्हिता यदि भवेद्वनितेति मन्ये ॥४॥

अपि च,—

तं तस्य स्वरसंक्रमं मृदुगिरः श्लिष्टं च तन्त्रीस्वनं,
वर्णानामपि मूर्च्छनान्तरगतं तारं विरामे मृदुम् ।
हेलासंयमितं पुनश्च ललितं रागद्विरुच्चारितं,
यत्सत्यं विरतेऽपि गीतसमये गच्छामि शृण्वन्निव ॥५॥

---

वचनैः किं फलम् ? अहन्तु मन्ये, तस्य संगीतकमेवंविधं रमणीयमभूत्, यथा रेभिलस्यान्तः काचिद्वनितैव प्रविष्टा भवेत् । अथवा रेभिलरूपमाकलय्य काचिद् वनिता एव संगीतकमाचरदिति संभावयामि । गीतस्य माधुर्यमनेनाभिव्यज्यते ।

अत्रोत्प्रेक्षाऽलङ्कृतिः । वसन्ततिलका च्छन्दः ॥ ४ ॥

चारुदत्तः पुनरपि रेभिलस्य गीतं प्रशंसति—तं तस्येति । मृदुगिरः = कोमलवाचः, तस्य = रेभिलस्य तम् = तथानुभूतम् स्वराणाम् = "सा-रे-गा-मा-पा-धा-नी" संज्ञकानां सप्तस्वराणां क्रमम् = आरोहावरोहक्रमम्, श्लिष्टम् = वर्णोच्चारणेन सह वर्तमानम् ( तन्त्रीस्वनम् = वीणारवः ) वर्णानां = गीतवर्णानाम् मूर्च्छनायाः = स्वराणामारोहावरोहक्रमस्य अन्तर्गतम् = मध्यवर्तिनम्, तारम् = उच्चैः, विरामे = विरतौ, मृदुम् = कोमलम्, हेलया = सहसा = अकस्मात् संयमितम् = अवरुद्धम् ।

---

तो समझता हूँ कि उसके हृदय में कोई वनिता ( स्त्री ) ही प्रविष्ट हो गई है । ( अत एव वह बनिताजनोचित गीत गाता है । )" ॥ ४ ॥

और भी—

"उसकी वह मधुरवाणी, स्वरों का उतार-चढ़ाव, शब्दों का अनुगामी वीणा का शब्द, गीत के वर्णों का मूर्छना ( आरोहावरोह ) के समय ऊँचे तथा विराम में मृदुस्वर से बोलना तथा सहसा रुककर पुनः लय के साथ दो-दो बार गाये हुए सङ्गीत का बोलना, ( इस प्रकार बड़ा सुन्दर था । ) सच तो यह है कि गान समय के बीत जाने पर भी मैं उस गीत को सुनता-सा जा रहा हूँ ।

विदूषकः—भो वअस्स ! आवणंतररच्छाविभाएसु सुहं कुक्कुरा वि सुत्ता । ता गेहं गच्छेम्ह । ( अग्रतोऽवलोक्य ) वअस्स ! पेक्ख पेक्ख । एसो वि अंधआरस्स विअ अवआसं देंतो अंतरिक्खपासादादो ओदरदि, भअवं चंदो । [ वयस्य ! आपणान्तररथ्याविभागेषु सुखं कुक्कुरा अपि सुप्ताः । तद्गृहं गच्छावः । वयस्य ! पश्य पश्य । एषोऽप्यन्धकारस्येवावकाशं ददद्न्तरिक्ष-प्रासादादवतरति भगवांश्चन्द्रः । ]

चारुदत्तः—सम्यगाह भवान्

---

पुनश्च ललितम् = रमणीयम्, रागेण = संगीतेन द्विः = वारद्वयम् उच्चारितम् = कथितम् संगीतम्—संगीतस्य समये विरतेऽपि = समाप्तेऽपि, यत् सत्यम् = सत्यं पृच्छयते चेत्, शृण्वन्निव = अधुनापि गीतमाकर्णयन्निव गच्छामि । रेभिलस्य संगीतं सर्वथा तच्छास्त्रनियमोपेतम्, क्वचिन्मृदु, क्वचित् तीव्रस्वरं, सम्मूर्च्छना-सहितमपि श्रुत्वा मैत्रेय ! त्वं न प्रसन्नः, आश्चर्यम् ! अहन्तु गीते समाप्तिं गतेऽपि पुनरपि शृण्वन्निव गच्छामि । इति भावः ।

अत्रोत्प्रेक्षालङ्कृतिः । शार्दूलविक्रीडितं च्छन्दः । प्रसादो गुणः । वैदर्भी रीतिः ॥५॥

विदूषको रथ्यासु सुखं कुक्कुरा अपि प्रसुप्ताः, ततो गृहं गत्वा शयनं कार्यमिति कथयन् सम्मुखे चन्द्रमसोऽस्ताचलचूडावलम्बित्वमाह—वयस्येति । भो वयस्य ! अन्धकारस्यावकाशं ददानो भगवान् चन्द्रोऽन्तरिक्षरूप–प्रासादान्महाभवनादवतर-तीव । चन्द्रोऽप्यस्तं यातीत्यर्थः ।

---

( "रेभिल" का गीत शास्त्र-सम्मत तथा बड़ा ही आकर्षक था । यही कारण है कि यद्यपि गान–वेला व्यतीत हो चुकी तथापि मेरे कानों में अब भी वही गूँज रहा है ) ।" ॥ ५ ॥

विदूषक—मित्र ! बाजार की गलियों में तो कुत्ते भी सुख से सो गये हैं । इसलिए घर चलें । ( सामने देखकर ) मित्र ! देखो ! देखो ! यह अन्धकार को अवकाश-सा देते हुए आकाशरूपी प्रासाद से भगवान् चन्द्रमा उतर ( ढल ) रहे हैं ।

चारुदत्त—आप ठीक कह रहे हैं !

**असौ हि दत्त्वा तिमिरावकाशमस्तं व्रजत्युन्नतकोटिरिन्दुः ।**
**जलावगाढस्य वनद्विपस्य तीक्ष्णं विषाणाग्रमिवावशिष्टम् ॥६॥**

विदूषकः—भो, एदं अम्हाणं गेहं। वड्ढमाणअ, वड्ढमाणअ ! उग्घाटेहि दुआरअं । [ भो, इदमस्माकं गेहम् । वर्धमानक, वर्धमानक! उद्घाटय द्वारम् । ]

चेटः—अज्जमित्तेअस्स शलशंजोए शुणीअदि । आगदे अज्जचालुदत्ते ।

---

चारुदत्तोऽपि चन्द्रस्यास्तमयं वर्णयितुमाह—असौ हि—इति । उन्नता कोटिः= अग्रभागो यस्यासौ चन्द्रः तिमिरस्याऽन्धकारस्यावकाशं दत्त्वा अस्ताचलचूडां चुम्बति, अयं चन्द्रोऽधुना जलेऽवगाढस्य = कृतमज्जनस्य वनद्विपस्य = आरण्यकगजस्य तीक्ष्णम् अवशिष्टं विषाणस्य दन्तस्याग्रभाग इव प्रतीयते । चन्द्रमसि प्रकाशमाने तु वराकोन्धकारः क्वचिद्भीत इव स्थानान्तरे गतः, परमिदानीं चन्द्रोऽस्तं गच्छन् सन् तस्यागन्तुमवकाशमिव ददाति, अधुना सर्वत्रान्धकारस्य राज्यमायातुं वाञ्छतीत्याशयः । सर्वस्य जगतोऽवस्थेदृशी । कदाचिदुत्थानम् , कदाचित् पतनञ्चेति स्वाभाविकमेवेति भावः ।

चन्द्रास्तमयवर्णने कविकुलगुरोरपि वर्णनमतीव श्लाघनीयम् । तथाहि—

"पादन्यासं क्षितिधरगुरोर्मूर्ध्नि कृत्व सुमेरोः,
क्रान्तं येन क्षयिततमसा मध्यमं धाम विष्णोः ।
सोऽयं चन्द्रः पतति गगनादल्पशेषैर्मयूखैः,
अत्यारूढिर्भवति महतामप्यपभ्रंशनिष्ठा ॥"

[ शाकुन्तलम् , ४ अ०, ५ श्लो० ]

अत्रोपमालङ्कारः । इन्द्रवज्रा छन्दः । गौडी रीतिः । माधुर्यं गुणः ॥ ६ ॥

---

"उन्नत अग्रभागवाला ( ऊँचे किनारों वाला ) यह चाँद अन्धकार को अवकाश देता हुआ अस्त हो रहा है। यह ( चन्द्रमा इस समय ) जल में नहाये हुए जङ्गली हाथी के तीक्ष्ण दाँत के अग्रभाग के समान ( प्रतीत हो रहा है। )" ॥ ६ ॥

विदूषक—यह हमारा घर है । "वर्धमानक" ! "वर्धमानक" ! किवाड़ खोल !

ता जाव दुआअलअं शे उग्घाटेमि । ( तथा कृत्वा ) अज्ज ! वंदामि । मित्तेअ ! तुमं पि वंदामि । एत्थ वित्थिण्णे आशणे णिशीदंतु अज्जा । [ आर्यमैत्रेयस्य स्वरसंयोगः श्रूयते । आगत आर्यचारुदत्तः । तद्यावद्द्वारमस्योद्घाटयामि । आर्य ! वन्दे । मैत्रेय ! त्वामपि वन्दे । अत्र विस्तीर्ण आसने निषदतमार्यौ । ]

( उभौ नाट्येन प्रविश्योपविशतः ]

विदूषकः—वड्ढमाणअ ! रअणिअं सद्दावेहि पादाइं धोइदुं । [ वर्धमानक ! रदनिकामाकारय पादौ धावितुम् । ]

चारुदत्तः—( सानुकम्पम् ) अलं सुप्तजनं प्रबोधयितुम् ।

चेटः—अज्जमित्तेअ ! अहं पाणिअं गेण्हे । तुमं पादाइं धोवेहि । [ आर्यमैत्रेय ! अहं पानीयं गृह्णामि । त्वं पादौ धाव । ]

विदूषकः—( सक्रोधम् ) भो वअस्स ! एसो दाणिं दासीए पुत्तो भविअ पाणिअं गेण्हेदि । मं उण बम्हणं पादाइं धोवावेदि । [ भो ! वयस्य ! एष इदानीं दास्याः पुत्रो भूत्वा पानीयं गृह्णाति । मां पुनर्ब्राह्मणं पादौ धावयति । ]

चारुदत्तः—वयस्य मैत्रेय ! त्वमुदकं गृहाण । वर्धमानकः पादौ प्रक्षा-

---

चेट—"आर्य मैत्रेय" का स्वर ( आवाज़ ) सुनाई पड़ रहा है । ( इसलिए मैं सोचता हूँ कि ) "आर्य चारुदत्त" आ गये । तो मैं द्वार खोलता हूँ । ( खोलकर ) आर्य ! प्रणाम करता हूँ । "मैत्रेय !" तुमको भी प्रणाम है । इस बिछे हुए आसन पर आप विराजिये ।

[ दोनों बैठने का अभिनय करते हैं ! ]

विदूषक—"वर्धमानक !" "रदनिका" को पैर धुलाने के लिए बुला !

चारुदत्त—( दयापूर्वक ) सोती हुई को उठाने से रहने दो ।

वर्धमानक—"आर्य ! मैत्रेय !" मैं पानी लेता हूँ; तुम पैर धोओ !

विदूषक—( क्रोध सहित ) मित्र ! यह दासीपुत्र होकर पानी लेता है और मुझ ब्राह्मण से पैर धुलाता है ।

चारुदत्त—मित्र ! "मैत्रेय ! तुम जल लो और "वर्धमानक" पैर धोवें ।

-लयतु।

चेटः—अज्जमित्तेअ ! देहि उदअं। [ आर्यमैत्रेय! देह्युदकम्। ]

( विदूषकस्तथा करोति, चेटश्चारुदत्तस्य पादौ प्रक्षाल्यापसरति )

चारुदत्तः—दीयतां ब्राह्मणस्य पादोदकम्।

विदूषकः—किं मम पादोदएहिं ?। भूमीए ज्जेव्व मए ताडिदगद्दहेण विअ पुणो वि लोट्ठिदव्वं। [ किं मम पादोदकैः ?। भूम्यामेव मया ताडित-गर्दभेनेव पुनरपि लोठितव्यम्। ]

चेटः—अज्जमित्तेअ ! बम्हणे खु तुमं। [ आर्यमैत्रेय ! ब्राह्मणः खलु त्वम्। ]

विदूषकः—जधा सव्वणागाणं मज्झे डुंडुहो, तधा सव्वबम्हणाणं मज्झे

---

विदूषकायाऽपि पादप्रक्षालनार्थमुदकं देहीति चारुदत्तस्य वचनं निशम्य मैत्रेयो ब्रूते—किं ममेति। मम पादप्रक्षालनार्थं जलमनावश्यकम्, यतः प्रक्षालितचरणेनापि मया ताडितेन गर्दभेनेव पुनरपि भूमावेव लोठितव्यम्! यथा करप्रहारस्पर्शादिना प्रक्षालितधूलिजालोऽपि रासभः पृथिव्यां पुनरपि लोठनं करोति, तथैवाहमपि। ततश्च पादप्रक्षालनं मम मुधैवेति हृदयम्।

ब्राह्मणोऽसि, तव पादप्रक्षालनमपि मम पुण्यजनकमिति चेटवाक्यमाकर्ण्य विदूषकः कथयति—यथा सर्वेति। यथा सर्वेषु सर्पेषु डुण्डुभः = जलसर्पः, विषाभावात् सर्पाभास इव, तथैव विद्यातपोविरहितः सर्वेषु ब्राह्मणेष्वहमपीति

---

चेट—"आर्य मैत्रेय!" पानी दो!

[ "विदूषक" पानी देता है। "चेट" "चारुदत्त" के पैर धोकर भाग जाता है। ]

चारुदत्त—ब्राह्मण ( "विदूषक" ) को ( भी ) पानी दो।

विदूषक—मुझे पादोदक से क्या प्रयोजन ? मुझे तो फिर भी पीटे हुए गधे की भाँति भूमि में ही लोटना है।

चेट—"आर्य मैत्रेय" तुम ब्राह्मण हो। ( अतः चरण-प्रक्षालन करूँगा )

विदूषक—जैसे सब सर्पों में "डुण्डुभ" ( जल का साँप, निर्विष ) होता है

अहं बम्हणो । [ यथा सर्वनागानां मध्ये डुण्डुभः, तथा सर्वब्राह्मणानां मध्येऽहं ब्राह्मणः । ]

चेटः—अज्जमित्तेअ ! तधा वि धोइश्शं । ( तथा कृत्वा ) अज्ज-मित्तेअ ! एदं तं शुवण्णभंडअं मम दिवा, तुह लत्तिं च । ता गेण्ह । [आर्यमैत्रेय ! तथापि धाविष्यामि । आर्यमैत्रेय ! एतत् तत् सुवर्णभाण्डं मम दिवा, तव रात्रौ च, तद्गृहाण । ] ( इति दत्त्वा निष्क्रान्तः )

विदूषकः—( गृहीत्वा ) अज्ज वि एदं चिट्ठदि ? । किं एत्थ उज्जइणीए चोरो वि णत्थि ? जो एदं दासीए पुत्तं णिद्दाचोरं ण अवहरदि । भो वअस्स ! अब्भंतरचतुस्सालअं पवेसआमि णं । [ अद्याप्येतत्तिष्ठति ? किम-त्रोज्जयिन्यां चौरोऽपि नास्ति ? य एतं दास्याः पुत्रं निद्राचौरं नापहरति ? भो वयस्य ! अभ्यन्तरचतुःशालकं प्रवेशयाम्येनम् । ]

चारुदत्तः—

---

भावः । नाममात्रस्य ब्राह्मणोऽहमिति न मम पादप्रक्षालनेन पुण्यप्राप्तिरिति तु परमार्थः ।

भो वयस्य ! किमु गृहाभ्यन्तरं स्थापयामि, रत्नभाण्डमिदम् ? अहमिदानीं

---

वैसे ही मैं सब ब्राह्मणों में हूँ । ( जैसे "डुण्डुभ" विषहीन होने के कारण नाममात्र से ही सर्प होता है वैसे ही मैं भी विद्या-तप आदि गुणों से हीन होने के कारण नाममात्र का ही ब्राह्मण हूँ । मेरे चरण-प्रक्षालन से कोई पुण्य नहीं होगा ।)

चेट—"आर्य मैत्रेय !" तो भी धोऊँगा । ( धोकर ) "आर्य मैत्रेय !" यह "सुवर्णपात्र" दिन में मेरा तथा रात में तुम्हारा है । ( मुझे दिन में तथा तुम को रात्रि में इस की रक्षा करनी है । ) इसलिए लो !

[ देकर चला जाता है । ]

विदूषक—( लेकर ) यह आज तक भी यहीं है । क्या इस "उज्जयिनी" में कोई चोर भी नहीं है जो निद्रा में विघ्न डालने वाले इस ( सुवर्णभाण्ड ) को नहीं चुराता ? मित्र ! मैं तो इसे अन्दर के प्रकोष्ठ में रखता हूँ ।

अलं चतुःशालमिमं प्रवेश्य,
प्रकाशनारीधृत एष यस्मात् ।
तस्मात् स्वयं धारय विप्र ! ताव-
द्यावन्न तस्याः खलु भोः समर्प्यते ॥ ७ ॥

( निद्रां नाटयन् , 'तं तस्य स्वरसंक्रमम्—' ( ३।५ ) इति पुनः पठति )

विदूषकः—अवि णिद्दाअदि भवं ? । [ अपि निद्राति भवान् ? । ]

चारुदत्तः—अथ किम् ।

इयं हि निद्रा नयनावलम्बिनी, ललाटदेशादुपसर्पतीव माम् ।
अदृश्यरूपा चपला जरेव या, मनुष्यसत्त्वं परिभूय वर्धते ॥८॥

---

स्वर्पामि, इति विदूषकोक्तिमाकर्ण्य निषेधति चारुदत्तः—अलमिति । भोः ! प्रकाशनार्या वेश्या या इदं रत्नभाण्डमस्माकं गेहे न्यासरूपेण धृतमतः चतुःशालाभ्यन्तरेऽस्य स्थापनं नैव कार्यम् । भोः ! यावत् तस्यै न दीयते, तावत् स्वयं धार्यम् , इति भावः । अत्रोपजातिः ॥ ७ ॥

निद्राचुम्बितलोचनोऽसि किमु ? इति विदूषकप्रश्नस्योत्तरं ददानश्चारुदत्तः "अथ किम् , आमिति" स्वीकुर्वन् , निद्रामेव वर्णयति—इयं हि निद्रेति । यथा

---

चारुदत्त—"इसको अन्दर के प्रकोष्ठ में मत रखो ! क्योंकि यह वेश्या ( "वसन्त सेना" ) की धरोहर है । इसलिए तब तक तुम इसे रखो जब तक उस को लौटाया नहीं जाता ।" ॥ ७ ॥

[ निद्रा का अभिनय करता हुआ "तं तस्य स्वरसंक्रमम्…" इत्यादि (३·५) श्लोक पढ़ता है । ]

विदूषक—क्या आप सो रहे हैं ?

चारुदत्त—जी हाँ ।

"यह निद्रा अदृश्यरूपा चञ्चल वृद्धावस्था के समान, जो कि मनुष्य के अस्तित्व की उपेक्षा कर के बड़े वेग से बढ़ती है, ललाट-प्रदेश से मेरी आँखों में उतर रही है । ( मेरी आँखों में नींद बहुत जोर से आ रही है । )" ॥ ८ ॥

विदूषकः—ता सुवेम्ह । [ तत्स्वपिवः । ] ( नाट्येन स्वपिति )

( ततः प्रविशति शर्विलकः )

शर्विलकः—

**कृत्वा शरीरपरिणाहसुखप्रवेशं,**
**शिक्षाबलेन च बलेन च कर्ममार्गम् ।**
**गच्छामि भूमिपरिसर्पणघृष्टपार्श्वो,**
**निर्मुच्यमान इव जीर्णतनुर्भुजङ्गः ॥९॥**

---

चञ्चला वृद्धावस्था मनुष्यस्यास्तित्वं परिभवन्ती स्थिरा भवति, तथैवेयं निद्राऽपि मम ललाटप्रान्तान्नयनावलम्बिनी सती अवतरतीव । अतिवेगेन निद्रा नयनयोरायाति, इत्याशयः । अत्रोपमोत्प्रेक्षे । वंशस्थं छन्दः ॥ ८ ॥

चौर्यचतुरः शर्विलकः स्वकीयं कर्म प्रकाशयति—कृत्वेति । परिणाहः = विशालता । कर्ममार्गम् = गृहे सन्धिम् = भित्तिभेदनमिति यावत् । घृष्टौ पार्श्वौ यस्य एवंविधः । जीर्णा = प्राचीना तनुः = शरीरं यस्य सः । निर्मुच्यमानः = कञ्चुकान्मुच्यमानः । एवं कठिनशब्दानामर्थो दत्तः ।

अत्रायं भावः—स्वचौर्यशिक्षाबलेन, शरीरस्य बलेन च यत्र शरीरं विशालतानुरूपं सुखं यथा स्यात्तथा प्रविशेत्, तादृशं सन्धिमार्गं सम्पाद्य, उभाभ्यामपि

---

**विदूषक**—इसलिए सोते हैं ।

[ सोने का अभिनय करता है । ]

†[ तदनन्तर "शर्विलक" प्रवेश करता है । ]

**शर्विलक**—"अपनी शिक्षा के बल से तथा शारीरिक बल से अपने शरीर की विशालता के अनुरूप सुखपूर्वक प्रवेश करने वाली 'सन्धि' (सेंध, कूमल) लगा कर पुरानी काँचुली छोड़ने वाले सर्प की भाँति मैं भूमि पर सरकने से दोनों ओर के शरीर को घिसता हुआ जाता हूँ ।" ॥ ९ ॥

---

† यहाँ से आगे कवि का स्वाभाविक, अलौकिक तथा आश्चर्यजनक "सूक्ष्म-निरीक्षण" चलता है ।

( नभोऽवलोक्य सहर्षम् ) अये, कथमस्तमुपगच्छति स भगवान् मृगाङ्कः। तथा हि,—

नृपतिपुरुषशङ्कितप्रचारं परगृहदूषणनिश्चितैकवीरम्।
घनपटलतमोनिरुद्धतारा रजनिरियं जननीव संवृणोति ॥१०॥

वृक्षवाटिकापरिसरे सन्धिं कृत्वा प्रविष्टोऽस्मि मध्यमकम्। तद्यावदिदानीं

---

पार्श्वाभ्यां परिसर्पणेन घृष्टपार्श्वः सन् जीर्णशरीरः सर्पो निर्मुच्यमानकाय इव गच्छामि, इति। अत्रोपमाऽलङ्कृतिः। वसन्ततिलका च्छन्दः ॥ ९ ॥

आकाशे चन्द्रमस्तं गच्छन्तं दृष्ट्वा प्राह—नृपतिपुरुषेति। घनपटलम् = समूहः। रोगश्च। तारा = नक्षत्रम् = नेत्रकनीनिका च। संवृणोति = गोपायति। घनानां मेघानां पटलवत् तमसा = अन्धकारेण निरुद्धा तारा तस्य तादृशम्, माम् नृपतिपुरुषाणां = रक्षकाणां शङ्कितः प्रचारो यस्य, यस्यान्वेषणार्थं ( प्रसिद्ध-तमत्त्वात् ) रात्रौ रक्षिणः सशङ्कास्तिष्ठन्ति, तादृशं, परेषां गृहाणां दूषणे = सन्धि-करणेन विनाशने निश्चितश्चासौ एकः = प्रधानभूतो वीरस्तम्, माम्, इयं रजनिः = रात्रिः, जननीव संवृणोति। यथा नेत्ररोगिणं रोगान्तरग्रस्तं वा सुतं सर्वथा माता गोपायति, तथैवास्मद्विधानां चौराणां रक्षिका रात्रिरपि जननीव वर्तते, इति भावः। अत्रोपमाऽलङ्कारः। पुष्पिताग्रा च्छन्दः ॥१०॥

पुनरपि स्वकृतं कर्म प्रकाशयन् क्रियमाणमपि प्रकाशयति—वृक्षवाटिकेति।

---

( आकाश की ओर देखकर, प्रसन्नतापूर्वक ) अरे! क्या भगवान् चन्द्रमा अस्त हो रहे हैं। क्योंकि—

"जिसे पकड़ने के लिए राजपुरुष ( सिपाहियों ) का प्रचार शङ्कित रहता है, ( जिसे पकड़ने के लिए सिपाही लोग शङ्कित रहते हैं ) तथा जो दूसरों के घरों में कूमल लगाने में सर्वतः प्रधान है ऐसे मुझ को, यह सघन अन्धकार के कारण तारों का भी प्रकाश मन्द करने वाली रात्रि माता की भाँति छिपा रही है।" १०

फुलवाड़ी के पास कूमल लगा कर मैं भवन के बीच में आ गया हूँ। अब

चतुःशालकमपि दूषयामि । भोः,

काम नीचमिदं वदन्तु पुरुषाः स्वप्ने च यद्वर्धते,
　　विश्वस्तेषु च वञ्चनापरिभवश्चौर्यं न शौर्यं हि तत् ।
स्वाधीना वचनीयतापि हि वरं बद्धो न सेवाञ्जलि-,
　　र्मार्गो ह्येष नरेन्द्रसौप्तिकवधे पूर्वं कृतो द्रौणिना ॥११॥

तत्कस्मिन्नुद्देशे सन्धिमुत्पादयामि ?

---

वृक्षाणां वाटिकायाः = उपवनस्य परिसरे = समीपवर्तिनि देशे सन्धिमुत्पाद्य भवनमध्ये प्रविष्टोऽस्मि । इदानीं चतुःशालकमपि = गृहाभ्यन्तरभागमपि दूषयामि = तत्रापि सन्धि कल्पयामि, येन सुखपूर्वकमन्तः प्रवेशो मम स्यादित्यर्थः ।

स्वकर्मणः प्रशंसां करोति—काममिति । पुरुषाः = सज्जनाः कामं = निःसन्दिग्धं इदं चौर्यं नीचं वदन्तु, यच्चौर्यं स्वप्ने = शयनवेलायामेव वृद्धिमाप्नोति, विश्वस्तेषु जनेषु च वञ्चना-परिभवः, वञ्चनया परिभूतिः विश्वस्तानामपि वञ्चना क्रियते । एवंविधं चौर्यं यतः शौर्यं न, इति मत्वा साधवो यदि निन्दन्ति, निन्दन्तु नाम, परमत्र मम न मतमन्यथैवास्ति, अहन्तु शौर्यमेव तच्चौर्यं मन्ये, शूरा एव

---

घर के भीतरी भाग में भी सेंध लगाता हूँ ( जिस से मैं भली भाँति प्रवेश कर सकूँ । ) अरे !

"सज्जन पुरुष इस चोरी को निःसन्देह बुरा कहें जो कि लोगों के सो जाने पर वृद्धि पाती है तथा जो विश्वस्तों की वञ्चना कराती है ऐसी चोरी कोई वीरता नहीं है ( यदि ऐसा समझ कर लोग इस की निन्दा करते हैं तो करें । परन्तु मैं तो उसे शूरता ही समझता हूँ क्योंकि— ) निन्दित स्वतन्त्रता भी दूसरे के सामने सेवा की अञ्जलि फैलाने से अच्छी ! यह मार्ग सोते हुए राजाओं के वध से "अश्वत्थामा" ने ही दिखा दिया है । ( मैं ही ऐसी बातें कहता हूँ यह बात नहीं है ; प्रत्युत चोरी की रीति तो सोते हुए राजाओं को मार कर "अश्व-त्थामा" ने ही चला दी थी । )" ॥ ११ ॥

तो किस स्थान पर सेंध लगाऊँ ?

देशः को नु जलावसेकशिथिलो यस्मिन्न शब्दो भवेद् ?
भित्तीनां च न दर्शनान्तरगतः संधिः करालो भवेत् ?
क्षारक्षीणतया च लोष्टककृशं जीर्णं क्व हर्म्यं भवेत् ?
कस्मिन् स्त्रीजनदर्शनं च न भवेत् स्यादर्थसिद्धिश्च मे ?॥१२॥

---

तथाविधं कार्यं कर्तुं प्रभवन्ति, ते स्वकीयं जीवनं स्वातन्त्र्येण यापयितुं वाञ्छन्ति, स्वाधीनमेव जीवनं जीवनम्, एवंविधे जीवने यदि निन्दापि भवति, भवतु, सापि उचितैव न पुनः पराधीनतायां सेवाञ्जलिसज्जनमुचितम्। द्रौणिना = द्रोणपुत्रेण "अश्वत्थाम्ना" पूर्वं नरेन्द्राणां सौप्तिके = शयने वधं कुर्वता मार्गोऽयं स्वीकृतः। न केवलं ब्राह्मणेन सता मयैवेदं चौर्यकर्म क्रियते, अपितु अश्वत्थाम्नापि पूर्वत एव मार्गोऽयं प्रदर्शितः।

स्वपितुर्द्रोणाचार्यस्य वधात् कुपितेनाश्वत्थाम्ना रात्रौ पाण्डवानां शिविरे प्रवेशं विधाय बहूनां राज्ञां वधः कृतः, इति महाभारतस्य कथाऽत्रानुसन्धातव्या।

अत्र दीपकनामाऽर्थान्तरन्यासश्चालङ्कारौ संसृष्टौ। शार्दूलविक्रीडितं च्छन्दः॥११॥

सन्धिकरणोचितं स्थानं कुत्रास्तीति विचारयति शर्विलकः—देशः को न्विति। प्रतिदिनं जलपातेन शिथिलप्रायं स्थानं कुत्रास्ति ? यत्र सन्धिकर्मसमये इष्टिका-कर्तनादिशब्दो माभूत्। यत्र च भित्तीनां करालो = विशालः सन्धिः प्रेक्षकाणां रक्षिप्रमुखानां दर्शनान्तरगतो मा भूत्। ते सन्धिं नावलोकयेयुः क्षारेण क्षीणं जीर्णञ्च भवनमिष्टकानां क्षीणतया सन्धिकर्मणि विशेषतयोपयुक्तम्, सर्वेभ्योऽपि स्थानेभ्यो विशेषरूपेण तादृशं स्थानं ममोपयुक्तम्, यत्र स्त्रीणां दर्शनं न स्यात्, ममार्थसिद्धिश्च साधु स्यात्। स्त्रीणां दर्शनं चौरशास्त्रे शुभावहं न

---

"( प्रतिदिन ) जल के गिरने से शिथिल ऐसा कौन सा स्थान है जहाँ ( ईंट आदि काटने से ) शब्द न हो और भीत में लगाई हुई विस्तृत सेंध को जहाँ राजपुरुष आदि न देख सकें। मेरे लिए प्रयोजन की सिद्धि करने वाला वही स्थान ( श्रेष्ठ ) है जिस में ईंटों के दुर्बल होने के कारण लोनख लगी हुई हो तथा जहाँ स्त्री दर्शन न हो। (स्त्री-दर्शन चोरों के लिए शुभ नहीं होता।)"॥१२॥

(भित्तिं परामृश्य) नित्यादित्यदर्शनोदकसेचनेन दूषितेयं भूमिः क्षारक्षीणा । मूषिकोत्करश्चेह । हन्त, सिद्धोऽयमर्थः । प्रथममेतत् स्कन्दपुत्राणां सिद्धिलक्षणम् । अत्र कर्मप्रारम्भे कीदृशमिदानीं सन्धिमुत्पादयामि ? । इह खलु भगवता कनकशक्तिना चतुर्विधः सन्ध्युपायो दर्शितः । तद्यथा—पक्वेष्टकानामाकर्षणम् , आमेष्टकानां छेदनम् , पिण्डमयानां सेचनम् , काष्ठमयानां पाटनमिति । तदत्र पक्वेष्टके इष्टिकाकर्षणम् । तत्र—

**पद्मव्याकोशं, भास्करं बालचन्द्रं,**

---

भवति ! ततश्चैवंविधगुणयुक्तं स्थानमेवोपयुक्तं मयान्वेष्टव्यम् , इति भावः । शार्दूलविक्रीडितं छन्दोऽस्मिन् पद्ये ॥१२॥

करेण भित्तिं स्पृष्ट्वा पुनरपि कथयति—नित्यादित्येति । अत्र भूमिभागे प्रतिदिनं भगवतो भास्करस्य ( सूर्यस्य ) दर्शनसमये जलं प्रदीयतेऽर्घ्यरूपेण । अतः क्षारक्षीणेयं पृथ्वी । किं च–मूषिकाणामुत्करः = समुदायः, तदुद्धृतमृत्तिकाराशिरत्रेति भावः । ततश्च मम कार्यं सम्पन्नम् । स्कन्दपुत्राणाम् = चौराणाम् । कनकशक्तिना = तन्नाम्ना चौराणामाचार्येण । अत्र पक्वेष्टकचिते भवने इष्टकानामाकर्षणमेव मया कार्यम् ।

चौराणां शास्त्रे सप्तविधाः सन्धयः प्रोक्ताः । ते च क्रमशो निरुच्यन्ते--

---

( दीवार को छूकर ) प्रतिदिन भगवान् भास्कर को अर्घ्य देने के कारण इस भूमि में नमक ( लोनख ) लगा हुआ है । और चूहों का समुदाय भी यहाँ है ( चूहों के द्वारा उखाड़ी हुई मिट्टी भी है । ) वाह ! काम बन गया ! यह स्कन्द-पुत्रों ( चोरों ) की सफलता का सर्वप्रथम लक्षण है । कार्यारम्भ करने से पहिले किस प्रकार की सेंध लगाऊँ ? भगवान् "कनकशक्ति" नामक "आचार्य" ने "सेंध" के चार प्रकार बतलाये हैं । जैसे—( १ ) पक्की ईंटों को खींच देना ( २ ) कच्ची को काट देना ( ३ ) मिट्टी के लौंदों को पानी से सींच देना तथा ( ४ ) लकड़ी को काट डालना । इसलिए यहाँ पक्की ईंटें होने के कारण ईंटे खींचता हूँ । उसमें—

"पद्माकार, भास्कर के समान, चन्द्रमा के सदृश, सम, विस्तृत, स्वस्तिक

वापी, विस्तीर्णं, स्वस्तिकं, पूर्णकुम्भम् ।
तत्कस्मिन् देशे दर्शयाम्यात्मशिल्पं ?
दृष्ट्वा श्वो यं यद्विस्मयं यान्ति पौराः ॥१३॥

तदत्र पक्वेष्टके पूर्णकुम्भ एव शोभते । तमुत्पादयामि ।

अन्यासु भित्तिषु मया निशि पाटितासु,
क्षारक्षतासु विषमासु च कल्पनासु ।
दृष्ट्वा प्रभातसमये प्रतिवेशिवर्गो,
दोषांश्च मे वदति कर्मणि कौशलं च ॥१४॥

---

पद्मेति । पद्मवत् व्याकोशम् = विकचकमलाकारमिति यावत् । भास्करम् = सूर्य-सदृशम् बालचन्द्रम् = उदयकालिकचन्द्रतुल्यम्, वापी-समम् । विस्तीर्णम् = विस्तारयुक्तम, स्वस्तिकम् = ( 卐 ) ईदृगाकारतुल्यम्, पूर्णकुम्भ-समानम्, तदत्र कतमं सन्धिमुत्पादयामि ? यं प्रातर्दृष्ट्वा मदीयकर्मणोऽभिनन्दनं करिष्यन्ति नाग-रिकाः । अत्र वैश्वदेवी च्छन्दः । तल्लक्षणम् यथा—"पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ ॥ इति ॥१३॥

भित्ति—भेदन सन्धिनिर्माणनिपुणतामात्मनो वदति—अन्यास्विति । रात्रौ मया समुत्पाटिताः, क्षारक्षताः विषम—कल्पना ( सन्धिरचना )—कलिताः भित्ती-र्निरीक्ष्य प्रातःकाले प्रतिवेशिनाम् = पार्श्ववर्तिगृहस्थानां समुदायः, मदीयान् दोषान् कर्मणि कुशलताञ्च कथयिष्यति । उचितेऽनुचिते वा सर्वस्मिन्नपि कर्मणि कुशलता-

---

चिह्न ( 卐 ) जैसा अथवा पूर्णकुम्भ के तुल्य ( सेंध लगा कर ) किस स्थान पर अपना कौशल दिखलाऊँ ? जिसे कल को देखकर, नागरिकगण आश्चर्य-चकित हो जायँ ।" ॥ १३ ॥

इन पक्की ईंटों में तो "पूर्णकुम्भ" ही अच्छा लगेगा—अतः लगाता हूँ ।

"और दीवारों में जो कि रात्रि को मैंने फाड़ी है तथा जिन में बहुत-सी लोनख लगी है ( कूमल लगा हुआ देख कर ) प्रातःकाल पड़ोसी लोग मेरे ( चोरी रूपी ) दोष तथा शिल्पकला के कौशल की चर्चा करेंगे" ॥ १४ ॥

नमो वरदाय कुमारकार्तिकेयाय, नमः कनकशक्तये ब्रह्मण्यदेवाय देवव्रताय, नमो भास्करनन्दिने, नमो योगाचार्याय, यस्याहं प्रथमः शिष्यः । तेन च परितुष्टेन योगरोचना मे दत्ता ।

अनया हि समालब्धं न मां द्रक्ष्यन्ति रक्षिणः ।
शस्त्रं च पतितं गात्रे रुजं नोत्पादयिष्यति ॥१५॥

( तथा करोति ) धिक्कष्टम् । प्रमाणसूत्रं मे विस्मृतम् ( विचिन्त्य ) आं, इदं यज्ञोपवीतं प्रमाणसूत्रं भविष्यति । यज्ञोपवीतं हि नाम ब्राह्मणस्य महदुपकरणद्रव्यम् , विशेषतोऽस्मद्विधस्य । कुतः,—

---

माधातुं प्रयत्नशीलता मानवानामावश्यकीति हृदयम् । अत्र तुल्ययोगिताऽलङ्कारः । तल्लक्षणञ्च यथा—

"पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत् ।
एकधर्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता ॥" इति ।

वसन्ततिलका च्छन्दः । "उक्ता वसन्ततिलका तभजा जगौ गः" इति तल्लक्षणम् ॥ १४ ॥

प्राचीनान् चौराचार्यान् स्वगुरुं योगाचार्यञ्च प्रणम्य, तेन प्रसादरूपेण प्रदत्ता योगरचना किं फलं जनयति ? इति प्रदर्शयति—अनयेति । अस्याः योगरचनायाः

---

वर देने वाले कुमार "कार्तिकेय" जी को नमस्कार है ! "कनकशक्ति" तथा "भास्करनन्द" जी को नमस्कार है ! "योगाचार्य" जी को भी प्रणाम है जिनका कि मैं सर्वप्रथम शिष्य हूँ । उन्होंने सन्तुष्ट होकर मुझे योगरचना प्रदान की है ।

"इसके प्रभाव से पास में आने पर भी मुझ को रक्षकगण ( पहरेदार ) नहीं देख पाते और शरीर पर गिरा हुआ शस्त्र भी कोई पीड़ा उत्पन्न नहीं करता है ।" ॥

( कूमल लगाता है । ) खेद है ! मैं अपना 'प्रमाण—सूत्र' ( नापने का डोरा ) भूल आया हूँ ! ( सोच कर ) हाँ, यह यज्ञोपवीत 'प्रमाणसूत्र' बन जायगा । यज्ञोपवीत ब्राह्मणों के लिए बहुत ही उपकार की वस्तु है, विशेषकर हम जैसों के लिए । क्योंकि—

एतेन मापयति भित्तिषु कर्ममार्ग-
मेतेन मोचयति भूषणसंप्रयोगान्।
उद्घाटको भवति यन्त्रदृढे कपाटे,
दष्टस्य कीटभुजगैः परिवेष्टनं च ॥१६॥

मापयित्वा कर्म समारभे। ( तथा कृत्वावलोक्य च ) एकलोष्टावशेषोऽयं सन्धिः। धिक्कष्टम्, अहिना दष्टोऽस्मि। ( यज्ञोपवीतेनाङ्गुलीं बद्ध्वा विषवेगं

---

ममाङ्गे सम्मर्दनेन रक्षिणो मामवलोकयितुं न क्षमन्ते, न चाङ्गे निपतितं शस्त्रं मम कामपि पीडां रोगं वा जनयिष्यति। ईदृशोऽतिविचित्रोऽस्याः प्रभावः। सर्वोऽयं गुरुचरणानुकम्पायाः महिमेति भावः। पथ्यावक्त्रमत्र च्छन्दः ॥१५॥

प्रमाणसूत्रेण चौराः सन्धिं मापयन्ति, तच्चागमनसमये मयाऽज्ञानाद् विस्मृतं गृहे एव, इदानीं केन वस्तुना तत् कर्म करिष्यामीति विचार्य यज्ञोपवीतमेव तत्कार्यसाधकं भविष्यतीति यज्ञोपवीतस्य माहात्म्यं प्रदर्शयति—एतेनेति। एतेन यज्ञोपवीतेन भित्तिषु सन्ध्यादिकर्ममार्गस्य दैर्घ्यविस्तारिकं माप्यते, अङ्गेषु धृतानां भूषणानां मोचनमपि सम्यक् क्रियतेऽनेनैव, यन्त्रेण विष्कम्भकादिना दृढीयसि कपाटे एतद्‌बलेनोद्घाटनक्रमोऽपि साध्यते, कीटेन भुजगेन वा कृते दंशे करादेरावेष्टनमपि कर्तुं प्रभवतीदमेव। अन्येषां ब्राह्मणानां यज्ञोपवीतं धर्मकृत्यं सम्पादयितुमस्ति, अस्मद्विधानाञ्च चौर-ब्राह्मणानामुक्तानि कर्माणि साधयितुमपि समर्थमिति भावः। अत्र वसन्ततिलकं च्छन्दः ॥१६॥

---

"इस से दीवारों पर कूमल लगाने का स्थान नापा जाता है तथा आभूषणों के बन्धन भी इससे छुड़ाये जाते हैं, यन्त्र से दृढतापूर्वक बन्द किये हुए किवाड़ों को भी इस की सहायता से खोला जाता है, कीड़े अथवा सर्प के काटने पर इस से बन्द भी लगाया जा सकता है ( जिस से विष न चढ़े। )" ॥ १६ ॥

नाप कर कार्य आरम्भ करता हूँ। ( खोदकर तथा देखकर ) सेंध में एक ईंट बची ( बाकी ) है। हाय! साँप ने काट खाया। ( यज्ञोपवीत से अँगुली में

नाट्यति; चिकित्सां कृत्वा ) स्वस्थोऽस्मि । ( पुनः कर्म कृत्वा, दृष्ट्वा च ) अये, ज्वलति प्रदीपः ! । तथा हि,—

**शिखा प्रदीपस्य सुवर्णपिञ्जरा, महीतले संधिमुखेन निर्गता ।**
**विभाति पर्यन्ततमःसमावृता, सुवर्णरेखेव कषे निवेशिता ॥१७॥**

( पुनः कर्म कृत्वा ) समाप्तोऽयं सन्धिः । भवतु, प्रविशामि । अथवा न तावत् प्रविशामि । प्रतिपुरुषं निवेशयामि । (तथा कृत्वा) अये, न कश्चित् । नमः कार्तिकेयाय । ( प्रविश्य, दृष्ट्वा च ) अये, पुरुषद्वयं सुप्तम् । भवतु, आत्मरक्षार्थं द्वारमुद्घाटयामि । कथं जीर्णत्वाद्गृहस्य विरौति कपाटम् ? । तद्यावत् सलिलमन्वेषयामि । क्व न खलु सलिलं भविष्यति ? । ( इतस्ततो

---

सर्पदंशस्य चिकित्सां विधाय सन्धिं समाप्य च गृहाभ्यन्तरे प्रज्वलित दीप-मालोक्य कथयति—शिखेति । सुवर्णवत् पिङ्गलवर्णा दीपस्य प्रभा सन्धिद्वारेण धरणीतले निपतन्ती सती परितोऽन्धकारेणावृतत्त्वात् कषपाषाणे निवासिता सुवर्णस्य रेखेव विभाति । अत्रोपमालङ्कारः । वंशस्थं छन्दः ॥१७॥

---

चन्द लगाकर बहुत भाँति विष के चढ़ने का अभिनय करता है । चिकित्सा करके । ) अब मैं स्वस्थ हूँ । ( पुनः कार्य कर तथा देख कर ) अरे ! दीपक जल रहा है !

जैसे—

"सोने के समान पीली-पीली-सी दीपक की शिखा ( लौ ) भूमल पर पड़कर अन्धकार को हटाने के कारण कसौटी पर घिसी हुई सुवर्ण की रेखा-सी लग रही है ।" ॥ १७ ॥

( पुनः खोद कर ) सेंध समाप्त हो गई । अस्तु; प्रवेश करता हूँ । अथवा प्रवेश नहीं करता हूँ । पहिले 'प्रतिपुरुष' ( पुरुष की आकृति के समान लकड़ी आदि का बना हुआ ) को प्रविष्ट कराता हूँ । ( वैसा कर के ) अरे ! यहाँ कोई नहीं है ! भगवान् "कार्तिकेय जी" को प्रणाम है ! ( प्रवेष्ट हो तथा देख कर ) ओह ! दो पुरुष सो रहे हैं । अस्तु; ( खैर ! ) आत्मरक्षा के लिए द्वार खोलता हूँ । क्या पुराने होने के कारण किवाड़ चरचराते हैं ? तो इसलिए जल ढूँढता

दृष्ट्वा सलिलं गृहीत्वा क्षिपन् सशङ्कम् ) मा तावद्भूमौ पतच्छब्दमुत्पादयेत् । भवतु एवं तावत् । ( पृष्ठेन प्रतीक्ष्य कपाटमुद्घाट्य च ) भवतु एवं तावत् । इदानीं परीक्षे किं लक्ष्यसुप्तम् ? उत परमार्थसुप्तमिदं द्वयम् ( त्रासयित्वा परीक्ष्य च ) अये, परमार्थसुप्तेनानेन भवितव्यम् । तथा हि,—

**निःश्वासोऽस्य न शङ्कितः सुविशदस्तुल्यान्तरं वर्तते,**
**दृष्टिर्गाढनिमीलिता न विकला नाभ्यन्तरे चञ्चला ।**
**गात्रं स्रस्तशरीरसंधिशिथिलं शय्याप्रमाणाधिकं,**
**दीपं चापि न मर्षयेदभिमुखं स्याल्लक्ष्यसुप्तं यदि ॥१८॥**

---

सन्धिकर्म समाप्यान्तःप्रवेशं चिकीर्षुः पुरुषाकृतिविशेषं तृणकाष्ठादिनिर्मितं प्रथममन्तः प्रवेश्य कोऽप्यत्र नास्तीति परिचित्य ( ज्ञात्वा ) स्वरक्षार्थं कपाटमुद्घाट्य सुप्तं जनं परीक्षितुं विचारयति कथयति च परीक्षां विधाय परमार्थसुप्ताविमौ, इति प्रतिपादयति—निःश्वासोऽस्येति । इदं मानवयुगलं स्वाभाविकनिद्रायामेवास्ते, यतः अस्य नासाभ्यन्तरचारी प्राणवायुः शङ्कायुक्तो नास्ति, अपि तु विशदतया

---

हूँ । जल कहाँ होगा ? ( इधर-उधर देख कर तथा जल लेकर छिड़कता हुआ शङ्कित होकर ) कहीं जल ऊपर से गिरता हुआ शब्द न करे ! तो ऐसा करता हूँ । ( पीठ के सहारे किवाड़ उतार कर ) अस्तु, अब ऐसा करूँ । पहिले यह देखता हूँ कि क्या ये बनावटी सो रहे हैं अथवा वास्तव में ही । ( शब्द आदि से परीक्षाकर ) अरे ! ये तो वास्तव में ही सो रहे हैं ! क्योंकि—

"इन के श्वास में कोई रुकावट नहीं है प्रत्युत सुख-पूर्वक चल रहा है । इनकी आँखें पूर्णरूपेण बन्द हो रही हैं—वे स्थिर हैं—उनकी पुतली अन्दर ही अन्दर नहीं चल रही हैं । गात्र ढीलाढाला होकर शय्या से भी लम्बा हो रहा है ( इनके हाथ पैर खाट पर से लटक रहे हैं । ) यदि ये झूँठ-मूठ सोये हुए होते तो सामने के दीपक को न सह सकते ( इनकी आँखें चौंधिया जातीं । तो इन सब बातों से मैं निश्चय करता हूँ कि ये स्वाभाविक रूप से ही सो रहे हैं ! )" ॥ १८ ॥

( समन्तादवलोक्य ) अये कथं मृदङ्गः, अयं दर्दुरः, अयं पणवः, इयमपि वीणा एते वंशाः, अमी पुस्तकाः; कथं नाट्याचार्यस्य गृहमिदम् । अथवा भवनप्रत्ययात् प्रविष्टोऽस्मि । तत्किं परमार्थदरिद्रोऽयम्, उत राजभयाच्चौरभयाद्वा भूमिष्ठं द्रव्यं धारयति ? । तन्ममापि नाम शर्विलकस्य भूमिष्ठं द्रव्यम् । भवतु, बीजं प्रक्षिपामि । ( तथा कृत्वा ) निक्षिप्तं बीजं न क्वचित् स्फारीभवति । अये, परमार्थदरिद्रोऽयम् । भवतु, गच्छामि ।

विदूषकः—( उत्स्वप्नायते ) भो वअस्स ! संधी विअ दिज्जदि, चोरं

---

तुल्येणान्तरेणोपलक्षितो यथार्थगत्या चलति, सुप्तस्य च जनस्य श्वास-निश्वासधारायां विषमता नैव भवति, कृत्रिमतया सुप्तस्य च नैवं भवति, तस्य तु अवरुद्धगतिः सन्नायाति याति च निश्वासधारा, अत्र च न तथेति । यथार्थसुप्तमिदं जनद्वयमिति भावः । अस्य दृष्टिश्च गाढं यथा स्यात्तथा निःशेषरूपेण निमीलिता वर्तते, न वैकल्यं भजति, न वा अभ्यन्तरे चाञ्चल्यं धारयति, गात्रञ्चास्य शरीरसन्धीनां शैथिल्यात् शिथिलमिवास्ति, शय्यातो बहिर्निर्गतम्, यदि लक्ष्यसुप्तं = कृत्रिमशयनसहितं यदि स्यात्तदा दीपमभिमुखमपि न मर्षयेत् । सुप्तश्चेदं यथार्थरूपेणेति भावः । ततो निःशङ्कं स्वकीयं कार्यं करिष्यामीति हृदयम् ॥

अत्र सुप्तस्य स्वभावोक्तेः स्वभावोक्तिरलङ्कारः । तल्लक्षणं यथा—"स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम् ।" इति । शार्दूलविक्रीडितं छन्दः ॥१८॥

गृहाभ्यन्तरे मृदङ्गपणवादिकं निरीक्ष्य नाट्याचार्यस्य गृहमिदं किमित्याशङ्क्य

---

( चारो ओर देख कर ) अरे ! क्या यह ढोल है ! यह ढोलक है ! यह वीणा है ! ये बाँसुरी हैं ! ( तथा ) ये पुस्तकें हैं ! क्या यह किसी सङ्गीताचार्य का घर है ? अथवा, मैं तो बड़े घर के विश्वास से ही घुस आया हूँ । तो क्या ये सर्वथा निर्धन हैं, या राजा अथवा चोरों के भय से इन्होंने भूमि में धन गाड़ रखा है ? क्या मुझ "शर्विलक" के लिए गड़ा हुआ धन ( अज्ञेय ) है ? ( गड़े हुए धन का पता लगाने वाले ) बीज फेंकता हूँ । ( फेंक कर ) फेंके हुए बीज कहीं प्रभाव नहीं दिखलाते हैं । ओह ! ये तो पूरे निर्धन हैं इसलिए चलता हूँ ।

विअ पेक्खामि, ता गेण्हदु भवं इदं सुवण्णभंडअं। [ भो वयस्य! सन्धि रेव दृश्यते, चौरमिव पश्यामि, तद्गृह्णातु भवानिदं सुवर्णभाण्डम्। ]

शर्विलकः—किं नु खल्वयमिह मां प्रविष्टं ज्ञात्वा दरिद्रोऽस्मीत्युपहसति ?। तत्किं व्यापादयामि उत लघुत्वादुत्स्वप्नायते ?। ( दृष्ट्वा ) अये, जर्जरस्नानशाटीनिबद्धं दीपप्रभयोद्दीपितं सत्यमेवैतदलङ्करणभाण्डम्। भवतु गृह्णामि। अथवा न युक्तं तुल्यावस्थं कुलपुत्रजनं पीडयितुम्, तद्गच्छामि।

विदूषकः—भो वअस्स ! साविदोसि गोबम्हणकामाए, जइ एदं

---

बीजप्रक्षेपात् बाहुल्याभावाच्चास्य गृहस्थस्य निर्धनत्वमनुमाय निर्जिगमिषति शर्विलकः। अत्रान्तरे विदूषकः उत्स्वप्नायते—भो वयस्येति। मित्र ! सन्धिरिव दृश्यते, चौरमिव पश्यामि, अतो भवान् सुवर्णभाण्डं गृह्णातु, कदाचिदयं चौर एवापहरेत्।

किमयं मामुपहसति, अथवा चपलस्वभावत्वात् उत्स्वप्नायते ? इत्यालोच्य, जर्जरशाटीनिबद्धं सुवर्णभाण्डमालोक्य जिघृक्षुः सन् विचारयति—अथवेति। तुल्यावस्थम् = आत्मसदृशं कुलपुत्रम् पीडयितुं नोचितम्। यथाऽहं निर्धनः तथैवायमपि वराकः, ततोऽनुचितमेतस्य धनापहरणमिति भावः।

विदूषकः कथयति—भो वयस्येति। मे मित्र ! यदि त्वमिदं सुवर्णभाण्डं

---

विदूषक—( स्वप्न देखता है, बड़बड़ाता है। ) वयस्य ! सेंध-सी दिखाई दे रही है ! चोर-सा देख रहा हूँ ! इसलिए आप इस सुवर्ण पात्र को ले लें !

शर्विलक—क्या यह मुझ को घर में प्रविष्ट हुआ देख कर "मैं दरिद्र हूँ" इस प्रकार मेरा उपहास करता है ! तो क्या इस को मार डालूँ ? अथवा यह चञ्चल स्वभाव का होने के कारण ( इस प्रकार ) बड़बड़ा रहा है ? ( देखकर ) ओह ! फटी हुई धोती में बँधा हुआ दीपक की प्रभा से दीप्त सचमुच ही यह आभूषणों का पात्र ( डिब्बा आदि ) है ! तो लेता हूँ। अथवा, अपने जैसे ही इस निर्धन को सताना उचित नहीं है ! इसलिए ( बिना लिए ही ) जाता हूँ।

विदूषक—मित्र ! तुम्हें गौ और ब्राह्मण की शपथ है यदि यह अलङ्कारों

सुवण्णभंडअं ण गेण्हसि । [ भो वयस्य ! शाप्रिपतोऽसि गोब्राह्मणकाम्यया, यद्येतत् सुवर्णभाण्डं न गृह्णासि । ]

शर्विलकः—अनतिक्रमणीया भगवती गोकाम्या ब्राह्मणकाम्या च तद्गृह्णामि । अथवा ज्वलति प्रदीपः । अस्ति च मया प्रदीपनिर्वापणार्थमाग्नेयः कीटो धार्यते । तं तावत् प्रवेशयामि । तस्यायं देशकालः । एष मुक्तो मया कीटो यात्वेवास्य दीपस्योपरि मण्डलैर्विचित्रैर्विचरितुम् । एष पक्षद्वयानिलेन निर्वापितो, भद्रपीठेन धिक्कृतमन्धकारम् । अथवा मयाप्यस्मद्ब्राह्मणकुलेन धिक्कृतमन्धकारम् । अहं हि चतुर्वेदविदोऽप्रतिग्राहकस्य पुत्रः शर्विलको नाम ब्राह्मणो गणिकामदनिकार्थमकार्यमनुतिष्ठामि । इदानीं करोमि ब्राह्मणस्य प्रणयम् । ( इति जिघृक्षति )

विदूषकः—भो वअस्स ! सीदलो दे अग्गहत्थो । [ भो वयस्य ! शीतलस्तेऽग्रहस्तः । ]

---

न गृह्णासि, गोकाम्यया, ब्राह्मणकाम्यया च शापितोऽसि । गवां ब्राह्मणानाञ्चेच्छाया अपूरणे यत् पापं भवति, तदेवैतस्य भाण्डस्याग्रहणे तवापि भवत्वित्यर्थः । "भद्रपीठ"-

---

का डिब्बा न लो ।

शर्विलक—गौ और ब्राह्मण की शपथ अनुल्लङ्घनीय है, अतः लेता हूँ । अथवा दीपक जल रहा है, मेरे पास दीपक बुझाने वाला कीड़ा है—उस को छोड़ता हूँ क्योंकि यह उस के छोड़ने का स्थान एवं समय है । ( छोड़ कर ) मेरे द्वारा छोड़े हुए कीड़े ने दीपक के ऊपर उड़ना आरम्भ कर दिया है । इस "भद्रपीठ" नामक कीड़े ने अपने पङ्खों की हवा से दीपक बुझा कर अन्धकार कर दिया । अथवा, मैंने भी अपने ब्राह्मण कुल में ही अन्धकार कर दिया है । जिस से कि चारों वेदों के ज्ञाता तथा दान न लेने वाले विद्वान् ब्राह्मण का पुत्र होकर भी मैं "शर्विलक" वेश्या "मदनिका" के लिए ऐसा अनर्थ कर रहा हूँ । अब ब्राह्मण को प्रसन्न करता हूँ ( इस से आभूषण लेता हूँ । )

[ लेना चाहता है । ]

विदूषक—मित्र ! तुह्मारा हाथ ठण्डा है ।

शर्विलकः—धिक् प्रमादः। सलिलसम्पर्काच्छीतलो मेऽग्रहस्तः। भवतु, कक्षयोर्हस्तं प्रक्षिपामि। ( नाट्येन सव्यहस्तमुष्णीकृत्य गृह्णाति )

विदूषकः—गहिदं ?। [ गृहीतम् ?। ]

शर्विलकः—अनतिक्रमणीयोऽयं ब्राह्मणप्रणयः, तद्गृहीतम्।

विदूषकः—दाणिं विक्किणिदपण्णो विअ वाणिओ, अहं सुहं सुविस्सं। [ इदानीं विक्रीतपण्य इव वणिक्, अहं सुखं स्वप्स्यामि। ]

शर्विलकः—महाब्राह्मण ! स्वपिहि वर्षशतम्। कष्टमेवं मदनिकागणि-कार्थे ब्राह्मणकुलं तमसि पातितम्, अथवा आत्मा पातितः ?।

---

संज्ञकेन कीटेन दीपे निर्वापिते, समन्तात् प्रवृत्ते च महीयस्यन्धकारे शर्विलको यावदेव गृहीतुमिच्छति सुवर्णभाण्डम्, तावदेव तस्य शीतलहस्ततां सूचयति विदूषकः, ततः शर्विलकः स्वप्रमादमाविष्करोति—धिक् प्रमाद इति। अहो ममायं महान् प्रमादः। जलप्रसेकान्मम हस्ते शैत्यमायातम् कक्षयोर्निवेशात् करमुष्णीकृत्य गृह्णाति विदूषकहस्तात् सुवर्णभाण्डम्।

गृहीते च भाण्डे विदूषकः पुनरपि निद्रायमाण एव कथयति—इदानीमिति। अधुना यथा कश्चिद् वणिग्जनः पणनीयं = विक्रेतव्यं वस्तु विक्रीय सुखेन स्वपिति, तथैवाहमपि स्वप्स्यामि। एतस्य प्रबल्या चिन्तया निद्राया अपि अभाव इवासीत्, इदानीञ्च तद्भयं नास्तीति सारः।

---

शर्विलक—दुःख है। बड़ा प्रमाद हुआ ! पानी के संसर्ग से मेरा हाथ शीतल हो गया है। तो मैं बगलों में हाथ दबाता हूँ।

[ अभिनय से दायें हाथ को गर्म कर के स्वर्णपात्र ले लेता है। ]

विदूषक—ले लिया ?

शर्विलक—ब्राह्मण का आग्रह अनुल्लङ्घनीय है अतः ले लिया।

विदूषक—अब मैं सामान बेच कर निवृत्त होने वाले बनिये की भाँति सुख से सोऊँगा।

शर्विलक—महाब्राह्मण ! सैकड़ों वर्ष तक सोओ ! खेद है ! मैंने गणिका "मदनिका" के लिए ब्राह्मण वंश को अन्धकार में डाल दिया। अथवा, ( कुलको

**धिगस्तु खलु दारिद्र्यमनिर्वेदितपौरुषम् ।**
**यदेतद्गर्हितं कर्म निन्दामि च करोमि च ॥१९॥**

तद्यावन्मदनिकाया निष्क्रयणार्थं वसन्तसेनागृहं गच्छामि । ( परिक्रम्यावलोक्य च ) अये, परशब्द इव । मा नाम रक्षिणः । भवतु, स्तम्भीभूत्वा तिष्ठामि । अथवा ममापि नाम शर्विलकस्य रक्षिणः । योऽहं

**मार्जारः क्रमण, मृगः प्रसरणे, श्येनो ग्रहालुञ्चने,**

---

गणिका—मदनिकार्थेऽहमिदं निन्दितं कर्म करोमीति सर्वमिदं दारिद्र्यहेतुकमिति दारिद्र्यं निन्दति—धिगस्तु—इति । यत्र पौरुषस्य निर्वेदः = निश्चय एव न भवति, एवंविधं दारिद्र्यं धिक् । दरिद्रो हि स्वकीयं पुरुषार्थमेव न कर्तव्ये कर्मणि निर्धारयति । तस्य कृपयैव चेदं कर्म निन्दामि, करोमि चेति महदाश्चर्यम् । अत्र पथ्यावक्त्रं च्छन्दः ॥१९॥

मदनिकां मोचयितुं वसन्तसेनागृहमेव गन्तुमिच्छति, कथयति च—तद्यावदिति । तत्=ततः मदनिकायाः गणिकायाः, निष्क्रयणार्थम्=मोचनार्थम् वसन्तसेनाहस्तादुन्मोच्य तां स्वहस्ते कर्तुं यावत् सर्वतः प्रथमं वसन्तसेनाया गृहमेव गच्छामि । यदर्थमिदं चौर्यकर्मातिगर्हितमपि मया कृतम्, पूर्वं तदेव कार्यं करोमीति भावः ॥

कस्यचित्पदशब्दं निशम्य शङ्कित इव स्तम्भवत् तिष्ठामि, इति विचारयन्

---

ही क्या ) स्वयं को ही डाल दिया है ।

"जिस के कारण अपने पौरुष का ही ज्ञान नहीं होता ऐसी दरिद्रता को धिक्कार है ! जिस के प्रभाव से मैं ऐसे निन्दनीय कर्म की निन्दा कर रहा हूँ ( पर साथ ही साथ ) उसे कर भी रहा हूँ ।" ॥ १९ ॥

तो अब मैं "मदनिका" को मुक्त करने के लिए "वसन्तसेना" के घर जाता हूँ । ( घूम तथा देखकर ) अरे ! पैरों की सी आहट है । क्या पहरेदार हैं ? होने दो । खम्भे की भाँति निश्चल होकर खड़ा हो जाता हूँ । अथवा, मुझ "शर्विलक" के लिए पहरेदार कुछ हैं ? जो मैं—

"झपटने में बिलाव, भागने में मृग, दूरसे वस्तु हड़पने में बाज, सोये तथा

सुप्तासुप्तमनुष्यवीर्यतुलने श्वा, सर्पणे पन्नगः ।
मायारूपशरीरवेशरचने, वाग्देशभाषान्तरे,
दीपो रात्रिषु, सङ्कटेषु डुडुमो, वाजी स्थले, नौर्जले॥२०॥

अपि च,—

भुजग इव गतौ, गिरिः स्थिरत्वे, पतगपतेः परिसर्पणे च तुल्यः ।

---

पुनः स्वस्य सामर्थ्यं प्रकाशयति—मार्जार इति । शर्विलकस्यापि मम रक्षाधिकारिणः किञ्चित्कर्तुं समर्थाः किमु ? योऽहं क्रमणे मार्जार इव, प्रसरणे = झटिति धावने मृग इव, ग्रहणे दूरतः कस्यापि पदार्थस्य आलुञ्चने सहसाऽऽदाने श्येन इवास्मि, सुप्तानां जाग्रतानाञ्च वीर्यस्य = पराक्रमस्य तुलने = तोलने = समीकरणे, श्वा, सर्पणे = संसर्पणे च सर्पः, रूपस्य शरीरवेषस्य च रचने माया = छलमस्मि, देशभाषान्तरे = अन्यदेशभाषाविज्ञाने वाणी–तुल्यः, रात्रिषु दीपसदृशः, संकटेषु डुडुमः = प्राणिविशेषः, अश्वतरो वृको वेति केचिन्मन्यन्ते, स्थले वाजी = अश्वः, जले च नौकेवास्मि, तस्य कृते रक्षिणो वराकाः के नाम ?

अलङ्कारोऽत्र माला-रूपकम् । शार्दूलविक्रीडितम् छन्दः ॥२०॥

भूयोऽपि स्वसामर्थ्यं प्रकाशयति—भुजग इति । अहं गतौ भुजगः = सर्प इव, स्थिरत्वे च पर्वत इवास्मि, परिसर्पणे = सहसा प्रसरणे च पतगानां = पक्षिणां स्वामिनो गरुडस्य तुल्यः, भुवनानां लोकानामवलोकने शश इवास्मि, अपरस्य

---

जागते हुए मनुष्य के पराक्रम को जानने में कुत्ता, रेंगने में सर्प, रूप, शरीर, तथा वेश की रचना में माया, देश–विदेशों की भाषा जानने में वाणी, रात्रि में दीपक, आपत्ति के समय 'डुडुम' ( भेड़िया आदि ), स्थल पर घोड़ा, जल में नौका के समान हूँ । ( ऐसे सामर्थ्यशाली को भी रक्षकों से क्या भय ? । )" ॥२०॥

और भी—

"गति में सर्प, स्थिरता में पर्वत, सहसा वस्तु को लेने में "गरुड़", लोगों को

**शश इव भुवनावलोकनेऽहं, वृक इव च ग्रहणे, बले च सिंहः ॥२१॥**

( प्रविश्य )

रदनिका—हद्धी हद्धी, बाहिरदुआरसालाए पसुत्तो वड्ढमाणओ। सोवि एत्थ ण दीसइ। भोदु। अज्जमित्तेअं सद्दावेमि। [ हा धिक् हा धिक्, बहिर्द्वारशालायां प्रसुप्तो वर्धमानकः। सोऽप्यत्र न दृश्यते। भवतु, आर्यमैत्रेयमाह्वयामि। ]　　( इति परिक्रामति )

शर्विलकः—( रदनिकां हन्तुमिच्छति, निरूप्य ) कथं स्त्री। भवतु, गच्छामि। ( इति निष्क्रान्तः )

रदनिका—( गत्वा, सत्रासम् ) हद्धी हद्धी, अम्हाणं गेहे संधिं कप्पिअ चोरो णिक्कमति। भोदु, मित्तेअं गदुअ पबोवेमि। ( विदूषकमुपगम्य ) अज्जमित्तेअ ! उट्ठेहि उट्ठेहि। अम्हाणं गेहे संधिं कप्पिअ चोरो णिक्कंतो।

[ हा धिक् हा धिक्, अस्माकं गृहे संधिं कल्पयित्वा चौरो निष्क्रामति। भवतु मैत्रेयं गत्वा प्रवोधयामि। आर्यमैत्रेय ! उत्तिष्ठोत्तिष्ठ। अस्माकं गेहे संधिं

---

ग्रहणे वृक इव, बले च सिंहसदृशोऽस्मि। को नामाऽन्यो मया सह पराक्रमे ? अत्रापि मालारूपकालङ्कारः। अतिशयोक्तिश्च। पुष्पिताग्रा च्छन्दः ॥२१॥

---

देखने में शशक, किसी को पकड़ने में भेड़िया तथा बल में सिंह के समान हूं। ( मेरे सामने ठहरने में किसका सामर्थ्य है ? )" ॥२१॥

( प्रवेश कर )

रदनिका—दुःख है ! दुःख है ! बाहर को द्वारशाला ( ड्योढ़ी ) में "वर्धमानक" सोता था, वह भी अब दिखाई नहीं पड़ रहा है। (कहाँ गया ?) इस लिए मैं "आर्य मैत्रेय" को आवाज़ लगाती हूँ।

[ घूमती है। ]

शर्विलक—( "रदनिका" को मारना चाहता है ! ( देखकर ) क्या स्त्री है ! अस्तु जाता हूँ।

[ चला जाता है। ]

रदनिका—( जाकर भय से ) हाय ! हाय ! हमारे घर में कुमल लगाकर

कल्पयित्वा चौरो निष्क्रान्तः । ]

विदूषकः—( उत्थाय ) आः दासीए धीए ! किं भणासि—'चोरं कप्पिअ संधी णिक्कंतो' ? । [ आः दास्याःपुत्रिके ! किं भणसि—'चौरं कल्पयित्वा संधिर्निष्क्रान्तः ?' । ]

रदनिका—हदास ! अलं परिहासेण । किं ण पेक्खसि एणं ? । [ हताश! अलं परिहासेन । किं न प्रेक्षस एनम् ? । ]

विदूषकः—आः दासीए धीए ! किं भणासि—'दुदिअं विअ दुआरअं उग्घाडिदं' त्ति ? । भो वअस्स चारुदत्त ! उट्ठेहि उट्ठेहि । अम्हाणं गेहे संधिं दइअ चोरो णिक्कंतो । [ आ दास्याःपुत्रिके ! किं भणसि—'द्वितीयमिव द्वारमुद्घाटितम्' इति ? । भो वयस्य चारुदत्त ! उत्तिष्ठोत्तिष्ठ, अस्माकं गेहे संधिं दत्त्वा चौरो निष्क्रान्तः । ]

चारुदत्तः—भवतु, भोः ! अलं परिहासेन ।

विदूषकः—भो ! ण परिहासो । पेक्खदु भवं । [ भोः ! न परिहासः, प्रेक्षतां भवान् । ]

---

चोर भाग गया ! अस्तु; "मैत्रेय" को जाकर जगाती हूँ । ( "विदूषक" के पास पहुँच कर ) "आर्य मैत्रेय !" उठो ! उठो ! हमारे घर में कूमल लगाकर चोर भाग गया ।

विदूषक—अरी ! दासीपुत्रि ! क्या बकती है कि—"चोर फोड़कर सन्धि निकल गई ?"

रदनिका—हताश ! हँसी मत करो ! क्या इसे नहीं देखते ?

विदूषक—अरी ! दासीपुत्रि ! क्या कहती है कि—"दूसरा द्वार-सा ही खोल दिया ।" मित्र ! "चारुदत्त" ! उठो ! उठो ! हमारे घर में सेंध लगा कर चोर भाग गया !

चारुदत्त—हँसी रहने दो ।

विदूषक—अजी ! हँसी नहीं है । आप देखें ।

चारुदत्तः—कस्मिन्नुद्देशे ? ।

विदूषकः—भो ! एसो । [ भो ! एषः । ]

चारुदत्तः—( विलोक्य ) अहो, दर्शनीयोऽयं संधिः,—

**उपरितलनिपातितेष्टकोऽयं,**
**शिरसि तनुर्विपुलश्च मध्यदेशे ।**
**असदृशजनसंप्रयोगभीरो-**
**र्हृदयमिव स्फुटितं महागृहस्य ॥२२॥**

---

विदूषकवचनानन्तरं चारुदत्तः शयनं परित्यज्य सन्धिरचनाचातुर्यं प्रशंसति—उपरितलेति । अयं सन्धिः उपरितलात् = ऊर्ध्वप्रदेशात् निपातिता इष्टका यस्मात् सः, शिरोभागे संकुचितः, मध्यदेशे च विपुलः, असदृशजनस्य = अनभ्यस्तकर्मणो जनस्य प्रयोगे = चौर्यादिकर्मणः प्रयोगे भीरोः = भीतस्य हृदयमिव महाभवनस्य हृदयं स्फुटितम् । यथा कस्यचिदनात्मसदृशकर्म कुर्वतो हृदयं स्फुटति तथैव मन्येऽस्य महाभवनस्यापि चौर्याख्यानुचितकर्मणि प्रसक्तस्य हृदयं स्फुटितम् । एतेनाद्यावधि चौर्यमस्मिन् भवनेनाभूदयमाद्योऽवसरः, इति वस्तु व्यज्यते ।

अत्र समासोक्तिरलङ्कारः, उत्प्रेक्षा च । पुष्पिताग्रा च्छन्दः ॥२२॥

---

**चारुदत्त—कहाँ है ?**

**विदूषक—यह रहा ।**

**चारुदत्त—( देख कर ) ओह ! यह कूमल देखने योग्य है !**

"ऊपर से ईंटें गिरी हुई होने के कारण यह शिरोभाग में छोटा ( सँकरा ) तथा बीच में चौड़ा है । ( ऐसा प्रतीत होता है कि मानों ) चोरी आदि के कार्य में अकुशल व्यक्ति के डरे हुए हृदय की भाँति ही यह महाभवन का भी हृदय फट गया है । ( अर्थात्—जैसे किसी का हृदय बुरा कार्य करते समय फटने-सा लगता है वैसे ही ( मैं समझता हूँ ) इस महाभवन का हृदय भी फट गया है । इससे—"आज तक कभी हमारे घर चोरी नहीं हुई । यह प्रथम अवसर है" यह निष्कर्ष निकलता है । )" ॥ २२ ॥

कथमस्मिन्नपि कर्मणि कुशलता ? ।

विदूषकः—भो वअस्स ! अअं संधी दुवेहिं ज्जेव दिण्णो भवे—आदु आगंतुएण, सिक्खिदुकामेण वा ? । अण्णधा इध उज्जइणीए को अम्हाणं घरविहवं ण जाणादि ? । [ भो वयस्य ! एष संधिर्द्वाभ्यामेव दत्तो भवेत्—अथवाऽऽगन्तुकेन, शिक्षितुकामेन वा । अन्यथात्रोज्जयिन्यां कोऽस्माकं गृहविभवं न जानाति ? । ]

चारुदत्तः—

**वैदेश्येन कृतो भवेन्मम गृहे व्यापारमभ्यस्यता,**
**नासौ वेदितवान् धनैर्विरहितं विस्रब्धसुप्तं जनम् ।**
**दृष्ट्वा प्राङ्महतीं निवासरचनामस्माकमाशान्वितः,**
**संधिच्छेदनखिन्न एव सुचिरं पश्चान्निराशो गतः ॥२३॥**

---

वैदेशिकेनाभ्यस्यता वेति द्वाभ्यामेवायं सन्धिर्दत्तो भवेदिति विदूषकवचनं निशम्य चारुदत्तः कथयति—वैदेश्येनेति । वैदेशिकेन, व्यापारमभ्यस्यता वा केनापि दत्तोऽयं सन्धिस्तथापि नासौ जानाति, यदस्माकं गृहमिदं धनरहितम् ; अथवा प्राक्तनीं प्रचुरां सम्पदमालोक्य धनाशयाऽत्र प्रविष्टः, पश्चाच्च सन्धिच्छेदनतः खिन्न इव निराशो निर्गतः, मम त्वयमेव महान् खेदोऽस्ति, यदसौ स्वबन्धुभ्यः किं

---

क्या इस कार्य में भी कुशलता है ?

विदूषक—मित्र ! यह कूमल दो ने ही लगाया होगा । या तो किसी ( परदेशी ) आगन्तुक ने अथवा किसी अभ्यास करनेवाले ने । नहीं तो यहाँ "उज्जयिनी" में कौन हमारी दशा नहीं जानता है ?

चारुदत्त—"चाहे यह कूमल किसी परदेसी ने लगाया हो अथवा किसी अभ्यास करनेवाले ने । परन्तु उस ने धनरहित विश्वासपूर्वक सोये हुए हम को नही जाना ( हमारी दशा नहीं जानी ) । पहिले इस महाभवन को देख कर वह आशान्वित होकर घुसा परन्तु कूमल लगाने से खिन्न वह बाद में निराश होकर ही गया । ( बेचारा कितनी आशा से घुसा, परन्तु एक कौड़ी भी हाथ नहीं लगी और कूमल खोदने का व्यर्थ परिश्रम पड़ा । )" ॥२३॥

ततः सुहृद्भ्यः किमसौ कथयिष्यति तपस्वी—'सार्थवाहसुतस्य गृहं प्रविश्य न किंचिन्मया समासादितम्' इति ? ।

विदूषकः—भो कधं तं ज्जेव चोरहदअं अणुसोचसि ? । तेण चिंतिदं महंतं एदं गेहं । इदो रअणभंडअं सुअण्णभंडअं वा णिक्कामिस्सं । ( स्मृत्वा, सविषादमात्मगतम् ) कहिं तं सुवण्णभंडअं । ( पुनरनुस्मृत्य, प्रकाशम् ) भो वअस्स ! तुमं सव्वकालं भणासि—'मुक्खो मित्तेअओ, अपंडिदो मित्तेअओ' त्ति । सुट्ठु मए किदं तं सुवण्णभंडअं भवदो हत्थे समप्पअंतेण । अण्णधा दासीए पुत्तेण अवहिदं भवे । [ भोः ! कथं तमेव चौरहतकमनुशोचसि ? । तेन चिन्तितं महदेतद्गृहम् । इतो रत्नभाण्डं सुवर्णभाण्डं वा निष्क्रामयिष्यामि । कुत्र तत्सुवर्णभाण्डम् । भो वयस्य ! त्वं सर्वकालं भणसि—'मूर्खो मैत्रेयः, अपण्डितो मैत्रेयः' इति । सुष्ठु मया कृतं तत्सुवर्णभाण्डं भवतो हस्ते समर्पयता । अन्यथा दास्याः पुत्रेणापहृतं भवेत् । ]

चारुदत्तः—अलं परिहासेन ।

---

कथयिष्यति वराकः ? कियत्या आशया प्रविष्टः, न च कपर्दिकापि लब्धा सार्थवाहस्यापि गृहेऽपीति । अत्र काव्यलिङ्गमलङ्कारः । तल्लक्षणञ्च यथा—"हेतोर्वाक्यपदार्थत्वे काव्यलिंगं निगद्यते" इति । शार्दूलविक्रीडितं च्छन्दः ॥२३॥

---

अब वह बेचारा अपने बन्धु-बान्धवों से क्या कहेगा कि—"सार्थवाह के पुत्र के घर में जाकर मैंने कुछ भी नहीं पाया" ?

विदूषक—अरे ! उसी दुष्ट चोर की चिन्ता कर रहे हो । उसने सोचा होगा कि—"यह बहुत बड़ा घर है । यहाँ से रत्नों का अथवा सोने का पात्र निकालूँगा । ( स्मरण कर विषादपूर्वक स्वयं ही ) वह 'सुवर्णपात्र' कहाँ है ?

( स्मरण कर प्रकाश में ) मित्र ! तुम सदा कहा करते हो कि—"मैत्रेय" मूर्ख है । "मैत्रेय" नासमझ है" । परन्तु मैंने वह सुवर्णपात्र तुम्हारे हाथ में देते हुए बहुत अच्छा किया । अन्यथा, ( हरामजादे ) दासीपुत्र ने चुरा लिया होता ।

चारुदत्त—हँसी मत करो ।

विदूषकः—भो! जइ णाम अहं मुक्खो, ता किं परिहासस्स वि देशआलं ण जाणामि ?। [ भोः! यथा नामाहं मूर्ख,स्तत्किं परिहासस्यापि देशकालं न जानामि ?। ]

चारुदत्तः—कस्यां वेलायाम् ?।

विदूषकः--भो! जदा तुमं मए भणिदोसि--'शीदलो दे अग्गहत्थो'। [ भोः! यदा त्वं मया भणितोऽसि--'शीतलस्तेऽग्रहस्तः'। ]

चारुदत्तः—कदाचिदेवमपि स्यात्। ( सर्वतो निरूप्य, सहर्षम् ) वयस्य! दिष्ट्या ते प्रियं निवेदयामि।

विदूषकः—किं ण अवहिदं ?। [ किं नापहृतम् ?। ]

चारुदत्तः—हृतम्।

विदूषकः—तधा वि किं पिअं ?। [ तथापि किं प्रियम् ?। ]

चारुदत्तः—यदसौ कृतार्थो गतः।

---

दिष्टया ते प्रियं निवेदयामीति चारुदत्तः प्राह। "दिष्टया" इति नाटकीय-भाषायां "सौभाग्येन," इत्यर्थेऽव्ययपदम्।

---

विदूषक—अजी! क्या मैं इतना मूर्ख हूँ जो कि परिहास का देश-काल भी नहीं जानता ?

चारुदत्त—किस समय ( दिया था ? )

विदूषक—जब तुमने कहा था कि—"तुम्हारा हाथ ठण्डा है"।

चारुदत्त—कदाचित् ऐसा ही हुआ हो।

( चारों ओर देखकर हर्ष से )

मित्र! तुम्हें एक प्रिय बात सुनाता हूँ।

विदूषक—क्या नहीं चुराया ?

चारुदत्त—चुरा लिया।

विदूषक—तो फिर क्या "प्रिय" है ?

चारुदत्त—यह कि वह कृतार्थ होकर चला गया।

विदूषकः—णासो खु सो । [ न्यासः खलु सः । ]

चारुदत्तः—कथं न्यासः ? । ( मोहमुपगतः )

विदूषकः—समस्ससदु भवं । जइ णासो चोरेण अवहिदो तुमं किं मोहं उवगदो ? । [ समाश्वसितु भवान् । यदि न्यासश्चौरेणापहृतस्त्वं किं मोहमुपगतः ? ]

चारुदत्तः—( समाश्वस्य ) वयस्य !

**कः श्रद्धास्यति भूतार्थं सर्वो मां तुलयिष्यति ।**
**शङ्कनीया हि लोकेऽस्मिन्निष्प्रतापा दरिद्रता ॥२४॥**

भोः ! कष्टम् ,—

---

न्यासरूपेण धृतं सुवर्णभाण्डं चौरेणापहृतमित्याकर्ण्य मूर्च्छितः, क्षणानन्तरं समाश्वस्य कथयति—कः श्रद्धास्यतीति । वयस्य ! भूतार्थम् = सत्यमर्थं, कः श्रद्धास्यति ? कस्यापि विश्वासो नैव भविष्यति । यतोऽस्मिन् जगति निष्प्रतापाम् दरिद्रतां को विश्वसिति, सर्वोऽपि लोको दरिद्रं जनमुपहसति । अनेनैव स्वकीये गृहे धृतं भवेत्, कथितञ्च चौरेणापहृतमिति, लोको वदिष्यतीति भावः ।

अत्र सामान्येन विशेषस्य समर्थनेनार्थान्तरन्यासोऽलङ्कारः । पथ्यावक्त्रं च्छन्दः ॥२४॥

---

विदूषक—वह न्यास ( धरोहर ) है ।

चारुदत्त—क्या न्यास है ?

[ मूर्च्छित हो जाता है । ]

विदूषक—आप धैर्य धारण करें । यदि न्यास चोर ने चुरा लिया तो तुम क्यों मूर्च्छित हो गये ? ( चुराया चोर ने है और मूर्च्छित तुम होते हो ! )

चारुदत्त—( प्रकृतिस्थ होकर । ) मित्र !

"सच्ची बात पर कौन विश्वास करेगा ? सब मुझ पर ही सन्देह करेंगे क्योंकि इस संसार में मनुष्य को निस्तेज बना देनेवाली दरिद्रता शङ्कनीय होती है" ॥२४॥

खेद है !

**यदि तावत् कृतान्तेन प्रणयोऽर्थेषु मे कृतः ।**
**किमिदानीं नृशंसेन चारित्रमपि दूषितम् ? ॥२५॥**

विदूषकः—अहं खु अवलविस्सं—'केण दिण्णं, केण गहिदं, को वा सक्खि' त्ति । [ अहं खल्वपलपिष्यामि—'केन दत्तम् , केन गृहीतम् , को वा साक्षी' इति । ]

चारुदत्तः—अहमिदानीमनृतमभिधास्ये ? ।

**भैक्ष्येणाप्यर्जयिष्यामि पुनर्न्यासप्रतिक्रियाम् ।**
**अनृतं नाभिधास्यामि चारित्रभ्रंशकारणम् ॥२६॥**

---

पुनः सखेदमाह—यदि तावदिति । यदि तावत् कृतान्तेन = दैवेन ममार्थेषु = धनेषु प्रणयः = प्रीतिः कृतः, धनानि गृहीतानि, तथापि नृशंसेन = क्रूरेण मम चारित्रमपि किमिति दूषितम् ? इदं सर्वथाऽसहनीयं दुःखमनुभवामि, किं करोमि ? अत्रापि पूर्वोक्तमेव च्छन्दः ॥२५॥

अहन्तावदपलपिष्यामि = मिथ्या वदिष्यामि, इति विदूषकस्य वचनमाकर्ण्य चारुदत्तः कथयति—भैक्ष्येणापीति । भो वयस्य ! किमहमिदानीं मृषाभाषणं करिष्यामि ? इदन्तु त्वया निश्चितं मन्यताम्—भिक्षावृत्त्याऽपि न्यासप्रत्यावर्तनं करिष्यामि, किन्तु चारित्र-भ्रंशसम्पादकं मिथ्याभाषणं नैव करिष्यामि ! एकस्य पापस्य कृतेऽनेकानि पापानि करणीयानि भवन्ति, यज्जातं, तत्तु जातमेव । मिथ्याभाषणन्तु नैव करोमि, इति चारुदत्तस्य चरित्रोज्वलतायाः किमतः परं निदर्शन स्यात् ? ॥२६॥

---

"यदि भाग्य ने मेरा धन छीन लिया तो क्यों उस निर्दय ने अब मेरे चरित्र को भी कलङ्कित कर दिया है ?" ॥२५॥

विदूषक—मैं यह बात बना दूँगा कि—"किसने दिया है ? किसने लिया है ? और कौन साक्षी ( गवाह ) है ?"

चारुदत्त—क्या मैं अब झूँठ बोलूँगा ?

"भीख माँगकर भी धरोहर लौटाऊँगा परन्तु चरित्रहीन बना देने वाला मिथ्या-भाषण नहीं करूँगा" ॥२६॥

रदनिका—ता जाव अज्जा धूदाए गदुअ णिवेदेमि । [ तद्यावदार्या धूतायै गत्वा निवेदयामि । ] ( इति निष्क्रान्ताः सर्वे )

( ततः प्रविशति चेट्या सह चारुदत्तवधूः )

वधूः—( ससंभ्रमम् ) अइ, सच्चं अवरिक्खदसरीरो अज्जउत्तो अज्जमित्तेएण सह । [ अयि ! सत्यमपरिक्षतशरीर आर्यपुत्र आर्यमैत्रेयेण सह । ]

चेटी—भट्टिणि ! सच्चं, किं तु जो सो वेस्साजणकेरको अलंकारओ सो अवहिदो । [ भर्त्रि ! सत्यम्, किं तु यः स वेश्याजनस्यालंकारकः सोऽपहृतः । ]

( वधूर्मोहं नाटयति )

चेटी—समस्ससदु अज्जा धूदा । [ समाश्वसित्वार्या धूता । ]

---

चौर्यसमाचारेण व्यथितहृदया चारुदत्तस्य धर्मपत्नी धूता रदनिकां पृच्छति—अयि, इति । अयि रदनिके ! सत्यमेवार्यपुत्रः स्वमित्रेण मैत्रेयेण सहापरिक्षितशरीरस्तु वर्तते ? शरीरे चौरेणाघातस्तु न कृतः ?

---

रदनिका—तब तक मैं "आर्या धूता" से ( इस घटना का ) निवेदन करती हूँ ।

[ सब चले जाते हैं । ]

[ तदनन्तर "चेटी" के साथ "चारुदत्त" की पत्नी ( "धूता" ) का प्रवेश होता है । ]

वधू—( घबराहट के साथ ) अरी ! "आर्यपुत्र" "आर्य मैत्रेय" के साथ क्या सचमुच सकुशल हैं ? ( उनको तो कोई चोट नहीं आई ? )

चेटी—स्वामिनि ! यह सत्य है । परन्तु वह जो वेश्या का अलङ्कार था, वह चुरा लिया गया ।

[ 'वधू' मूर्च्छा का अभिनय करती है । ]

चेटी—"आर्या धूता" धैर्य धारण कीजिए ।

वधूः—( समाश्वस्य ) हञ्जे ! किं भणासि—'अवरिक्खदसरीरो अज्ज-उत्तो' त्ति ? । वरं दाणिं सो सरीरेण परिक्खदो, ए उण चारित्तेण। संपदं उज्जइणीए जणो एव्वं मंतइस्सदि—दलिद्ददाए अज्जउत्तेण ज्जेव ईदिसं अकज्जं अणुचिट्ठिदं' त्ति । ( ऊर्ध्वमवलोक्य, निःश्वस्य च ) भअवं कअंत ! पोक्खरवत्तपडिदजलबिंदुचंचलेहिं कीलसि दलिद्दपुरिसभाअ-धेएहिं । इअं च मे एक्का मादुघरलद्धा रअणावली चिट्ठदि । एदं पि अदिसोंडीरदाए अज्जउत्तो ण गेण्हिस्सदि । हञ्जे ! अज्जमित्तेअं दाव सद्दावेहि । [ चेटि ! किं भणसि—'अपरिक्षतशरीर आर्यपुत्र' इति ? वर-मिदानीं स शरीरेण परिक्षतः । न पुनश्चारित्र्येण । सांप्रतमुज्जयिन्यां जन एवं मन्त्रयिष्यति—'दरिद्रतयार्यपुत्रेणैवेदृशमकार्यमनुष्ठितम्' इति । भगवन् कृतान्त ! पुष्करपत्रपतितजलबिन्दुचञ्चलैः क्रीडसि दरिद्रपुरुषभागधेयैः । इयं च मे एका मातृगृहलब्धा रत्नावली तिष्ठति । एतामप्यतिशौण्डीरतयार्यपुत्रो न ग्रहीष्यति । ।

---

अपरिक्षतकायस्तु वर्तते, परं वेश्यायाः सुवर्णभाण्डमपहृतमित्याकर्ण्यातिमात्रं दुःखिता धूता चारित्रभ्रंशोऽनुचितः, इति दैवमुपालभते—भगवन् , कृतान्त !' इति । हा दैव ! पुष्करस्य = कमलस्य पत्रे = दले पतितजलबिन्दुवत् , चञ्चलैः दरिद्रपुरुषस्य भाग्यधेयैः समं कथं क्रीडां करोषि ? सर्वथाऽनुचितमेतत् ! इयञ्चैका मम मातुर्गृहादुपलब्धा रत्नावली मम समीपे वर्तते, अतिदक्षिणतया, दातृत्वेन चार्यपुत्र एतामपि न स्वीकरिष्यति । स्त्रीधने भद्रपुरुषाणामिच्छा नैव भवति, अत-

---

वधू—( आश्वस्त होकर ) हञ्जे ! क्या कहती हो—"कि 'आर्यपुत्र' शरीर से सकुशल हैं । यह ठीक है कि वे शरीर से सुरक्षित हैं, परन्तु चरित्र से नहीं । अब "उज्जयिनी" निवासी जन इस प्रकार मन्त्रणा करेंगे कि —"दरिद्रता के कारण "चारुदत्त" ने ऐसा अकार्य कर डाला है ।" ( आकाश को देख लम्बा श्वास खींचकर ) हा ! दैव ! कमल-पत्र पर पड़ी हुई जल-बिन्दुओं के समान चञ्चल निर्धन पुरुष के भाग्य के साथ क्यों खेल करते हो ? ( यह सर्वथा अनुचित है ! ) यह मेरे पास माता के घर से प्राप्त हुई 'रत्नावली' ( आभूषणविशेष ) है । इसको "आर्यपुत्र" दानी होने के कारण ( "वसन्तसेना" को उस 'सुवर्णभाण्ड' के

चेटि ! आर्यमैत्रेयं तावदाह्वय । ]

चेटी—जं अज्जा धूदा आणवेदि । ( विदूषकमुपगम्य ) अज्जमित्तेअ ! धूदा दे सद्दावेदि । [ यदार्या धूताज्ञापयति । आर्यमैत्रेय ! धूता त्वामाह्वयति । ]

विदूषकः—कहिं सा ? । [ कुत्र सा ? । ]

चेटी—एसा चिट्ठदि, उवसप्प । [ एषा तिष्ठति, उपसर्प । ]

विदूषकः—( उपसृत्य ) सोत्थि भोदीए । [ स्वस्ति भवत्याः ।

वधूः—अज्ज ! वंदामि । अज्ज ! पौरत्थिमामुहो होहि । [ आर्य ! वन्दे । आर्य ! पुरस्तान्मुखो भव । ]

विदूषकः—एसो भोदि ! पौरत्थिमामुहो संवुत्तो म्हि । [ एष भवति ! पुरस्तान्मुखः संवृत्तोऽस्मि । ]

वधूः—अज्ज ! पडिच्छ इमं । [ आर्य ! प्रतीच्छेमाम् । ]

विदूषकः—किं ण्णेदं ? । [ किं न्विदम् ? । ]

वधूः—अहं खु रअणसट्ठिं उववसिदा आसं । तहिं जधाविहवाणुसारेण

---

स्तदर्थं मैत्रेय माकारयेति रदनिकामाह ।

अहं क्खु—इति । मया रत्नषष्ठी-व्रते उपवासः कृतः, तत्साङ्गतासिध्यर्थं यथा-

---

बदले में देने के लिए ) नहीं लेंगे । रदनिके ! इसलिए "आर्य मैत्रेय" को बुला !

चेटी—जो "आर्या धूता" आदेश देती हैं । ("विदूषक" के पास पहुँचकर) "आर्य मैत्रेय !" "धूता" तुमको बुलाती हैं ।

विदूषक—वह कहा हैं ?

चेटी—ये बैठी हैं । आ जाओ !

विदूषक—( पास जाकर ) आपका कल्याण हो !

वधू—आर्य ! प्रणाम करती हूँ । आर्य ! जरा सामने की ओर मुख करिये ।

विदूषक—लीजिये, मैंने आपकी ओर मुख कर लिया ।

वधू—आर्य ! इसे लीजिये !

विदूषक—यह क्या है ?

वधू—मैंने "रत्नषष्ठी" को उपवास किया था । ( उसका नियम है कि )

बम्हणो पडिग्गाहिदव्वो। सो अ ण पडिग्गाहिदो, ता तस्स किदे पडिच्छ इमं रअणमालिअं। [ अहं खलु रत्नषष्ठीमुपोषितासम्। तत्र यथाविभवानुसारेण ब्राह्मणः प्रतिग्राहितव्यः। स च न प्रतिग्राहितः, तत्तस्य कृते प्रतीच्छेमां रत्नमालिकाम्। ]

विदूषकः—( गृहीत्वा ) सोत्थि, गमिस्सं; पिअवअस्सस्स णिवेदेमि। [ स्वस्ति, गमिष्यामि, प्रियवयस्यस्य निवेदयामि। ]

वधूः—अज्जमित्तेअ! मा खु मं लज्जावेहि। [ आर्यमैत्रेय! मा खलु मां लज्जितां कुरु। ] ( इति निष्कान्ता )

विदूषकः—( सविस्मयम् ) अहो, से महाणुभावदा। [ अहो, अस्या महानुभावता। ]

चारुदत्तः—अये, चिरयति मैत्रेयः। मा नाम वैक्लव्यादकार्यं कुर्यात्। मैत्रेय, मैत्रेय!।

विदूषकः—( उपसृत्य ) एसो म्हि। गेण्ह एदं। ( रत्नावलीं दर्शयति ) [ एषोऽस्मि, गृहाणैताम्।]

चारुदत्तः—किमेतत्?

---

विभवं ब्राह्मणाय किञ्चिद् धनादिकमवश्यं देयमिति नियमः, ततस्तदर्थमियं रत्नावली भवता गृह्यतामिति।

---

उसमें यथाशक्ति ब्राह्मण को दान देना चाहिए। वह मैंने नहीं दिया था अतः आप इस रत्नमाला को लें।

विदूषक—( लेकर ) कल्याण हो! अब मैं जाता हूँ। प्रियमित्र ( "आर्य चारुदत्त" ) से निवेदन करूँगा।

वधू—आर्य मैत्रेय! लज्जित मत करिये। [ चली जाती है। ]

विदूषक—( विस्मय के साथ ) ओह! इसकी उदारता!

चारुदत्त—अरे! "मैत्रेय" विलम्ब कर रहे हैं। कहीं विकलता के कारण कोई अनर्थ न कर बैठें। मैत्रेय! मैत्रेय!

विदूषक—(पास जाकर) उपस्थित हूँ। इसे लो। (रत्नावली दिखलाता है।)

चारुदत्त—यह क्या है?

विदूषकः—भो, जं दे सरिसदारसंगहस्स फलं । [ भोः, यत्ते सदृशदार-संग्रहस्य फलम् ।

चारुदत्तः—कथं ब्राह्मणी मामनुकम्पते ? । कष्टम्, इदानीमस्मि दरिद्रः ।

आत्मभाग्यक्षतद्रव्यः स्त्रीद्रव्येणानुकम्पितः ।
अर्थतः पुरुषो नारी या नारी साऽर्थतः पुमान् ॥२७॥

अथवा, नाहं दरिद्रः; यस्य मम—

विभवानुगता भार्या, सुखदुःखसुहृद्भवान् ।

---

भोः ! सदृश-धर्मपत्नी-संग्रहस्यैवेदं फलमिति विदूषकः प्राह—यत् ते—इति ।

विदूषकमुखाद्ब्राह्मण्या अनुकम्पामाकर्ण्याह चारुदत्तः—सत्यमिदानीमस्मि दरिद्रः—आत्मभाग्येति । आत्मनः = स्वस्य भाग्येन क्षतधनो भूत्वेदानीं स्त्रीधनेनानुकम्पितोऽस्मीति । अर्थतः पुरुषो वास्तविकः पुरुषः, तदभावे तु स नारीसदृशः । नार्यपि चार्थवशादेव पुरुषसमा भवति । ततश्च मम पार्श्वे धनं नास्ति, अतो दरिद्रोऽस्मीति मयाऽद्य ज्ञातम् । अत्र काव्यलिङ्गालङ्कारः पथ्यावक्त्रं छन्दः ॥२७॥

पुनः स्वस्यादरिद्रतां समर्थयते—विभवानुगतेति । अथवा—नाहं दरिद्रः, यतो मम भार्या विभवेन = धनेनानुगता, धनवती, सुख-दुःख-समानो भवान्

---

विदूषक—मित्र ! अपने जैसी धर्मपत्नी के संग्रह का ही यह फल है ।

चारुदत्त—क्या ब्राह्मणी मुझ पर दया कर रही है ? खेद है ! इस समय मैं ( सच्चा ) निर्धन हूँ ।

"दुर्दैव के कारण नष्टधन तथा स्त्री के धन से दयाप्राप्त पुरुष वास्तव में स्त्री के समान हो जाता है । और स्त्री भी धन के कारण पुरुष हो जाती है । ( अतः सिद्ध है कि धन का बड़ा माहात्म्य है । मेरे पास धन नहीं है अतः मैं आज इस निश्चय पर पहुँचा हूँ कि मैं सच्चा दरिद्र हूँ ।" ) ॥२७॥

अथवा, मैं निर्धन नहीं हूँ । जिस मेरी—"भार्या धन से अनुगत है, सुख-दुःख

**सत्यं च न परिभ्रष्टं, यद्दरिद्रेषु दुर्लभम् ॥२८॥**

मैत्रेय ! गच्छ रत्नावलीमादाय वसन्तसेनायाः सकाशम् ! वक्तव्या च सा मद्वचनात्—'यत्खल्वस्माभिः सुवर्णभाण्डमात्मीयमिति कृत्वा विश्रम्भाद्द्यूते हारितम्; तस्य कृते गृह्यतामियं रत्नावली' इति।

विदूषकः—मा दाव अक्खाइदस्स अभुत्तस्स अप्पमुल्लस्स चोरेहि अवहिदस्स कारणादो चतुःसमुद्दसारभूदा रअणावली दीअदि। [ मा तावदखादितस्याभुक्तस्याल्पमूल्यस्य चौरैरपहृतस्य कारणाच्चतुःसमुद्रसारभूता रत्नावली दीयते। ]

चारुदत्तः—वयस्य ! मा मैवम्,—

**यं समालम्ब्य विश्वासं न्यासोऽस्मासु तया कृतः।**

---

मित्रम्, सत्यञ्च मम न परिक्षीणम्, एतानि त्रीण्यपि वस्तूनि दरिद्रेषु दुर्लभानि मम च सन्तीत्यतो वच्मि—"नास्मि दरिद्रः" इति ॥२८॥

अस्माकमेवेति बुध्या तत् सुवर्णभाण्डं मया द्यूते हारितम्, तत्स्थाने रत्नावली-गृह्यतामिति वसन्तसेनासन्देशं श्रुत्वा, अल्पमूल्यस्य चौरेणापहृतस्य सुवर्णभाण्डस्य

---

के साथी आप जैसे मित्र हैं तथा जो दरिद्रों में दुर्लभ है वह सत्य भी मेरा क्षीण नहीं हुआ है। ( ये तीनों वस्तुएँ दरिद्रों के लिए दुर्लभ हैं परन्तु मेरे पास हैं अतः मैं "दरिद्र" नहीं हूँ। )" ॥२८॥

मैत्रेय ! 'रत्नावली' लेकर "वसन्तसेना" के पास जाओ ! और उससे मेरी ओर से कहना कि—"आपका सुवर्णपात्र, जो कि हमने अपना समझकर जूए में हरा दिया है; उसके बदले में इस रत्नावली को ले लीजिए।"

विदूषक—बिना खाये-पिये, बिना उपभोग किये हुए, कम मूल्यवाले तथा चोरों से चुराये गए 'सुवर्णपात्र' के लिए "चारों समुद्रों की सारभूत "रत्नावली" क्यों दे रहे हो ?

चारुदत्त—मित्र ! ऐसा मत कहो।

"जिस ( विश्वास ) के बल पर उसने ( "वसन्तसेना ने ) यह धरोहर हमारे

तस्यैतन्महतो मूल्यं प्रत्ययस्यैव दीयते ॥ २९ ॥

तद्वयस्य ! अस्मच्छरीरस्पृष्टिकया शापितोऽसि, नैनामग्राहयित्वात्रागन्तव्यम् । वर्धमानक !

एताभिरिष्टिकाभिः संधिः क्रियतां सुसंहतः शीघ्रम् ।
परिवादबहुदोषान्न यस्य रक्षां परिहरामि ॥३०॥

वयस्य मैत्रेय ! भवताप्यकृपणशौण्डीर्यमभिधातव्यम् ।

---

कृते किमिति चतुःसमुद्रमूल्या रत्नावली दीयते ? इति विदूषकप्रश्नं समाधत्ते चारुदत्तः—यं समालम्ब्येति । वयस्य ! यं विश्वासं समालम्ब्य तया वसन्तसेनया अस्मासु न्यासो धृतः, तस्य प्रत्ययस्य = विश्वासस्य कृते एव एतत् मूल्यं प्रदीयते, विश्वासघातात्परतरं पापं नास्ति । इति त्वया मनसि खेदो नाधेयः ॥२९॥

पुनरपि मैत्रेयकर्तव्यं समादिशति—अस्मच्छरीरेति । अतो वयस्य ! मम शरीरस्पर्शं कृत्वा शपथाचारस्त्वया स्वीकार्यः—एनां रत्नावलीमदत्त्वा नागन्तव्यम् । यथा स्यात्तथाऽवश्यं प्रदेयेति भावः ।

वर्धमानकं स्वसेवकं सन्धिसंशोधनं कर्तुं समादिशति चारुदत्तः—वर्धमानक ! एताभिरिष्टिकाभिः शीघ्रमेव सन्धिः समः क्रियताम् । नो चेत् परिवादस्य = लोकनिन्दायाः रक्षां कर्तुमसमर्थः स्याम् । लोके न जाने कीदृशः परिवादः स्यादतः शीघ्रता कार्या ! इति भावः ॥३०॥

मैत्रेयमप्यनुशास्ति—वयस्येति । वयस्य ! त्वयापि, अकृपणं यथा स्यात्तथा,

---

पास रखी थी उसी बड़े विश्वास का यह मूल्य दिया जा रहा है । ( विश्वासघात से बढ़कर कोई पाप नहीं है अतः तुम खिन्न मत होओ ! )" ॥२९॥

इसलिए मित्र ! तुम्हें मेरी शपथ है । इसे बिना दिये मत आना । वर्धमानक !

"इस कूमल को ईंटों से भरकर समान बना दो । अन्यथा, मैं लोकनिन्दा से अपनी रक्षा न कर सकूँगा ( लोक में न जाने कैसा अपवाद फैलेगा ! इसलिए इस कार्य में शीघ्रता करो ! )" ॥३०॥

मित्र मैत्रेय ! तुम भी कृपणता छोड़कर उदारता से कहना । ( कभी वहाँ

विदूषकः—भो, दलिद्दो किं अकिवणं मंतेदि ? । [ भोः, दरिद्रः किमकृपणं मन्त्रयति ? । ]

चारुदत्तः—अदरिद्रोऽस्मि सखे ! । ( यस्य मम 'विभवानुगता भार्या-' [ ३।२८ ] इत्यादि पुनः पठति ) तद्गच्छतु भवान्; अहमपि कृतशौचः सन्ध्यामुपासे ।

( इति निष्क्रान्ताः सर्वे )

## इति सन्धिच्छेदो नाम तृतीयोऽङ्कः ।

---

शौण्डीर्यपूर्वकमुदात्ततयाऽभिधातव्यम् । कथनेऽपि कृपणताऽनुदारता वा माभूदिति सम्यक् वार्तालापः क्रियताम् । तद्गम्यतां कार्यसिध्यर्थम् ।

अहमपि कृतशौचः = स्नानादिकं प्रात्यहिकं कृत्यं विधाय सन्ध्योपासनं करिष्यामि ।

इति मृच्छकटिके "श्रीप्रियम्वदा"ख्य-टीकायां तृतीयोऽङ्कः परिसमाप्तः ।

---

कञ्जूसी की बातें करने लग जाओ । )

विदूषक—अजी ! दरिद्र मनुष्य कैसे उदारता की बातें करेगा ?

चारुदत्त—मित्र ! मैं तो अदरिद्र हूँ । ( जिस मेरे—"विभवानुगता भार्या ( ३।२८ )" श्लोक पुनः पढ़ता है । ) अब जाओ ! मैं भी शौचादि कार्य से निवृत्त होकर सन्ध्योपासन करता हूँ ।

[ सब चले जाते हैं । ]

"श्रीप्रियम्वदा" टीकालङ्कृत "मृच्छकटिक" के "सन्धिच्छेद" नामक तृतीय अङ्क का भाषानुवाद समाप्त ।

## चतुर्थोऽङ्कः

( ततः प्रविशति चेटी )

चेटी—आणत्तम्हि अत्ताए अज्जआए सआसं गंतुं। एसा अज्जआ चित्तफळअणिसण्णदिट्ठी मदणिआए सह किंपि मंतअंती चिट्ठदि। ता जाव उवसप्पामि। [ आज्ञप्तास्मि मात्रार्यायाः सकाशं गन्तुम्। एषार्या चित्रफलकनिषण्णदृष्टिर्मदनिकया सह किमपि मन्त्रयन्ती तिष्ठति । तद्यावदुपसर्पामि। ] ( इति परिक्रामति )

( ततः प्रविशति यथानिर्दिष्टा वसन्तसेना मदनिका च )

वसन्तसेना—हञ्जे मदणिए ! अवि सुसदिसी इअं चित्ताकिदी अज्जचारुदत्तस्स ?। [ चेटि मदनिके ! अपि सुसदृशीयं चित्राकृतिरार्यचारुदत्तस्य ! ]

---

अथ चतुर्थाङ्कमवतारयितुमुपक्रममाणः कविरादौ वसन्तसेनामातुश्चेटीं प्रवेशयति सा च कथयति—आणत्तम्हि—इति । अत्तया = वसन्तसेनाया मात्रा, आज्ञप्तास्मि = दत्ताज्ञास्मि । वसन्तसेनायाः समीपे गन्तुम्। इयं वसन्तसेना च चित्रफलके समासक्तदृष्टिः ( चित्रफलकं, निरीक्षन्तीत्यर्थः ) मदनिकया सह वार्तालापं कुर्वाणा तिष्ठति । तद् यावत् अस्याः समीपे गच्छामि ।

वसन्तसेना स्वनिर्मिते आर्यचारुदत्तचित्रेऽनुरक्ता सती मदनिकां पृच्छति—हञ्जे—इति। मदनिके मन्निर्मितमिदं चित्रं सुसदृशमस्ति न वा ? चित्रार्पिते, वास्तविके

---

[ तदनन्तर "चेटी" प्रवेश करती है । ]

चेटी—मुझे माताजी ने 'आर्या' ("वसन्तसेना") के पास जाने की आज्ञा दी है। यह 'आर्या' चित्र-पटल पर आँखें लगाकर "मदनिका" के साथ कुछ वार्तालाप करती हुई बैठी हैं। तो मैं इनके पास जाती हूँ।

( घूमती है। )

[ तदनन्तर यथोक्त "वसन्तसेना" तथा "मदनिका" का प्रवेश होता है। ]

वसन्तसेना—मदनिके ! क्या यह चित्र की आकृति "आर्य चारुदत्त" से मिलती है ?

मदनिका—सुसदिसी । [ सुसदृशी । ]

वसन्तसेना--कधं तुमं जाणासि ? । [ कथं त्वं जानासि ? । ]

मदनिका--जेण अज्जआए सुसिणिद्धा दिट्ठी अणुलग्गा । [ येनार्यायाः सुस्निग्धा दृष्टिरनुलग्ना । ]

वसन्तसेना--हञ्जे ! किं वेसवासदाक्खिण्णेण मदणिए ! एव्वं भणासि ? । [ चेटि ! किं वेशवासदाक्षिण्येन मदनिके ! एवं भणसि ? । ]

मदनिका--अज्जए ! किं जो ज्जेव जणो वेसे पडिवसदि, सो ज्जेव

---

च चारुदत्ते किमपि वैचित्र्यं तु न प्रतीयते ? इति भावः । चित्रं सुसादृश्यमेवाकृतेः, यतस्तव दृष्टिरस्मिन् चित्रे आसक्तास्ति । नासदृशे पुरुषे भवद्विधा ललना आसक्त लोल लोचना आलोक्यन्ते लोके, इति प्रच्छन्नं मदनिकाया उत्तरमाकर्ण्य वसन्तसेना कथयति--किं वेसवासेति । मदनिके ! किं वेशे = वेश्यालये वासस्य दाक्षिण्येन = कुशलतया एवं भणसि = ब्रवीषि ? वेश्यागृहे निवसन्तो जनाश्चतुरा भवन्ति, यतो बहुविधैर्नरैरैरवरैश्च सह तेषां सम्पर्को भवति, अत एव कदाचिन्मां प्रसादयितुमेव त्वमेवं वदसि ? इति भावः ।

एतस्याक्षेपपूर्णवचनस्योत्तरमाह मदनिका—अज्जए-इति । आर्ये किमु वेश्या-

---

मदनिका—मिलती है ।

वसन्तसेना--तू कैसे जानती है ?

मदनिका—( ऐसे जानती हूँ कि-- ) जिससे आपकी दृष्टि इसमें लग रही है । ( आप किसी ऐसे-वैसे के चित्र में इस प्रकार अपनी दृष्टि को आसक्त नहीं करतीं । )

वसन्तसेना--मदनिके ! क्या वेश्यालय में रहने के कारण कुशलता से ही ऐसा कहती है ? ( वेश्यालय में निवास करने वाली बहुत चतुर होती हैं । उनका प्रत्येक के साथ सम्पर्क पड़ता है । अतः वे सबको अच्छा ही बताती हैं । तो क्या मदनिके ! इसीलिए तूने केवल मुझको प्रसन्न करने के लिए ही यह सब-कुछ कहा है ? )

मदनिका—आर्ये ! क्या जो वेश्यागृह में रहता है वह कृत्रिम-कुशल ही

अलीअदक्खिणो भोदि ?। [ आर्ये ! किं य एव जनो वेशे प्रतिवसति, स एवालीकदक्षिणो भवति ?। ]

वसन्तसेना—हञ्जे ! णाणापुरिससंगेण वेस्साजणो अलीअदक्खिणो भोदि। [ चेटि ! नानापुरुषसङ्गेन वेश्याजनोऽलीकदक्षिणो भवति।

मदनिका—जदो दाव अज्जआए दिट्ठी इध अभिरमदि हिअअं च, तस्स कारणं किं पुच्छीअदि ?। [ यतस्तावदार्याया दृष्टिरिहाभिरमते हृदयं च, तस्य कारणं किं पृच्छ्यते ?। ]

वसन्तसेना—हञ्जे ! सहीजणादो उवहअणीअदां रक्खामि। [ चेटि !

---

वासे वसन्तः सर्वेऽपि अलीकदक्षिणाः = कृत्रिमकुशलाः अलीके = मिथ्याभाषणे दक्षिणाश्चतुरा भवन्ति। "परेषामनुरञ्जनार्थं मिथ्यावार्तां कुर्वन्ति। सदातनोऽयमभ्यास इति कृत्वैव तु न ब्रूषे ?।" इति भवत्या नाशङ्कनीयमिति हृदयम्।

वसन्तसेना मदनिका-प्रस्तावानुरूपं वदति—नानापुरुषेति। नानाप्रकृतिकैः पुरुषैः सह संगात् वेश्याजनो मिथ्याभाषणे कुशलो भवति। वास्तविकस्यास्य प्रश्नस्योत्तरमदत्त्वैव ( मनसा यथार्थतामस्यावधार्य ) प्रकृतं कथयति मदनिका—जदो—इति। यतोऽत्र भवत्या दृष्टिः, मनश्चानुरक्ते, तदाऽत्र कारणप्रश्नावकाशस्यावसर एव कुतः ? सर्वस्यापि स्वानुकूले वस्तुनि मनोऽनुरक्तिर्भवति, अतो नोचितः प्रश्न इति भावः।

एवं श्रुत्वा वसन्तसेना प्रश्नहेतुमेव प्रकटयति—सहीअणादो—इति। मद-

---

होता है ? ( उसके हृदय में भी एक स्वाभाविकता सन्निहित, रहती है अतः आप सत्य समझें मैं मिथ्या नहीं कह रही हूँ। )

**वसन्तसेना**—सखि ! अनेक पुरुषों के साथ सम्पर्क रहने के कारण वेश्याएँ "अलीकदक्षिण" हो जाती हैं।

**मदनिका**—जब आपकी दृष्टि तथा हृदय दोनों इसमें अनुरक्त हैं तो फिर किस लिए कारण पूछती हैं ?

**वसन्तसेना**—हञ्जे ! सखियों की हँसी से बचना चाहती हूँ। ( कदाचित्

सखीजनादुपहसनीयतां रक्षामि । ]

मदनिका—अज्जए ! एव्वं णेदं । सहीजणचित्ताणुवत्ती अबलाजणो भोदि । [ आर्ये ! एवं नेदम् । सखीजनचित्तानुवर्त्यबलाजनो भवति ]

प्रथम चेटी—( उपसृत्य ) अज्जए ! अत्ता आणवेदि—'गहिदावगुंठणं पक्खदुआरए सज्जं पवहणं । ता गच्छ' त्ति । [आर्ये ! माताज्ञापयति–'गृहीताव-

निके ! सखीजनो मां नोपहसेदित्याशयेन पृच्छामि । सखीजनः कदाचिदेवं वदेत्, यदयमुचितो नास्ति, भवती यस्मिन्ननुरक्तेति मया पृच्छ्यते, इत्याशयः ।

मदनिका वसन्तसेनाकथनं समर्थयते—एव्वं णेदम्–इति । आर्ये! यद् वदसि, तत्तथैव सत्यम् । वस्तुतो नार्यः स्वसखीजनस्य चित्तं दृष्ट्वैव सर्वाण्यपि कार्याणि प्रायः कुर्वन्ति । अत्र स्त्रीणां स्वभावाविष्करणं क्रियत एव । एवञ्च कविनाऽत्र "अबला" पदप्रदानेन स्त्रबुद्धिराहित्यमेव नारीणामभिव्यञ्जितम् ! अबलो हि जनः परबलसाहाय्येनैव जीवनं यापयति, इति मदनिका—नैपुण्यं ध्वन्यते ।

बाद में सखियाँ हँसे कि यह सुन्दर नहीं है । )

मदनिका—आर्ये ! ऐसा ही है । क्योंकि अबलाएँ * सखियों का चित्त देखकर ही प्राय; कार्य करती हैं । ( स्त्रियाँ प्रायः सखियों की सम्मति लेकर ही कार्य करती हैं अतः आपका मुझसे पूछना ठीक ही है । )

( अथवा )—

आर्ये ! ऐसा नहीं है । सखियों के चित्त के अनुसार ही अबलाओं का हृदय होता है । ( अतः यह निश्चित है कि आपके द्वारा पसन्द किये गये "आर्य चारुदत्त" की बाद में हँसी न होगी । )

प्रथमा चेटी—( समीप जाकर ) आर्ये ! माताजी आज्ञा देती हैं कि—

* शब्द-प्रयोग-चतुरा "मदनिका" के इस कथन के "अबला" शब्द में बहुत ही तीक्ष्ण व्यङ्ग्य छिपा हुआ है । "अबल" ( निर्बल ) व्यक्ति दूसरे पर आश्रित होकर ही चलता है । इसी प्रकार "अबलाएँ" भी दूसरों की बुद्धि के अनुसार ही चलती हैं । "मूढः परप्रत्ययनेयबुद्धिः" इस उक्ति के अनुसार दूसरे की बुद्धि पर चलने वाली अबलाएँ नितान्त बुद्धिशून्य होती हैं" इससे यह अर्थ ध्वनित होता है ।

गुण्ठनं पक्षद्वारे सज्जं प्रवहणम् । तद्गच्छ' इति । ]

वसन्तसेना—हञ्जे ! किं अज्जचारुदत्तो मं णइस्सदि । [ चेटि ! किमार्यचारुदत्तो मां नेष्यति ? । ]

चेटी—अज्जए ! जेण पवहणेण सह सुवण्णदससाहस्सिओ अलंकारओ अणुप्पेसिदो । [ आर्ये ! येन प्रवहणेन सह सुवर्णदशसाहस्रिकोऽलंकारोऽनुप्रेषितः । ]

वसन्तसेना—को उण सो ? । [ कः पुनः सः ? । ]

चेटी—एसो ज्जेव राअस्सालो संठाणओ । [ एष एव राजश्यालः संस्थानकः ।

वसन्तसेना—( सक्रोधम् ) अवेहि मा पुणो एव्वं भणिस्ससि । [ अपेहि, मा पुनरेवं भणिष्यसि । ]

चेटी—पसीददु पसीददु अज्जआ । संदेसेण म्हि पेसिदा । [ प्रसीदतु प्रसीदत्वार्या । संदेशेनास्मि प्रेषिता । ]

वसन्तसेना—अहं संदेसस्स ज्जेव कुप्पामि । [ अहं संदेशस्यैव कुप्यामि । ]

चेटी—ता किंति अत्तं विण्णविस्सं ? । [ तत्किमिति मातरं

---

"द्वार पर चारों ओर पर्दे से ढका हुआ रथ खड़ा है अतः जाओ ।"

वसन्तसेना—हञ्जे ! क्या "आर्य चारुदत्त" मुझे ले जायेंगे ?

चेटी—आर्ये ! जिसने रथ के साथ दस हजार के आभूषण भेजे हैं । ( वह ले जायगा । )

वसन्तसेना—वह कौन है ?

चेटी—यह राजा का साला "संस्थानक" है ।

वसन्तसेना—(क्रोध से) चुप हो ! इसके बाद फिर ऐसा कभी मत कहना।

चेटी—आर्ये ! आप प्रसन्न हों ! मुझे तो सन्देश देकर भेजा है ।

वसन्तसेना—हला ! मैं सन्देश पर ही कुपित होती हूँ ।

चेटी—तो फिर माताजी से क्या निवेदन करूँ··?

विज्ञापयिष्यामि ? । ]

वसन्तसेना—एव्वं विण्णाविद्व्वा—'जइ मं जीअंतीं इच्छसि, ता एव्वं ण पुणो अहं अत्ताए आण्णाविद्व्वा'। [ एवं विज्ञापयितव्या—'यदि मां जीवन्तीमिच्छसि, तदैवं न पुनरहं मात्राऽऽज्ञापयितव्या'। ]

चेटी—जधा दे रोअदि । [ यथा ते रोचते । ] ( इति निष्क्रान्ता )

( प्रविश्य )

शर्विलकः—

**दत्त्वा निशाया वचनीयदोषं निद्रां च जित्वा नृपतेश्च रक्ष्यान् ।**
**स एष सूर्योदयमन्दरश्मिः क्षपाक्षयाच्चन्द्र इवास्मि जातः ॥ १ ॥**

---

आर्यचारुदत्तस्य भवने चौर्यं सम्पाद्य शर्विलको वसन्तसेनागृहं जिगमिषुर्निशा-समाचारं स्वशक्तिसामर्थ्यञ्च प्रकाशयति—दत्त्वेति । रात्रौ चौराश्चौर्यं कुर्वन्ति, घातकाश्च यस्य कस्यापि वधादिकमनुचितं कार्यं कुर्वन्ति, अतो रात्रिः सर्वानर्थ-कारिणीति लोका निन्दन्ति रात्रिम्, वस्तुतो मदीयोऽपराधो रात्रेः शिरसि मया निपा-त्यते, एवमेवाद्यापि निशाया निन्दां कारयित्वा, निद्रां राजपुरुषांश्च विजित्य रात्रौ शयनं नैव लभ्यते, यत्र-तत्र रक्षाधिकृतान् वञ्चयामि च, इदानीमहं सूर्योदये मन्दकिरणश्चन्द्र इव क्षपायाः=रात्रेः क्षयादपगमात्, एवंविधः संजातोऽस्मि । यथा चन्द्रमसः कान्तिः सूर्योदये क्षीणा भवति, रात्रावेव च प्रकाश्यते,

---

वसन्तसेना—यह निवेदन करना कि—"यदि आप मुझे जीवित देखना चाहती हैं तो फिर कभी इस प्रकार की आज्ञा न दें।"

चेटी—जैसा आपको अच्छा लगता है। ( जो आज्ञा ! )

[ चली जाती है । ]

( प्रवेशकर )

शर्विलक—"मैं रात्रि को निन्दा का दोष देकर ( "रात्रि में ही सब अनर्थ होते हैं" इस प्रकार का दोष देकर ) तथा निद्रा एवं राजपुरुषों ( पहरेदारों ) को जीतकर मैं रात्रि के व्यतीत हो जाने पर सूर्योदय से मन्दकिरण चन्द्रमा की भाँति

अपि च,—

**यः कश्चित्त्वरितगतिर्निरीक्षते मां,**
**संभ्रान्तं द्रुतमुपसर्पति स्थितं वा ।**
**तं सर्वं तुलयति दूषितोऽन्तरात्मा,**
**स्वैर्दोषैर्भवति हि शङ्कितो मनुष्यः ॥ २ ॥**

तथैव चौराणामपि प्रभावो रात्रावेव दृग्गोचरीभवति, निशा पुत्रा एते । अत एव पूर्वमुक्तं "रजनिरियं जननीव संवृणोतीति ।"

अत्रोपमाऽलङ्कारः । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः ॥ १ ॥

प्रातःकाले चौर्यानन्तरं मम दूषितस्वभाव एव मां कीदृशं करोतीति प्रदर्शयति—यः कश्चिदिति । यः कोऽपि पुरुषः शीघ्रतया स्वभावेनैव यथेष्टं स्थानं प्रति गच्छति, एवमेवाकस्मान्मामवलोकयति, अथवा सम्भ्रान्ततया द्रुतम् = सत्वरं शीघ्रमिति यावत्, किंवा स्थितं मामुपसर्पति = ममान्तिकमायाति, मदीयो दूषितोऽन्तरात्मा, तं तादृशं सर्वमपि लोकं तुलयति = किमु, अयमपि चौरः ? अथवा—चौरं मां ज्ञात्वा किमपि कर्तुमिच्छति ? इत्यादिविविधरूपेणालोचनां करोति मम मनः । यत् सत्यम्, मानवः स्वकीयैरेव दोषैः शङ्कितो भवति । चौरः सर्वानपि जनान् चौरान् मन्यते, पापी चाखिलान् जनान् पापपरायणान् वेत्ति ! हन्त ! कीदृशी मनसो गतिरित्याश्चर्यम् ! इति भावः ।

अत्रार्थान्तरन्यासोऽलङ्कारः सामान्येन विशेषस्य समर्थनात् । प्रहर्षिणी च्छन्दः । तल्लक्षणं च यथा—"म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् ।" इति ॥ २ ॥

---

हो गया हूँ । ( जिस प्रकार चन्द्रमा की शोभा रात्रि में ही होती है उसी प्रकार मेरा सामर्थ्य भी रात्रि में ही परिलक्षित होता है । दिन में मेरी प्रतिभा प्रभा फैलाने में असमर्थ रहती है । )" ॥ १ ॥ और भी—

"जो कोई तेज़ी से चलता हुआ मुझे देखता अथवा किसी घबराहट से शीघ्रतापूर्वक मेरे पास आता है उन सब की मैं अपने से ही तुलना करने लग जाता हूँ । ( सच है कि ) मनुष्य अपने दोषों से स्वयं ही शङ्कित रहता है" ॥ २ ॥

मैंने "मदनिका" के लिए यह साहस किया है ।

मया खलु मदनिकायाः कृते साहसमनुष्ठितम् ।

परिजनकथासक्तः कश्चिन्नरः समुपेक्षितः,
क्वचिदपि गृहं नारीनाथं निरीक्ष्य विवर्जितम् ।
नरपतिबले पार्श्वायाते स्थितं गृहदारुवद्-
व्यवसितशतैरेवं प्रायैर्निशा दिवसीकृता ॥ ३ ॥

---

इदं सर्वं चौर्यादिकं मया किमर्थं कृतमिति प्रदर्शयति—मयेति । मया खलु मदनिकायाः कृते = मदनिकामुपलब्धुम् = तस्यै इत्यर्थः । इदं साहसं = सहसाऽविवेकेनैव कृतं साहसम्, चौर्यादिनिन्दितकार्यस्य परिणामोऽतीवाऽवरः इति विदन्नपि यत् चौर्यरतोऽस्मि जातस्तत्र मदनिकैव कारणमिति भावः । "कामान्धाः किं न कुर्वन्ती"त्युक्तेः ।

किं किं साहसं कृतमिति विशदयति—परिजनेति । रात्रौ कस्मिंश्चिद् गृहे परिजनेन सार्धं वार्तालापं कुर्वाणः कोऽपि गृहस्थो मया समुपेक्षितः, करोत्वयं वार्तालापम्, नाऽहमेतस्य गृहे प्रविशामीति परित्यक्तः । क्वचिच्च केवलं स्त्रिय एवासन्, इति ज्ञात्वा, नाहं गतः । रक्षाधिकारिणश्च यदा मम सविधे समागताः तदाऽहं गृहकाष्ठवत् स्थितः, काष्ठबुध्या रात्रौ तैरहं न तर्कितः । एवंविधैर्बहुभिरुपायैर्मयाऽखिलापि निशा दिवसीकृता । दिनवत् समाप्ता । निशा दिवसरूपेण परिणतिं नीता । दिनमेव समागतमिति भावः । अथवा—अन्धकारावृतायामपि निशायामेवंविधानि

---

"( मैंने ) परिजनों के साथ सुखपूर्वक संलाप करते हुए किसी मनुष्य को छोड़ दिया । ( उसके घर में नहीं घुसा । ) किसी घर में केवल स्त्रियों को देखकर ही मैंने उसका परित्याग कर दिया । और सिपाहियों के पास में आने पर मैं काष्ठ की भाँति निश्चेष्ट होकर खड़ा हो गया ( जिससे कि वे मुझे पहिचान न सकें । ) इस प्रकार क्रिया-प्रतिक्रियाएँ करते हुए मैंने रात को ही दिन बना डाला । ( रात्रि में भी मैंने दिन के समान निश्शङ्क होकर कार्य किया है । अथवा रात्रि को भी दिन ही बना डाला । या—मैंने इस प्रकार के व्यापार करते हुए समय की गति को नहीं जाना और यह रात्रि दिन में परिणत हो गई । )" ॥ ३ ॥ ( घूमता है )

( इति परिक्रामति )

वसन्तसेना—हञ्जे ! इमं दाव चित्तफलअं मम सअणीए ठाविअ तालवेंटअं गेण्हिअ लहु आअच्छ । [ चेटि ! इमं तावच्चित्रफलकं मम शयनीये स्थापयित्वा तालवृन्तं गृहीत्वा लघ्वागच्छ ।

मदनिका—जं अज्जआ आणवेदि । [ यदार्याज्ञापयति । ] ( इति फलकं गृहीत्वा निष्क्रान्ता )

शर्विलकः—इदं वसन्तसेनाया गृहम् । तद्यावत्प्रविशामि । ( प्रविश्य ) क नु मया मदनिका द्रष्टव्या ? ।

( ततः प्रविशति तालवृन्तहस्ता मदनिका )

शर्विलकः—( दृष्ट्वा ) अये इयं मदनिका ?

**मदनमपि गुणैर्विशेषयन्ती रतिरिव मूर्तिमती विभाति येयम् ।**

---

नाना व्यवसितानि = कार्याणि निःशङ्केन दिने इव मया कृतानीति हन्त ! रात्रिरपि दिवसीकृता । च्विप्रत्ययोऽत्र । स्वभावोक्तिरलङ्कारः । हरिणी छन्दः । तल्लक्षणं च यथा—“रसयुगहयैर्न्सौ म्रौ स्लौ गो, यदा हरिणी तदा ।” इति ॥३॥

व्यजनहस्तां मदनिकामायान्तीं निरीक्ष्य चलितचित्तः शर्विलको विचारयति—मदनमपीति । अये ! सेयं मदनिका ? या कामाग्निसन्ताप-सन्तप्तं मदीयं मनः

---

वसन्तसेना—हला ! तब तक इस चित्र को मेरे पलङ्ग पर रख कर ताड़ का पङ्खा ले, शीघ्र आ !

मदनिका—जो आज्ञा !

[ चित्र को लेकर चली जाती है । ]

शर्विलक—यह “वसन्तसेना” का घर है । इसलिए प्रवेश करता हूँ । ( प्रवेशकर ) मुझे “मदनिका” कहाँ मिलेगी ?

[ तदनन्तर ताड़ का पङ्खा हाथ में लिये हुए “मदनिका” प्रवेश करती है । ]

शर्विलक—( देखकर ) अरे ! यह “मदनिका”—

“मदन ( कामदेव ) को भी अपने गुणों से बढ़ाती हुई साक्षात् मूर्तिमती

**मम हृदयमनङ्गवह्नितप्तं भृशमिव चन्दनशीतलं करोति ॥ ४ ॥**
मदनिके ! ।

मदनिका—( दृष्ट्वा ) अम्मो, कधं सव्विलओ । सव्विलअ ! साअदं दे, कहिं तुमं ? । [ आश्चर्यम्, कथं शर्विलकः । शर्विलक ! स्वागतं ते । कुत्र त्वम् ? । ]

शर्विलकः—कथयिष्यामि ।

( इति सानुरागमन्योन्यं पश्यतः )

वसन्तसेना—चिरआदि मदणिआ । ता कहिं णु खु सा ? । ( गवाक्षकेन दृष्ट्वा ) कथं एसा केनावि पुरिसकेण सह मंतअंती चिट्ठदि । जधा अदिसिणिद्धाए णिच्चलदिट्ठीए आपिबंती विअ एदं णिज्झाअदि तधा तक्केमि, एसो सो जणो एदं इच्छदि अभुजिस्सं कादुं । ता रमदु रमदु, मा कस्सावि पीदिच्छेदो भोदु ।

---

चन्दनवारिणा शीतलं करोति । यस्याः स्मरणमात्रेणैव चेतसि पीयूषधारेव प्रवहति । स्वकीयैर्विविधैर्गुणैः काममपि विशेषयन्ती = विशिष्टशोभाशालिनं, प्रभावान्वितं वा कुर्वन्ती मूर्तिमती रतिरिव समुपलक्ष्यते । मन्ये, सा कामपत्नी रतिस्तु क्वचिदपि न दृश्यते भावात्मिकेवास्ति, इमां पुनर्मूर्तिमतीं रतिमवाप्यैव भगवान् कामोऽपि स्वशक्तिमभ्युपैति । शक्तिस्वरूपिणी परमलावण्यवतीयमिति हृदयम् ।

अत्रोत्प्रेक्षालङ्कारः । पुष्पिताग्रा च्छन्दः ॥४॥

---

( शरीरधारिणी ) "रति" की भाँति यह सुशोभित हो रही है । तथा स्मराग्नि से सन्तप्त मेरे हृदय को यह चन्दन की भाँति ठण्ढा कर रही है । ( मूर्तिमती इस "रति" को देखकर हृदय स्थित "कामदेव" बड़ी शक्ति से अपना प्रभाव जमा रहा है । )" ॥ ४ ॥

मदनिके !

मदनिका—( देखकर, स्वगत ) आश्चर्य है ! क्या "शर्विलक" है ? ( प्रकाश में ) "शर्विलक !" स्वागत है । तुम यहाँ कहाँ ?

शर्विलक—बतलाऊँगा । ( दोनों एक दूसरे को बड़े स्नेह से देखते हैं । )

ण खु सद्दाविस्सं । [ चिरयति मदनिका । तत्कुत्र नु खलु सा ? कथ-मेषा केनापि पुरुषकेण सह मन्त्रयन्ती तिष्ठति ? । यथातिस्निग्धया निश्चलदृष्ट्या-पिबन्तीवैतं निध्यायति तथा तर्कयामि, एष स जन एनामिच्छत्यभुजिष्यां कर्तुम् । तद्रमतां रमताम्, मा कस्यापि प्रीतिच्छेदो भवतु । न खल्वाकारयि-ष्यामि । ]

मदनिका—सव्विलअ ! कधेहि । [ शर्विलक ! कथय । ]

( शर्विलकः सशङ्कं दिशोऽवलोकयति )

मदनिका—सव्विलअ ! किं ण्णेदं ससंको विअ लक्खीअसि ? । [ शर्विलक ! किं न्विदं सशङ्क इव लक्ष्यसे ? । ]

शर्विलकः—वक्ष्ये त्वां किंचिद्रहस्यम् । तद्विविक्तमिदम् ।

---

चिरयति = विलम्बं करोति । अपिबन्तीव = सादरं पिबन्तीव ।

निध्यायति = सहर्षं विलोकयति ।

अभुजिष्याम् कर्तुम् = सर्वजनभोग्या भुजिष्या, तादृशीं कर्तुं न वाञ्छति । स्वविवाहितामेव कर्तुं वाञ्छति । स्वेनैवोपभोग्यां वा चिकीर्षति ।

रहस्यं किमपि कथयितुं शर्विलको मदनिकां पृच्छति—वक्ष्ये—इति । अहं

---

वसन्तसेना—"मदनिका" देरी कर रही है । कहाँ गई ? ( खिड़की से देखकर ) क्या यह किसी पुरुष से बातें करती हुई खड़ी है ? जैसे यह इसको अत्यन्त स्नेहमयी एकटक दृष्टि से पीती हुई-सी सहर्ष देख रही है उससे मैं अनुमान लगाती हूँ कि यह इसको 'अभुजिष्या' ( विवाहिता ) बनाना चाहता है । तो दोनों ( खूब ) मिलें । किसी के प्रेम में विघ्न न हो ! ( इसलिए ) मैं आवाज़ नहीं देती हूँ ।

मदनिका—"शर्विलक !" कहो ।

[ "शर्विलक" शङ्कित होकर चारों ओर देखता है । ]

मदनिका—'शर्विलक !" यह क्या है ? तुम शङ्कित से दिखलाई पड़ रहे हो ।

शर्विलक—मैं तुमसे कुछ रहस्य की बातें कहूँगा । यह स्थान निर्जन तो है ?

मदनिका—अध इं। [ अथ किम्। ]

वसन्तसेना--कधं परमरहस्सं ?। ता ण सुणिस्सं। [ कथं परम-रहस्यम् ?। तन्न श्रोष्यामि। ]

शर्विलकः—मदनिके! किं वसन्तसेना मोक्ष्यति त्वां निष्क्रयेण ?।

वसन्तसेना—कधं मम संबंधिणी कधा ?। ता सुणिस्सं इमिणा गवक्खेण ओवारिदसरीरा। [ कथं मम संबन्धिनी कथा ?। तच्छ्रोष्याम्यनेन गवाक्षेणापवारितशरीरा। ]

मदनिका—सव्विलअ! भणिदा मए अज्जआ। तदो भणादि—'जइ मम छंदो तदा विणा अत्थं सव्वं परिज्जणं अभुजिस्सं करइस्सं'। अध सव्विलअ! कुदो दे एत्तिओ विहवो, जेण मं अज्जआसआसादो मोआइस्ससि ?। [ शर्विलक! भणिता मयार्या। तदा भणति—'यदि मम छन्दस्तदा विनाऽर्थं सर्वं परिजनमभुजिष्यं करिष्यामि। अथ शर्विलक! कुतस्त एतावान्विभवः, येन मामार्यासकाशान्मोचयिष्यसि ?। ]

---

त्वां प्रति किञ्चिद् रहस्यं कथयितुमिच्छामि, तत् कथय, किमु विविक्तम् = विजन-मिदं स्थानम् ? अत्र कोऽपि मम वचनमन्यस्तु न शृणोतीति भावः।

---

( जिससे मैं सब बातें बता सकूँ ? )

मदनिका—हाँ!

वसन्तसेना—तो क्या परम रहस्य है ? ( यदि ऐसा है ) तो नहीं सुनूँगी।

शर्विलक—मदनिके! क्या "वसन्तसेना" तुझको मूल्य से छोड़ देगी ?

वसन्तसेना—क्या मुझसे सम्बन्ध रखने वाली बातचीत है ? तब तो इस खिड़की से अपने को छिपा कर सुनूँगी।

मदनिका—शर्विलक! मैंने आर्या ( "वसन्तसेना" ) से कहा था। तब उन्होंने कहा कि—"यदि मेरा वश चले तो बिना धन के ही सब को मुक्त कर दूँ"। और शर्विलक! ( बताओ तो सही ) तुम्हारे पास इतना वैभव कहाँ है, जो धन देकर मुझे 'आर्या' से छुड़ा सको ?

शर्विलकः—

दारिद्र्येणाभिभूतेन त्वत्स्नेहानुगतेन च ।
अद्य रात्रौ मया भीरु ! त्वदर्थे साहसं कृतम् ॥ ५ ॥

वसन्तसेना—पसण्णा से आकिदी, साहसकम्मदाए उण उव्वेअणीआ । [ प्रसन्नास्याकृतिः साहसकर्मतया पुनरुद्वेजनीया ।

मदनिका—सव्विलअ ! इत्थीकल्लवत्तस्स कारणेण उहअं पि संसए विणिक्खित्तं । [ शर्विलक ! स्त्रीकल्यवर्तस्य कारणेनोभयमपि संशये विनिक्षिप्तम् । ]

शर्विलकः—किं किम् ? ।

---

शर्विलक ! तव समीपे मां मोचयितुमेतावद्धनं कुतः समागतमिति" मदनिकाप्रश्नं समाधत्ते शर्विलकः—दारिद्र्येणेति । दारिद्र्यपीडितेन, त्वत्स्नेहानुबद्धेन च मया, भीरु ! त्वदर्थे चौर्यरूपं परमं साहसं कृतम् ॥५॥

वसन्तसेना गवाक्षेणाच्छादित-शरीरा सती शर्विलकस्य वचनं श्रुत्वा स्वमनसि प्राह—प्रसन्नेति । अस्य शर्विलकस्याकृतिः = स्वरूपं तु प्रसन्ना, सुन्दराकृतिरयं प्रतिभाति, किन्तु, साहसकर्मणा उद्वेजनीया = भीतेव लक्ष्यते । अनुचितसाहसविधानेनाभिरूपोऽपि विरूप इव प्रतीयते, इत्यर्थः ।

साहस-वार्ता श्रुत्वा मदनिका कथयति—स्त्रीकल्येति । शर्विलक ! कल्यवर्ततुल्यस्य = प्रातराश-सदृशस्य, नारीजनस्य कृते त्वयोभयमपि संशये निपातितम् ! नार्याः कृते एवमनुचितं नैव करणीयमासीत् ।

---

शर्विलक—"अयि भीरु ! दरिद्रता से पीडित तथा तेरे स्नेह से प्रेरित होकर मैंने आज रात्रि में ( चोरी जैसा ) साहस कर डाला है ।" ॥ ५ ॥

वसन्तसेना—इस की आकृति तो बहुत सुन्दर है परन्तु "साहस" का नाम लेने से कुछ भयभीत सी लग रही है ।

मदनिका—शर्विलक ! कलेवे के तुल्य स्त्री के लिए तुम ने दोनों को ही संशय में डाल दिया ।

शर्विलक—क्या, क्या ?

मदनिका—सरीरं चारित्तं च। [ शरीरं चारित्र्यं च। ]

शर्विलकः—अपण्डिते! साहसे श्रीः प्रतिवसति।

मदनिका—सव्विलअ! अखंडिदचारित्तो सि?। ता ण खु दे मम कारणादो साहसं करंतेण अच्चंतविरुद्धं आचरिदं?। [ शर्विलक! अखण्डितचारित्र्योऽसि?। तन्न खलु त्वया मम कारणात् साहसं कुर्वतात्यन्तविरुद्धमाचरितम्? ]

शर्विलकः—

**नो मुष्णाम्यबलां विभूषणवतीं फुल्लामिवाहं लतां,**

---

शरीरम्, चरित्रञ्चेत्युभयमपि त्वया संशयगोचरीकृतमिति श्रुत्वा सगर्वमाह शर्विलकः—**अपण्डिते**—इति। मूर्खासि मदनिके! त्वं न जानासि, श्रीस्तु साहसे एव निवसति साहसं विना किमु कदापि भगवत्याः लक्ष्म्या भाजनं भवति कोऽपि? अतो ममेदं साहसं नानुचितमिति भावः।

पुनर्मदनिका शर्विलकं पृच्छति—**शर्विलक!** इति। तव चरित्रं तु न खण्डितम्? मदर्थं साहसं कुर्वता त्वया किञ्चिदकार्यं तु न कृतम्? कश्चिज्जनो मारितश्च न त्वयेति प्रश्नस्याशयः। अत्र गणिकागृहे निवसन्त्या अपि मदनिकाया विचारोऽतिस्पृहणीयः। अनुचितकर्मणा लब्धाऽपि श्रीः कियन्तं कालं स्थास्यति? इति तस्याः सदाशयः।

शर्विलकः स्वकीयं स्वभावं वर्णयति—**नो मुष्णाम्यबलामिति**। मदनिके!

---

मदनिका—शरीर तथा चरित्र।

शर्विलक—मुग्धे! "साहस में ही "श्री" ( लक्ष्मी ) निवास करती है।"

मदनिका—शर्विलक! तुम्हारा चरित्र तो सुरक्षित है? कहीं तुम ने मेरे लिए साहस करते हुए कोई अकार्य तो नहीं कर डाला? ( किसी की हत्या तो नहीं कर डाली? ) †

शर्विलक—"मैं विकसित लता की भाँति आभूषणों से अलङ्कृत किसी

---

† "मदनिका" के ये विचार वास्तव में एक "आदर्श-नारी" के हैं।

विप्रस्वं न हरामि काञ्चनमथो यज्ञार्थमभ्युद्धृतम् ।
धात्र्युत्सङ्गगतं हरामि न तथा बालं धनार्थी क्वचित्-
कार्याकार्यविचारिणी मम मतिश्चौर्येऽपि नित्यं स्थिता ॥६॥

तद्विज्ञाप्यतां वसन्तसेना,—

'अयं तव शरीरस्य प्रमाणादिव निर्मितः ।

---

सावधाना भूत्वा शृणु मदीयोऽयं नियमः—विकसितां = सुपुष्प-समन्वितां लतामिव धनम्, विभूषणैः शोभितां ललिताङ्गीं कामपि ललनां नो मुष्णामि = नापहरामि तस्या धनम् । ब्राह्मणानां धनम्, यज्ञार्थं सञ्चितं च नैव हरामि । किञ्च—धनलोभाभिभूतमनाः क्वचिदप्यहं कस्याश्चिद्धात्र्याः उत्सङ्गे = अङ्के धृतं बालकं नैवापहरामि । निष्कर्षोऽयमस्ति—चौर्यकर्मण्यपि समासक्तस्य मतिः "इदं कार्यम्, अकार्यम्, वा ?" इति विचारयत्येव, नतु विवेकशून्य इव यत्र कुत्रापि धनलोभात् प्रवृत्तिं करोमि । अतोऽस्मिन् विषये त्वया निराकुलया भवितव्यम् । तवार्थे मया किमप्यकार्यं नैवाकारीति भावः ।

अत्र काव्यलिङ्गालङ्कारः । शार्दूलविक्रीडितं च्छन्दः ॥६॥

शर्विलकः कथयति—अयं तवेति । मदनिके ! त्वया वसन्तसेना प्रार्थ्यताम्—यदयं हारस्तवैवाङ्गस्य प्रमाणेन निर्मितः, क्वचिदपि प्रकाशतां न गतः,

---

स्त्री की वस्तुओं को नहीं चुराता । ब्राह्मणों के तथा यज्ञादि ( शुभ कार्य ) के लिए रखे हुए धन का भी अपहरण नहीं करता तथा धाय आदि की गोदी के बालक को नहीं ठगता हूँ । ( धाय की गोदी में आभूषण पहिन कर रहने वाले बालक के कड़े आदि भी, आजकल के "जेबकतरों" की भाँति, नहीं काटता ) चोरी करने में भी मेरी बुद्धि कर्तव्याकर्तव्य का विचार करती हुई ही प्रवृत्त होती है । ( मैं सदा सोच-समझकर ही कार्य करता हूँ । अतः तुझे किसी प्रकार के साहस की शङ्का नहीं करनी चाहिए । )" ॥ ६ ॥

इसलिए "वसन्तसेना" से निवेदन करो कि—

"यह आप के शरीर के नाप से ही बनाया गया है तथा इसे किसी ने नहीं

**अप्रकाशो ह्यलंकारो मत्स्नेहाद्धार्यतामिति' ॥ ७ ॥**

**मदनिका**—सव्विलअ ! अप्पकाशो अलंकारओ । अअं च जणो त्ति दुवेवि ण जुज्जदि । ता उवणेहि दाव । पेक्खामि एदं अलंकारअं। [ शर्विलक ! अप्रकाशोऽलंकारः । अयं च जन इति द्वयमपि न युज्यते । तदुपनय तावत् । पश्याम्येनमलंकारम् । ]

**शर्विलकः**—इदमलंकरणम् । ( इति साशङ्कं समर्पयति )

**मदनिका**—( निरूप्य ) दिट्ठपुरुव्वो विअ अअं अलंकारओ । ता भणेहि कुदो दे एसो । [ दृष्टपूर्व इवायमलंकारः । तद्भण कुतस्त एषः । ]

**शर्विलकः**—मदनिके ! किं तवानेन ? गृह्यताम् ।

---

अन्येन केनापि न दृष्टः, मम स्नेहेन भवत्या स्वाङ्गे धार्यतामिति ।

अत्रोत्प्रेक्षाऽलङ्कृतिः । पथ्यावक्त्रं च्छन्दः ॥७॥

मदनिका पुनः कथयति—अप्रकाश इति । शर्विलक ! तवेदं कथनं परस्परं विरुद्धमाभाति विचारय-काहम् ? क चाप्रकाशोऽलङ्कारः ? एवंविधस्यालङ्कारस्य मत्तो निवेदनं शङ्कामेव जनयिष्यति । दर्शय तावत् , कीदृशोऽलङ्कारः ?

मदनिका तमलङ्कारं दृष्ट्वा कथयति—शर्विलक ! पूर्वं दृष्ट इव प्रतीयतेऽयमलङ्कारः—कथय, कुतोऽयमासादितः ? इति मदनिकां प्रतारयन्नाह—मदनिके-इति । मदनिके ! कुतोऽयं प्राप्तः ? इति प्रश्नेन तव को लाभः ? गृह्यताम् त्वया निःशङ्कम् ।

---

देखा है अतः मेरे स्नेह-भरे अनुरोध से इस को आप पहिन लीजिये ।" ॥ ७ ॥

**मदनिका**—शर्विलक ! "किसी के द्वारा अदृष्ट अलङ्कार" तथा "मैं" ये दोनों परस्पर-विरोधी बातें हैं । ( ऐसे आभूषण का मेरे द्वारा देना शङ्का ही उत्पन्न करेगा । ) तो लाओ ! जरा इस को देखूँ तो सही !

**शर्विलक**—यह अलङ्कार है । ( शङ्कित सा दे देता है । )

**मदनिका**—( देखकर ) यह अलङ्कार तो दृष्टपूर्व है । तो बताओ तुम्हें यह कहाँ से मिला ?

**शर्विलक**—मदनिके ! तुझे इससे क्या प्रयोजन ? ले लो !

मदनिका—( सरोषम् ) जइ मे पच्चअं ण गच्छसि, ता किंणिमित्तं मं णिक्किणासि ? । [ यदि मे प्रत्ययं न गच्छसि, तत्किं निमित्तं मां निष्क्रीणासि ? । ]

शर्विलकः—अयि, प्रभाते मया श्रुतं श्रेष्ठिचत्वरे, यथा—'सार्थवाहस्य चारुदत्तस्य' इति ।

( वसन्तसेना मदनिका च मूर्च्छां नाटयतः )

शर्विलकः—मदनिके ! समाश्वसिहि । किमिदानीं त्वं ?

**विषादस्रस्तसर्वाङ्गी संभ्रमभ्रान्तलोचना ।**
**नीयमानाऽभुजिष्यात्वं कम्पसे ? नानुकम्पसे ? ॥ ८ ॥**

---

अनेन रूक्षवचनेन कुपितेव मदनिका प्राह—यदि मे-इति । शर्विलक ! यदि मम विश्वासं न करोषि, तर्हि किमर्थं मां निष्क्रेतुमिच्छसि ? पत्नीत्वेन मामङ्गीकर्तुं वाञ्छसि, न च मम विश्वासं व्रजसीत्याश्चर्यम् ! प्रातर्मया श्रुतम्—"आर्यचारुदत्तस्येति"—श्रुत्वा मूर्च्छितां मदनिकां दृष्ट्वा शर्विलको ब्रूते—विषादेति । मदनिके ! मया त्वं भुजिष्यारूपेण गृहीतव्या, तथापि विषादेन तवाङ्गानि किमिति क्लान्तानि सञ्जातानि ? सम्भ्रमेण च तव लोचनयुगलञ्च भ्रान्तमिव जातम् ? अधुनापि कम्पिता संजाता, न च मयि अनुकम्पां करोषि ? किमत्र कारणम् ?

---

मदनिका—( सरोष ) यदि मेरा विश्वास नहीं करते तो क्यों मुझे मुक्त कराते हो ?

शर्विलक—अयि ! प्रातःकाल मैंने श्रेष्ठि-चत्वर पर सुना था कि—"सार्थवाह "चारुदत्त" का है ।"

[ "वसन्तसेना" और "मदनिका" दोनों मूर्च्छा का अभिनय करती हैं । ]

शर्विलक—मदनिके ! धैर्य रख ! इस समय तू क्यों ?—

"विषाद से क्लान्त अङ्गों तथा घबराहट से चञ्चल नेत्रों वाली हो रही है ! विवाहिता बनाई जाने वाली तू ( स्वयं ) कम्पित हो रही है परन्तु मुझे अनुकम्पित नहीं करती ? ( स्वयं काँप रही है परन्तु मुझ पर दया नहीं दिखलाती ? )" ॥८॥

मदनिका—( समाश्वस्य ) साहसिअ ! ण खु तुए मम कारणादो इमं अकज्जं करंतेण तस्सिं गेहे को वि वावादिदो परिक्खदो वा ?॥ [ साहसिक ! न खलु त्वया मम कारणादिदमकार्यं कुर्वता तस्मिन्गेहे कोऽपि व्यापादितः परिक्षतो वा ?। ]

शर्विलकः—मदनिके ! भीते सुप्ते न शर्विलकः प्रहरति; तन्मया न कश्चिद्व्यापादितो नापि परिक्षतः।

मदनिका—सच्चं सच्चं। [ सत्यं सत्यम् ?। ]

शर्विलकः—सत्यम्।

वसन्तसेना—( संज्ञां लब्ध्वा ) अम्महे पच्चुवजीविदम्हि । [ आश्चर्यम्, प्रत्युपजीवितास्मि। ]

मदनिका—पिअं पिअं। [ प्रियं प्रियम्। ]

शर्विलकः—( सेर्ष्यम् ) मदनिके ! किं नाम प्रियमिति ?।

---

अत्र विशेषोक्तिरलङ्कारः। तल्लक्षणञ्च यथा—"सति हेतौ फलाभावे, विशेषोक्तिस्तथा द्विधा।" इति। पथ्यावक्त्रं छन्दः ॥८॥

तस्मिन् गृहे मया न कोऽपि हतो न वा व्यापादितः, इति शर्विलकः—वाक्यमाकर्ण्य सहर्षं "प्रियं मे" इति मदनिकाया उक्तिं सन्दिग्धमनसा शृणोति शर्विलकः—

---

मदनिका—( धैर्य धारण कर ) साहसिन् ! तुमने मेरे लिए यह अनर्थ करते हुए उस के घर में किसी को मार अथवा घायल तो नहीं कर दिया ?

शर्विलक—मदनिके ! भयभीत तथा सोए हुए मनुष्य पर "शर्विलक" प्रहार नहीं करता है। इसलिए मैंने न किसी को मारा और न घायल ही किया है।

मदनिका—सचमुच ?

शर्विलक—सचमुच।

वसन्तसेना—( प्रकृतिस्थ होकर ) आश्चर्य है ! मैं तो फिर से जीवित-सी हो गई हूँ।

मदनिका—बहुत अच्छा।

शर्विलक—( ईर्ष्या सहित ) मदनिके ! क्या "बहुत अच्छा" ?

त्वत्स्नेहबद्धहृदयो हि करोम्यकार्यं,
सद्वृत्तपूर्वपुरुषेऽपि कुले प्रसूतः।
रक्षामि मन्मथविपन्नगुणोऽपि मानं,
मित्रं च मां व्यपदिशस्यपरं च यासि ॥ ९ ॥

( साकूतम् )

इह सर्वस्वफलिनः कुलपुत्रमहाद्रुमाः।
निष्फलत्वमलं यान्ति वेश्याविहगभक्षिताः ॥१०॥

---

त्वत्स्नेह–इति। मदनिके! अत्याश्चर्यमिदम्—अहन्तु सदाचारवतां ब्राह्मणानां कुले समुत्पन्नोऽपि तव स्नेहानुसंसक्तहृदयः सन् चौर्यरूपमकार्यमपि करोमि, मन्मथ-पीडावशान्मम सर्वे ब्राह्मणोचिता गुणा यद्यपि विनष्टाः, तथापि यथाकथमपि मानस्य रक्षां करोमि, एवं सत्यपि मां स्वकीयं मित्रं व्यपदिशसि = कथयसि, अप-रञ्च यासि ! बाह्यदृष्ट्यैव मया सह प्रीति-कपटं करोषि, वस्तुतस्तु हृदयेन केनाप्यपरेण सह प्रीतिं करोषि। "यतस्तस्याघातो न कृतः" इति श्रुत्वैवाति प्रस-न्नासि। अत्र वसन्ततिलका च्छन्दः ॥९॥

पुनरपि साकूतम् = साभिप्रायम् कथयति—इहेति। अस्मिन् संसारे कुल-पुत्रा एव महाद्रुमाः = महापादपाः, सर्वस्वं = सर्वाः सम्पदो येषां फलानि सन्ति ते

---

"सदाचारी ब्राह्मणों के कुल में उत्पन्न होने वाला मैं तेरे स्नेह के अधीन होकर ऐसे कुकर्म करता हूँ। ( मैंने ब्राह्मणोचित धर्म छोड़ दिये हैं। तथापि जैसे-तैसे— ) कामदेव के प्रभाव के कारण गुणहीन होकर भी अपने मान की रक्षा कर रहा हूँ ( इतने पर भी ) तू ऊपर से तो मुझको अपना मित्र बताती है परन्तु हृदय से किसी और को चाहती है। ( तभी तो "मेरे लिए प्रिय है" यह कहकर अपने यथार्थ मित्र के प्रति तू स्नेहोद्गार प्रकट कर रही है। )" ॥९॥

( अभिप्राय पूर्वक )

"इस संसार में कुलीन वंशरूपी महान् वृक्ष, सारी सम्पत्ति ही जिनके फल हैं, वेश्यारूपी पक्षियों से खाकर, फल-रहित कर दिये जाते हैं। ( वेश्यायें उनका

अयं च सुरतज्वालः कामाग्निः प्रणयेन्धनः ।
नराणां यत्र हूयन्ते यौवनानि धनानि च ॥११॥

वसन्तसेना—( सस्मितम् ) अहो, से अत्थाणे आवेओ । [ अहो, अस्यास्थान आवेगः । ]

शर्विलकः—सर्वथा,—

अपण्डितास्ते पुरुषा मता मे ये स्त्रीषु च श्रीषु च विश्वसन्ति ।

---

वृक्षाः, वेश्या-रूप-विहगैः=पक्षिभिः । भक्षिताः=भुक्ताः सन्त एव निष्फलत्वं=फलराहित्यं यान्ति=गच्छन्ति । वेश्याः कुलीनपुत्रान् धनरहितान् कुर्वन्ति । ते संसारे निष्फलं जीवनं यापयन्ति । अनया ममापीदृशी दशा कृतेति सर्वथा वञ्चितोऽस्मीति भावः ।

अत्र रूपकालङ्कारः । पथ्यावक्त्रं छन्दः ॥१०॥

अपरमप्याह—अयञ्चेति । सुरतोपभोग एव यस्य ज्वाला, प्रणयः=प्रीतिरेव यस्येन्धनम्, एवंविधः काम एवाग्निः, यस्मिन् नराणां यौवनानि धनानि च हूयन्ते । सर्वेऽपि युवानः कामाग्नौ सर्वस्वं भस्मसात् कुर्वन्ति ।

अत्र रूपकालङ्कारः । पथ्यावक्त्रं छन्दः ॥११॥

इत्थं प्रलपन्तं शर्विलकमुद्वीक्ष्य वसन्तसेना प्राह—अहो, इति । अहो ! आश्चर्यम् ! अस्थाने एव=अयोग्ये स्थाने एव अस्य=शर्विलकस्यावेगः, वृथैव कोपं करोतीत्यर्थः ।

---

सारा धन निचोड़ लेती हैं और उनका जीवन नष्ट हो जाता है । )" ॥१०॥

"यह सम्भोगेच्छा ही जिसकी ज्वाला है, प्रणय ही ईंधन है तथा कामदेव अग्नि है, जिसमें मनुष्यों के यौवन एवं धन 'स्वाहा' हो रहे हैं ।" ॥११॥

वसन्तसेना—( मुस्कराहट के साथ ) अस्थान में ही यह रोष कर रहा है । ( व्यर्थ ही क्रोध कर रहा है । )

शर्विलक—सर्वथा—

"वे पुरुष मेरे मत में मूर्ख हैं, जो कि लक्ष्मी एवं धन पर विश्वास करते हैं ।

श्रियो हि कुर्वन्ति तथैव नार्यो भुजङ्गकन्यापरिसर्पणानि ॥१२॥

स्त्रीषु न रागः कार्यो रक्तं पुरुषं स्त्रियः परिभवन्ति ।
रक्तैव हि रन्तव्या विरक्तभावा तु हातव्या ॥१३॥

सुष्ठु खल्विदमुच्यते,—

एता हसन्ति च रुदन्ति च वित्तहेतो-

---

अत्यधिकविरक्तः शर्विलकः पुनरप्याह—अपण्डितास्ते—इति । मम मते ते पुरुषा मूर्खा एव सन्ति, ये स्त्रीणां श्रीणाञ्च विषये विश्वासं भजन्ते, यथा श्रियः तथैव स्त्रियः, भुजङ्गकन्याः सर्पिण्य इव, परितः सर्पणं कुर्वन्ति । स्त्रियोऽपि सर्वत्र गच्छन्ति, न चासां कोऽपि स्वकीयो भवतीति भावः ।

अत्र दीपकः, उपमा च । इन्द्रवज्रा-उपेन्द्रवज्रयोः सम्मेलनादुपजाति-श्छन्दः ॥१२॥

स्त्रीणां विश्वासो नैव विधेयः, इति पुनरपि निर्दिशति—स्त्रीषु नेति । स्त्रीषु कदापि रागो न कार्यः, स्त्रीभिः सह प्रीतिसम्बन्धो नैव विधेयः, स्त्रियो हि नामानु-रक्तं पुरुषं परिभवन्ति = तिरस्कुर्वन्ति, यदा स्त्री स्वयमनुरक्ता भवेत्, तदैव तया सह रमणं कर्तव्यम् । विरक्ता तु सर्वथा परिहातव्या = त्याज्या । अन्धैर्भूत्वा नारीणा-मनुसरणं नैव कार्यमिति भावः ॥१३॥

कैश्चित् युक्तमिदमुच्यते—एता इति । एताः स्त्रियो वित्तस्य = धनस्य हेतोः = कारणात्, कदाचित् हसन्ति, क्षणानन्तरञ्च रुदन्ति, पुरुषं विश्वासयन्ति, न च तस्य

---

लक्ष्मी तथा स्त्रियाँ सर्पिणी की भाँति सर्वत्र सर्पण करती रहती हैं । ( इनका कोई अपना नहीं होता । )" ॥ १२ ॥

"स्त्रियों से प्रेम नहीं करना चाहिए क्योंकि वे अनुरक्त पुरुष को छोड़ देती हैं । अनुरक्त रमणी के साथ ही रमण करना चाहिए, विराग रखने वाली का तो परित्याग कर देना चाहिए ।" ॥ १३ ॥

किसी ने यह ठीक ही कहा है—

"ये धन के लिए ( क्षणभर में ) हँसती तथा ( क्षण में ) रोती हैं । पुरुषों

विश्वासयन्ति पुरुषं न तु विश्वसन्ति ।
तस्मान्नरेण कुलशीलसमन्वितेन,
वेश्याः श्मशानसुमना इव वर्जनीयाः ॥१४॥

अपि च,—

समुद्रवीचीव चलस्वभावाः संध्याभ्रलेखेव मुहूर्तरागाः ।
स्त्रियो हृतार्थाः पुरुषं निरर्थं निष्पीडितालक्तकवत् त्यजन्ति ॥१५॥

---

विश्वासं कुर्वन्ति, अतः कुल-शील-युक्तेन पुरुषेण वेश्याः श्मशानस्य सुमनाः = कुसुममिव वर्जनीयाः । ताभिः सह प्रेमाचरणं सर्वथा निन्दनीयमिति भावः ।

अत्रोपमालङ्कृतिः । वसन्ततिलका च्छन्दः ॥१४॥

पुनरपि नारीणामनुचितव्यवहारं वर्णयति—समुद्रवीचीवेति । स्त्रियो हि नाम समुद्रस्य लहर्य इव चञ्चलस्वभावाः सन्ध्याकालिकमेघलेखेव क्षणिकरागा = लालिमा-प्रीतियुक्ता भवन्ति, न चासां स्थिरोऽनुरागः, इति भावः । एताश्च हृतः = परिगृहीतः, अर्थो धनं याभिस्ताः अपहृतधनाः सत्यः पुरुषं निष्पीडितालक्तकवत् = निष्ठ्यूतलाक्षावत् परित्यजन्ति । यावदर्थं न गृह्णन्ति, तावत् पुरुषैः सह प्रीतिं प्रदर्शयन्ति, न वास्तविकं प्रेम केनापि सह कुर्वन्तीति भावः ।

---

को तो विश्वास दिलाती हैं परन्तु स्वयं उन का विश्वास नहीं करतीं । इसलिए कुल और शील से युक्त मनुष्य को वेश्याओं का, श्मशान के पुष्पों की भाँति, परित्याग कर देना चाहिए ।" ॥ १४ ॥

और भी—

"( स्त्रियाँ ) समुद्र की तरङ्गों के समान चञ्चल तथा सन्ध्याकालीन मेघों की पङ्क्ति के समान क्षणिक 'राग' ( लालिमा तथा प्रेम ) वाली होती हैं । ये पुरुष का धन लेकर उसको निस्तत्व लाक्षा ( लाख ) की भाँति छोड़ देती हैं । ( जिस प्रकार लाख को तबतक ही वे लगाती हैं जबतक कि उनका चरण-रञ्जन नहीं होता, उसी प्रकार ये मनुष्य को भी तबतक ही स्नेह करती हैं जबतक कि उससे धन मिलता है । )" ॥१५॥

स्त्रियो नाम चपलाः,—

**अन्यं मनुष्यं हृदयेन कृत्वा, अन्यं ततो दृष्टिभिराह्वयन्ति ।**
**अन्यत्र मुञ्चन्ति मदप्रसेक,-मन्यं शरीरेण च कामयन्ते ॥१६॥**

सूक्तं खलु कस्यापि—

**न पर्वताग्रे नलिनी प्ररोहति,**
**न गर्दभा वाजिधुरं वहन्ति ।**
**यवाः प्रकीर्णा न भवन्ति शालयो,**

---

अत्रोपमा, श्लेषश्चालङ्कारौ । उपजातिश्छन्दः । अत्रोपमानोपमेययोर्वचन-भिन्नतया भग्नप्रक्रमो नाम दोषः । आतुरवचनत्वात् कथंचित् समाधेयः ॥१५॥

स्त्रीणां चापल्यं प्रतिपादयति—अन्यं मनुष्यमिति । स्त्रियः स्वहृदये कम-प्यन्यं पुरुषं धारयन्ति, लोचनाञ्चलचालनेन चान्यं कमपि समाह्वयन्ति, मदस्य = गर्वस्य प्रसेकम् = परित्यागमन्यत्र कुर्वन्ति, शरीरेण च कमपि भिन्नमेव पुरुषं कामयन्ते । एतासां मनस्यन्यत्, वचस्यन्यत्, कर्मणि चान्यत् कर्म भवति । अतोऽविश्वास्याः सर्वदा स्त्रियः, इति भावः । अत्र दीपकोऽलङ्कारः । इन्द्रवज्रा च्छन्दः ॥१६॥

अस्मिन्नेव विषये कस्यापि सूक्तिं प्रमाणयति—न पर्वताग्रे—इति । कमलिनी कदापि पर्वतस्य मूर्ध्नि नोत्पन्ना भवति, गर्दभा अश्वानां भारमुद्वोढुं न क्षमन्ते, भूमौ प्रक्षिप्ता यवाः क्वापि शालयो = धानाः न भवन्ति, तथैव वेश्याजनोऽपि शुचिर्न

---

स्त्रियाँ अत्यन्त चञ्चल होती हैं !—

"ये हृदय में किसी अन्य को रखकर दृष्टि से किसी और को ही बुलाती हैं। कहीं अन्यत्र ही ये गर्व का परित्याग करती हैं तथा शरीर से किसी दूसरे को ही चाहती हैं। ( मनसा वाचा कर्मणा ये छलमयी होती हैं। अतः इनका विश्वास नहीं करना चाहिए।" ॥१६॥

किसी ने यह बहुत ही ठीक कहा है—

"कमलिनी शैल शिखर पर कभी नहीं उगती, गधे कभी घोड़े का कार्य नहीं करते ( खेत आदि में ) फेंके गये जौ कभी धान नहीं बनते। ठीक इसी प्रकार

**न वेशजाताः शुचयस्तथाङ्गनाः ॥१७॥**

आः दुरात्मन् चारुदत्तहतक ! अयं न भवसि । ( इति कतिचित् पदानि गच्छति )

मदनिका—( अञ्चले गृहीत्वा ) अइ असंबद्धभासअ ! असंभावणीए कुप्पसि । [ अयि असम्बद्धभाषक ! असंभावनीये कुप्यसि ? । ]

शर्विलकः—कथमसम्भावनीयं नाम ? ।

मदनिका—एसो खु अलंकारओ अज्जआकेरओ । [ एष खल्वलंकार आर्यासम्बन्धी । ]

शर्विलकः—ततः किम् ?

मदनिका—स च तस्स अज्जस्स हत्थे विणिक्खित्तो । [ स च तस्यार्यस्य हस्ते विनिक्षिप्तः । ]

शर्विलकः—किमर्थम् ? ।

मदनिका—( कर्णे ) एव्वं विअ ।[ एवमिव । ]

---

भवति । अत्र दृष्टान्तालङ्कारः । वंशस्थं च्छन्दः ॥१७॥

---

वेश्यायें भी पवित्र नहीं होती हैं ।" ॥१७॥

आः ! दुरात्मा चारुदत्त ! अब तू न रहेगा !

[ कुछ पैर ( कदम ) चलता है । ]

मदनिका—( आँचल में पकड़कर ) ऐ असङ्गत बोलनेवाले ! असम्भावित में क्यों क्रोध करते हो ?

शर्विलक—क्या "असम्भावनीय" है ?

मदनिका—यह अलङ्कार आर्या ( "वसन्तसेना" ) का है ।

शर्विलक—तो इससे क्या ( मतलब ? )

मदनिका—यह उन 'आर्य' ( "चारुदत्त" ) के हाथ में न्यासरूपेण रखा था ।

शर्विलक—किस लिए ?

मदनिका—( कान में ) "ऐसे ऐसे••"

शर्विलकः—( सवैलक्ष्यम् ) भोः कष्टम् ,—

**छायार्थं ग्रीष्मसंतप्तो यामेवाहं समाश्रितः ।**
**अजानता मया सैव पत्रैः शाखा वियोजिता ! ॥१८॥**

वसन्तसेना—कधं एसो वि संतप्पदि ज्जेव ? । ता अजाणंतेण एदिणा एव्वं अणुचिट्ठिदं । [ कथमेषोऽपि संतप्यत एव । तदजानतैतेनैव-मनुष्ठितम् । ]

शर्विलकः—मदनिके ! किमिदानीं युक्तम् ? ।

मदनिका—इत्थं तुमं ज्जेव्व पंडिओ । [ अत्र त्वमेव पण्डितः । ]

---

सर्वमपि तवेदं जल्पनं मुधेति वसन्तसेनाया अलङ्कारोऽयं तस्यार्यचारुदत्तस्य हस्ते न्यासरूपेणार्पितः, इति समाचारमाकर्ण्य सलज्जमाह शर्विलकः—**छायार्थमिति**। हन्त ! ग्रीष्मकालिकसन्तापेन सन्तप्तोऽहं छायार्थं यां शाखामाश्रितः, सैवावज्ञानवशान्मया पत्रहीना कृता ।

अयमाशयः—कामाग्निसन्ताप-शान्त्यर्थं यां वसन्तसेनामाश्रिय त्वां ग्रहीतुमिच्छामि, तस्या एव मया विद्वेषः क्रियते, सर्वथाऽनुचितमेतदिति स्वकृत्यं विनिन्दति ।

अत्र प्रस्तुतप्रशंसाऽलङ्कारः । पथ्यावक्त्रं च छन्दः ॥१८॥

---

**शर्विलक**—( लज्जासहित ) बड़ा दुःख है !

"कामाग्नि से सन्तप्त होकर छाया के लिए मैंने जिस शाखा का आश्रय ग्रहण किया था ( सचमुच ) अज्ञान में मैंने उसको ही पत्तों से विरहित कर डाला ! ( जिस "वसन्तसेना" की सेवा कर मैंने तुझे पाने की इच्छा की थी उसका ही यह अलङ्कार चुराकर निस्सन्देह मैंने बुरा किया है । )" ॥१८॥

**वसन्तसेना**—क्या यह भी दुखी हो रहा है । इसलिए इसने अनजाने में ही ऐसा किया है ।

**शर्विलक**—मदनिके ! तो अब क्या करना चाहिए ?

**मदनिका**—इसमें तो तुम्हीं चतुर हो ।

शर्विलकः—नैवम् ; पश्य,—

**स्त्रियो हि नाम खल्वेता निसर्गादेव पण्डिताः ।**
**पुरुषाणां तु पाण्डित्यं शास्त्रैरेवोपदिश्यते ॥१९॥**

मदनिका—सव्विलअ ! जइ मम वअणं सुणीअदि, ता तस्स ज्जेव महाणुभावस्स पडिणिज्जादेहि । [ शर्विलक ! यदि मम वचनं श्रूयते तदा तस्यैव महानुभावस्य प्रतिनिर्यातय । ]

शर्विलकः—मदनिके ! यद्यसौ राजकुले मां कथयति ?

मदनिका—ण चंदादो आदवो होदि । [ न चन्द्रादातपो भवति । ]

वसन्तसेना—साहु मदणिए ! साहु । [ साधु मदनिके ! साधु । ]

शर्विलकः—मदनिके !

---

किमधुना विधेयमिति प्रश्ने स्त्रीणां स्वाभाविकं पाण्डित्यं समर्थयते—स्त्रियो हीति । एताः स्त्रियो हि नाम ( सम्भावनायामिदम् ) स्वभावेनैव विज्ञाः सन्ति, पुरुषाणां पाण्डित्यन्तु शास्त्राणामध्ययनेनैव सम्भवति । अतो मदनिके ! त्वमेवात्र कर्तव्यमार्गमादिशेति भावः ॥१९॥

---

शर्विलक—ऐसा मत कहो । देखो—

"स्त्रियाँ स्वभाव से ही बड़ी पण्डित होती हैं । पुरुषों को शास्त्राध्ययनादि करने से ही ज्ञान आता है ( परन्तु स्त्रियाँ बिना पढ़े-लिखे प्रकृति से ही बड़ी चतुर होती हैं । )" ॥१९॥

मदनिका—यदि मेरी बात मानो तो इसे उन्हीं महानुभाव को लौटा आओ !

शर्विलक—मदनिके ! यदि उसने कचहरी में कह दिया ? ( शिकायत कर दी ? )

मदनिका—चन्द्रमा से कभी आतप नहीं झड़ता । ( उससे तो शीतलता ही चूती है । इसी प्रकार "चारुदत्त" कभी ऐसे कार्य नहीं कर सकते हैं । )

वसन्तसेना—वाह ! मदनिके ! वाह !

शर्विलक—मदनिके !

न खलु मम विषादः साहसेऽस्मिन्भयं वा,
कथयसि हि किमर्थं तस्य साधोर्गुणांस्त्वम् ? ।
जनयति मम वेदं कुत्सितं कर्म लज्जां,
नृपतिरिह शठानां मादृशां किं न कुर्यात् ॥२०॥

तथापि नीतिविरुद्धमेतत् । अन्य उपायश्चिन्त्यताम् ।

मदनिका—सो अअं अवरो उवाओ । [ सोऽयमपर उपायः । ]

वसन्तसेना—को खु अवरो उवाओ हुविस्सदि ? । [ कः खल्वपर

---

मदनिकातः "शर्विलक ! आर्यचारुदत्तायालङ्कारोऽर्प्यताम्, राजभीतिश्च ततो न कार्या, "न खलु चन्द्रमसः सकाशादातपसम्भवः" इतिदृष्टान्तमुपश्रुत्य" स्वविचारं प्रदर्शयति शर्विलकः—न खलु–इति । मदनिके ! अस्मिन् चौर्यकर्मणि कृते मम विषादो = दुःखं नास्ति, न च भयमस्ति, पुनरपि त्वं तस्य साधुपुरुषस्यार्यचारुदत्तस्य गुणान् कथं कथयसि ? इदं ममानुचितं चौर्यकर्मैव स्वयं लज्जां जनयति, अहं स्वयमेव कृतेनानेन कर्मणा लज्जितोऽस्मि, अत्रत्यो राजा महामूढः, मादृशां शठानां किन्तु दण्डविधानं कर्तुं शक्नुयात् ? स सर्वथाऽयोग्यः । राजभयमत्र नास्त्येव चौरादीनामत एवेदं राज्यं विध्वस्तं भवितुमर्हति, इति भावः । अहं तवादेशाद् गन्तुमार्यचारुदत्तायालङ्कारमर्पयितुं समर्थः सन्नपि नीतिविरुद्धतामेवात्र पश्यामि, न विषादं भयं वा, अतः कश्चिदन्य उपायश्चिन्त्यतामिति भावः ॥२०॥

---

"मुझे इस साहस ( चोरी ) में कोई भय या विषाद नहीं है । मैं तो स्वयं अपने किये पर लज्जित हूँ फिर तू क्यों उसमें गुणों का वर्णन कर और लज्जित कर रही है ? ( इसके लिए ) क्या यहाँ का राजा ( "पालक" ) मुझ जैसों को कोई दण्ड दे सकेगा ? ( यह राजा अयोग्य है । यहाँ चोरों की ही चलती है अतः राज्य से किसी दण्ड का मुझे भय नहीं है । )" ॥२०॥

फिर भी यह नीति के विरुद्ध है । कोई और उपाय सोचो ।

मदनिका—एक यह दूसरा उपाय है ।

वसन्तसेना—दूसरा उपाय क्या होगा ?

उपायो भविष्यति ? । ]

मदनिका--तस्स ज्जेव अज्जस्स केरओ भविअ एदं अलंकारअं अज्जआए उवणेहि । [ तस्यैवार्यस्य संबन्धी भूत्वेममलंकारकमार्याया उपनय । ]

शर्विलकः--एवं कृते किं भवति ? ।

मदनिका--तुमं दाव अचोरो, सो वि अज्जो अरिणो, अज्जआए सकं अलंकारअं उवगदं भोदि । [ त्वं तावदचौरः, सोऽप्यार्योऽनृणः, आर्यया स्वकोऽलंकार उपगतो भवति । ]

शर्विलकः--नन्वतिसाहसमेतत् ।

मदनिका--अइ ! उवणेहि, अण्णधा अदिसाहसं । [ अयि ! उपनय, अन्यथातिसाहसम् । ]

वसन्तसेना--साहु मदणिए ! साहु । अभुजिस्सए विअ मंतिदं [ साधु मदनिके ! साधु । अभुजिष्ययेव मन्त्रितम् । ]

---

"आर्यचारुदत्तस्यैव पुरुषो भूत्वा वसन्तसेनायै स्वयमेवालङ्कारमर्पयेति" युक्ति-युक्तमुपायं श्रुत्वा प्रसन्ना वसन्तसेना स्वगतं कथयति--साधु-इति । मदनिके ! अभुजिष्ययेव = गृहस्थस्य धर्मपत्न्येवेदं त्वयोपदिष्टम् ! धन्यासि त्वमिति भावः ।

---

मदनिका--"उन्हीं "आर्य चारुदत्त" के आदमी होकर तुम इस अलङ्कार "आर्या वसन्तसेना" को दे दो ।"

शर्विलक--ऐसा करने से क्या ( लाभ ) होगा ?

मदनिका--ऐसा करने से तुम चोर नहीं रहोगे, वह "आर्य" भी उऋण हो जायंगे तथा "आर्या" का अलङ्कार भी मिल जायगा ।

शर्विलक--यह तो बहुत साहस का कार्य है ।

मदनिका--अजी ! दे आओ ! अन्यथा ( इसके बाद ) यह 'अति साहस' हो जायगा ।

वसन्तसेना--साधु ! मदनिके ! साधु ! ( सचमुच ) विवाहिता की भाँति ही तूने सम्मति दी है ।

शर्विलकः—

**मयाप्ता महती बुद्धिर्भवतीमनुगच्छता ।**
**निशायां नष्टचन्द्रायां दुर्लभो मार्गदर्शकः ॥२१॥**

मदनिका—तेण हि तुमं इमस्सिं कामदेवगेहे मुहुत्तअं चिट्ठ, जाव अज्जाए तुह आगमणं णिवेदेमि । [ तेन हि त्वमस्मिन् कामदेवगेहे मुहूर्तकं तिष्ठ, यावदार्यायै तवागमनं निवेदयामि । ]

शर्विलकः—एवं भवतु ।

मदनिका—( उपसृत्य ) अज्जए ! एसो खु चारुदत्तस्स सआसादो बम्हणो आअदो । [ आर्ये ! एष खलु चारुदत्तस्य सकाशाद्ब्राह्मण आगतः । ]

वसन्तसेना—हञ्जे ! तस्स केरओ त्ति कधं तुमं जाणासि ? । [ चेटि ! तस्य संबन्धीति कथं त्वं जानासि ? । ]

---

उपायप्रदर्शनेनातिहृष्टः शर्विलकः प्राह—मयाप्तेति । मदनिके ! सर्वथा प्रशंसनीयासि, भवतीमनुगच्छता मया महती बुद्धिः समधिगता । यदा निशि चन्द्रोऽस्तमुपैति, सर्वत्र महानन्धकारो भवति, तदा मार्गप्रदर्शको दुर्लभ एवास्तीति, दृष्टान्तेनानेन मम बुद्धिविनाशे त्वया समीचीनो मार्गः प्रदर्शितः । एवमेव करिष्यामीति यथोचितं कुरु त्वमिदानीमिति भावः ।

अत्र दृष्टान्तालङ्कारः । पथ्यावक्त्रं च्छन्दः ॥ २१ ॥

---

**शर्विलक**—"मैंने तुम्हारे अनुसार चलकर बहुत बुद्धि पाई है । चन्द्ररहित रात्रि में पथ-प्रदर्शक बड़ा दुर्लभ होता है । ( परन्तु तुमने मुझे ठीक मार्ग दिखलाया है । अब तुम यथोचित कार्य करो । )" ॥२१॥

**मदनिका**—इसलिए तुम इस कामदेवायतन में तबतक क्षणभर बैठो जब तक कि मैं "आर्या" से तुम्हारा आगमन समाचार बताती हूँ ।

**शर्विलक**—ऐसा ही हो ।

**मदनिका**—( समीप जाकर ) आर्ये ! "आर्य चारुदत्त" के पास से एक ब्राह्मण आया है ।

**वसन्तसेना**—तूने कैसे जाना ( कि यह वहाँ से आया है ? )

मदनिका—अज्जए ! अत्तणकेरअं वि ण जाणामि ? । [ आर्ये ! आत्म-संबन्धिनमपि न जानामि ? । ]

वसन्तसेना—( स्वगतं सशिरःकम्पं, विहस्य ) जुज्जदि, ( प्रकाशम् ) पविसदु । [ युज्यते, प्रविशतु । ]

मदनिका—जं अज्जआ आणवेदि ( उपगम्य ) पविसदु सव्विलओ । [ यदार्याज्ञापयति । प्रविशतु शर्विलकः । ]

शर्विलकः—( उपसृत्य, सवैलक्ष्यम् ) स्वस्ति भवत्यै ।

वसन्तसेना—अज्ज ! वंदामि । उवविसदु अज्जो । [ आर्य ! वन्दे । उपविशत्वार्यः । ]

शर्विलकः—सार्थवाहस्त्वां विज्ञापयति—'जर्जरत्वाद्गृहस्य दूरक्ष्यमिदं भाण्डम् ; तद्गृह्यताम्' । ( इति मदनिकायाः समर्प्य प्रस्थितः )

---

वसन्तसेनायाः सविधे गत्वा मदनिका आर्यचारुदत्तस्य सकाशाद्ब्राह्मण आयातः, इति निवेदयति । "कथं त्वया ज्ञातस्तस्यैवायमिति" वसन्तसेनाप्रश्नमतीव प्रशंसनीयरीत्या च समाधत्ते मदनिका—आर्ये इति । आर्ये किमु आत्मीयमपि न परिचिनोमि ! यदि स तवास्ति, तर्हि अयमपि ममास्ति । इति मदनिकोक्तिः सर्वथा पाण्डित्यपूर्णः । सर्वः स्वकीयं जानात्येव । ममैवायमिति तु सुगुप्तो भावः ।

---

मदनिका—क्या अपने आदमी को भी नहीं पहचानूँगी ?

वसन्तसेना—( स्वयं ही सिर हिला हँसकर ) ठीक है । ( प्रकाश में ) आने दे !

मदनिका—जो आज्ञा ! ( पहुँचकर ) शर्विलक ! प्रवेश करो ।

शर्विलक—( पास जाकर ) आपका कल्याण हो ।

वसन्तसेना—आर्य ! प्रणाम करती हूँ ! बैठिये ।

शर्विलक—"सार्थवाह ( "आर्य चारुदत्त" ) आपके लिए कहते हैं कि—"घर के टूटे फूटे होने के कारण इस सुवर्णपात्र की रक्षा करना कठिन है । अतः ले लीजिए ।"

[ "मदनिका" को देकर चल पड़ता है । ]

वसन्तसेना—अज्ज ! ममावि दाव पडिसंदेसं तहिं अज्जो णेदु । [ आर्य ! ममापि तावत्प्रतिसंदेशं तत्रार्यो नयतु । ]

शर्विलकः—( स्वगत ) कस्तत्र यास्यति ? । ( प्रकाशम् ) कः प्रतिसंदेशः ? ।

वसन्तसेना—पडिच्छदु अज्जो मदणिअं । [ प्रतीच्छत्वार्यो मदनिकाम् । ]

शर्विलकः—भवति ! न खल्ववागच्छम् ।

वसन्तसेना—अहं अवगच्छामि । [ अहमवगच्छामि । ]

शर्विलकः—कथमिव ? ।

वसन्तसेना—अहं अज्जचारुदत्तेण भणिदा—'जो इमं अलंकारअं समप्पइस्सदि, तस्स तुए मदणिआ दादव्वा' । ता सो ज्जेव एदं दे देदित्ति, एव्वं अज्जेण अवगच्छिदव्वं । [ अहमार्यचारुदत्तेन भणिता—'य इममलंकारकं समर्पयिष्यति, तस्य त्वया मदनिका दातव्या । तत्स एवैतां ते ददातीत्येवमार्येणावगन्तव्यम् । ]

---

वसन्तसेना—आर्य ! आप मेरा 'प्रतिसन्देश' भी ले जाइये ।

शर्विलक—( स्वयं ही ) वहाँ कौन जायगा ? ( प्रकाश में ) क्या 'प्रतिसन्देश' है ?

वसन्तसेना—"आप "मदनिका" को स्वीकार करें" ।

शर्विलक—मैं आपका अभिप्राय नहीं समझा ।

वसन्तसेना—मैं समझ रही हूँ ।

शर्विलक—कैसे ?

वसन्तसेना—मुझसे "आर्य चारुदत्त" ने कह रखा है कि—"जो कोई इस अलङ्कार को ( तुम्हारे पास ) लाये उसे "मदनिका" देनी चाहिए ।" इसलिए "वे ही ("चारुदत्त" ही ) आपको "मदनिका" दे रहे हैं" ऐसा समझिए ।

शर्विलकः—( स्वगतम् ) अये विज्ञातोऽहमनया। ( प्रकाशम् ) साधु आर्यचारुदत्त ! साधु;

गुणेष्वेव हि कर्तव्यः प्रयत्नः पुरुषैः सदा।
गुणयुक्तो दरिद्रोऽपि नेश्वरैरगुणैः समः ॥२२॥

अपि च,—

गुणेषु यत्नः पुरुषेण कार्यो न किंचिदप्राप्यतमं गुणानाम्।
गुणप्रकर्षादुडुपेन शंभोरलङ्घ्यमुल्लङ्घितमुत्तमाङ्गम् ॥२३॥

---

वसन्तसेनाया युक्तियुक्तां वचनमाधुरीं परिपीयार्यचारुदत्तं प्रशंसन् कथयति—गुणेष्वेवेति। आर्यचारुदत्त ! तव गुणानां प्रशंसां कुतो नु यावत् करोमि ! इदानीं केवलमिदमेव वक्तुं युक्तमाभाति—पुरुषैः सदा गुणेष्वेव हि प्रयत्नो विधेयः। गुणयुक्तो दरिद्रोऽपि जनः समुचितः। असंख्यैर्धनिकैरपि गुणरहितैस्तस्य तुलनाकर्तुं नैव शक्यते। तवैव गुणानां कृपया मदनिका मया लभ्यते—धन्योऽसि !

अत्रार्थान्तरन्यासोऽलङ्कारः। अनुष्टुप् छन्दः ॥२२॥

गुणानामेव प्रशंसां करोति—गुणेषु इति। पुरुषैः सदा गुणानामेव संग्रहे यत्नो विधेयः। गुणानां किमपि अप्राप्यं नास्ति। गुणानां प्रकर्षादेव चन्द्रमसा

---

**शर्विलक**—( स्वयं ही ) अरे ! क्या इसने मुझे जान लिया ? ( प्रकाश में ) धन्य ! आर्य चारुदत्त ! धन्य !

"मनुष्य को गुणों के लिए ही सदा प्रयत्न करना चाहिए। गुणी निर्धन भी गुण-रहित ( सैकड़ों ) धनियों के समान नहीं होता ( सैकड़ों गुणहीन धनी भी एक दरिद्र, पर गुणवान् व्यक्ति की तुलना नहीं कर सकते। )" ॥२२॥

और भी—

"पुरुष को गुणों के लिए यत्न करना चाहिए। गुणों के द्वारा कुछ भी दुर्लभ नहीं है। गुणों के कारण ही चन्द्रमा ने "भगवान् शङ्कर" के सिर पर स्थान प्राप्त किया है। ( अतः "आर्य चारुदत्त" के गुणों का महत्व अवश्य ही अभिनन्दनीय है। )" ॥२३॥

वसन्तसेना—को एत्थ पवहणिओ ? । [ कोऽत्र प्रवहणिकः ? । ]

( प्रविश्य सप्रवहणः )

चेटः—अज्जए ! सज्जं पवहणं । [ आर्ये ! सज्जं प्रवहणम् । ]

वसन्तसेना—हञ्जे मअणिए ! सुदिट्ठं मं करेहि । दिण्णासि । आरुह पवहणं । सुमरेसि मं । [ चेटि मदनिके ! सुदृष्टां मां कुरु । दत्तासि । आरोह प्रवहणम् । स्मरसि माम् । ]

मदनिका—( रुदती ) परिच्चत्तम्हि अज्जआए । [ परित्यक्तास्म्यार्यया । ] ( इति पादयोः पतति )

वसन्तसेना—संपदं तुमं ज्जेव्व वंदणीआ संवुत्ता । ता गच्छ, आरुह पवहणं । सुमरेसि मं । [ सांप्रतं त्वमेव वन्दनीया संवृत्ता । तद्गच्छ, आरोह प्रवहणम् । स्मरसि माम् । ]

शर्विलकः—स्वस्ति भवत्यै । मदनिके !

---

भगवतः शङ्करस्य शिरसि स्थानमधिगतम् । अतश्चारुदत्तस्य गुणाभिनन्दनं सर्वथा-समुचितमेवेति भावः ।

---

वसन्तसेना—यहाँ रथवाहकों में से कौन है ?

( प्रवहण सहित प्रवेश कर )

चेट—आर्ये ! रथ तैयार है ।

वसन्तसेना—मदनिके ! मुझे भलीभाँति देखले ! ( मुझसे मिल ले ) अब तो तू प्रदान कर दी गई । रथ पर बैठ ! मुझे स्मरण रखना !

मदनिका—( रोती हुई ) मुझे आपने छोड़ दिया है ।

[ ऐसा कहकर चरणों में गिर पड़ती है । ]

वसन्तसेना—अब तो तू ही वन्दनीय हो गई है । इसलिए जा, रथ पर बैठ ! मेरा स्मरण करती रहना !

शर्विलक—आपका कल्याण हो ! मदनिके !

सुदृष्टः क्रियतामेष शिरसा वन्द्यतां जनः ।
यत्र ते दुर्लभं प्राप्तं वधूशब्दावगुण्ठनम् ॥२४॥

( इति मदनिकया सह प्रवहणमारुह्य गन्तुं प्रवृत्तः )

( नेपथ्ये )

कः कोऽत्र भोः ! राष्ट्रियः समाज्ञापयति—'एष खल्वार्यको गोपालदारको राजा भविष्यतीति सिद्धादेशप्रत्ययपरित्रस्तेन पालकेन राज्ञा घोषादानीय घोरे बन्धनागारे बद्धः । ततः स्वेषु स्वेषु स्थानेष्वप्रमत्तैर्भवद्भिर्भवितव्यम्' ।

शर्विलकः—( आकर्ण्य ) कथं राज्ञा पालकेन प्रियसुहृदार्यको मे बद्धः ? । कलत्रवांश्चास्मि संवृत्तः । आः, कष्टम् ; अथवा—

---

स्वगृहं प्रति प्रस्थातुकामः शर्विलको मदनिकां वदति—सुदृष्टः इति । मदनिके ! वसन्तसेनां सम्यक् पश्य, अस्याः कृपयैव त्वया दुर्लभमिदं वधू-शब्दस्यावगुण्ठनं प्राप्तम् । अद्य त्वं वेश्यागृहान्मुक्ति प्राप्य वधूर्जातासीति सर्वोऽप्ययमेतस्या एव वसन्तसेनाया अनुभावः । अत्र "शिक्षा स्यादुपदेशनमि"ति साहित्यसिद्धान्तादुपदेशनं नाम नाट्यालङ्करणं प्रदर्शितम् । काव्यलिंगालङ्कारः । पथ्यावक्त्रं छन्दः ।२४।

---

"इनका भलीभाँति दर्शन कर प्रणाम करो ! इनकी कृपा से ही तुमने दुर्लभ "वधू"-पद पाया है ।" ॥२४॥

[ "मदनिका" के साथ रथ पर चढ़कर जाने लगता है । ]

( नेपथ्य में )

यहाँ कौन है ! सुनो ! "राष्ट्रिय" ( कोतवाल साहब ) आज्ञा देते हैं कि—"यह गोपालपुत्र "आर्यक" राजा होगा" इस सिद्ध पुरुषों के वचन से भयभीत होकर राजा "पालक" ने इसे 'घोष' ( गोपालों के रहने का स्थान ) से लाकर भयङ्कर कारागार में बाँधकर डाल दिया है । अतः आप लोगों ( रक्षकों ) को अपने-अपने स्थान पर सतर्क होकर रहना चाहिए ।"

शर्विलक—( सुनकर ) क्या "राजा पालक" ने प्रिय मित्र "आर्यक" को बाँध लिया है ! और मैं स्त्रीवाला हो गया हूँ । ओह ! खेद है ! अथवा—

**द्वयमिदमतीव लोके प्रियं नराणां सुहृच्च वनिता च ।**
**संप्रति तु सुन्दरीणां शतादपि सुहृद्विशिष्टतमः ॥२५॥**

भवतु, अवतरामि । ( इत्यवतरति )

मदनिका—( सास्रमञ्जलिं बद्ध्वा ) एव्वं णेदं । ता परं णेदु मं अज्जउत्तो

---

गोपालस्य पुत्रः "आर्यकः राजा भविष्यतीति सिद्धपुरुषाणां वचने श्रद्धा-युक्तेन वर्तमानेन राज्ञा "पालकेन"—असौ घोषादानीय बन्धनागारे प्रक्षिप्तः, अतः सर्वे रक्षिणः स्वस्वस्थानेषु सावधानास्तिष्ठन्तु, इति नेपथ्ये नगरपालकस्य राष्ट्रियस्यादेशमाकर्ण्य, शर्विलक एवंविधे समये मित्रस्यार्यकस्य साहाय्ये निजपत्नीं विघ्नत्वेनोद्भाव्य स्वमतं प्रदर्शयति—द्वयमिति । संसारे सर्वेष्वपि पदार्थेषु मित्रं पत्नी चेति वस्तुद्वयं सर्वेषां जनानां प्रियं भवति, इति यद्यपि सत्यम्, इदानीमेव च कलत्रवान् संजातोऽस्मि, तथापि सुन्दरीणां शतादपि सम्प्रति मित्रं मे "आर्यकः" विशिष्टोऽस्ति । तस्य रक्षार्थं मदनिकाप्राप्तिमपि न गणयामीति भावः । इत्येवं निश्चित्य रथादवतीर्णः । अत्र शर्विलकस्य महती उदारता प्रदर्शिता कविना । मित्रार्थे मित्राणां कर्तव्यमतीव-रमणीयमुपस्थापितम् । अत्र "आश्रयः" इति नाम्यालङ्कारः प्रदर्शितः । तल्लक्षणञ्च यथा साहित्यदर्पणे—"ग्रहणं गुणवत् कार्यहेतो-राश्रय उच्यते, इति । आर्या च्छन्दः ॥२५॥

---

( यद्यपि ) संसार में लोगों को स्त्री और मित्र ये दो ही बहुत प्रिय होते हैं । तथापि इस समय तो सैकड़ों सुन्दरियों से भी अधिक मेरा मित्र ही ( "आर्यक" ) विशेष है ।" ॥२५॥

अच्छा तो उतरता हूँ ।　　[ रथ से उतर पड़ता है । ] ❀

मदनिका—( आँखों में आँसू भरकर तथा हाथ जोड़कर )

---

❀ यहाँ कवि ने "शर्विलक" का चरित्र-चित्रण बहुत ही सुन्दर रूप में किया है । "नवविवाहिता" पत्नी को छोड़कर एकदम मित्र की सहायता के लिए चल पड़ना" "शर्विलक" की सच्ची मित्रता का ज्वलन्त उदाहरण है ।

समीवं गुरुअणाणं। [ एवं नेदम्। तत्परं नयतु मामार्यपुत्रः समीपं गुरुजनानाम्। ]

शर्विलकः—साधु प्रिये ! साधु; अस्मच्चित्तसदृशमभिहितम्। ( चेटमुद्दिश्य ) भद्र ! जानीषे रेभिलस्य सार्थवाहस्योदवसितम् ?।

चेटः—अध इं। [ अथ किम्। ]

शर्विलकः—तत्र प्रापय प्रियाम्।

चेटः—जं अज्जो आणवेदि। [ यदार्य आज्ञापयति। ]

मदनिका—जधा अज्जउत्तो भणादि, अप्पमत्तेण दाव अज्जउत्तेण होदव्वं। [ यथार्यपुत्रो भणति, अप्रमत्तेन तावदार्यपुत्रेण भवितव्यम्। ]

( इति निष्क्रान्तः )

शर्विलकः—अहमिदानीं

ज्ञातीन्विटान् स्वभुजविक्रमलब्धवर्णान्,

"अथ भवान् सुहृदो रक्षार्थं प्रस्थितस्तर्हि शीघ्रमेव मां गुरुजनानां समीपे प्रापयतु" इति मदनिकावचनानन्तरं भावरेभिलस्योदवसितम् = गृहं प्रापयेति चेटमादिश्य शर्विलकः प्राप्तकालं स्वकर्तव्यं सूचयति—ज्ञातीनिति।

यदि आप जाते हैं तो मुझे शीघ्र गुरुजनों के समीप पहुँचा दें।

शर्विलक—प्रिये ! वाह ! तुमने मेरे मन की बात कही है। ( चेट से ) सौम्य ! तुम "रेभिल"का घर जानते हो ?

चेट—जी हाँ।

शर्विलक—तो वहाँ प्रियतमा ( "मदनिका" ) को पहुँचा दो।

चेट—जो आप आज्ञा देते हैं !

मदनिका—जो आपकी आज्ञा ! आप भी ( मित्र के कार्य में ) प्रमाद न करना। [ चली जाती है। ]

शर्विलक—अब मैं—

"जिस प्रकार "राजा उदयन" के अभ्युदय के लिए "यौगन्धरायण"† ने

† "महाराज "उदयन" का राज्य शत्रुओं के हाथ में चला गया। उसको

राजापमानकुपितांश्च नरेन्द्रभृत्यान् ।
उत्तेजयामि सुहृदः परिमोक्षणाय,
यौगन्धरायण इवोदयनस्य राज्ञः ॥२६॥

अहमिदानीं स्वमित्रस्यार्यकस्य परिमोक्षणार्थं, उदयनस्य राज्ञः परिमोचनार्थं तन्मन्त्रिणा यौगन्धरायणेन पुरा यथाऽन्तःप्रकृतिकोपः समुत्पादितः, तथैव ज्ञातीन् =स्वजातीयान् बन्धून् विटान्=धूर्तान्, स्वभुजयोर्विक्रमेण लब्धवर्णान्=प्राप्तयशसो राज्ञोऽपमानेन कुपितान् नरेन्द्रस्यास्य पालकस्य भृत्यान्, तत्तत्कारणकलापं प्रदर्श्य एकत्रीकरोमि । सर्वानपि संगृह्य मित्ररक्षोपायं सम्पादयामि, इति भावः । उपमाऽत्राऽलङ्कारः । वसन्ततिलका च्छन्दः ।

पूर्वकाले उज्जयिनीनायकेन चन्द्रसेनेन उदयनसंज्ञो वत्सराजः केनापि हेतुना कारागारे परिक्षिप्तः ; यौगन्धरायणेन तन्मन्त्रिणा च स्वबुद्धिवैभवेनान्तःप्रकृतिकोपमुत्पाद्य मोचितः, इति कथाऽत्रानुसन्धेया । ॥ २६ ॥

---

प्रकृति-कोप ( विद्रोह ) कर दिया था उसी प्रकार मैं भी अपनी जाति के लोगों, विटों, तथा राजा ( "पालक" ) के अपमान से क्षुब्ध सेवकों को मित्र ( आर्यक ) को मुक्त कराने के लिए सब ओर से उत्तेजित करता हूँ ।" ॥२६॥

---

पुनः जीतने के लिए "मगध" के राजा "दर्शक" की सहायता लेना आवश्यक था । "उदयन" का "यौगन्धरायण" नामक मन्त्री बहुत ही नीतिज्ञ था । राज्य-प्राप्ति के लिए "दर्शक" की सहायतार्थ उसने "उदयन" की प्रियतमा "वासवदत्ता" के जलकर मर जाने का" मिथ्या प्रचार कर दिया; परन्तु वास्तव में "वासवदत्ता" को उसने "दर्शक" की भगिनी "पद्मावती" के पास वेष बदल कर न्यास-रूप में रख दिया । कुछ समय पश्चात् उसकी नीति से ही "उदयन" का विवाह "पद्मावती" के साथ हो गया । इधर "दर्शक" की सहायता तथा "यौगन्धरायण" की नीति से "उदयन" ने "वत्स-विजय" की । बाद में "वासवदत्ता" भी "वत्सराज" को मिल गई ।" इस प्रकार "यौगन्धरायण" ने बुद्धिबल से गया हुआ राज्य प्रजा में विद्रोह फैलाकर जिता दिया ।

अपि च,—

प्रियसुहृदमकारणे गृहीतं,
रिपुभिरसाधुभिराहितात्मशङ्कैः ।
सरभसमभिपत्य मोचयामि,
स्थितमिव राहुमुखे शशाङ्कबिम्बम् ॥२७॥

( इति निष्क्रान्तः )

( प्रविश्य )

चेटः—अज्जए ! दिट्ठिआ वड्ढसि । अज्जचारुदत्तस्स सआसादो बम्हणो आअदो । [ आर्ये ! दिष्ट्या वर्धसे । आर्यचारुदत्तस्य सकाशाद्ब्राह्मण आगतः । ]

---

पुनरपि स्वकर्तव्यमाह—प्रियसुहृदमिति । असाधुप्रकृतिभिः सशङ्कैः शत्रुभिरेभिर्मम सुहृन्निगृहीतः, तत्र कारणं विनैव गृहीतं निजमित्रमार्यकं सहसा अभिक्रमणं विधाय राहुमुखे निपतितं चन्द्रबिम्बमिव मोचयिष्यामि । अत्रोपमा । पुष्पिताग्रा च्छन्दः ॥ २७ ॥

वसन्तसेनायाः काचिदपरा चेटी = सेविका समागत्य चारुदत्तस्य समीपात् समागतं विदूषकं सूचयितुं सहर्षमाह—अज्जए-इति । आर्ये ! दिष्ट्या = सौभाग्येन वर्धसे, तव वृद्धिरस्ति, [ नाटकीयभाषायां "दिष्ट्या" इत्यस्य सौभाग्येनेत्यर्थो भवतीति ज्ञेयम् ] आर्यचारुदत्तस्य सकाशात् = समीपात्, ब्राह्मणो मैत्रेयः समागतः

---

और भी—

"सशङ्क एवं दुष्ट स्वभाव वाले शत्रुओं से अकारण ही पकड़े हुए मित्र को सहसा आक्रमण करके, "राहु" के मुख में पड़े हुए चन्द्रमा के समान, शीघ्र ही छुड़ाता हूँ ।" ॥२७॥ [ चला जाता है । ]

( प्रवेश कर )

चेटी— आर्ये ! प्रसन्नता की बात है । "आर्य चारुदत्त" के पास से ब्राह्मण आया है ।

वसन्तसेना—अहो, रमणीअदा अज्ज दिवसस्स । ता हञ्जे ! सादरं बंधुलेण समं पवेसेहि णं । [ अहो, रमणीयताद्य दिवसस्य । तच्चेटि ! सादरं बन्धुलेन समं प्रवेशयैनम् । ]

चेटी—जं अज्जआ आणवेदि । [ यदार्याज्ञापयति । ] ( इति निष्क्रान्ता )

( विदूषको बन्धुलेन सह प्रविशति )

विदूषकः—ही ही भो, तवच्चरणकिलेसविणिज्जिदेण रक्खसराअ

---

बहिस्तिष्ठति, तदर्थं का भवत्या आज्ञा ?

चेटीमुखादुक्तं समाचारं श्रुत्वा प्रसन्ना वसन्तसेना आह—अहो—इति । आश्चर्यम् ! अद्यतनो दिवसः परमरमणीयः समायातः, सर्वाश्चर्यमय इत्यर्थः । पूर्वमेकस्य शर्विलकस्य वृत्तमपि मनोहरमासीत्, अयमपरः समागत्य न जाने कीदृशीं सूचनां प्रदास्यतीति ? यत्सत्यं दिवसोऽद्य रमणीयः । अपि च—रमितुं योग्यो रमणीयस्तस्य भावो रमणीयता; ततश्चाहमद्य रमणार्थं गमिष्यामिति तत्र महानानन्दानुभवो भविष्यतीत्यर्थोऽभिव्यञ्जितः, यदि सुहृद्भ्यो रोचते । तत् , चेटि ! सादरं = सत्कारसहितम् । यस्य कस्यापि स्वगृहे समागतस्य सत्कारोऽवश्यं कर्तव्यः, तत्राप्ययं तु ब्राह्मणः, तत्रापि मम हृदयवल्लभस्य सकाशादायातः । अतः सर्वथा सत्कर्तव्यः, इति भावः । बन्धुलेन = वक्ष्यमाणस्वरूपेण मनुष्यविशेषेण सह प्रवेशय एनम् समायातं ब्राह्मणमिति भावः । [ बन्धुलाः = परगृहे पालिताः, परान्नेन पुष्टाः, परस्त्रीषु परपुरुषैः समुत्पादिता गुणरहिता भवन्ति । वक्ष्यति कविः स्वयमेवास्मिन्नङ्के ( २८ ) संख्यके श्लोके तेषां स्वरूपम् ] ।

चेट्या बन्धुलेन च सह समागच्छन् विदूषको भवने प्रविशन् स्वस्य माहात्म्यं वर्णयति—ही ही भोः—इति । विस्मयबोधकमिदमव्ययपदम् । राक्षसानामधि-

---

वसन्तसेना—अहा ! आज का दिन बड़ा ही सुहावना है ! इसलिए हला ! "बन्धुल" के साथ आदरपूर्वक उसे बुला लाओ !

चेटी—जो आर्या की आज्ञा !

[ चली जाती है । ]

[ तदनन्तर "बन्धुल" तथा "चेटी" के साथ "विदूषक" प्रवेश करता है । ]

रावणो पुप्फकेण विमाणेण गच्छदि। अहं उण बम्हणो अकिदतवच्चरण-किलेसो वि णरणारीजणेण गच्छामि। [ आश्चर्यं भोः, तपश्चरणक्लेशविनिर्जितेन राक्षसराजो रावणः पुष्पकेण विमानेन गच्छति। अहं पुनर्ब्राह्मणोऽकृततपश्चरणक्लेशोऽपि नरनारीजनेन गच्छामि। ]

चेटी—पेक्खदु अज्जो अम्हकेरकं गेहदुआरं। [ प्रेक्षतामार्योऽस्मदीयं गेहद्वारम्। ]

विदूषकः—( अवलोक्य, सविस्मयम् ) अहो सलिलसित्तमज्जिदकिदह-

---

पतिर्लङ्केशो रावणो महता तपश्चरणक्लेशेन कुवेरस्य पुष्पकविमानमवजित्य तमारुह्य यातिस्म, परमहं तु तपो विनैवाद्य नरेण = बन्धुलेन युक्ता नारी = चेटी, तया सह यामि, अहो! मे महत्त्वमिति भावः। "णअरणारी जणेण" इत्यपि पाठः क्वचित् पुस्तकेऽस्ति, तत्र—"नगर-नारी-जनेन" इति संस्कृतम्। नगरस्य प्रधान-भूता या नारी वसन्तसेना, तस्याः जनेन सहेत्यर्थो भवति। वसन्तसेना-भवने प्रवेशोऽतिशयतपश्चरणमन्तराऽन्यस्य न भवति, मम तु सौभाग्यमिदम्! यतोऽहं तपो विनैवेह गच्छामीति तु तत्त्वम्।

चेट्या द्वारदर्शनार्थं प्रार्थितो विदूषको वसन्तसेनाभवनस्य द्वार-वैभव-शोभां वर्णयति—अहो! सलिलेति। अत्र षष्ठ्यन्तानि द्वारस्य विशेषणानि विज्ञेयानि। सलिलेन = जलेन सिक्तम् = आर्द्रीकृतम्, मार्जितम् = मार्जन्या मार्जितं = शोधितम्, ( पश्चात् ) कृतं = रचितं हरितोपलेपनम् = हरितवर्णगोमयस्योपलेपनं यस्मिन्

---

विदूषक—आश्चर्य है! राक्षसराज "रावण" तो बहुत तपस्या के क्लेश से विजित पुष्पक विमान से घूमा करता था परन्तु मैं ब्राह्मण बिना किसी तपस्या के ही नर ( "बन्धुल" ) तथा नारी ( "चेटी" ) ( अथवा—नगरनारी "वसन्तसेना" के परिजनों ) के साथ घूम रहा हूँ। ( बिना तप के "वसन्तसेना" के घर में प्रवेश करना असम्भव है परन्तु मैं तो विचरण कर रहा हूँ—यह मेरा सौभाग्य है। )

चेटी—आप हमारे भवन-द्वार का निरीक्षण करें।

विदूषक—( देखकर आश्चर्य से ) [ उसके गृह द्वार की शोभा का वर्णन

रिदोवलेवणस्स, विविहसुअंधिकुसुमोवहारचित्तलिहिदभूमिभाअस्स, गअ-णतलाअलोअणकोदूहलदूरुण्णामिदसीसस्स, दोलाअमाणावलंबिदैरावणहत्थब्भमाइदमल्लिआदामगुणालंकिदस्स, समुच्छिदर्दंतिदंततोरणाव-

---

तस्य, [ पूर्वमत्र द्वारदेशे जलसेकः कृतः, ततो मार्जन्या सर्वोऽप्यवकरः ( कूड़ा-कर्कटेति भाषायाम् ) दूरीकृतः, अनन्तरञ्च हरित-वर्णेन गोमयेन परिलेपनं कृतमिति सरलोऽर्थः । ] विविधेति । विविधानां = बहुप्रकाराणां, सुगन्धितानाम् = शोभन-गन्ध-युक्तानां, कुसुमानां = पुष्पाणाम्, उपहारेण = रचनार्चनादिरूपेण, चित्रं = विचित्रं यथा स्यात्तथा लिखितः = अलङ्कृतः, भूमेः = पृथिव्याः, भागः = एकदेशो यस्य, तस्य ; [ नानाप्रकारैः सुगन्धितैः पुष्पैः विचित्ररीत्या भूम्याः एकदेशः सुशोभितः । ] गगन इति । गगनतलस्य = आकाशस्य अवलोकनाय = दर्शनाय, ( इव ) यत् कौतूहलम् = औत्सुक्यम् तेन दूरम् = अत्यर्थम् यथा स्यात्तथा उन्नामितम् = उपरिकृतम् शीर्षं = शिरोभागो यस्य तस्य [ यस्य भवनस्य उपरितनो भागो नभोऽवलोकनार्थमिव समुन्नतः प्रतिभाति । ] दोलायमानेति । दोलायितः = इतस्ततः परिचलन्, अत एव—अवलम्बितः = अधोऽवलम्बितः ऐरावणस्य ऐरावतस्येन्द्र—गजस्य हस्तस्य = शुण्डादण्डस्य भ्रमायितः = भ्रमोत्पादकः, यो मल्लिकादामगुणः = मल्लिका-कुसुम-माला, तेन ( गुणेन ) अलंकृतस्य = शोभितस्य—[ बहिर्द्वारे मल्लिकामालाऽवलम्बते, सा एवं प्रतीयते यथा गजराजस्यैरावतस्य शुण्डादण्डोऽयमिति भावः । ] समुच्छ्रितेति । समुच्छ्रितेन = अत्युन्नतेन दन्तिनो = गजस्य दन्तेन निर्मितं = रचितं यत्

---

करता है—] ओह ! ( द्वार पर ) पहिले जल का छिड़काव कर, तदनन्तर मार्जनी ( बुहारी ) से कूड़ा-कर्कट स्वच्छ कर, हरे रङ्ग से लीपा गया है, स्थान-स्थान पर भाँति-भाँति के सुगन्धित पुष्पों को सजाने से भूमिभाग चित्रित-सा प्रतीत हो रहा है, आकाश को देखने की उत्कट उत्कण्ठा से ही मानों वह सिर ऊँचा कर रहा है ( उसका द्वार गगनचुम्बी है ), 'ऐरावत' के सूँड का भ्रम करा देने वाली लटकती हुई 'चमेली' की मालाओं से अलङ्कृत ऊँचे ऊँचे हाथी-दाँतों के तोरणों से

रावणो पुप्फकेण विमाणेण गच्छदि। अहं उण बम्हणो अकिदतवच्चरण-किलेसो वि णरणारीजणेण गच्छामि। [ आश्चर्यं भोः, तपश्चरणक्लेशविनिर्जितेन राक्षसराजो रावणः पुष्पकेण विमानेन गच्छति। अहं पुनर्ब्राह्मणोऽकृततपश्चरणक्लेशोऽपि नरनारीजनेन गच्छामि। ]

चेटी—पेक्खदु अज्जो अम्हकेरकं गेहदुआरं। [ प्रेक्षतामार्योऽस्मदीयं गेहद्वारम्। ]

विदूषकः—( अवलोक्य, सविस्मयम् ) अहो सलिलसित्तमज्जिदकिदह-

---

पतिलङ्क्लेशो रावणो महता तपश्चरणक्लेशेन कुबेरस्य पुष्पकविमानमवजित्य तमारुह्य यातिस्म, परमहं तु तपो विनैवाद्य नरेण = बन्धुलेन युक्ता नारी = चेटी, तया सह यामि, अहो ! मे महत्त्वमिति भावः। "णअरणारी जणेण" इत्यपि पाठः क्वचित् पुस्तकेऽस्ति, तत्र—"नगर-नारी जनेन" इति संस्कृतम्। नगरस्य प्रधान-भूता या नारी वसन्तसेना, तस्याः जनेन सहेत्यर्थो भवति। वसन्तसेना-भवने प्रवेशोऽतिशयतपश्चरणमन्तराऽन्यस्य न भवति, मम तु सौभाग्यमिदम्! यतोऽहं तपो विनैवेह गच्छामीति तु तत्त्वम्।

चेट्या द्वारदर्शनार्थं प्रार्थितो विदूषको वसन्तसेनाभवनस्य द्वार-वैभव-शोभां वर्णयति—अहो ! सलिलेति। अत्र षष्ठ्यन्तानि द्वारस्य विशेषणानि विज्ञेयानि। सलिलेन = जलेन सिक्तम् = आर्द्रीकृतम्, मार्जितम् = मार्जन्या मार्जितं = शोधितम्, ( पश्चात् ) कृतं = रचितं हरितोपलेपनम् = हरितवर्णगोमयस्योपलेपनं यस्मिन्

---

विदूषक—आश्चर्य है ! राक्षसराज "रावण" तो बहुत तपस्या के क्लेश से विजित पुष्पक विमान से घूमा करता था परन्तु मैं ब्राह्मण बिना किसी तपस्या के ही नर ( "बन्धुल" ) तथा नारी ( "चेटी" ) ( अथवा—नगरनारी "वसन्तसेना" के परिजनों ) के साथ घूम रहा हूँ। ( बिना तप के "वसन्तसेना" के घर में प्रवेश करना असम्भव है परन्तु मैं तो विचरण कर रहा हूँ—यह मेरा सौभाग्य है। )

चेटी—आप हमारे भवन-द्वार का निरीक्षण करें।

विदूषक—( देखकर आश्चर्य से ) [ उसके गृह द्वार की शोभा का वर्णन

रिदोवलेवणस्स, विविहसुअंधिकुसुमोवहाररचित्तलिहिदभूमिभाअस्स, गअ-गतलाअलोअणकोदूहलदूरुण्णामिदसीसस्स, दोलाअमाणावलंबिदैरा-वणहत्थब्भमाइदमल्लिआदामगुणालंकिदस्स, समुच्छिददंतिदंततोरणाव-

---

तस्य, [ पूर्वमत्र द्वारदेशे जलसेकः कृतः, ततो मार्जन्या सर्वोऽप्यवकरः ( कूड़ा-कर्कटेति भाषायाम् ) दूरीकृतः, अनन्तरञ्च हरित-वर्णेन गोमयेन परिलेपनं कृतमिति सरलोऽर्थः । ] विविधेति । विविधानां = बहुप्रकाराणां, सुगन्धिता-नाम् = शोभन-गन्ध-युक्तानां, कुसुमानां = पुष्पाणाम्, उपहारेण = रचनार्चनादि-रूपेण, चित्रं = विचित्रं यथा स्यात्तथा लिखितः = अलङ्कृतः, भूमेः = पृथिव्याः, भागः = एकदेशो यस्य, तस्य ; [ नानाप्रकारैः सुगन्धितैः पुष्पैः विचित्ररीत्या भूम्याः एकदेशः सुशोभितः । ] गगन इति । गगनतलस्य = आकाशस्य अव-लोकनाय = दर्शनाय, ( इव ) यत् कौतूहलम् = औत्सुक्यम् तेन दूरम् = अत्य-र्थम् यथा स्यात्तथा उन्नामितम् = उपरिकृतम् शीर्षं = शिरोभागो यस्य तस्य [ यस्य भवनस्य उपरितनो भागो नभोऽवलोकनार्थमिव समुन्नतः प्रतिभाति । ] दोलायमानेति । दोलायितः = इतस्ततः परिचलन्, अत एव—अवलम्बितः = अधोऽवलम्बितः ऐरावणस्य ऐरावतस्येन्द्र—गजस्य हस्तस्य = शुण्डादण्डस्य भ्रमायितः = भ्रमोत्पादकः, यो मल्लिकादामगुणः = मल्लिका-कुसुम-माला, तेन ( गुणेन ) अलंकृतस्य = शोभितस्य—[ बहिर्द्वारे मल्लिकामालाऽवलम्बते, सा एवं प्रतीयते यथा गजराजस्यैरावतस्य शुण्डादण्डोऽयमिति भावः । ] समुच्छ्रितेति । समुच्छ्रितेन = अत्युन्नतेन दन्तिनो = गजस्य दन्तेन निर्मितं = रचितं यत्

---

करता है—] ओह ! ( द्वार पर ) पहिले जल का छिड़काव कर, तदनन्तर मार्जनी ( बुहारी ) से कूड़ा-कर्कट स्वच्छ कर, हरे रङ्ग से लीपा गया है, स्थान-स्थान पर भाँति-भाँति के सुगन्धित पुष्पों को सजाने से भूमिभाग चित्रित-सा प्रतीत हो रहा है, आकाश को देखने की उत्कट उत्कण्ठा से ही मानों वह सिर ऊँचा कर रहा है ( उसका द्वार गगनचुम्बी है ), 'ऐरावत' के सूँड का भ्रम करा देने वाली लटकती हुई 'चमेली' की मालाओं से अलङ्कृत ऊँचे ऊँचे हाथी-दाँतों के तोरणों से

भासिदस्स, महारअणोवराओवसोहिणा पवणबलंदोलणाललंतचंचलग्गह-त्थेण 'इदो एहि' त्ति वाहरंतेण विअ मं सोहग्गपडाआणिवहेणोवसोहि-दस्स, तोरणधरणत्थंभवेदिअणिक्खित्तसमुल्लसंतहरिदचूदपल्लवललाम-

तोरणम् = बहिर्द्वारं तेन अवभासितस्य = शोभितस्य [ यस्य तोरणं हस्तिदन्त-निर्मितमतीव शोभाजनकं वर्तते इत्यर्थः ] महारत्नेति । महारत्नानामुपरागेण = वर्णेन शोभिना = शोभितेन पताका-निवहेन = पताकानां समूहेन—उपशोभितस्य = अलङ्कृतस्य, इदानीं पताकानिवहस्य विशेषणमाह—पवनबलेन = पवनवेगेन या आन्दोलना = इतस्ततः सञ्चालनं तया ललन् = कम्पमानः चञ्चलो योऽग्रहस्तः = हस्ताग्रभागः, करतलमिति यावत् । तेन माम् = विदूषकम्, "इत एहि" = अत्रा-गच्छेति व्याहरता = कथयता इव, सौभाग्यार्थे = भवनशोभार्थं विन्यस्तानां पता-कानां = ध्वजानां निवहेन = समूहेन उपशोभितस्य—[ भवनशोभार्थं विविधाः पताकाः संयोजिताः, ताश्च पवनचालिताः मन्ये करचालनेन मामाकारयन्त्य इव प्रतीयन्ते इति भावः ] अत्र "महारअण" इत्यस्य महारजनम् = कुसुम्भकुसुमं तेनोपरक्तेत्यर्थे विशेषरूपेणान्वेति । कुसुम्भरागोपरक्ताः पताका आसन्, इति यावत् । "महारजनं कुसुम्भे स्वर्णे" इति हेमचन्द्रकोषात्तथाऽर्थः स्वीक्रियते । तोरण इति । तोरणस्य बहिर्द्वारस्य धरणाय = अवलम्बनार्थम् । ये स्तम्भाः = स्थूणाः, तेषां वेदिकाः = परिष्कृता भूमयः, तासु निक्षिप्ताः = पातिताः, समु-ल्लसन्तः = शोभमानाः ये हरिताः = हरितवर्णाः, चूतपल्लवाः = आम्रपल्लवाः एव ललामा अलङ्करणानि येषां ते, स्फटिक-निर्मिताः मङ्गलार्थं कलशाः तैः कृत्वा अभिरामम् = मनोहरम्, उभयपार्श्वं यस्य, तस्य—[ तोरणधारणार्थं बहिःस्तम्भाः विराजन्ते तेषामधोवलम्बनार्थं वेदिकाभागे स्फटिक-निर्मिताः कलशा गृहद्वारस्यो-भयपार्श्वे स्थापिताः तेषु मङ्गलार्थमाम्रपल्लवाः शोभन्ते, इति भावः । ] महासुरेति । महाँश्चासौ असुरः हिरण्यकशिपुः, तस्य वक्षःस्थलं = उरःस्थल-

सुशोभित, महार्ह मणियों की प्रभा से रञ्जित तथा पवन के वेग से अञ्चल के चञ्चल छोरों से "यहाँ आओ ! यहाँ आओ" कह कर मुझको बुलाती हुई-सी पताका-पंक्तियों से सुशोभित, हरे-हरे आम के पत्ते पड़े हुए स्फटिक-मणि-निर्मित

फटिहमंगलकलसाभिरामोहअपास्सस्स, महासुरवक्खत्थलदुब्भेज्जवज्जणिरंतरपडिबद्धकणअकवाडस्स, दुग्गदजणमणोरहाआसकरस्स, वसंतसेणाभवणदुआरस्स सस्सिरीअदा । जं सच्चं मज्झत्थस्स वि जणस्स बलाद्दिट्ठिं आआरेदि । [ अहो सलिलसिक्तमार्जितकृतहरितोपलेपनस्य, विविधसुगन्धिकुसुमोपहारचित्रलिखितभूमिभागस्य, गगनतलावलोकनकौतूहलदूरोन्नामितशीर्षस्य, दोलायमानावलम्बितैरावणहस्तभ्रमागतमल्लिकादामगुणालंकृतस्य, समुच्छ्रितदन्तिदन्ततोरणावभासितस्य, महारत्नोपरागोपशोभिना पवनबलान्दोलनाललचञ्चलाग्रहस्तेन 'इत एहि' इति व्याहरतेव मां सौभाग्यपताकानिवहेनोपशोभितस्य, तोरणधरणस्तम्भवेदिकानिक्षिप्तसमुल्लसद्धरितचूतपल्लवललामस्फटिकमङ्गलकलशाभिरामोभयपार्श्वस्य, महासुरवक्षःस्थलदुर्भेद्यवज्रनिरन्तरप्रतिबद्धकनककपाटस्य, दुर्गतजनमनोरथायासकरस्य, वसन्तसेनाभवनद्वारस्य सश्रीकता । यत्सत्यं मध्यस्थस्यापि जनस्य बलाद्दृष्टिमाकारयति । ]

---

मिव दुर्भेद्यं = परैरनभिभेद्यम् निरन्तरम् = सघनतया खचितं कनकं = सुवर्ण यत्रैवंविधं कपाटं यस्य तस्य [ हिरण्यकशिपोर्वक्षःस्थलमिव यस्य सुवर्ण—खचितं कपाटयुगलमस्ति, इत्यर्थः । ] दुर्गतेति । दुर्गताः = दरिद्रा जनाः, तेषां यो मनोरथः = अभिलाषः, तस्यायासकरस्य = पीडोत्पादकस्य दरिद्रा एवंविधं द्वारमवलोक्य नानाविधैरुद्भूतैर्मनोरथैरभिभूता भवन्ति, अस्माकं गृहे सम्पत्तिरेवंविधा

---

अत्यन्त सुन्दर ( द्वार के ) दोनों ओर रखे हुए मङ्गल-कलशों से विलसित, "हिरण्यकशिपु" के वक्षःस्थल के समान दुर्भेद्य स्वर्णजटित किवाड़ों वाले तथा निर्धन मनुष्यों के लिए खेददायक ( निर्धन उसके वैभव को देखकर अपनी दुरवस्था पर दीर्घ निश्वास छोड़ने लगते हैं । ) "वसन्तसेना" के प्रासाद-द्वार की शोभा, सच तो यह है कि संसार के विरक्त मनुष्य की दृष्टि को भी बलपूर्वक अपनी ओर आकृष्ट कर लेती है । ( "वसन्तसेना" के इस अलौकिक भवन को देखकर वीतराग सन्यासी की आँखें भी इसकी शोभा निहारने को उत्सुक हो जाती हैं । )

चेटी—एदु एदु। इमं पढमं पओट्ठं पविसदु अज्जो। [ एत्वेतु, इमं प्रथमं प्रकोष्ठं प्रविशत्वार्यः। ]

विदूषकः—( प्रविश्यावलोक्य च ) ही ही भो, इधो वि पढमे पओट्ठे ससिसंखमुणालसच्छाहाओ विणिहिदचुण्णमुट्ठिपांडुराओ विविहरअणपडिवद्धकंचणसोवाणसोहिदाओ पासादपंतिओ ओलंबिदमुत्तादामेहिं फटिहवादाअणमुहचंदेहिं णिज्झाअंती विअ उज्जइणिं। सोत्तिओ विअ सुहोवविट्ठो णिद्दाअदि दोवारिओ। सदहिणा कलमोदणेण पलोहिदा ण भक्खंति वायसा वलिं सुधासवण्णदाए। आदिसदु भोदी। [ आश्चर्यं भोः, अत्रापि प्रथमे प्रकोष्ठे शशिशङ्खमृणालसच्छाया विनिहितचूर्णमुष्टिपाण्डुरा विविधरत्नप्रतिवद्धकाञ्चनसोपानशोभिताः प्रासादपङ्क्तयोऽवलम्बितमुक्तादामभिः स्फटिकवाता·

---

नास्ति, कथं वयमेवंविधसम्पत्तिशालिनः स्याम ? इत्याकारका मनोरथास्तेषां प्रादुर्भवन्तीति भावः।] एवंविधस्य वसन्तसेनाया भवनद्वारस्य सश्रीकताः =शोभा–शालितेति, यत् सत्यम्। मध्यस्थस्य = उदासीनस्यापि जनस्य दृष्टिं बलात् = बलपूर्वकमाकारयतीव = आह्वयतीवेति परमसौन्दर्यमस्येति भावः।

चेट्याः कथनानन्तरं प्रथम प्रकोष्ठाभ्यन्तरं प्रवेशं कर्तुमिच्छुर्विदूषकः सोल्लासं (सहर्षम्) तस्य शोभां वर्णयति—ही ही भोः !इति। "ही ही" इत्याश्चर्यसूचकमव्ययपदम्। अत्र प्रथमे प्रकोष्ठेऽपि शशिनः = चन्द्रस्य, शङ्खस्य मृणालस्य = विसस्य च समाना छाया = कान्तिः ( छाया सूर्यप्रिया कान्तिः, इति कोषः ) यासां ताः, चन्द्रादिवत् स्वच्छकान्तियुक्ता इत्यर्थः। विनिहिताभिः = साधुनिक्षिप्ताभिः। चूर्णस्य मुष्टिभिः = मुष्टिस्थचूर्णसमूहैरित्यर्थः, पाण्डुराः = श्वेतवर्णाः, विविधैः = अनेकप्रकारैः रत्नैः प्रतिवद्धानि = खचितानि ; यानि सोपानानि तैः शोभिताः, प्रासादानां पङ्क्तयः

---

चेटी—आइये, आइये! इस प्रथम प्रकोष्ठ में आप प्रवेश करें।

विदूषक—( प्रवेश कर तथा देखकर ) आश्चर्य है! यहाँ प्रथम प्रकोष्ठ ( ड्योढ़ी ) में भी चन्द्रमा, शङ्ख, तथा मृणाल के समान स्वच्छ कान्ति वाली, भाँति-भाँति के ( शोभावर्धक ) चूर्णों (पाउडर आदि) की बुकनी देने से पीतवर्ण, विविध रत्न जटित सुवर्ण के सोपानों ( सीढ़ियों ) से सुशोभित भवनों की कतारें, लटकती हुई मोतियों की मालाओं से अलङ्कृत स्फटिक-निर्मित-वातायन ( झरोखों )

यनमुखचन्द्रैर्निर्ध्यायन्तीवोज्जयिनीम् । श्रोत्रिय इव सुखोपविष्टो निद्राति दौवारिकः । सदध्ना कलमोदनेन प्रलोभिता न भक्षयन्ति वायसा बलिं सुधासवर्णतया । आदिशतु भवती । ]

चेटी—एदु एदु अज्जो । इमं दुदिअं पओट्ठं पविसदु अज्जो । [ एत्वेत्वार्यः । इमं द्वितीयं प्रकोष्ठं प्रविशत्वार्यः । ]

विदूषकः—( प्रविश्यावलोक्य च ) ही ही भो, इदो वि दुदिए पओट्ठे

---

=समूहाः, अवलम्बितानि मुक्तादामानि = मौक्तिकमाला येषु तैः, स्फटिकनिर्मितानि यानि वातायनानि = गवाक्षाः, तेषां मुखचन्द्रैः ( कृत्वा ) निर्ध्यायन्तीव = अवलोकयन्तीव, उज्जयिनीम् । एते प्रासादाः गवाक्ष-मुखैरुज्जयिनीमवलोकयन्तीवेति भावः । अत्र सुखं यथास्यात्तथा समुपविष्टो द्वारपालः श्रोत्रियः = वेदपाठी इव निद्राति = शेते । सदध्ना = दधिसहितेन कलमस्य = धान्य विशेषस्य ओदनेन = भक्तेन प्रलोभिताः = कृत प्रलोभनाः वायसाः = काकाः, सुधासवर्णतया = सुधासमानतया बलिं = दीयमानं बलिं न भक्षयन्ति = न खादन्ति ।

अयं भावः—गृहस्थाः काकेभ्यो दध्योदनात्मकं बलिं ददति, परन्तु ते काकाः शुभ्रवर्णतया सुधां मत्वा नैव भक्षयन्ति । महतीयं काकानामहो भ्रान्तिः । आदिशतु भवती = अग्रे मार्गं प्रदर्शयतु भवती ।

विदूषको द्वितीयं प्रकोष्ठं वर्णयति—ही ही भोः, इति । अत्र द्वितीये

---

रूपी अपने मुख चन्द्रों से मानों "उज्जयिनी" को देख रही हैं । ( दूसरी ओर ) द्वार पर दौवारिक वेदपाठी की भाँति बैठा-बैठा ऊँघ रहा है । दही और चावलों की बलि को, कलई के भ्रम से, चाहने पर भी कौए नहीं खा रहे हैं । ( दही और चावलों की बलि रंग में कलई के समान श्वेत है । अतएव कौए "इसके खाने से कहीं मुख न फट जाय" इस भय से, ललचाए हुए होने पर भी, उसे नहीं खा रहे हैं । ) आप अगला मार्ग दिखाएँ !

चेटी—आइए, आइए ! इस द्वितीय प्रकोष्ठ में प्रवेश करिये !

विदूषक—( प्रविष्ट हो देखकर ) ओह ! इस द्वितीय प्रकोष्ठ में भी पार्श्वभाग

पज्जंतोवणीदजवसबुसकवलसुपुट्ठा तेलब्भंगिदविसाणा बद्धा पवहण-बइल्ला। अअं अण्णदरो अवमाणिदो विअ कुलीणो दीहं णीससदि सेरिहो। इदो अ अवणीदजुज्झस्स मल्लस्स विअ मद्दीअदि गीवा मेसस्स। इदो इदो अवराणं अस्साणं केसकप्पणा करीअदि। अअं अवरो पाडच्चरो विअ दिढबद्धो मंदुराए साहामिओ। ( अन्यतोऽवलोक्य च ) इदो अ कूरचुअतेल्लमिस्सं पिंडं हत्थी पडिच्छावीअदि मेत्थपुरिसेहिं। आदिसदु भोदी। [ आश्चर्यं भोः, इहापि द्वितीये प्रकोष्ठे पर्यन्तोपनीतयवसबुस-कवलसुपुष्टास्तैलाभ्यक्तविषाणा बद्धाः प्रवहणबलीवर्दाः। अयमन्यतरोऽपमानित इव कुलीनो दीर्घं निःश्वसिति सैरिभः। इतश्चापनीतयुद्धस्य मल्लस्येव मर्द्यते ग्रीवा

---

प्रकोष्ठेऽपि प्रवहणानां = यानानां बलीवर्दाः = वृषभाः बद्धाः सन्ति। कीदृशास्ते ? इति तानेव विशिनष्टि। पर्यन्तेषु = पार्श्वभागेषु उपनीतानां = क्षिप्तानां यवसानां = तृणानां, बुसानाञ्च कवलनेन = भक्षणेन सुपुष्टाः, अथ च तैलैन अभ्यक्तानि = चिक्कणानि विषाणानि येषां ते। एवंविधा बलीवर्दाः सन्ति, इत्यर्थः। अयञ्चान्यः सैरिभः = महिषः, अवमानितः = कृतापमानः, कुलीनः = उन्नत-वंशोत्पन्नः ( पुरुषः ) इव दीर्घं निःश्वसिति = श्वासं मुञ्चति। यथा कोऽपि महोच्चवंशसमुत्पन्नः पुरुषः केनाप्यपमानितो रोषवशात् दीर्घश्वासं मुञ्चति तथैवायं महिषोऽपीत्यर्थः। इतश्च यथा युद्धं विहाय समागतस्य मल्लस्य ग्रीवा मर्द्यते, तथैवास्य मेषस्यापि ग्रीवा-मर्दनं क्रियते। अत्र चैकस्मिन् भागे अश्वानां ग्रीवायाः केशकल्पना क्रियते। यथा चौरो निगृहीतः सन् क्वचिदाबध्यते, तथैवायं शाखामृगः

---

में पड़ी हुई घास एवं भुस को खा-खाकर मोटे-ताजे तथा जिनके सींगों में तेल चुपड़ा हुआ है ऐसे रथ के बैल बँधे हुए हैं। दूसरी ओर यह भैंसा तिरस्कृत कुलीन व्यक्ति की भाँति लम्बीं साँसे ले रहा है। ( जैसे कोई उच्चवंशोत्पन्न मनुष्य अपमान होने पर दीर्घं निःश्वास लेता है वैसे ही यह भैंसा भी लम्बी साँसे खींच रहा है। ) इधर कुश्ती से हटे हुए मल्ल ( पहलवान ) की भाँति मेंढे की गर्दन

मेषस्य । इत इतोऽपरेषामश्वानां केशकल्पना क्रियते । अयमपरः पाटच्चर इव दृढबद्धो मन्दुरायां शाखामृगः । इतश्च कूरच्युततैलमिश्रं पिण्डं हस्ती प्रतिग्राह्यते मात्रपुरुषैः । आदिशतु भवती । ]

चेटी—एदु एदु अज्जो । इमं तइअं पओट्ठं पविसदु अज्जो । [ एत्वेत्वार्यः । इमं तृतीयं प्रकोष्ठं प्रविशत्वार्यः । ]

विदूषकः—( प्रविश्य, दृष्ट्वा च ) ही ही भो, इदो वि तइए पओट्ठे इमाइं दाव कुलउत्तजणोववेसणणिमित्तं विरचिदाइं आसणाइं । अद्धवाचिदो पासअपीठे चिट्ठइ पोत्थओ । एसो अ साहीणमणिमअसारिआसहिदो पासअपीठो । इमे अ अवरे मअणसंधिविग्गहचदुरा विविहवण्णिआविलित्त-

---

=वानरः, मन्दुरायां=वाजिशालायां दृढं बद्धः । पाटच्चरश्चौरः । अश्वशालायां बद्धेषु वानरेषु अश्वानां रोगो नश्यतीति कृत्वा वानरास्तत्र निबद्धा इति भावः । अयञ्चापरस्मिन् भागे महामात्रैः=हस्तिपकैः कूरात्=ग्रासात् च्युतं=पतितं यत् तैलम् तेन मिश्रं=मिश्रितम् पिण्डम्=अन्नपिण्डम् हस्ती ग्राह्यते । अत्र "तैल" पदेन लक्षणया स्नेहो गृह्यते । ततश्च हस्तिपका स्नेह–( घृत )–सहितं भक्ष्यपदार्थं गजाय ददतीत्यर्थः । आदिशतु=अग्रे समादिशतु भवती=चेटीत्यर्थः ।

चेटी-प्रेरणानन्तरं विदूषकस्तृतीयं प्रकोष्ठं वर्णयति—ही ही भोः-इति । आश्चर्यम् ! अत्रापि तृतीये प्रकोष्ठे कुलपुत्राणां समुपवेशनायेमान्यासनानि विरचितानि सन्ति । पाशक-पीठे=समीपवर्तिन्यतिसुन्दरे पीठे चार्धवाचितं =अर्धपठितं पुस्तकं वर्तते । कामशास्त्रसम्बन्धिपुस्तकमित्यर्थाद् बोध्यम् । गणिकानां निकेतने तथाविधानामेव पुस्तकानामौचित्यात् । एतच्च स्वाधीना =स्वायत्ता या मणिमयी सारिका=मणिनिर्मिता सारिका क्रीडनार्थं निर्मीयते ।

---

मली जा रही है । इधर, घोड़ों के बाल सँवारे जा रहे हैं । दूसरी ओर अश्वशाला में चोर के समान यह बन्दर बड़ी दृढ़ता से बँधा हुआ है । इधर ग्रास से च्युत घृत-मिश्रित पिण्डा बनाकर महावत हाथियों को खिला रहे हैं । आओ, आगे चलें ।

चेटी—आइये, इस तीसरे प्रकोष्ठ में प्रवेश करिये ।

विदूषक—( प्रविष्ट हो देखकर ) ओह ! इस तीसरे प्रकोष्ठ में धनिक युवकों

चित्तफलअग्गहत्था इदो तदो परिब्भमंति गणिआ वुड्ढविडा अ। आदिसदु भोदी। [ आश्चर्यं भोः। इहापि तृतीये प्रकोष्ठे इमानि तावत्कुलपुत्रजनोपवेशननिमित्तं विरचितान्यासनानि। अर्धवाचितं पाशकपीठे तिष्ठति पुस्तकम्। एतच्च स्वाधीनमणिमयसारिकासहितं पाशकपीठम्। इमे चापरे मदनसन्धिविग्रहचतुरा विविधवर्णिकाविलिप्तचित्रफलकाग्रहस्ता इतस्ततः परिभ्रमन्ति गणिका वृद्धविटाश्च। आदिशतु भवती। ]

चेटी--एदु एदु अज्जो। इमं चउट्ठं पओट्ठं पविसदु अज्जो। [ एत्वेत्वार्यः। इमं चतुर्थं प्रकोष्ठं प्रविशत्वार्यः। ]

विदूषकः--( प्रविश्यावलोक्य च ) ही ही भो, इदो वि चउट्ठे पओट्ठे

---

तया सहितं पाशकानां पीठम्, अस्मिन् पाशकपीठे मणिमयसारिकाभिः क्रीडकाः क्रीडन्तीति भावः। इमे चापरे मदनस्य = कामस्य सन्धिविग्रहयोश्चतुराः गणिकानां तन्मित्राणाञ्च काम-सम्बन्धि-सन्धि-विग्रह विधानेऽतिनिपुणाः विविधाभिः = बहुप्रकाराभिः वर्णिकाभिः = रञ्जनतूलिकाभिः विलिप्तानि = सचित्राणि चित्रफलकानि अग्रहस्ते = हस्ताग्रभागे येषां ते, गणिकाः = वेश्याः, वृद्धा विटाश्चेतस्ततः सञ्चरन्ति। बहुविधरञ्जनतूलिकासहितान् चित्रफलकानादाय परिभ्रमन्त्येते, इति भावः।

विदूषकश्चतुर्थं प्रकोष्ठं वर्णयति—ही ही भो—इति। साश्चर्यं कथयति विदूषकः

---

के बैठने के लिए आसन लगाये हुए हैं। चौकी पर अधखुली पुस्तक रखी है। दूसरी ओर चौकी ( चौसर ) पर मणि-निर्मित मैनाओं ( मैनाकार गोटों ) से लोग खेल रहे हैं। और इधर कामदेव की सन्धि और विग्रह में चतुर ये वेश्याएँ तथा बूढ़े बूढ़े विट चित्र-विचित्र ( रङ्ग-बिरङ्गे ) चित्र लेकर इधर उधर घूम रहे हैं। आगे चलिये।

चेटी—आइये, इस चतुर्थ प्रकोष्ठ में प्रवेश करिये।

विदूषक—( प्रविष्ट हो देखकर ) ओह! इस चतुर्थ प्रकोष्ठ में भी–युवतियों

जुवदिकरताडिदा जलधरा विअ गंभीरं णदंति मुदंगा, हीणपुण्णाओ विअ गअणादो तारआओ णिवडंति कंसतालआ. महुअरविरुअं विअ महुरं वज्जदि वंसो । इअं अवरा ईसाप्पणअकुविदकामिणी विअ अंकारोविदा कररुहपरामरिसेण सारिज्जदि वीणा । इमाओ अवराओ कुसुमरसमत्ताओ विअ महुअरिओ अदिमहुरं पगीदाओ गणिआ-दारिआओ णच्चिअंति, णट्टअं पठिअंति, ससिंगारओ । ओवग्गिदा गवक्खेसु वादं गेण्हंति सलिलगग्गरीओ । आदिसदु भोदी । [आश्चर्यं भोः, इहापि चतुर्थे प्रकोष्ठे युवतिकरताडिता जलधरा इव गम्भीरं नदन्ति मृदङ्गाः, क्षीण-पुण्या इव गगनात्तारका निपतन्ति कांस्यतालाः, मधुकरविरुतमिव मधुरं वाद्यते वंशः । इयमपरेर्ष्याप्रणयकुपितकामिनीवाङ्कारोपिता कररुहपरामर्शेन सार्यते वीणा । इमा अपराः कुसुमरसमत्ता इव मधुकर्योऽतिमधुरं प्रगीता गणिकादारिका

---

अहो ! अत्र चतुर्थप्रकोष्ठेऽपि युवतीनां करपल्लवैस्ताडिता मृदङ्गाः जलधरा इव =मेघा इव गम्भीरं यथा स्यात्तथा नदन्ति=शब्दं कुर्वन्ति । क्षीणं पुण्यं यासां तास्तथाविधास्तारका गगनात्=आकाशात् इव निपतन्ति कांस्यतालाः । यथा क्षीणपुण्यतया आकाशात्तारा एव निपतिता भवन्ति तथैव मन्ये एते कांस्यतालाः अपि स्वर्गान्निपतिताः, इति भावः । मधुकराणां=भ्रमराणां विरुतमिव=गुञ्जनमिव मधुरं यथा स्यात्तथा वाद्यते वंशः, वंशी सुमधुरतया वादकैर्वाद्यते । ईर्ष्याप्रणयेन कुपिता कामिनीवाङ्के समारोपिता वीणा कररुहाणाम्=अङ्गुलीनां परामर्शेन=मुहुर्मुहु-रङ्गुलीनां परामर्शेण सार्यते=सञ्चार्यते । कुसुमानां रसेन मत्ता मधुकर्य इव=भ्रमर्य इव, मधुरमधुरं प्रणीताः गणिकाबालिकास्तासां शिक्षकैर्नर्त्यन्ते, नाट्यं पाठ्यन्ते च

---

के कोमल करों से बजाये जाते हुए मृदङ्ग मेघ के समान गम्भीर शब्द कर रहे हैं, मँजीरे, आकाश से टूटते हुए क्षीण-पुण्य तारों की भाँति गिर रहे हैं, ( एक हाथ से ऊपर तथा दूसरे से नीचे किये जा रहे हैं । ) मधुकर ( भौंरों ) की मधुर गुञ्जार के समान बाँसुरी अत्यन्त मधुरता से बजाई जा रही है, दूसरी ओर यह ईर्ष्या और प्रणय से मान करने वाली कामिनी की भाँति गोदी में रखकर वीणा झङ्कृत की जा रही है; इधर मकरन्द पान से मस्त मधुकरियों की भाँति वेश्या-

नर्त्यन्ते, नाट्यं पाठ्यन्ते सश्रृङ्गारम्। अल्पवल्गिता गवाक्षेषु वातं गृह्णन्ति सलिलगर्गर्यः आदिशतु भवतु। ]

चेटी—एदु एदु अज्जो। इमं पंचमं पओट्ठं पविसदु अज्जो। [ एत्वेत्वार्यः। इमं पञ्चमं प्रकोष्ठं प्रविशत्वार्यः। ]

विदूषकः—( प्रविश्य, दृष्ट्वा च ) ही ही भो, इदो वि पंचमे पओट्ठे अअं दलिद्दजणलोहुप्पादणअरो आहरइ उवचिदो हिंगुतेल्लगंधो। विविहसुरहिधूमुग्गारेहिं णिच्चं संताविज्जमाणं णीससदि विअ महाणसं दुवारमुहेहिं। अधिअं उस्सुसावेदि मं साहिज्जमाणबहुविहभक्खभोअणगंधो। अअं अवरो पडच्चरं विअ पोट्टिं धोअदि रूपिदारओ। बहुविहाहारविआरं उवसाहेदि सूवआरो। बज्झंति मोदआ, पच्चंति अपूवआ (आत्मगतम्) अवि दाणिं इह वड्ढिअं भुंजसु त्ति पादोदअं लहिस्सं। ( अन्तोऽवलोक्य च ) इदो गंधव्वच्छरगणेहिं विअ विविहालंकारसोहिदेहिं गणिआजणेहिं बंधुलेहिं अ ज सच्चं सग्गीअदि एदं गेहं। भो ! के तुम्हे बंधुला णाम ?। [ आश्चर्यं भोः, इहापि पञ्चमे प्रकोष्ठेऽयं दारिद्रजनलोभोत्पादनकर आहरत्युपचितो हिङ्गुतैलगन्धः। विविधसुरभिधूमोद्गारैर्नित्यं संताप्यमानं निःश्वसितीव महानसं द्वार-

---

सश्रृङ्गारम्। किञ्च—गवाक्षेषु स्थिताः सलिलस्य=जलस्य गर्गर्यः=लघुकलशाः अपवल्गिताः=किञ्चिच्चलिता इव वातं गृह्णन्ति नृत्यक्रीडासक्तानां गणिकानां जलपानार्थं धृतानि जलभरितानि भाजनानि वातं स्वीकुर्वन्ति, शीतलजलानि भवन्तीति भावः।

पुनः पञ्चमं प्रकोष्ठं वर्णयति–ही ही भोः–इति। अत्र पञ्चमे प्रकोष्ठेऽपि दरिद्र-

---

पुत्रियाँ अत्यन्त मनोहरता से ( शिक्षकों के द्वारा ) नचायी जा रही हैं तथा श्रृङ्गार वाले नाटक पढ़ाये जा रहे हैं, और खिड़कियों में रखी सुराहियाँ पवन से शीतल हो रही हैं। अगला मार्ग दिखाइये।

चेटी—आइये, इस पाँचवें प्रकोष्ठ में प्रवेश करिये।

विदूषक—( प्रविष्ट हो देखकर ) ओह ! इस पाँचवें प्रकोष्ठ में भी—निर्धन मनुष्यों का जी ललचा देने वाला हींग और तेल का बहुत गन्ध आ रहा है।

मुखैः । अधिकमुत्सुकायते मां साध्यमानबहुविधभक्ष्यभोजनगन्धः । अयमपरः पटच्चरमिव हतपशूदरपेशिं धावति रूपिदारकः । बहुविधाहारविकारमुपसाधयति सूपकारः । बध्यन्ते मोदकाः । पच्यन्तेऽपूपकाः । अपीदानीमिह वर्धितं भुङ्क्ष्व इति पादोदकं

---

जनानां लोभोत्पादकः उपचितो वृद्धिगतः, हिङ्गुमिश्रितस्य तैलस्य गन्धः आ=समन्तात् हरति=वहति । अत्युत्कृष्टं हिङ्गुतैलगन्धमाघ्राय दरिद्रजनस्य मनसि अत्रागत्य किमपि भोक्तुं लोभ आयाति इति, तेषां सन्तापयितैवायमिति भावः । विविधैः सुरभिभिः=सुगन्धितैः धूमोद्गारैः; धूमस्योद्गारो येषु तैः, द्वार-मुखैः नित्यं सन्ताप्यमानं सम्यक् ताप्यमानम् नानासन्तापैः सन्तप्तमिव प्रज्वलद्वह्निमिति यावत्, महानसम्=पाकभवनम् निःश्वसितीव =निःश्वासं मुञ्चतीव । महानसस्य द्वारैर्धूमो निःसरति, प्रत्यहञ्चात्राग्निः प्रज्वाल्यते ततश्च कविरुत्प्रेक्षते—मन्ये धूमनिर्गमान् महानसमिदं सन्तापखेदित सत् निःश्वाससमूहं मुञ्चतीवेति भावः । साध्यमानस्य = पच्यमानस्य बहुविधभक्ष्य-भोजनस्य गन्धः मामधिकं यथा स्यात्तथा उत्सुकायते = उत्कण्ठितं करोति । एतेन भोजन-गन्धेनातितमामुत्सुकता मां पीडयति, इति भावः । अयमपरो रूपिदारकः = रूपम्—पशुः, ( "रूपं स्वभावे सौन्दर्ये नामगे पशु—शब्दयोः" इति मेदिनी ) तद्योगात् रूपी मांसविक्रेता, तस्य दारको = बालकः, अथवा—रूपिणं पशुं दारयति = विदारयति, इति पशुकर्तकः । अथवा—रूपी = अतिशयितसौन्दर्यशाली बालकः, इत्यर्था भवन्ति । पटच्चरं = जीर्णवस्त्रमिव हतस्य पशोः उदरपेशिम् = उदरस्थमांसं धावति = प्रक्षाल्यति । सूपकारः = पाचकः बहुविधानामाहाराणां विकारं साधयति = निष्पादयति । मोदकानां निर्माणं भवति । कुत्रचित् अपूपानां पाको भवति । अपि नाम ( सम्भावनायाम् ) इदानीमहम् नानाविधभोजनादिसंवर्धितं "भुङ्क्ष्व" इत्युक्ति

---

( हींग और तेल के छौंक से निर्धनों के मुख में पानी भर आता है । ) भाँति भाँति के सुगन्धित उद्गारों को लेकर निकलने वाले द्वार-रूपी मुखों से मानों रसोईघर ( वह्नि-ताप के कारण ) लम्बे श्वास ले रहा है । बनाये जाते हुए भोजन का गन्ध मुझको अत्यधिक उत्सुक कर रहा है । इधर यह कसाई का लड़का मैले वस्त्र की भाँति मरे हुए पशु के उदर के मांस को धो रहा है । रसोइया नाना प्रकार के व्यञ्जन बना रहा है । कहीं लड्डू बाँधे जा रहे हैं ! कहीं पूए बनाये जा रहे हैं !

लप्स्ये। इह गन्धर्वाप्सरोगणैरिव विविधालंकारशोभितैर्गणिकाजनैर्बन्धुलैश्च यत्सत्यं स्वर्गायत इदं गेहम्। भोः, के यूयं बन्धुला नाम ?। ]

बन्धुलाः—वयं खलु

**परगृहललिताः परान्नपुष्टाः परपुरुषैर्जनिताः पराङ्गनासु।**
**परधननिरता गुणेष्ववाच्या गजकलभा इव बन्धुला ललामः॥२८॥**

---

पूर्वकं भोजनार्थे पादोदकं=पादप्रक्षालनार्थं जलं लप्स्ये, प्राप्स्यामि ? किमु कश्चिद्भोजयितुं मां कथयिष्यतीत्यर्थः। यत् सत्यम्, इदन्तु गेहम् गन्धर्वाप्सरोगणैरिव बहुविधभूषण-सम्भार-भूषितैरेभिर्गणिका-जनैः, बन्धुलैश्च स्वर्गायते=स्वर्गसमान-माभातीदं भवनम्। बन्धुलाः ! के यूयमिति पृच्छति।

बन्धुलाः स्वकीयं परिचयं ददति—परगृहललिता इति। अत्र श्लोके "वयं खलु" इति गद्योक्तं पदं समन्वेति। वयं खलु परगृहेषु ललिताः, परगृहाभिलाषुकाः, परान्नेन पुष्टाः, परपुरुषैः पराङ्गनासु जनिताः=समुत्पादिताः, परेषां धनेषु निरताः =समासक्ताः, गुणेषु अवाच्याः=अवक्तव्याः, गुणशून्या इत्यर्थः। गजानां कलभा इव=करिपुत्रा इव ललामः=सुखेन जीवनं यापयामः। विचित्रमस्माकं

---

( स्वगत ) क्या मैं "यहाँ आइये ! भोजन कीजिये" इस प्रकार प्रार्थना की जाने पर पाद प्रक्षालनार्थ जल प्राप्त कर सकता हूँ ? ( क्या कोई मुझको आदरपूर्वक भोजन करा सकता है ? ) ( दूसरी ओर देखकर ) गन्धर्व और अप्सराओं के समान भाँति-भाँति के आभूषणों से आभूषित वेश्याओं तथा बन्धुलों से, सच तो यह है कि यह भवन स्वर्ग-सा बन रहा है। अरे भाई 'बन्धुलो !' तुम कौन हो ?

बन्धुल—हम—

"दूसरे के घर में पले हैं, दूसरों के अन्न से ही पुष्ट हैं, पर-पुरुषों के द्वारा पर-स्त्रियों में उत्पन्न किये गये हैं, सदैव दूसरे के धन के अभिलाषुक, गुण-रहित "बन्धुल" हाथी के बच्चे के समान आनन्द से जीवन व्यतीत करते हैं। ( हमको न अपने पिता का पता और न माता का। हमारा ध्येय तो केवल "दूसरों का धन उड़ाकर मौज से रहना है।" ) ॥२८॥

विदूषकः—आदिसदु भोदी । [ आदिशतु भवती । ]

चेटी—एदु एदु अज्जो । इमं छट्ठं पओट्ठं पविसदु अज्जो । [ एत्वेत्वार्यः । इमं षष्ठं प्रकोष्ठं प्रविशत्वार्यः । ]

विदूषकः—( प्रविश्यावलोक्य च ) ही ही भो, इदो वि छट्ठे पओट्ठे असुं दाव सुवण्णरअणाणं कम्मतोरणाइं णीलरअणविणिक्खित्ताइं इंदाउहट्ठाणं विअ दरिसअंति । वेदुरिअमोत्तिअपवालअपुप्फराअइंदणीलकक्केतरअपद्मराअमरगअपहुदिआइं रअणविसेसाइं अण्णोण्णं विचारेंति सिप्पिणो । बज्झंति जादरूवेहिं माणिक्काइं । घडिज्जंति सुवण्णालंकारा । रत्तसुत्तेण गत्थीअंति मोत्तिआभरणाइं । घसीअंति धीरं वेदुरिआइं । छेदीअंति संखआ । साणिज्जंति पवालआ । सुक्खविअंति ओल्लाविदकुंकुमपत्थरा । सालीअदि सल्लब्जअं । विस्साणीअदि चंदणरसो । संजोईअंति गंधजुत्तीओ । दीअदि गणिआकामुकाणं रसकप्पूरं तंबोलं । अवलोईअदि सकडक्खअं । पअट्टदि हासो । पिबीअदि अ अणवरअं ससिक्कारं मइरा । इमे चेडा, इमा चेडिआओ, इमे अवरे अवधीरिदपुत्तदारवित्ता मणुस्सा आसवकरआपीदमदिरेहिं गणिआजणेहिं जे मुक्का ते पिअंति । आदिसदु भोदी । [आश्चर्यं भोः, इहापि षष्ठे प्रकोष्ठेऽमूनि तावत् सुवर्णरत्नानां कर्मतोरणानि नीलरत्नविनिक्षिप्तानीन्द्रायुधस्थानमिव दर्शयन्ति । वैडूर्यमौक्तिकप्रवालकपुष्परागेन्द्रनील-

---

जीवनमिति भावः ॥ पुष्पिताग्रा च्छन्दः । तल्लक्षणञ्च यथा—"अयुजि न युगरेफतो यकारो, युजि च नजौ जरगाश्च पुष्पिताग्रा" इति ॥२८॥

अथ षष्ठं प्रकोष्ठं वर्णयति विदूषकः—ही ही भोः इति । आश्चर्यम् ! अत्र षष्ठे प्रकोष्ठेऽपि अमूनि सुवर्ण-खचितानां रत्नानां कर्मतोरणानि = कर्मणः = शिल्पस्य रचनाविशेषस्येति यावत्, तोरणानि = बहिर्द्वारविशेषाः, नीलरत्नैः = इन्द्रनील-

---

विदूषक—मार्ग-निर्देश कीजिये ।

चेटी—आइये, इस छठे प्रकोष्ठ में प्रविष्ट होइये ।

विदूषक—( प्रविष्ट हो देखकर ) ओह ! आश्चर्य है ! इस छठे प्रकोष्ठ में भी नील-मणि-जटित सोने और रत्नों के तोरण इन्द्र-धनुष की सी शोभा दिखा रहे

कर्केतरकपद्मरागमरकतप्रभृतीन् रत्नविशेषानन्योन्यं विचारयन्ति शिल्पिनः । बध्यन्ते जातरूपैर्माणिक्यानि । घट्यन्ते सुवर्णालंकाराः । रक्तसूत्रेण ग्रथ्यन्ते मौक्तिकाभरणानि । घृष्यन्ते धीरं वैडूर्याणि । छिद्यन्ते शङ्खाः । शाणैर्घृष्यन्ते प्रवालकाः । शोष्यन्त आर्द्र-कुङ्कुमप्रस्तराः । सार्यंते कस्तूरिका । विशेषेण घृष्यते चन्दनरसः । संयोज्यन्ते गन्ध-युक्तयः । दीयते गणिकाकामुकयोः सकर्पूरं ताम्बूलम् । अवलोक्यते सकटाक्षम् । प्रव-

---

मणिभिः विनिक्षिप्तानि = खचितानि इन्द्रनीलमणिसहितानि एतानि इन्द्रायुधस्य = इन्द्रधनुषः स्थानं = समानताम् ( "स्थानं सादृश्येऽवकाशे" इति मेदिनी ) दर्शयन्ति = प्रकटयन्ति । बहिर्द्वारे सुवर्णरचनासु मध्ये-मध्ये खचितैर्नीलमणिभिरि-न्द्रायुधसाम्यमिव प्रतीयते, इति भावः । अत्र च शिल्पिनः = रत्नानां परीक्षकाः वैदूर्यादीन् = रत्नविशेषान् परस्परं विचारयन्ति । अत्रोक्तानि सर्वाण्यपि पदानि रत्न-विशेषाणां वाचकानि । क्वचिदत्र माणिक्यानि जातरूपैः = सुवर्णैः सह बध्यन्ते । ( "चामीकरं जातरूपं महारजतकाञ्चने" इत्यमरः ) सुवर्णस्यालङ्कारा घट्यन्ते = निर्मीयन्ते । मौक्तिकमयानि आभरणानि = आभूषणानि रक्तसूत्रेण ग्रथ्यन्ते । धीरं यथा स्यात्तथा वैदूर्याणि घृष्यन्ते । शङ्खान् छिन्दन्ति शिल्पिनः । प्रवालाः शाणैर्घृष्टा भवन्ति । आर्द्राः कुङ्कुमयुक्ताः प्रस्तराः शुष्काः क्रियन्ते । कस्तूरिका = मृगनाभिसमुत्पन्ना कस्तूरी सार्यते = परिशोध्यते । चन्दनस्य रसो विशेषरूपेण घृष्यते लेपनार्थमिति शेषः । गन्धानां युक्तयः = योजनानि संयोज्यन्ते संस्क्रियन्ते । गणिका च कामुकश्च तयोः उभयोरपि कर्पूरसहितं ताम्बूलमर्पयन्ति चेट्य इति शेषः । सकटाक्षं निरीक्ष्यते । परस्परं हसन्ति । "सीत्कार"—ध्वनिसहितं मदिरां

---

है । शिल्पीगण-वैदूर्य, मोती, मूँगों, पुखराज, इन्द्रनील, पद्मराग, मरकत आदि रत्नों का परस्पर विचार कर रहे हैं, कहीं सोने के साथ मोती गूँथे जा रहे हैं, कहीं स्वर्णाभरण गढ़े जा रहे हैं, ( कहीं ) लाल डोरे में मोती पिरोये जा रहे हैं, वैदूर्य घिसे जा रहे हैं, शङ्खों में छेद किये जा रहे हैं, मूँगे खरादे जा रहे हैं, दूसरी ओर केसर सुखायी जा रही है, कस्तूरी शुद्ध की जा रही है, कोई सुगन्धि-युक्त चन्दन घिस रहा है, कोई सुगन्धित पदार्थ मिला रहा है, कोई वेश्याओं और कामुकों को पान दे रहा है, कहीं कटाक्षपूर्वक देखा जा रहा है, कहीं हासपरिहास

र्तते हासः । पीयते चानवरतं ससीत्कारं मदिरा । इमे चेटाः, इमाश्चेटिकाः. इमे अपरेऽवधीरितपुत्रदारवित्ता मनुष्या आसवकरकापीतमदिरैर्गणिकाजनैर्ये मुक्तास्ते पिबन्ति । आदिशतु भवती । ]

चेटी—एदु एदु अज्जो । इमं सत्तमं पओट्ठं पविसदु अज्जो । [ एत्वेत्वार्यः । इमं सप्तमं प्रकोष्ठं प्रविशत्वार्यः । ]

विदूषकः—( प्रविश्यावलोक्य च ) ही ही भो ! इदो वि सत्तमे पओट्ठे सुसिलिट्ठविहंगवाडीसुहणिसण्णाइं अण्णोण्णचुंबणपराइं सुहं अणुभवंति पारावदमिहुणाइं । दहिभत्तपूरिदोदरो बम्हणो विअ सुत्तं पढदि पंजरसुओ । इअं अवरा संमाणणालद्धपसरा विअ घरदासी अधिअं कुरुकुराअदि मदणसारिआ । अणेअफलरसास्सादपहट्ठकंठा कुंभदासी विअ कूअदि परपुट्ठा । आलंबिदा णागदंतेसु पंजरपरंपराओ । जोधीअंति लावआ । आलवीअंति कविंजला । पेसीअंति पंजरकवोदा । इदो तदो विविहमणिचित्तलिदो विअ अअं सहरिसं णच्चंतो रविकिरणसंतत्तं पक्खुक्खेवेहिं विधुवेदि विअ पासादं घरमोरो । ( अन्यतोऽवलोक्य च ) इदो

---

निरन्तरं पिबन्ति कामुकाः । अवधीरितानि पुत्र पत्नी वित्तानि यैस्ते मानवाः आसवस्य=मदिरायाः ये करकाः=पात्रविशेषाः, तैः पीता मदिरा यैस्तैः गणिका जनैः ये मुक्ताः=परित्यक्तास्ते वेश्याजनपरिपीतावशिष्टां मदिरां पिबन्ति । स्वस्त्रीपुत्रधनादिकं परित्यज्य वेश्याजनापीतमदिरापानेनात्मानं कृतार्थं मन्यमाना जीवनं यापयन्तीत्यर्थः ।

सप्तमं प्रकोष्ठं वर्णयति विदूषकः—ही ही भोः–इति । अत्रापि सप्तमे प्रकोष्ठे

---

हो रहा है और कहीं "सीत्कारपूर्वक" निरन्तर मदिरा पान हो रहा है । ये "चेट" "चेटिका" और ये ( वेश्याओं के लिए ) अपने पुत्र कलत्र तथा धन सब कुछ छोड़ देने वाले कामुक, वेश्याओं के द्वारा पीकर छोड़ी गई शकोरों में पडी जूठी मदिरा पी रहे हैं । आगे चलिये !

चेटी—आइये, इस सातवें प्रकोष्ठ में प्रवेश करिये ।

विदूषक—( प्रविष्ट हो देखकर ) आश्चर्य है ! इस सातवें प्रकोष्ठ में भी

पिंडीकिदा विअ चंदपादा पदगदिं सिक्खंता विअ कामिणीणं पच्छादो परिब्भमंति राअहंसमिहुणा। एदे अवरे वुड्ढमहल्लका विअ इदो तदो संचरंति घरसारसा। ही ही भो, पसारणअं किदं गणिआए णाणापक्खिसमूहेहिं। जं सच्चं खु णंदणवणं विअ मे गणिआघरं पडिभासदि। आदिसदु भोदी। [ आश्चर्यं भोः, इहापि सप्तमे प्रकोष्ठे सुश्लिष्टविहङ्गवाटीसुखनिषण्णान्यन्योन्यचुम्बनपराणि सुखमनुभवन्ति पारावतमिथुनानि। दधिभक्तपूरितोदरो ब्राह्मण इव सूक्तं पठति पञ्जरशुकः। इयमपरा सम्माननालब्धप्रसरेव गृहदासी अधिकं कुरकुरायते मदनसारिका। अनेकफलरसास्वादप्रहृष्टकण्ठा कुम्भदासीव कूजति परपुष्टा। आलम्बिता नागदन्तेषु पञ्जरपरम्पराः। योध्यन्ते लावकाः। आलाप्यन्ते कपिञ्जलाः। प्रेष्यन्ते पञ्जरकपोताः। इतस्ततो विविधमणिचित्रित इवायं सहर्षे

---

सुश्लिष्टा = सुनिर्मिता या विहङ्गानां = पक्षिणां वाटी = पक्षि-गृहम्, तत्र सुखं यथा स्यात्तथा निषण्णानि पारावतानां = कपोतानाम् मिथुनानि अन्योन्यचुम्बनासक्तानि, आनन्दमनुभवन्ति। अयञ्च पञ्जरस्थः शुकः दधिमिश्रितौदनेन परिपूरितोदरो ब्राह्मण इव सूक्तं = सूक्ति-पाठं पठति। ब्राह्मणोऽपि ऋचां समुदायरूप "सूक्तं" पठति। इयमपरा सम्मानेन लब्धः = प्राप्तः, प्रसरः = प्रसरणं यया सा गृहदासीव अधिकं यथा स्यात्तथा मदन-सारिका कुरकुरायते = कुरकुर-ध्वनिं करोति। विविधफलानां रसस्यास्वादेन रमणीय-कण्ठ-स्वरा कोकिला कुम्भदासीव कूजति। नागदन्तिकासु ( "खूँटी" इति हिन्दीभाषायाम् ) पञ्जराणां परम्पराः = समूहाः अवलम्बिताः सन्ति। क्वचिल्लावकाः आयोध्यन्ते। अपरत्र "कपिञ्जल" संज्ञकाः पक्षिणः आलाप्यन्ते = वाग्व्यापारपराः क्रियन्ते, पञ्जरस्थाः कपोता इतस्ततः

---

सुनिर्मित पिञ्जरों में सुखपूर्वक बैठे हुए कबूतरों के जोड़े परस्पर आलिङ्गन में रत होकर सुख का अनुभव कर रहे हैं। पिञ्जरे में बैठा हुआ तोता दही-भात से पेट भरकर ब्राह्मण की भाँति सूक्ति-पाठ कर रहा है। यह सम्मान पाकर घमण्ड में रहने वाली गृहदासी के समान "मैना" बहुत बोल रही है। नानाप्रकार के सरस फल खाने से कल-कण्ठ वाली कोकिल कूजन कर रही है। खूँटियों पर पिञ्जरे लटकाये हुए हैं। कहीं "बटेर" लड़ाये जा रहे हैं, कहीं तीतरों से बातें की जा

नृत्यन् रविकिरणसंतप्तं पक्षोत्क्षेपैर्विधुवतीव प्रासादं गृहमयूरः । इतः पिण्डीकृता इव चन्द्रपादाः पदगतिं शिक्षमाणानीव कामिनीनां पश्चात्परिभ्रमन्ति राजहंसमिथुनानि । एतेऽपरे वृद्धमहल्लका इव इतस्ततः संचरन्ति गृहसारसाः । आश्चर्यं भो, प्रसारणं कृतं गणिकया नानापक्षिसमूहैः । यत्सत्यं खलु वन्दनवनमिव मे गणिकागृहं प्रतिभासते । आदिशतु भवती । ]

चेटी—एदु एदु अज्जो । इमं अट्ठमं पओट्ठं पविसदु अज्जो । [ एत्वे-त्वार्यः । इममष्टमं प्रकोष्ठं प्रविशत्वार्यः । ]

विदूषकः—( प्रविश्यावलोक्य च ) भोदि ! को एसो पट्टपावारअपाउदो

---

प्रेष्यन्ते । अयं गृहमयूरः विविधमणिभिः चित्रित इव सहर्षं नृत्यन् सन् रविकिरणैः सन्तप्तमिव प्रासादं स्वपक्षाणामुत्क्षेपैः विधुवतीव = पक्षाणां वातेन व्यजनेनेव पवनदानं करोति । इतश्च पिण्डीकृताः = एकत्रीकृताश्चन्द्रकिरणा इव एते राजहंसाः कामिनीनां पश्चाच्चलन्तस्तासां पद—गतिं शिक्षन्ते इव । एते चापरे गृहसारसाः वृद्धमहत्तरा इव इतस्ततः सञ्चरन्ति । आश्चर्यं भोः ! अनया गणिकया पक्षिणां समूहेन प्रसारणम् = विस्तार इव कृतम् । यत् सत्यमिदं वेश्याभवनं तु नन्दन-वनमिव प्रतिभाति ।

अष्टम—प्रकोष्ठं वर्णयति विदूषकः—भोदि—इति । विदूषकः सम्मुखे भ्रमन्तं

---

रही है, कहीं पालतू कबूतर भेजे जा रहे हैं और कहीं 'भाँति-भाँति की मणियों से चित्रित-सा मयूर हर्षपूर्वक नाचता हुआ, सूर्य की कठोर किरणों से सन्तप्त प्रासाद को अपने पङ्ख फड़-फड़ाकर हवा कर रहा है। ( दूसरी ओर देखकर ) इधर एकत्रीभूत चन्द्रमा की किरणों के समान राजहंस युगल रमणियों के पीछे चलते हुए उनको "गतिशिक्षा" दे रहे हैं ( चाल सिखा रहे हैं । ) और ये पालतू सारस घर के बड़े-बूढ़ों की भाँति इधर-उधर घूम रहे हैं। ओह ! आश्चर्य है ! इस वेश्या ने तो विविध पक्षीगण एकत्रित कर रखे हैं। सच तो यह है कि वेश्या ( "वसन्तसेना" ) का घर मुझे 'नन्दन-वन'-सा लग रहा है । आगे चलिये ।

चेटी—आइये, इस आठवें प्रकोष्ठ में प्रवेश करिये ।

विदूषक—( प्रविष्ट हो देखकर ) क्यों जी ! यह कौन रेशमी वस्त्रों तथा

अधिअदरं अच्चब्भुदपुणरुत्तालंकारालंकिदो अंगभंगेहिं परिक्खलंतो इदो वदो परिब्भमदि ?। [ भवति ! क एष पट्टप्रावारकप्रावृतोऽधिकतरमत्यद्भुत-पुनरुक्तालंकारालंकृतोऽङ्गभङ्गैः परिस्खलन्नितस्ततः परिभ्रमति ?। ]

चेटी—अज्ज ! एसो अज्जआए भादा भोदि। [ आर्य ! एष आर्यायाः भ्राता भवति। ]

विदूषकः—केत्तिअं तवच्चरणं कदुअ वसंतसेणाए भादा भोदि ?। अथवा—

मा दाव जइ वि एसो उज्जलो,
सिणिद्धो अ सुअंधो अ।
तह वि मसाणवीधीए जादो विअ,
चंपअरुक्खो अणहिगमणीओ लोअस्स ॥२९॥

( अन्यतोऽवलोक्य )भोदि ! एसा उण का फुल्लपावारअपाउदा उवाणहजुअ-लणिक्खित्ततेल्लचिक्कणेहिं पादेहिं उच्चासणे उवविट्ठा चिट्ठदि ?। [ किय-त्तपश्चरणं कृत्वा वसन्तसेनाया भ्राता भवति ?। अथवा, मा तावद्यद्यप्येष उज्ज्वलः

---

युवक-विशेषं निरीक्ष्य चकित-चकित इव पृच्छति—"भवति !" इति चेटी-सम्बुद्धि-पदम्। पट्टप्रावारकेण =कौशेयवस्त्रेण प्रावृतः आच्छादितकौशेयवसनः पुनरुक्तैः = विविधैः अलङ्कारैरलङ्कृतः, साङ्गभङ्गैः परिचलनैः क एष परिभ्रमति ?

"अयं वसन्तसेनाया भ्राता" इति चेट्याः वचनमाकर्ण्य, कियता तपसा वसन्त-सेनाया भ्राता भवति ? इति प्रश्नं कृत्वा पुनः स्वयमेव कथयति—मादाव–इति।

---

आश्चर्यजनक दुहरे-तिहरे अलङ्कारों से अलङ्कृत होकर अपने अङ्गों को लचकाता हुआ इधर-उधर गिरता पड़ता घूम रहा है ?

चेटी--आर्य ! यह "आर्या वसन्तसेना" के भाई हैं।

विदूषक—यह कितनी तपस्या करके "वसन्तसेना" का भाई हुआ है ? ( इसने कितने पुण्य किये हैं जो यह "वसन्तसेना" जैसी अलौकिक बहिन का भाई हुआ है ? )

अथवा—

स्निग्धश्च सुगन्धश्च । तथापि श्मशानवीथ्या जात इव चम्पकवृक्षोऽनभिगमनीयो लोकस्य ॥ भवति ! एषा पुनः का पुष्पप्रावारकप्रावृतोपानद्युगलनिक्षिप्ततैलचिक्कणाभ्यां पादाभ्यामुच्चासन उपविष्टा तिष्ठति ? । ]

चेटी—अज्ज ! एसा खु अम्हाणं अज्जआए अत्तिआ । [ आर्य ! एषा खल्वस्माकमार्याया माता । ]

विदूषकः—अहो से कवड्डडाइणीए पोट्टवित्थारो । ता किं एदं पवेसिअ महादेवं विअ दुआरसोहा इह घरे णिम्मिदा ? । [ अहो अस्याः कपर्दकडाकिन्या उदरविस्तारः । तत्किमेतां प्रवेश्य महादेवमिव द्वारशोभा इह

---

अस्यायमाशयः—यद्यप्ययं सुन्दरशरीरः, स्निग्धः शोभनैरलङ्कारैरलङ्कृतस्तथापि श्मशाने जातो वृक्ष इव लोकेन तु निन्दित एवास्ति । सौन्दर्यं तु तदेव, यल्लोके ग्राह्यमिति भावः । आर्या च्छन्दः । लक्षणमुक्तं प्राक् । उपमालङ्कारः ॥ २९ ॥

विदूषकोऽन्यतोऽवलोक्य पुनश्चेटीं पृच्छति—भोदि–इति । एषा पुष्पयुक्तेन प्रावारकेण प्रावृतशरीरा, उपानद्युगले तैलचिक्कणपादौ निधायोच्चासने समुपविष्टा केयमस्ति ? इति प्रश्नः ।

इयं वसन्तसेनाया जननीति श्रुत्वा साधिक्षेपमाह विदूषकः—अहो से–इति । अहो ! अस्याः अपवित्र–डाकिन्याः उदरविस्तारः कीदृशः ? तत् किमिति महादेव तुल्यामिमां द्वार-देशे संस्थाप्य भवनस्यास्य शोभा क्रियते ?

---

"यद्यपि यह बड़ा ही रूपवान् एवं चिकना चुपड़ा है तथापि श्मशान में उगे हुए 'चम्पक-वृक्ष' के समान लोक के लिए तो अनभिनन्दनीय ही है ( क्योंकि सौन्दर्य वही है जो लोक के द्वारा ग्राह्य हो परन्तु इसका सौन्दर्य लोगों के किसी कार्य का नहीं है । )" ॥२९॥

( दूसरी ओर देखकर ) अयि ! यह कौन सुमनों से सुवासित दुपट्टे से शरीर ढककर अपने तेल से चिकने पैरों को जूतों में डालकर उच्चासन ( पीढ़े चौकी आदि ) पर बैठी है ?

चेटी—आर्य ! यह हमारी 'आर्या' ( "वसन्तसेना" ) की माता है !

विदूषक—ओह ! इस 'डायन' का पेट कितना बड़ा है ! तो क्या इसको महादेव जी के समान बैठाकर घर बनाया गया था ? ( अथवा—महादेव तुल्या

-गृहे निर्मिता ? । ]

चेटी—हदास ! मा एव्वं उवहस अम्हाणं अत्तिअं; एसा खु चाउत्थि-एण पीडीअदि । [ हताश ! मैवमुपहसास्माकं मातरम् ; एषा खलु चातुर्थिकेन पीड्यते । ]

विदूषकः—( सपरिहासम् ) भअवं चाउत्थिअ ! एदिणा उवआरेण मं पि बम्हणं आलोएहि । [ भगवंश्चातुर्थिक ! एतेनोपकारेण मामपि ब्राह्मणमव-लोकय । ]

---

सपरिहासं विदूषकस्य वचनमाकर्ण्याह चेटी—हदास ! इति । हताश ! एवं त्वया अस्माकं माता नोपहसनीया । एषा तु वराकी स्वयमेव चातुर्थिकेन ज्वरेण पीडिताऽस्ति ।

सपरिहासमाह विदूषकः—भअवमिति । भगवन् ! चातुर्थिकज्वर ! अनेनेदृशेन स्थौल्य-सम्पादकेनोपकारेणं मां ब्राह्मणमपि विलोकय । तव कृपा मय्यपि भवितुं युक्तेति भावः ! अत्रायं भावः—चातुर्थिको ज्वरोऽतीव दुःखप्रदो भवति, यद्यपीयं तेन पीडिता, तथापि परमस्थूला ततश्चातुर्थिकज्वरेण किमपकृतमस्याः ? अत एव ज्वरस्य "भगवन् !" इति सम्बुद्धिपदमपि सार्थकम् । भगोऽस्यास्तीति भगवान्, तत्सम्बुद्धौ "भगवन्" इति ।

"ऐश्वर्यस्य समग्रस्य, वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां "भग" इति स्मृतः ॥

---

इसको द्वारदेश पर बैठाकर भवन की शोभा की जाती है ? )

चेटी—हताश ! इस प्रकार हमारी माता की हँसी मत करो ! यह तो बेचारी स्वयं ही 'चातुर्थिक' ( "चौथिया" ) ज्वर से पीड़ित हो रही है ।

विदूषक—( हँसी करता हुआ ) भगवन् चातुर्थिक ! इस उपकार दृष्टि से मुझ ब्राह्मण को भी देख लो ! (आशय यह है कि—"चौथिया"—ज्वर से पीड़ित होने पर भी यह इतनी मोटी है । ज्वर से इसकी कोई हानि नहीं हुई । इसीलिए हे परोपकारी चातुर्थिक ! मुझ ब्राह्मण पर भी दया करो जिससे मैं भी इतना ही मोटा हो सकूँ । )

चेटी—हदास ! मरिस्ससि । [ हताश ! मरिष्यसि । ]

विदूषकः—( सपरिहासम् ) दासीए धीए ! वरं ईदिसो शूणपीणजठरो मुदो ज्जेव ।

**सीधुसुरासवमत्तिआ एआवत्थं गदा हि अत्तिआ ।**
**जइ मरइ एत्थ अत्तिआ भोदि सिआलसहस्सपज्जत्तिआ ॥३०॥**

भोदि ! किं तुम्हाणं जाणवत्ता वहंति ? । [ दास्याःपुत्रि ! वरमीदृशः शूनपीन-जठरो मृत एव ।

सीधुसुरासवमत्ता एतावदवस्थां गता हि माता ।
यदि म्रियतेऽत्र माता भवति शृगालसहस्रपर्याप्तिका ॥

---

इत्यभियुक्तोक्तेः ज्वरस्य सर्वशक्तिशालिता प्रदर्शिता । ततश्च ममापि स्थौल्यं कुर्विति प्रार्थना युक्तैवेति भावः । ऐश्वर्यञ्चाष्टविधम्–अणिमा, महिमा, लघिमा, प्राप्तिः, प्राकाम्यम् , ईशित्वं, वशित्वञ्चेति ।

विदूषकोऽयमपि चातुर्थिकं कामयते, इति श्रुत्वा चेटी कथयति—हदासेति । हताश ! हता निन्दिता आशा यस्य तत्सम्बुद्धौ हताशेति । निन्दितविचार ! यद्ययं ज्वरस्त्वयि कृपां करिष्यति, तर्हि मरिष्यसि ! अतः एवंविधां प्रार्थनां मा कुरु ।

पुनः सपरिहासमाह विदूषकः—दासीए–इति । दास्याः पुत्रिके ! चेटि ! ईदृशः शूनं = वृद्धिंगतं, पीनं = स्थूलम् उदरं यस्य स तथाविधस्तु मृत एव वरम् । एवंविधमहोदरापेक्षया तु मृत्युरेव युक्ततरः प्रतिभाति । नेदं स्वास्थ्यस्य स्वरूपमिति भावः । एतत्सर्वं प्रतिपादयितुमाह—सीधु–इति । सीधुः, सुरा, आसवः, इति

---

चेटी—हताश ! मरोगे !

विदूषक—( परिहास के साथ ) ऐ दासीपुत्रि ! इतने मोटे पेट होने से तो मर जाना अच्छा !

"सीधु, सुरा, और आसव के मद से उन्मत्त होकर यदि यह तुम्हारी माता इस अवस्था में ( मुटापे में ) मर जाय तो हजारो शृगालों की उदर पूर्ति के लिए

भवति ! किं युष्माकं यानपात्राणि वहन्ति ? । ]

चेटी—अज्ज ! णहि णहि । [ आर्य ! नहि नहि । ]

विदूषकः—किं वा एत्थ पुच्छीअदि ? । तुम्हाणं खु पेम्मणिम्मलजले मअणसमुद्दे त्थणणिअंवजहणा ज्जेव जाणवत्ता मणहरणा । एव्वं वसंतसेणाए बहुवुत्तंतं अट्ठपओट्ठं भवणं पेक्खिअ जं सच्चं जाणामि, एकत्थं विअ तिविट्ठअं दिट्ठं । पसंसिदुं णत्थि मे वाआविहवो । किं दाव गणिआघरो, अहवा कुवेरभवणपरिच्छेदो त्ति । कहिं तुम्हाणं अज्जआ ? । [ किं वात्र पृच्छ्यते ? । युष्माकं खलु प्रेमनिर्मलजले मदनसमुद्रे स्तननितम्बजघनान्येव यानपात्राणि मनोहराणि । एव वसन्त-

---

त्रिविधैरपि मद्यैरुन्मत्ता सती, एतादृशीमवस्थां गतापि इयं माता यदि म्रियते, तर्हि शृगालसहस्रस्य पर्याप्तिका = तृप्तिर्भविष्यति । एतस्या मरणमेव श्रेयस्करं मन्ये । अत्र पक्वेक्षुरसैः "शीधुः" शालिप्रभृतिभिश्च "सुरा" अपक्वौषधैरम्बुना च "आसवः" सम्पद्यते । विशेषं तु वैद्यकशास्त्रेषु ज्ञेयम् ॥ ३० ॥

केनापि विशिष्टेनाशयेन पृच्छति विदूषकः—भोदि, इति । भवति ! किं युष्माकं यानपात्राणि वहन्ति ? किमु व्यापारार्थं यत्र-तत्र वस्तूनां क्रयविक्रयार्थं भवतीनां यानानि वहन्ति ? नहि विशिष्टव्यापारं विना एतावतो धनस्यास्तित्वं सम्भाव्यते ।

आर्य ! नहि, अस्माकं व्यापारो न भवति, इति चेट्या उत्तरं श्रुतमप्यश्रुतवन्मत्वा विदूषकः स्वयमेव वदति—किं वा एत्थ-इति । अथवा किमत्र मया पृच्छ्यते ? प्रश्नोऽनावश्यक एवात्र । युष्माकं प्रेम-निर्मल-जले = प्रेमैव निर्मलं

---

पर्याप्त हो । ( इसका मांस खाकर हजारों गीदड़ अपनी क्षुधा-निवारण कर सकते हैं । )" ॥३०॥

क्या तुम्हारे ( वैभव विस्तार के लिए ) यान हैं ?

चेटी—आर्य ! नहीं, नहीं !

विदूषक—अथवा, इसमें पहले की आवश्यकता ही क्या है ? प्रेम रूपी जलवाले कामदेव रूपी समुद्र में तुम्हारे स्तन, नितम्ब और जघन ये ही सुन्दर

सेनाया बहुवृत्तान्तमष्टप्रकोष्ठं भवनं प्रेक्ष्य यत्सत्यं जानामि, एकस्थमिव त्रिविष्टपं दृष्टम् । प्रशंसितुं नास्ति मे वाग्विभवः । किं तावद्गणिकागृहम्, अथवा कुबेरभवन-परिच्छेद इति । कुत्र युष्माकमार्या ? । ]

चेटी—अज्ज ! एसा रुक्खवाडिआए चिट्ठदि । ता पविसदु अज्जो । [ आर्य ! एषा वृक्षवाटिकायां तिष्ठति । तत्प्रविशत्वार्यः । ]

विदूषकः—( प्रविश्य, दृष्ट्वा च ) ही ही भो, अहो रुक्खवाडिआए सस्सिरीअदा । अच्छरीदिकुसुमपत्थारा रोविदाअणेअपादवा, णिरंतरपाद-वतलणिम्मिदा जुवदिजहणप्पमाणा पट्टदोला, सुवण्णजूधिआसेहालिआ-मालईमल्लिआणोमालिआकुरवआअदिमोत्तअप्पहुदिकुसुमेहिं सअं णिवडि-देहिं जं सच्चं लहुकरेदि विअ णंदणवणस्स सस्सिरीअदं । ( अन्यतोऽवलोक्य ) इदो अ उदअंतसूरसमप्पहेहिं कमलरत्तोप्पलेहिं संझाअदि विअ दीहिआ ।

---

जलं यस्मिन् एवंविधे मदन—समुद्रे = काम—रूपे सागरे नितम्बजघनान्येव मनो-हराणि यान—पात्राणि । नितम्बैः, जघनैश्च भवतीनां विभवविस्तारो भवति । अस्मिन् विषये संशयलेशोऽपि नास्ति । एवं वसन्तसेनाया अनेकवृत्तान्तसहित-मष्टप्रकोष्ठमिदं भवनमालोक्य—एकत्र वर्तमानं त्रिभुवनमिति मन्ये । प्रशंसां कर्तुं मम वाचि सामर्थ्यं नास्ति । गणिकागृहमिदं कुबेरभवनस्य विस्तारो वा ? अथ क्व युष्मा-कमार्या वसन्तसेना ?

वृक्षवाटिकायां वसन्तसेना वर्तते, इति चेटीवाक्यमाकर्ण्य वाटिकामालोक्य तस्याः शोभातिशयं वर्णयति विदूषकः—ही ही भोः—इति । अहो ! एतदीयोपवनस्य

---

यान-पात्र हैं ( स्तनादिकों से ही तुम्हारे वैभव का विस्तार होता है । इसके लिए यानों की आवश्यकता नहीं है । ) इस प्रकार "वसन्तसेना" के आठ-प्रकोष्ठ वाले बहु वृत्तान्त पूर्ण भवन को देखकर, सच तो यह है कि त्रिभुवन का वैभव ही एक-त्रित हो गया है । इसका वर्णन करने में मेरी वाणी समर्थ नहीं है । तो क्या यह वेश्या का घर है या "कुवेर"-भवन का विस्तार है ? तुम्हारी 'आर्या' कहाँ हैं ?

चेटी—आर्य ! ये वृक्ष वाटिका में बैठी हैं । इसलिए आप प्रवेश करें ।

अवि अ,—

> एसो असोअवुच्छो णवणिग्गमकुसुमपल्लवो भादि ।
> सुभडो व्व समरमज्झे घणलोहिदपंकचच्चिक्को ॥३१॥

भोदु, ता कहिं तुम्हाणं अज्जआ ? । [ आश्चर्यं भोः, अहो वृक्षवाटिकायाः सश्रीकता ? अच्छरीतिकुसुमप्रस्तारा रोपितानेकपादपाः निरन्तरपादपतलनिर्मिता युवतिजघनप्रमाणा पट्टदोला, सुवर्णयूथिकाशेफालिकामालतीमल्लिकानवमल्लिकाकुरबकातिमुक्तकप्रभृतिकुसुमैः स्वयं निपतितैर्यत्सत्यं लघूकरोतीव नन्दनवनस्य सश्रीकताम् । इतश्च उदयत्सूर्यसमप्रभैः कमलरक्तोत्पलैः संध्यायते इव दीर्घिका । अपि च,—

---

सश्रीकता = शोभासम्पत्तिः ? अत्रोपवने अच्छा = शोभना रीतिः = परिपाटी येषामेवंविधानां कुसुमानां प्रस्तारो विस्तृतिर्यत्र । रोपिताः आरोपिता नैके पादपाः सन्ति । निरन्तरे पादपानां तले च युवतिजनानां जघनप्रमाणेन निर्मिता कौशेयसूत्रसंघटिता दोला । भूमौ स्वयं निपतितैरपि विविधैः कुसुमैः, यत् सत्यम्, नन्दनवनस्य शोभासम्पत्तिमपि लघ्वीं करोतीव, विशेषशोभाशालिनी वाटिकेयम् । ( अन्यत्र विलोक्य ) इतश्च—उदयं गच्छतः सूर्यस्येव कान्तिसम्पन्नैः रक्तवर्णैः कमलैरियं दीर्घिका = वापी सन्ध्येवाचरति ।

---

विदूषक—( प्रविष्ट हो देखकर ) ओह ! वृक्षवाटिका की शोभा ! यहाँ बड़े ही अच्छे ढंग से पुष्पों का विस्तार करने वाले वृक्ष लगाये गए हैं तथा संघन वृक्षावली के नीचे युवतियों के जघन-स्थल के नाप से बनाई गई रेशमी डोरी की भूल पड़ी हुई है । यूथिका, हरसिंगार, चमेली, मालती, नवमल्लिका, कुरबक तथा अतिमुक्तक आदि पुष्पों से, जो कि स्वयं ही झड़ गये हैं, सच तो यह है कि यह वाटिका 'नन्दन वन' की शोभा को भी छोटा बना रही है । ( दूसरी ओर देखकर ) और इधर उदयाचलचूड़ावलम्बी भगवान् भुवन भास्कर की किरणों के लाल कमलों पर पड़ने से इस वापी का वर्ण सन्ध्या के समान हो रहा है । ( जिस प्रकार सन्ध्या के समय आकाश में अरुणिमा फैल जाती है उसी

एषोऽशोकवृक्षो नवनिर्गमकुसुमपल्लवो भाति ।
सुभट इव समरमध्ये घनलोहितपङ्कचर्चिकः ।

भवतु, तत्कुत्र युष्माकमार्या ? । ]

चेटी—अज्ज ! ओणामेहि दिट्ठिं, पेक्ख अज्जअं। [ आर्य ! अवनमय दृष्टिम्, पश्यार्याम् । ]

विदूषकः—( दृष्ट्वा, उपसृत्य ) सोत्थि भोदीए। [ स्वस्ति भवत्यै । ]

वसन्तसेना—( संस्कृतमाश्रित्य ) अये, मैत्रेयः ( उत्थाय ) स्वागतम्, इदमासनम्; अत्रोपविश्यताम् ।

---

वृक्षवाटिकायां स्थितमशोकपादपं निरीक्ष्य पुनरपि कथयति—एषो—इति । एषः सम्मुखस्थोऽशोकवृक्षः समुद्गतैर्नवै रक्तवर्णैः पर्णैः रक्तवर्ण-पङ्क-चर्चितकायो भट इव शोभते, इत्यर्थः । यथा संग्रामे रक्त-कर्दम-संलिप्ताङ्गो भवति, तथैव नवैः पल्लवैरयमशोकपादपोऽपि शोभते, इति भावः ।

अत्रोपमालङ्कारः । आर्या च्छन्दः ॥ ३१ ॥

"क्व सा वसन्तसेना ?" इति मैत्रेयस्य वचनं श्रुत्वा—आर्य ! अवनमय = नीचैः कुरु दृष्टिम्, त्वं तु, उपरि दृष्टिं तनोषि, आर्या चेयं नीचैर्वर्तते । पश्य, आर्यां वसन्तसेनाम् ।

---

प्रकार उदयकालीन सूर्य की किरणों से विकसित लाल कमलों के रंग से यह वापी प्रातःकाल में ही सन्ध्या का-सा रूप धारण कर रही है । ) और भी—

"यह 'अशोक' वृक्ष नव-किसलय-दल से ऐसा सुशोभित हो रहा है जैसा कि रणाङ्गण में गाढ़े-गाढ़े रक्त से सना हुआ कोई शूरवीर लगता हो ।" ॥३१॥

बताओ तुम्हारी 'आर्या' कहाँ हैं ?

चेटी—आर्य ! दृष्टि झुकाइए। 'आर्या' को देखिये ।

विदूषक—( देखकर समीप जा ) आपका कल्याण हो !

वसन्तसेना—( संस्कृत में ) अरे ! "मैत्रेय" हैं ? ( उठकर ) आपका स्वागत है ! यह आसन है । इसपर विराजिये ।

विदूषकः—उपविसदु भोदी। [ उपविशतु भवती। ]

( उभावुपविशतः )

वसन्तसेना—अपि कुशलं सार्थवाहपुत्रस्य ?।

विदूषकः—भोदि ! कुशलं। [ भवति ! कुशलम्। ]

वसन्तसेना—आर्य मैत्रेय ! अपीदानीं

**गुणप्रवालं विनयप्रशाखं विश्रम्भमूलं महनीयपुष्पम्।**
**तं साधुवृक्षं स्वगुणैः फलाढ्यं सुहृद्विहङ्गाः सुखमाश्रयन्ति ?॥३२॥**

विदूषकः—( स्वगतम् ) सुट्ठु उवलक्खिदं दुट्टविलासिणीए। ( प्रका-

---

कुशलप्रश्नानन्तरं वसन्तसेना आर्यचारुदत्तविषयकं किमपि पृच्छति—गुणप्रवालमिति। आर्य मैत्रेय ! अपि नामेदानीमपि तं साधु—वृक्षं चारुदत्तं मित्र—पक्षिणः = समाश्रयन्ते किमु ? यस्य वृक्षस्य गुणा एव प्रवालाः कोमलाः पल्लवाः, विनय एव शाखाः, विश्वास एव मूलम्, महनीयचरितानि च यस्य पुष्पाणि, स्वस्य गुणा एव शोभितानि फलानि, स्वयं चार्यचारुदत्तः "वृक्षः" तस्य सुहृदो विहङ्गमास्ते साम्प्रतमपि तमाश्रयन्ते न वा ?

अत्र व्यतिरेकः, रूपकश्चालङ्कारौ। उपजातिः छन्दः॥ ३२॥

विदूषको वसन्तसेनाया मार्मिकवचनमाकर्ण्य स्वगतमाह—सुट्ठु इति।

---

विदूषक—आप ( भी ) बैठिये।

[ दोनों बैठ जाते हैं। ]

वसन्तसेना—सार्थवाह पुत्र ( "आर्य चारुदत्त" ) कुशल से तो हैं न ?

विदूषक—जी हाँ; सकुशल हैं।

वसन्तसेना—आर्य मैत्रेय ! क्या अब भी—

"उन "चारुदत्त"-रूपी वृक्ष पर, जिसके कि गुण ही नव-पल्लव हैं, विनय ही शाखाएँ हैं, विश्वास ही जड़ है, प्रशंसनीय चरित्र ही पुष्प हैं तथा जो कि अपने गुण-रूपी फलों से ही घनी हैं, मित्ररूपी पक्षीगण 'सुख-पूर्वक आश्रय ग्रहण करते हैं ?" ॥३२॥

विदूषक—( स्वगत ) इस दुष्ट गणिका ने ठीक पहिचाना। ( प्रकाश में )

शम् ) अध इं । [ सुष्ठूपलक्षितं दुष्टविलासिन्या । अथ किम् । ]

वसन्तसेना—अये ! किमागमनप्रयोजनम् ? ।

विदूषकः—सुणादु भोदी । तत्तभवं चारुदत्तो सीसे अंजलिं कदुअ भोदिं विण्णवेदि । [ शृणोतु भवती । तत्रभवांश्चारुदत्तः शीर्षेऽञ्जलिं कृत्वा भवतीं विज्ञापयति । ]

वसन्तसेना—( अञ्जलिं बद्ध्वा ) किमाज्ञापयति ? ।

विदूषकः—मए तं सुवण्णभंडअं विस्संभादो अत्तणकेरकेत्ति कदुअ जूदे हारिदं । सो अ सहिओ राअवत्थहारी ण जाणीअदि कहिं गदो त्ति । [ मया तत्सुवर्णभाण्डं विश्रम्भादात्मीयमिति कृत्वा द्यूते हारितम् । स च सभिको राजवार्ताहारी न ज्ञायते कुत्र गत इति । ]

चेटी—अज्जए ! दिट्ठिआ वड्ढसि । अज्जो जूदिअरो संवुत्तो । [ आर्ये !

---

दुष्टविलासिन्या अनया सुष्ठु परिज्ञातम् । यदनयोक्तं, तत्तु सर्वथा सम्यक् । वस्तुतस्तु चारुदत्तस्य मित्राणाञ्च तस्य दशा सम्प्रति एतादृशी एव विद्यते, इति भावः ।

आर्यचारुदत्तकथनमनुवदति मैत्रेयः—मए तमिति । मया विश्वासं कृत्वा आत्मीयमिति मत्वा तत् भवत्याः सुवर्णभाण्डं द्यूते हारितम् । स च द्यूतकरो राजवृत्तान्तहारी न जाने कुत्र गतः ?

परिहासचतुरा चेटी वदति—आर्ये ! दिष्ट्या वर्धसे, भवत्याः प्रार्थनीयः आर्यो-

---

जी हाँ ।

वसन्तसेना—कहिये, आपके आने का क्या प्रयोजन है ?

विदूषक—सुनिये, "पूज्य चारुदत्त" सिर पर अञ्जलि बाँध कर आप से निवेदन करते हैं— ।

वसन्तसेना—( अञ्जलि बाँधकर ) क्या आज्ञा देते हैं ?

विदूषक—"…मैंने ( आपका ) वह सुवर्ण पात्र विश्वास से अपना समझ कर जूए में हरा दिया है और राजवृत्तान्तहारी वह सभिक न जाने कहाँ चला गया है ?"

चेटी—आर्ये ! सौभाग्य से अब "आर्य" जुआरी हो गये हैं ?

दिष्टया वर्धसे । आर्यो द्यूतकरः संवृत्तः । ]

वसन्तसेना—( स्वगतम् ) कधं चोरेण अवहिदं पि सौंडीरदाए जूदे हारिदं त्ति भणादि ?। अदो ज्जेव कामीअदि । [ कथं चौरेणापहृतमपि शौण्डीरतया द्यूते हारितमिति भणति ?। अत एव काम्यते । ]

विदूषकः—ता तस्स कारणादो गेण्हदु भोदी इमं रअणावलिं । [ तत्तस्य कारणाद्गृह्णातु भवतीमां रत्नावलीम् । ]

वसन्तसेना—( आत्मगतम् ) किं दंसेमि तं अलंकारअं ?। ( विचिन्त्य ) अथवा ण दाव । [ किं दर्शयामि तमलंकारम् ?। अथवा न तावत् । ]

विदूषकः—किं दाव ण गेण्हदि भोदी एदं रअणावलिं ?। [ किं तावन्न गृह्णाति भवतीमां रत्नावलीम् ?। ]

वसन्तसेना—( विहस्य, सखीमुखं पश्यन्ती ) मित्तेअ ! कधं ण गेण्हिस्सं रअणावलिं ?। ( इति गृहीत्वा पार्श्वे स्थापयति, स्वगतम् ) कधं झीणकुसुमादो

---

ऽधुना द्यूतकरः सञ्जातः ।

मैत्रेयस्य वाक्यमाकर्ण्य वसन्तसेना स्वमनसि चारुदत्तं प्रशंसति—कधमिति । कथं चौरेणापहृतमपि सुवर्णभाण्डमतिशौण्डीरतया = उदारतया द्यूते हारितमिति कथयति । धन्योऽसि चारुदत्त ! अत एव काम्यसे ।

वसन्तसेना मैत्रेयहस्ताद् रत्नावलीमादाय कथयति स्वमनसि,—कधं झीणेति ।

---

वसन्तसेना—क्या चोर के चुरा लेने पर भी "जूए में हरा दिया" यह कहते हैं ! इसीलिए तो मैं चाहती हूँ ।

विदूषक—"इसलिए उसके बदले में आप यह 'रत्नावली' ले लें ।"

वसन्तसेना—( स्वयं ही ) क्या उस अलङ्कार को दिखा दूं ! ( सोचकर ) अथवा, अभी नहीं ।

विदूषक—तो क्या आप यह 'रत्नावली' न लेंगी ?

वसन्तसेना—( हँसकर, सखी को देखती हुई ) मैत्रेय ! 'रत्नावली' क्यों न

वि सहआरपादवादो मअरंदविंदओ णिवडंति ? । ( प्रकाशम् ) अज्ज ! विण्णवेहि तं जूदिअरं मम वअणेण अज्जचारुदत्तं—'अहं पि पदोसे अज्जं पेक्खिदुं आअच्छामि' त्ति । [ मैत्रेय ! कथं न ग्रहीष्यामि रत्नावलीम् ? । कथं हीनकुसुमादपि सहकारपादपान्मकरन्दबिन्दवो निपतन्ति ? । आर्य ! विज्ञापय तं द्यूतकरं मम वचनेनार्यचारुदत्तम्—'अहमपि प्रदोषे आर्यं प्रेक्षितुमागच्छामि' इति । ]

विदूषकः—( स्वगतम् ) किं अण्णं तहिं गदुअ गेण्हिस्सदि ? । ( प्रकाशम् ) भोदि ! भणामि—( स्वगतम् ) 'णिअत्तीअदु इमादो गणिआपसंगादो' त्ति । [किमन्यत्तत्र गत्वा ग्रहीष्यति ? । भवति ! भणामि—'निवर्ततामस्माद्गणिकाप्रसङ्गात्' इति । ]

---

कथं हीनकुसुमात् आम्रवृक्षादपि मकरन्दस्य = पुष्परसस्य विन्दवो निपतन्ति ? आश्चर्यम् । यद्यपि सर्वथा निर्धनश्चारुदत्तस्तथापि एवंविधानां रत्नानामद्यापि तत्र सम्भावना ? इत्याश्चर्यम् ! अत्राप्रस्तुतप्रशंसा अलङ्कारः ।

वसन्तसेना कथितम्—"अहमपि प्रदोषे आर्यं प्रेक्षितुमागच्छामीति" वक्तव्यं भवतेति श्रुत्वा "भणिष्यामि" इत्युक्त्वा मनसि कथयति—"निवर्ततामस्माद् गणिकाप्रसंगात्—" इति भणिष्यामि, इत्युक्त्वा गतो मैत्रेयः ।

---

लूँगी ? ( लेकर पास में ही रख लेती है । स्वयं ही ) क्या बौर-रहित आम के वृक्ष से भी पुष्परस की बूँदें गिरती हैं । ( यद्यपि "चारुदत्त" निर्धन हैं तथापि उनके पास अब भी ऐसे सुन्दर रत्न हैं । ) ( प्रकाश में ) मेरी ओर से उन "जुआरी आर्य चारुदत्त" से कहना कि—"मैं भी आज प्रदोष-समय में उनसे मिलने आऊँगी ।"

विदूषक—( स्वगत ) क्या वहाँ जाकर और लेगी ? कह दूँगा—( स्वयं ही ) "—कि इस वेश्या की सङ्गति से छूटो" ।

( इति निष्क्रान्तः )

वसन्तसेना—हञ्जे ! गेण्ह एदं अलंकारअं । चारुदत्तं अहिरमिदुं गच्छम्ह । [ चेटि ! गृहाणैतमलंकारम् । चारुदत्तमभिरन्तुं गच्छावः । ]

चेटी—अज्जए ! पेक्ख पेक्ख । उण्णमदि अकालदुद्दिणं । [ आर्ये ! पश्य पश्य, उन्नमत्यकालदुर्दिनम् । ]

वसन्तसेना—

**उदयन्तु नाम मेघा भवतु निशा वर्षमविरतं पततु ।**
**गणयामि नैव सर्वं दयिताभिमुखेन हृदयेन ॥३३॥**

---

आर्ये ! पश्य, अकालदुर्दिनमुन्नमति = अकस्मादाकाशं मेघैराच्छाद्यते, इति चेटी-वचनं श्रुत्वा वसन्तसेना प्राह—उदयन्तु—इति । मेघा यथेच्छमायान्तु, निशा अकस्माद्भवतु, अविरतं = निरन्तरं वृष्टिः परिपततु, परमहं तु दयिताभिमुखेन हृदयेनेदं सर्वं नैव गणयामि । मया तु स्वमनसा स्वमित्रमार्यचारुदत्तमुपैतुं विचारितम्, अतो नाहं बिभेमि मेघादिभ्य इति भावः ।

तथा चोक्तं कविकुलगुरुणा श्रीकालिदासेन—

"क ईप्सितार्थः स्थिरनिश्चयं मनः,
पयश्च निम्नाभिमुखं प्रतीपयेत् ?"

इति । अत्रार्या च्छन्दः ॥ ३३ ॥

---

[ चला जाता है । ]

वसन्तसेना—इस अलङ्कार को ले लो । "आर्य चारुदत्त" से रमण करने चलूँगी ।

चेटी—आर्ये ! देखो ! देखो ! अकस्मात् मेघ उठ रहा है ।

वसन्तसेना—"मेघ उमड़ें, रात्रि हो जाय और चाहे वर्षा लगातार पड़ती रहे; परन्तु मैं तो ( इन सबको ) प्रियतमानुरक्त हृदय के कारण कुछ भी नहीं समझती हूँ । ( मैंने 'प्रियतम' से मिलना निश्चय किया है—अतः मैं अवश्य जाऊँगी । मुझे कोई भय विचलित नहीं कर सकता । )" ॥३३॥

हञ्जे ! हारं गेण्हिअ लहुं आअच्छ । [ चेटि ! हारं गृहीत्वा शीघ्रमागच्छ । ]

( इति निष्क्रान्ताः सर्वे )

## मदनिकाशर्विलको नाम चतुर्थोऽङ्कः ।

—:o:—

तत् , हञ्जे चेटि ! हारमादाय लघु = शीघ्रमागच्छ । तत्रैव गच्छामः । त्वयाप्यकालदुर्दिनाद्भीतिर्नैव कार्येति भावः ।

इति मृच्छकटिक-टीकायां "श्रीप्रियम्वदा" ख्यायां चतुर्थोऽङ्कः समाप्तिं गतः ।

—o—

हला ! हार लेकर शीघ्र आओ !

[ सब चले जाते हैं । ]

"श्रीप्रियम्वदा"—टीकालङ्कृत "मृच्छकटिक" के "मदनिकाशर्विलक" नामक चतुर्थ अङ्क का भाषानुवाद समाप्त ॥

—o—

## पञ्चमोऽङ्कः

( ततः प्रविशत्यासनस्थः सोत्कण्ठश्चारुदत्तः )

चारुदत्तः—( ऊर्ध्वमवलोक्य ) उन्नमत्यकालदुर्दिनम् । यदेतत्

**आलोकितं गृहशिखण्डिभिरुत्कलापै-**
**हंसैर्यियासुभिरपाकृतमुन्मनस्कैः ।**
**आकालिकं सपदि दुर्दिनमन्तरीक्ष-**
**मुत्कण्ठितस्य हृदयं च समं रुणद्धि ॥१॥**

अथ पूर्वप्रस्तुतमकालदुर्दिनमेव वर्णयितुं कविस्तत्रभवन्तमार्यचारुदत्तमेवावतारयति—आलोकितमिति । अत्र "यदेतत्" इति गद्यस्थं पदमन्वेति । यदेतत् दुर्दिनम्, उत्कलापैः = ऊर्ध्वोन्नीतकलापैः, गृहशिखण्डिभिः = पालित–मयूरैः ( सादरम् ) आलोकितम् । मेघालोके मयूराणामुत्कलापत्वं प्रसिद्धम् । यियासुभिः = यातुं ( मानसरोवरम् ) इच्छुभिः, अत एव–उन्मनस्कैः, खिन्नचित्तैः हंसैः अपाकृतम् = परित्यक्तम् अरुचिकरमिति मत्वा परित्यक्तम्, द्रष्टुमपि न दत्तमिति यावत्; मेघसमये हंसा मानसं यान्तीति कविख्यातिः । आकालिकं = सहसा समागतम् दुर्दिनम् कर्तृलक्षणया दुर्दिनशब्देन मेघो गृह्यते, अन्तरीक्षम् = आकाशम्, उत्कण्ठितस्य = विरहातुरस्य जनस्य हृदयञ्च सममेव = सहैव रुणद्धि = आवृणोति ।

अकस्मान्मेघदर्शनेन मयूरा नृत्यन्ति, हंसाः खिन्नमनसो भूत्वा मानस जिगमिषन्ति, अन्तरीक्षेण साकमेव विरहिजनस्य हृदयमपि रुद्धव्यापारं सम्पद्यते, इति

---

[ तदनन्तर आसन पर बैठे हुए "चारुदत्त" का प्रवेश होता है । ]

चारुदत्त—( ऊपर को देखकर ) अकस्मात् ही "दुर्दिन" हो रहा है । जो "दुर्दिन" ( प्रसन्नता से ) ऊँचे पङ्ख कर पालतू मयूरों के द्वारा देखा गया है, तथा ( मानसरोवर ) जाते हुए खिन्नचित्त हंसों ने जिसे छोड़ दिया है । ( देखा भी नहीं । ) यह अकस्मात् उमड़ा हुआ बादल आकाश और विरहातुर व्यक्ति के हृदय को साथ ही साथ ढँक रहा है ।" ॥ १ ॥

अपि च,—

मेघो जलार्द्रमहिषोदरभृङ्गनीलो,
विद्युत्प्रभारचितपीतपटोत्तरीयः ।
आभाति संहतबलाकगृहीतशङ्खः,
खं केशवोऽपर इवाक्रमितुं प्रवृत्तः ॥२॥

भावः । अत्रातिशयोक्तिर्मूलासहोक्तिः । तल्लक्षणञ्च यथा साहित्यदर्पणे—

"सहार्थस्य बलादेकं यत्र स्याद् वाचकं द्वयोः ।
सा सहोक्तिर्मूलभूताऽतिशयोक्तिर्यदा भवेत् ॥" इति ।

वसन्ततिलका छन्दः । तल्लक्षणञ्च यथा—

"उक्ता वसन्ततिलका तभजा जगौ गः ।" इति ॥१॥

दुर्दिनेव प्रकारान्तरेण वर्णयति—मेघ—इति । जलेनार्द्रः=वारिणा क्लिन्नः यो महिषः, तस्योदरवत् भृङ्गवच्च नीलवर्णः, विद्युतः प्रभया रचितं पीतपटस्योत्तरीयं यस्य सः, संहताः=एकत्रीभूताः, बलाकाः=बकपङ्क्तयः एव गृहीतः शङ्खो येन सः, अपरः=अन्यः केशवः=श्रीविष्णुरिव मेघः खम्=आकाशम्, आक्रमितुमिव प्रवृत्तः । यथा भगवान् विष्णुः कृष्णकायः पीताम्बरधारी सशङ्खो बलिनियमन-वेलायां नभः समाक्रमितुं प्रवृत्तः; तथैव श्यामवर्णो मेघः विद्युता पीतवसनः, बलाकया च स-शंखः, आकाशं समाक्रमितुं प्रवृत्तः इति, भावः ।

अत्र-पुरा बलिनिग्रहणार्थे देवैः प्रेरितो भगवान् श्रीविष्णुस्तस्य यज्ञे गतः, तुष्टाव

---

और भी—

"जल से भीगे हुए भैंसे के उदर के समान, भौंरे के सदृश नीलवर्ण तथा चमकती हुई बिजली की प्रभा से पीले-पीले दुपट्टे वाला मेघ—एकत्रित बकपंक्ति-रूपी शङ्ख लेकर दूसरे "भगवान् विष्णु" की भाँति मानों आकाश को आक्रान्त करने के लिए उद्यत हो रहा है । ( जैसे नीलवर्ण, पीताम्बरधारी और सशङ्ख "विष्णु भगवान्"—"बलि" को बाँधने के समय आकाश को नापने के लिए प्रवृत्त हो गये थे वैसे ही यह मेघ भी आक्रमण करता हुआ-सा प्रतीत हो रहा है । )" ॥ २ ॥

अपि च,—

केशवगात्रश्यामः कुटिलबलाकावलीरचितशङ्खः ।
विद्युद्गुणकौशेयश्चक्रधर इवोन्नतो मेघः ॥३॥

एता निषिक्तरजतद्रवसंनिकाशा,
धारा जवेन पतिता जलदोदरेभ्यः ।

---

च वेदमन्त्रैर्यज्ञपुरूषम् । प्रसन्नो बलिर्याचितुं कथितवान् । स च भगवान् पादत्रय-परिमितां भूमिमेवायाचत । प्रथमपादेन भूमिम्, द्वितीयेन चाकाशं, तृतीयपादेन च बलिशरीरमेव समाक्रमितवान्, इति पौराणिकीकथाऽनुसन्धातव्या ।

अत्र परिणामः, रूपकम्, उत्प्रेक्षा चालङ्काराः । एतेषाञ्च साङ्कर्यम् । प्रसादो गुणः । वैदर्भी रीतिः । वसन्ततिलका च्छन्दः ॥२॥

प्रकारान्तरेणोक्तमेवार्थं वर्णयति--केशव-इति । केशवस्य = श्रीविष्णोः गात्रवत् = शरीरवत् श्यामः, कुटिलया = नभसि समुड्डयन-समये कुटिलायाः = वक्राया बलाकाया अवल्या = पङ्क्त्या रचितशंखः, विद्युद्गुणा एव कौशेयं यस्य तथाविधः, चक्रधरः = श्रीविष्णुरिव मेघः उन्नतो भवतीति शेषः ।

अत्रापि पूर्वं एव कथाभागः समुन्नेतव्यः ।

अत्र रूपकानुप्राणितोपमा । आर्या च्छन्दः ॥३॥

पुनरपि भङ्गयन्तरेण दुर्दिनमेव वर्णयति—एता इति । निषिक्ताः = वह्नौ परिताप्य प्रक्षारिताः द्रवतां नीता इति यावत्, रजतद्रवसन्निकाशाः = रजततुल्याः, जलदानाम् = मेघभानाम्, उदरेभ्यः = मध्यभागेभ्यः, जवेन = वेगेन, पतिताः = एता धाराः, वारिधाराप्रवाहाः इत्यर्थः । विद्युदेव प्रदीपस्तस्य शिखया क्षणं नष्टाः,

---

और भी—

"श्री 'विष्णु' भगवान् के शरीर के समान नीलवर्ण, वक्र बक्रपंक्ति से सशङ्ख, चमकती हुई बिजली के गुणों ( 'प्रभा', वस्त्र पक्ष में 'धागे' ) से पीताम्बरधारी यह मेघ चक्रधारण करने वाले भगवान् 'उपेन्द्र' की भाँति उठ रहा है ।" ॥ ३ ॥

"ये पिघलाई हुई चाँदी के द्रव-द्रव्य के समान मेघों से वेगपूर्वक गिरती

**विद्युत्प्रदीपशिखया क्षणनष्टदृष्टा-**
**श्छिन्ना इवाम्बरपटस्य दशाः पतन्ति ॥४॥**
**संसक्तैरिव चक्रवाकमिथुनैर्हंसैः प्रडीनैरिव,**
**व्याविद्धैरिव मीनचक्रमकरैर्हर्म्यैरिव प्रोच्छ्रितैः ।**

अनन्तरं च क्षणं दृष्टाः, छिन्नास्त्रुटिताः, अम्बरपटस्य = आकाश—वस्त्रस्य दशाः = प्रान्तभागाः इव पतन्ति ।

आकाशान्निष्पतन्तीनां जलधाराणां दर्शनेन कविरुत्प्रेक्षते—एता जल-धारा न सन्ति, अपि तु—आकाशरूपस्य वस्त्रस्य प्रान्तभागा एव जीर्णत्वात् त्रुटित्वा पतन्ति । एताश्च द्रवितरजततन्तुतुल्याः श्वेतवर्णाः सन्ति । वस्त्रस्य प्रान्तभागोऽपि प्रायेण श्वेतो भवतीति तथा उत्प्रेक्षितवान् कविः ।

अत्र—उपमा, पुनरुक्तवदाभासः, रूपकम्, उत्प्रेक्षा चेत्येते सांकर्यमुपेता अलङ्काराः । वसन्ततिलका च्छन्दः ॥४॥

पुनरपि प्रकारान्तरमाश्रित्य दुर्दिनमेव वर्णयति—संसक्तैरिवेति । वायुवशात् प्रचलितानां मेघानां भिन्नाकारा आकृतयः विभिन्नवस्तुरूपतां प्राप्ताः, इत्येव वर्णयति कविः । संसक्तैः = परस्परं सम्मिलितैः चक्रवाकमिथुनैरिव क्वचिन्मेघैर्नभः चित्रमिव प्रतीयते । क्वचिच्च प्रडीनैः = उड्डीनैः, उत्प्लुतैरित्यर्थः; हंसैरिव, अपरत्र व्याविद्धैः = उत्पतद्भिः, मत्स्यैः, मकरैरिव च प्रतीयते । अन्यत्र च—प्रकर्षेण समुच्छ्रितैः = समुन्नतैः, हर्म्यैः = भवनैरिव, एवमेव तैस्तैः = विभिन्नैः आकृति-

---

हुई ये धारायें—विद्युत्-रूपी दीपक की लौ से क्षणभर के लिए नष्ट तथा क्षणानन्तर ही दिखाई पड़ने वाले—आकाश—रूपी वस्त्र के छोर तार-तार हो टूट-टूट कर गिर रहे हैं। ( आशय यह है कि—ये जलधाराएँ नहीं हैं प्रत्युत आकाश-वस्त्र के कोने ही जीर्ण होने के कारण टूट टूट कर गिर रहे हैं।" ॥ ४ ॥

"( वायु से मेघों की आकृति क्षण-क्षण परिवर्तित हो रही है। ) कहीं संयोगी चक्रवाक युगल के समान, कहीं उड़ते हुए हंसों जैसे, कहीं चञ्चल मछलियों एवं नक्रों के आकार वाले, और कहीं ऊँचे-ऊँचे महलों के सदृश भिन्न भिन्न आकृति

तैस्तैराकृतिविस्तरैरनुगतैर्मेघैः समभ्युन्नतैः,
पत्रच्छेद्यमिवेह भाति गगनं विश्लेषितैर्वायुना ॥५॥
एतत्तद्धृतराष्ट्रवक्त्रसदृशं मेघान्धकारं नभो,
हृष्टो गर्जति चातिदर्पितबलो दुर्योधनो वा शिखी ।

विस्तरैः, समभ्युन्नतैः = आकाशे समुन्नतैः वायुवशाच्च विश्लिष्टैः = पृथग्भूतैः, मेघैः ( कृत्वा ) गगनम् = आकाशम्, पत्रच्छेद्यमिव = चित्रमिव प्रतिभाति । चित्रे यथा क्वचित् चक्रवाकमिथुनम्, क्वचिच्च हंसाः सङ्गृहीता भवन्ति, तथैवात्रापि वायुप्रेरिता मेघाः कुत्रचित् कीदृशाः, कुत्रचिच्च कीदृशाः, एवं विभिन्नाकारेषु परिणताः सन्ति । इति भावः ।

अत्रोत्प्रेक्षाऽलङ्कारः । तल्लक्षणञ्च यथा—

"सम्भावनमथोत्प्रेक्षा, प्रकृतस्य परात्मना । वाच्या प्रतीयमाना च ।"

शार्दूलविक्रीडितं च्छन्दः । लक्षणमुक्तम् ॥५॥

वर्षाकाले नभ आदीनां कीदृशी दशा जातेति प्रस्तौति—एतत्—इति । मेघानामन्धकारो यस्मिन् तदेतन्नभः = आकाशम्, धृतराष्ट्रस्य वक्त्रसदृशम् = मुखतुल्यं सञ्जातम् । नभसि सूर्याचन्द्रमसोरभावादन्धकारः, धृतराष्ट्रमुखे च नेत्रयोरभावादन्धकारः स्वाभाविकः, इति भावः । अयं शिखी = मयूरः, अतिदर्पितं बलं यस्य तादृशः सन् दुर्योधन इव हृष्टः = प्रसन्नः सन् गर्जति । वर्षाकाले मेघदर्शनात् मयूराः गर्वयुक्ता भवन्ति, भूयो भूयो गर्जन्ति च; दुर्योधनश्च स्वभावत एव गर्वसहितः अभिमानपीडितो गर्जनां करोतिस्मेति साम्यं साधु सम्पन्नम् । अथवा—

वाले ( कहीं ) उन्नत तथा कहीं पवन से पृथक् पृथक् मेघों से आकाश चित्र की भाँति सुशोभित हो रहा है । ( जैसे—चित्र में कहीं चक्रवाक, तो कहीं हंस, एक ओर गगनचुम्बी अट्टालिकाएँ तो दूसरी ओर जलाशय रहते हैं वैसे ही मेघों की आकृति भी वायु-वेग से भिन्न-भिन्न हो रही है—अतः आकाश चित्रवत् प्रतीत हो रहा है । )" ॥ ५ ॥

"( वर्षाकाल में ) मेघाच्छन्न आकाश "धृतराष्ट्र" के मुख के समान हो गया है, यह मयूर गर्वीले "दुर्योधन" की भाँति प्रसन्न होकर गरज रहा है,

**अक्षद्यूतजितो युधिष्ठिर इवाऽध्वानं गतः कोकिलो,**
**हंसाः संप्रति पाण्डवा इव वनादज्ञातचर्यां गताः ॥६॥**

( विचिन्त्य ) चिरं खलु कालो मैत्रेयस्य वसन्तसेनायाः सकाशं गतस्य । नाद्याप्यागच्छति ।

( प्रविश्य )

विदूषकः—अहो गणिआए लोभो अदक्खिणदा अ, जदो ण कधा

---

अतिदर्पयुक्तं बलं=सेना यस्य तादृशो दुर्योधनः सेनाप्राबल्याद् गर्जनां करोति । "वा" शब्दोऽत्रोपमावाचकः । कोकिलश्च अक्ष द्यूते = पाशद्यूते जितः=पराजितः, युधिष्ठिर इव अध्वानं मौनं गतः । वर्षर्तौ कोकिलो मौनं धत्ते ; वसन्ते च वेगेन कूजति । युधिष्ठिरोऽपि द्यूते पराजितः सन् मौनमेव स्वीचकार । अथवा—अध्वानम् = मार्गे गतः । युधिष्ठिरो भ्रातृभिः सह अरण्यमार्गानुसारी जातः । हंसाश्च सम्प्रति, वनात् = ( ल्यब्लोपे पञ्चमी ) वनसमयं समाप्य, पाण्डवा इवाज्ञातचर्यां गताः । हंसाश्च वर्षाकाले मानसरोवरेऽज्ञाता इव निवसन्ति ।

अस्मिन् श्लोके सर्वेषां वर्ण्यानां साम्यं सम्यक् प्रतिपादितं कविना । पाण्डवानां कौरवाणाञ्च वर्णनं विधाय संक्षेपतः साम्यप्रतिपादननैपुण्यं प्रकटितवान् कविः ।

अत्रोपमाऽलङ्कारः । तल्लक्षणञ्च यथा—

"साम्यं वाच्यमवैधर्म्यं वाक्यैक्ये उपमाद्वयोः," इति ।

शार्दूलविक्रीडितं छन्दः ॥६॥

विदूषकः समागत्य वसन्तसेनाया अनुचितं व्यवहारं समर्थयन् वदति—

---

कोकिला जूए में पराजित "युधिष्ठिर" की भाँति मौन हो गई है, और हंस इस समय अरण्यवास समाप्त कर पाण्डवों की भाँति अज्ञात-वास कर रहे हैं ( 'मानसरोवर' चले गये हैं । )" ॥ ६ ॥

( सोचकर ) "मैत्रेय" को "वसन्तसेना" के पास गये हुए बहुत समय हो गया है परन्तु वह अब तक भी नहीं लौटा ।

[ प्रवेशकर ]

विदूषक—ओह ! वेश्या का लोभ और अकुशलता ( तो देखो ) जिसके

वि किदा अण्णा। अणेकहा सिणेहाणुसारं भणिअ किं पि, एवमेअ गहिदा रअणावली। एत्तिआए ऋद्धीए ण तए अहं भणिदो—'अज्ज-मित्तेअ! वीसमीअदु। मल्लकेण पाणीअं पि पिविअ गच्छीअदु' त्ति। ता मा दाव दासीए धीआए गणिआए मुहं पि पेक्खिस्सं। (सनिर्वेदम्) सुट्ठु खु वुच्चदि—'अकंदसमुत्थिदा पउमिणी, अवंचओ वाणिओ, अचोरो सुवण्णआरो, अकलहो गामसमागमो, अलुद्धा गणिआ त्ति दुक्करं एदे संभावीअंति'। ता पिअवअस्सं गदुअ इमादो गणिआपसंगादो णिवत्तावेमि। (परिक्रम्य, दृष्ट्वा) कधं पिअवअस्सो रुक्खवाडिआए उवविट्ठो चिट्ठदि? ता जाव उवसप्पामि। (उपसृत्य) सोत्थि भवदे। वड्ढदु भवं। [ अहो गणिकाया लोभोऽदक्षिणता च। यतो न कथापि कृताऽन्या। अनेकधा स्नेहानुसारं भणित्वा किमपि, एवमेव गृहीता रत्नावली। एतावत्या ऋद्ध्या न तयाहं भणितः—'आर्यमैत्रेय! विश्रम्यताम्, मल्लकेन पानीयमपि पीत्वा गम्यताम्' इति। तन्मा तावद्दास्याःपुत्र्या गणिकाया मुखमपे

---

अहो-इति। सर्वस्य प्रघट्टकस्याशयो दीयते। आश्चर्यम्। परममदाक्षिण्यं वसन्तसेनाया मयाऽद्य दृष्टम्। काचिदन्या कथापि तया नैव कृता। कथं सुवर्णभाण्डं हारितम्? इत्यपि न पृष्टम्। अल्पमूल्यस्य सुवर्णभाण्डस्य कृतेऽनल्पमूल्या रत्नावली सहसैव गृहीता। मल्लकेण (पात्रविशेषेण) जलं पीत्वा, विश्रामं कृत्वा च गन्तव्यमित्यपि नोक्तम्। सत्यमेव लोके प्रसिद्धम्—कमलिनी कन्दं (मूलं) विना नोत्पन्ना भवति, वणिक् अवञ्चको न भवति, सुवर्णकारोऽचौरो न भवति, ग्रामाणां

---

कारण उसने कोई और बात तक न की--ऐसे ही 'रत्नावली' लेकर रख ली! इतना धन होने पर भी उसने यह नहीं कहा--"आर्य मैत्रेय! विश्राम कीजिए "मल्लक" से पानी पीकर जाइयेगा"। इसलिए मैं उस वेश्या का मुख भी नहीं देखूँगा। (ग्लानिपूर्वक) यह ठीक ही कहा जाता है कि—"बिना 'कन्द' (मूल) के कमलिनी, न चुराने वाला सुनार, अवञ्चक बनिया, कलहरहित ग्राम समागम और निर्लोभी वेश्या—ये असम्भव ही हैं।" इसलिए मैं प्रिय मित्र ("चारुदत्त") को जाकर इस गणिका-सङ्ग से हटाता हूँ। (घूमं तथा

द्रक्ष्यामि । सुष्ठु खल्वूच्यते—'अकन्दसमुत्थिता पद्मिनी, अवञ्चको वणिक्, अचौरः सुवर्णकारः, अकलहो ग्रामसमागमः, अलुब्धा गणिकेति दुष्करमेते संभाव्यन्ते । तत्प्रियवयस्यं गत्वास्माद्गणिकाप्रसङ्गान्निवर्तयामि ! कथं प्रियवयस्यो वृक्षवाटिकायामुपविष्टस्तिष्ठति ? । तद्यावदुपसर्पामि । स्वस्ति भवते । वर्धतां भवान् । ]

चारुदत्तः—( विलोक्य ) अये, सुहृन्मे मैत्रेयः प्राप्तः । वयस्य ! स्वागतम्, आस्यताम् ।

विदूषकः—उवविट्ठो म्हि । [ उपविष्टोऽस्मि । ]

चारुदत्तः—वयस्य ! कथय तत्कार्यम् ।

विदूषकः—तं क्खु कज्जं विणट्ठं । [ तत्खलु कार्यं विनष्टम् । ]

चारुदत्तः—किं तया न गृहीता रत्नावली ? ।

विदूषकः—कुदो अम्हाणं एत्तिअं भाअधेअं ? । णवणलिणकोमलं अंजलिं मत्थए कदुअ पडिच्छिआ । [ कुतोऽस्माकमेतावद्भागधे-

---

समागमे कलहोऽवश्यं जायते, गणिका च लोभरहिता भवेदिति सर्वथा दुष्करमिदं सर्वमपि । अतः प्रियमित्रं चारुदत्तं वेश्याप्रसंगान्निवर्तयितुमेव प्रेरयिष्यामि । इति ।

---

देखकर ) क्या प्रियमित्र वृक्षवाटिका में बैठे हैं ! इसलिए उन के पास जाता हूँ । ( पास जाकर ) आप का कल्याण हो ! आप का अभ्युदय हो !

चारुदत्त—( देखकर ) ओह ! "मैत्रेय" आ गये ! मित्र स्वागत है । आओ, बैठो ।

विदूषक—बैठता हूँ ।

चारुदत्त—मित्र ! उस कार्य का क्या रहा !

विदूषक—वह कार्य तो बिगड़ गया ।

चारुदत्त—क्या उस ने 'रत्नावली' नहीं ली ?

विदूषक—हमारा इतना सौभाग्य कहाँ ( जो वह न ले । ) उस ने नये कमल-कोमल अञ्जलि से मस्तक पर चढ़ा कर ले ली ।

यम् ? । नवनलिनकोमलमञ्जलिं मस्तके कृत्वा प्रतीष्ट । ]

चारुदत्तः—तत्किं ब्रवीषि विनष्टमिति ? ।

विदूषकः—भो ! कधं ण विणट्टं ? जं अभुत्तपीदस्स चोरेहिं अवहिदस्स अप्पमुल्लस्य सुवण्णभंडअस्स कारणादो चतुस्समुद्दसारभूदा रअणमाला हारिदा । [ भोः ! कथं न विनष्टम् ? यदभुक्तपीतस्य चौरैरपहृतस्याल्पमूल्यस्य सुवर्णभाण्डस्य कारणाच्चतुःसमुद्रसारभूता रत्नमाला हारिता । ]

चारुदत्तः—वयस्य ! मा मैवम्;

**यं समालम्ब्य विश्वासं न्यासोऽस्मासु तया कृतः ।**
**तस्यैतन्महतो मूल्यं प्रत्ययस्यैव दीयते ॥ ७ ॥**

---

तत् कार्यं विनष्टम् , यतः सुवर्णभाण्डस्याल्पमूल्यस्य कृते चतुःसमुद्रसारभूता रत्नावली दत्ता, इत्यादि विदूषक-वचनं श्रुत्वा चारुदत्तः प्राह—यं समालम्ब्येति ! मित्र मैत्रेय ! त्वया स्वचित्ते चिन्ता न कार्या । पश्य, यं विश्वासमवलम्ब्य तयाऽस्मासु तद्भाण्डं न्यासीकृतम्, तस्य विश्वासस्य मूल्यमेवास्माभिर्दीयते । विश्वासघातात् परतरं पातकं नास्ति । धनानि तु कदाचिदपि स्थिराणि न भवन्ति । चरित्ररक्षा सर्वथा विधेयेति निराकुलेन भवितव्यं भवतेति भावः ।

पथ्यावक्त्रं च्छन्दः ॥ ७ ॥

---

चारुदत्त—तो यह क्यों कहते हो कि—"काम बिगड़ गया" ?

विदूषक—बिगड़ क्यों नहीं गया ? जो कि बिना खाये पिए, बिना उपभोग में लाए, थोड़े मूल्य वाले 'सुवर्णपात्र' के लिए "चारो समुद्रों की सारभूत" 'रत्नावली' हरा दी ।

चारुदत्त—मित्र ! ऐसा नहीं है—

"जिस विश्वास का अवलम्बन कर उस ने हमारे पास धरोहर रखी थी यह उसी महान् विश्वास का मूल्य हम ने दिया है ।" ॥ ७ ॥

विदूषकः—भो वअस्स ! एदं पि मे दुदिअं संदावकारणं जं सहीअणदिण्णसण्णाए पडंतोवारिदं मुहं कदुअ अहं उवहसिदो । ता अहं बम्हणो भविअ दाणिं भवंतं सीसेण पडिअ विण्णवेमि—'णिवत्तीअदु अप्पा इमादो बहुपच्चवाआदो गणिआपसंगादो' । गणिआ णाम पादुअंतरप्पविट्ठा विअ लेट्ठुआ दुक्खेण उण णिराकरीअदि । अवि अ, भो वअस्स ! गणिआ, हत्थी, काअत्थओ, भिक्खु, चाटो, रासहो अ जहिं एदे णिवसंति तहिं दुट्ठा वि ण जाअंति । [ भो वयस्य ! एतदपि मे द्वितीयं संतापकारणं यत्सखीजनदत्तसंज्ञया पटान्तापवारितं मुखं कृत्वाऽहमुपहसितः । तदहं ब्राह्मणो भूत्वेदानीं भवन्तं शीर्षेण पतित्वा विज्ञापयामि—'निवर्त्यतामात्मास्माद्बहुप्रत्यवायाद्गणिकाप्रसङ्गात्' । गणिका नाम पादुकान्तरप्रविष्टेव लेष्टुका दुःखेन पुनर्निराक्रियते । अपि च, भो वयस्य ! गणिका,

---

विदूषको गणिकाप्रसङ्गोऽनुचित इति कथयन् ततश्चारुदत्तं निवर्तयितुमाह—गणिआ नामेति । गणिका हि पादुकाया अन्तरे प्रविष्टा लघुलोष्टका इव दुःखेन निःसारयितुं शक्यन्ते । एकदा चित्ते प्रविष्टा गणिका सहसा त्यक्तु न शक्यन्ते, अतो भवताऽस्याः प्रसङ्गान्मनः परावर्तनीयम् । मित्र ! पश्य, यत्र, गणिकाः, गजाः, कायस्थाः, भिक्षवः, चाटाः ( स्वल्प-विषयभोक्तारः ) रासभाः = गर्दभाश्च निवसन्ति, तत्र तेषां भयात् दुष्टा अपि पुरुषा न गच्छन्ति । निसर्गतः एते दुष्टा भवन्ति । [ अत्र "लेष्टुकाः" इत्यस्य "लोष्टानि लेष्टवः पुंसि" इत्यमरप्रामाण्यात् क्षुद्रार्थे "क" प्रत्ययेन सिद्धिः । ]

---

विदूषक—मित्र ! मेरे सन्ताप का दूसरा कारण यह भी है कि सखियों को सङ्केत कर आँचल में मुख छिपा मेरी हँसी की । इसलिए मैं ब्राह्मण अब आप के पैरों में पड़ कर यह प्रार्थना करता हूँ कि—"आप अपने को बहुत विघ्नों वाले इस वेश्या–संग से हटा लें ।" "गणिका जूते में पड़ी हुई कङ्कड़ के समान है जो कि एक बार घुसने के बाद बड़ी कठिनता से निकाली जाती है । ( इसी प्रकार वेश्या का सम्पर्क एकबार हो जाने पर उसका हृदय से निकालना कठिन हो जाता है । ) और मित्र ! दूसरी बात यह है कि—"जहाँ वेश्या,

हस्ती, कायस्थो, भिक्षुः, चाटो, रासभश्च यत्रैते निवसन्ति तत्र दुष्टा अपि न जायन्ते । ]

चारुदत्तः—वयस्य ! अलमिदानीं सर्वं परिवादमुक्त्वा । अवस्थयैवास्मि निवारितः । पश्य—

वेगं करोति तुरगस्त्वरितं प्रयातुं,
प्राणव्ययान्न चरणास्तु तथा वहन्ति ।
सर्वत्र यान्ति पुरुषस्य चलाः स्वभावाः,

---

वेश्याप्रसंगस्य निन्दां निशम्य चारुदत्तः कथयति—वयस्येति । सखे मैत्रेय ! इदानीं सर्वं परिवादम् = निन्दाम् उक्त्वा अलम् । अलंखल्वोः प्रतिषेधार्थत्वे क्त्वाप्रत्ययो भवति । निन्दा न कर्तव्येति भावः । अवस्थया = दरिद्रावस्थयैव निवारितोऽस्मि । वेश्यानामर्थरुचित्वं प्रसिद्धमेव, न चाधुना ममान्तिके धनम्; अतो निर्धनतया स्वयमेव वेश्याप्रसङ्गान्निवृत्तोऽस्मि, निन्दयैव को लाभः ! इति हृदयम् ।

अमुमेवार्थं युक्त्या साधयति—वेगमिति । तुरगः = अश्वः, त्वरितं = शीघ्रं, प्रयातुम् = गन्तुम् वेगं करोति, परन्तु प्राणानां व्ययात् = क्षयात् हेतोः, तस्य चरणास्तथा = वेगेन न वहन्ति = नैव चलन्ति । एवमेव पुरुषस्य चपलाः स्वभावाः = प्रकृतयः सर्वत्र = उचितेऽनुचिते वा स्थाने प्रयान्ति, किन्तु खिन्नाः सन्तः ( अकृतकार्यत्वात् सखेदा इव ) ततः = तस्मात् स्थानात् निवृत्य पुनः हृदयमेव विशन्ति = प्रविष्टा भवन्ति । यतो निर्गत्य लाभेच्छया सर्वत्र भ्रान्ताः असफलाः पुनस्तस्मिन्नेव

---

हाथी, कायस्थ, भिक्षुक, धूर्त और गधे इत्यादि रहते हैं वहाँ तो बुरे आदमी भी नहीं जाते ( सज्जनों का तो कहना ही क्या है ! अतः तुम इस व्यापार से निवृत्त हो जाओ । )

चारुदत्त—मित्र ! इस सारी निन्दा को रहने दो । मुझे तो ( दरिद्र ) अवस्था ने ही ( इस कर्म से ) निवृत्त कर दिया है । देखो—

"घोड़ा बहुत तेज़ भागना चाहता है परन्तु शक्तिरहित होने के कारण उसकी टाँगें उस प्रकार नहीं चल पाती । ऐसे ही मनुष्य की चञ्चल इच्छाएँ सर्वत्र जाती

खिन्नास्ततो हृदयमेव पुनर्विशन्ति ॥८॥

अपि च, वयस्य !

यस्यार्थास्तस्य सा कान्ता धनहार्यो ह्यसौ जनः ।
( स्वगतम् ) न गुणहार्यो ह्यसौ जनः । ( प्रकाशम् )
वयमर्थैः परित्यक्ता ननु त्यक्तैव सा मया ॥९॥

...दय भवने प्रविशन्ति, इति निर्धनानां कुत्रापि गतिर्नास्तीति भावः । एवञ्चाहमपि मनसा कामयमानोऽपि तां वसन्तसेनां दरिद्रत्वात् स्ववशमानेतुमसमर्थ एवास्मीति सारः । अत्र दृष्टान्तालङ्कारः । तल्लक्षणं तु यथा—

"दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम् ।" इति । प्रसादो गुणः । वसन्ततिलकं च्छन्दः ॥८॥

पुनरपि वसन्तसेनाया दुर्ग्राह्यतां सूचयति—यस्यार्थाः, इति । वयस्य ! यस्य सविधे धनमस्ति, तस्यैव सा कान्ता भविष्यति, ( स्वगतमाह ) असौ जनः (वसन्तसेनारूपो जनः ) न पुनर्गुणैर्हार्यः = स्ववशे कर्तुं शक्यः, ( पुनः प्रकाशमाह ) अस्माकं समीपे धनं नास्ति, अतः सर्वथा मया परित्यक्तैव सा वसन्तसेना, अत्र विधि-निषेधयोरावश्यकतैव नास्तीत्यर्थः । धनाभावे तादृशी नारी कथमिवोपासनीया ? इति वेश्याप्रसङ्गस्य निन्दां कथं करोषि ? इत्याशयः ।

अत्र काव्यलिङ्गालङ्कारः । तल्लक्षणञ्च यथा—

"हेतोर्वाक्य-पदार्थत्वे काव्यलिङ्गं निगद्यते ।" इति अनुष्टुप् च्छन्दः ॥९॥

हैं परन्तु ( असफलता से खिन्न-सी होकर ) ये पुनः हृदय में ही प्रविष्ट हो जाती हैं । ( अर्थात्—मैं "वसन्तसेना" को हृदय से चाहता हुआ भी निर्धन होने से उसके पाने में असमर्थ ही हूँ । )" ॥ ८ ॥

और भी, मित्र !

"जिसके पास धन है वह उसी के द्वारा उपभोग्य है—"

( स्वयं ही ) यह गुणों से वश में करने योग्य नहीं ।

( प्रकाश में ) और जब मुझको धन ने छोड़ दिया है तो मैंने भी उसे छोड़ ही दिया है । ( अब तुम्हारे निषेध की आवश्यकता ही नहीं है । )" ॥ ९ ॥

विदूषकः—( अधोऽवलोक्य, स्वगतम् ) जधा एसो उद्धं पेक्खिअ दीहं णिस्ससदि, तधा तक्केमि मए विणिवारिअंतस्स अधिअदरं वड्ढिदा से उक्कंठा। ता सुट्ठु खु एव्वं वुच्चदि—'कामो वामो' त्ति। ( प्रकाशम् ) भो वअस्स ! भणिदं अ ताए—'भणेहि चारुदत्तं—अज्ज पओसे मए एत्थ आअंतव्वं' त्ति। ता तक्केमि रअणावलीए अपरितुट्टा अवरं मग्गिदुं आअमिस्सदि त्ति। [ यथैष ऊर्ध्वं प्रेक्ष्य दीर्घं निःश्वसिति, तथा तर्कयामि मया विनिवार्यमाणस्याधिकतरं वृद्धास्योत्कण्ठा। तत्सुष्ठु खल्वेवमुच्यते—'कामो वामः' इति। भो वयस्य ! भणितं च तया—'भण चारुदत्तम् —अद्य प्रदोषे मयात्रागन्तव्यम्' इति। तत्तर्कयामि रत्नावल्या अपरितुष्टाऽपरं याचितुमागमिष्यतीति। ]

चारुदत्तः—वयस्य ! आगच्छतु, परितुष्टा यास्यति।

---

विदूषकः स्वमनसि चारुदत्तस्याधिकामुत्कण्ठामनुमाय कामो वस्तुतस्तु यावन्निवार्यते तावद् वाम एव भवति, अधिकं वर्धते, इति विभावयन् प्रदोषे समागमिष्यति सा, इति तयोक्तं रत्नावलीलाभादपि न सन्तुष्टेति कथितवान्, तस्य भावं ज्ञात्वा चारुदत्तः कथयति—वयस्य ! इति। मित्र ! यदि सा प्रदोषसमये समागच्छति, कामं समागच्छतु, को दोषः ? परितुष्टा यास्यति, येन केनापि विचारेणागच्छति, नाहं बिभेमि। सा त्वितः सन्तुष्यैव यास्यतीति मम तु निश्चय एवमेवेति भावः।

---

विदूषक—( नीचे को देखकर स्वयं ही ) जैसे यह ऊपर को देखकर लम्बी आहें भर रहे हैं इससे मैं अनुमान करता हूँ कि निषेध करने पर इनकी उत्कण्ठा अधिक बढ़ गई है। इसलिए यह ठीक ही कहा है—कि "काम वाम ( उलटा ) होता है"। ( प्रकाश में ) मित्र ! उसने कहा है कि—"चारुदत्त जी" से कहना कि आज सायंकाल मैं आऊँगी।" इसलिए मैं समझता हूँ कि "रत्नावली" से सन्तुष्ट न होकर और ( धन ) माँगने आयगी।

चारुदत्त—आने दो ! सब प्रकार से सन्तुष्ट होकर जायगी।

चेटः—( प्रविश्य ) अवेध माणहे ।

**जधा जधा वश्शदि अब्भखंडे, तधा तधा तिम्मदि पुट्ठिचम्मे ।**
**जधा जधा लग्गदि शीदवादे तधा तधा वेवदि मे हलक्के ॥१०॥**

( प्रहस्य )

**वंशं वाए शत्तच्छिद्दं शुशद्दं, वीणं वाए शत्ततंतिं णदंति ।**

---

वसन्तसेनासकाशादागतः कश्चिच्चेटो वर्षावातपीडितः स्वदशां वर्णयति—जधा जधा—इति । यथा यथा मेघशकलमिदं वर्षति, तथातथा समधिकरूपेण मम पृष्ठभागस्य चर्म तिम्यति = क्लिन्नं जायते, यथा यथा च शीतलः पवनो लगति, तथातथा मम हृदयमपीदमधिकं वेपते = कम्पितं भवति । वर्षावातभयादिदानीमुत्कम्पितोऽस्मि । भो मानवाः ! यदि भवन्तो बहिः स्थास्यन्ति, तदा भवतामपीदृशी दशा भविष्यति, ततः अपेत = दूरे गच्छन्तु भवन्तः ।

अत्र स्वभावोक्तिरलङ्कारः । तल्लक्षणञ्च यथा—

"स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम् ॥" इति। उपेन्द्रवज्रा च्छन्दः । तल्लक्षणं यथा—"उपेन्द्रवज्रा जतजास्ततो गौ ।" इति ॥१०॥

पुनः ( प्रहस्य ) स्वकीयं गायन-पाण्डित्यप्रकर्षं प्रकटयितुमाह—वंशं वाए—इति ।

अहं सुशब्दयुक्तं, सप्तछिद्रसहितं वंशं = वेणुं वादयामि, शब्दायमानां, सप्ततन्त्रीपरिपूर्णां वीणां वादयामि, गर्दभस्वरूपानुरूपं गीतं गायामि, ततो निःशङ्कं कथ-

---

चेट—( प्रवेशकर ) महानुभावो ! हटो !

"जैसे–जैसे यह मेघ खण्ड बरस रहा है वैसे ही वैसे मेरी कमर भीग रही है। और जैसे–जैसे शीतल पवन चलता है वैसे ही वैसे मेरा हृदय काँप रहा है" ॥१०॥

( हँसकर )

"मैं सात छिद्रवाली बाँसुरी बजाता हूँ, सात तारों वाली वीणा को भी बड़े ही

गीअं गाए गद्दहश्शाणुलूअं, के मे गाणे तुंबुलू णालदे वा ? ॥११॥

आणत्तम्हि अज्जआए वशंतशेणाए—'कुंभीलआ ! गच्छ तुमं, मम आगमणं अज्जचारुदत्तश्श णिवेदेहि' त्ति। ता जाव अज्जचारुदत्तश्श गेहं गच्छामि। ( परिक्रम्य, प्रविष्टकेन दृष्ट्वा ) एशे चालुदत्ते रुक्खवाडिआए चिट्ठदि। एशे वि शे दुट्टवडुके; ता जाव उवशप्पेमि। कधं ढक्किदे दुवाले रुक्खवाडिआए ?। भोदु, एदश्श दुट्टवडुकश्श शण्णं देमि।

---

यामि—मम गायने तुम्बुरुः = गन्धर्वविशेषः कः ? देवर्षिर्नारद एव वा कः ? गान-वादित्रयोस्तावेव लोके प्रसिद्धौ, परं मम साम्यं वोढुं सर्वथा तावसमर्थौ। अत्र व्यतिरेकालङ्कारः। उपजातिश्छन्दः। जगती जात्याः शालिन्याश्च सम्मिश्रणात् ॥११॥

वसन्तसेनायाः समागमनं सूचयितुं ( प्रविष्टमेव प्रविष्टं, स्वार्थे कः ) प्रविष्टकेन = प्रवेशेनेत्यर्थः, वाटिकान्तर्गतं द्वारपिधानञ्चावलोक्य विदूषकमाकारयितुं लोष्ठगुटिकाप्रक्षेपरूपं सङ्केतं ददाति। विदूषको लोष्ठाघातमनुभूय पृच्छति—अए—इति। कोऽधुना प्राकारेण = प्राचीरेण परिवेष्टितं "कपित्थ"फलमिव मां लोष्ठैस्ताडयति ? यथा बालकाः प्राकारान्तर्वर्तिनं कपित्थं लोष्ठाघातैरधः पातयन्ति, तथैव को मां तथा करोति ?

---

अच्छे शब्द से बजाता हूँ और गधे के समान स्वर से गीत भी गा सकता हूँ ( बताइये तो सही ) मेरे ऐसे गान के सामने "तुम्बुरू" नामक गन्धर्व तथा महर्षि "नारद" किस प्रकार ठहर सकते हैं ?" ॥११॥

मुझे "आर्या वसन्तसेना" ने आज्ञा दी है कि—"कुम्भीलक" जा मेरे आगमन को "आर्य चारुदत्त" से निवेदन करो।" इसलिए मैं "आर्य चारुदत्त" के घर जाता हूँ ( घूमकर देखते हुए ) ये "आर्य चारुदत्त" वृक्ष वाटिका में बैठे हुए हैं और यह 'दुष्ट ब्राह्मण' ( "विदूषक" ) भी। क्या वाटिका का द्वार बन्द है ? अच्छा तो दुष्ट बटुक को सङ्केत करता हूँ।

( इति लोष्टगुटिकाः क्षिपति )

[ अवेत मानवाः !

यथा यथा वर्षत्यभ्रखण्डं तथा तथा तिम्यति पृष्ठचर्म ।
यथा यथा लगति शीतवातस्तथा तथा वेपते मे हृदयम् ॥
वंशं वादयामि सप्तच्छिद्रं सुशब्दं वीणां वादयामि सप्ततन्त्रीं नदन्तीम् ।
गीतं गायामि गर्दभस्यानुरूपं को मे गाने तुम्बुरुर्नारदो वा ? ॥

आज्ञप्तोऽस्म्यार्यया वसन्तसेनया—'कुम्भीलक ! गच्छ त्वम् । ममागमनमार्यचारुदत्तस्य निवेदय' इति । तद्यावदार्यचारुदत्तस्य गेहं गच्छामि । एष चारुदत्तो वृक्षवाटिकायां तिष्ठति । एषोऽपि स दुष्टबटुकः तद्यावदुपसर्पामि । कथमाच्छादितं द्वारं वृक्षवाटिकायाः । भवतु, एतस्य दुष्टबटुकस्य संज्ञां ददामि । ]

विदूषकः—अए, को दाणिं एसो पाआरवेट्ठिदं विअ कइत्थं मं लोट्टकेहिं ताडेदि ? । [ अये ! क इदानीमेष प्राकारवेष्टितमिव कपित्थं मां लोष्टकैस्ताडयति ? । ]

चारुदत्तः—आरामप्रासादवेदिकायां क्रीडद्भिः पारावतैः पातितं भवेत् ।

विदूषकः—दासीए पुत्त दुट्टपारावअ ! चिट्ठ चिट्ठ । जाव एदिणा दंडकट्ठेण सुपक्कं विअ चूअफलं इमादो पासादादो भूमीए पाडइस्सं ।

---

[ कङ्कड़े फेंकता है । ]

विदूषक—अरे ! मुझको प्राचीर से घिरे हुए "कैथ" वृक्ष के समान कौन कङ्कड़ियों से मार रहा है ? ( जैसे दीवार आदि से घिरे हुए वृक्ष को बालक कङ्कड़ों से मार-मार कर फल प्राप्त करना चाहते हैं वैसे ही यह कौन मुझको मार रहा है ? ) ।

चारुदत्त—कदाचित् वाटिका-भवन की वेदिकाओं पर खेलते हुए कबूतरों ने गिरा दी हों ।

विदूषक—अरे दासीपुत्र कबूतर ! ठहर तो सही ! मैं इस डण्डे से पके हुए

[ दास्याःपुत्र दुष्टपारावत ! तिष्ठ तिष्ठ यावदेतेन दण्डकाष्ठेन सुपक्वमिव चूतफलमस्मात् प्रासादाद्भूमौ पातयिष्यामि । ] ( इति दण्डकाष्ठमुद्यम्य धावति )

चारुदत्तः—( यज्ञोपवीतं आकृष्य ) वयस्य ! उपविश । किमनेन ? । तिष्ठतु दयितासहितस्तपस्वी पारावतः ।

चेटः—कधं पारावदं पेक्खदि, मं ण पेक्खदि ? । भोदु, अवराए लोट्टगुडिकाए पुणो वि ताडइस्सं । [ कथं पारावतं पश्यति, मां न पश्यति ? । भवतु, अपरया लोष्टगुटिकया पुनरपि ताडयिष्यामि । ] ( तथा करोति )

विदूषकः—( दिशोऽवलोक्य ) कधं कुंभीलओ ? । ता जाव उवसप्पामि । ( उपसृत्य, द्वारमुद्घाट्य ) अरे कुंभीलअ ! पविश; साअदं दे । [ कथं कुम्भीलकः ? तद्यावदुपसर्पामि । अरे कुम्भीलक ! प्रविश;

---

उपवनप्रासादस्योपरिभागे क्रीडासक्तैः कपोतैरेव कदाचिन्निपातितो लोष्ठ इति चारुदत्तवचनं निशम्य यावदेवासौ दण्डकाष्ठमुद्यम्य कपोतं हन्तुं चलति, तावदेवार्यचारुदत्तो यज्ञोपवीते तं समाकर्षति, कथयति च—वयस्येति । सखे ! अत्रैवोपविश्यताम् । किमिति कपोते कोपं तनोषि ? वराकः कपोतः स्वीयदयितया सह सानन्दं तिष्ठतु, किमिति वराकयोरनयोर्विघ्नं करोषीति भावः ।

---

आम की भाँति इस भवन से तुझे भूमि पर गिराता हूँ ।

[ डण्डा तानकर भागता है । ]

चारुदत्त—( यज्ञोपवीत खींचकर ) मित्र ! बैठो ! इससे क्या प्रयोजन ? अपनी प्रियतमा सहित कबूतर सुख-पूर्वक बैठे ( उसे बैठा रहने दो, क्यों उसकी आनन्द केलि में बाधा डालते हो ? )

चेट—क्या कबूतरों को देखता है; परन्तु मुझे नहीं देखता ? अस्तु; दूसरी कङ्कड़ी से फिर मारता हूँ । ( फेंकता है । )

विदूषक—( चारों ओर देखकर ) क्या "कुम्भीलक" है ? इसलिए उसके पास जाता हूँ । ( समीप जा किवाड़ खोलकर ) अरे कुम्भीलक ! आ ! तेरा

स्वागतं ते । ]

चेटः—( प्रविश्य ) अज्ज ! वंदामि । [ आर्य ! वन्दे । ]

विदूषकः—अरे, कहिं तुमं ईदिसे दुद्दिणे अंधआरे आअदो ? । [ अरे, कुत्र त्वमीदृशे दुर्दिनेऽन्धकार आगतः ? । ]

चेटः—अले, एशा शा । [ अरे, एषा सा । ]

विदूषकः—का एसा का ? । [ कैषा का ? । ]

चेटः—एशा शा । [ एषा सा । ]

विदूषकः—किं दाणिं दासीए पुत्ता ! दुब्भिक्खकाले वुड्ढरंको विअ उद्धकं सासाअसि—'एसा सा से' त्ति ? । [ किमिदानीं दास्याः-पुत्र ! दुर्भिक्षकाले वृद्धरङ्क इवोर्ध्वकं श्वासायसे—'एषा सा सा' इति ? ]

चेटः—अले, तुमं पि दाणिं इंदमहकामुको विअ सुट्ठु किं काकाअसि—'का के' त्ति ? । [ अरे त्वमपीदानीमिन्द्रमहकामुक इव सुष्ठु किं काकायसे—'का का' इति ? । ]

विदूषकः—ता कहेहि । [ तत्कथय । ]

---

स्वागत है ?

चेट—( प्रवेशकर ) आर्य ! प्रणाम करता हूँ ।

विदूषक—अरे ! तू ऐसे अन्धकार पूर्ण "दुर्दिन" में कहाँ आया है ?

चेट—अजी ! "यह वह—" ।

विदूषक—यह कौन ?

चेट—'यह वह'— ।

विदूषक—अरे ! अकाल के समय निर्धन वृद्ध की भाँति तू क्या ये लम्बी साँसें ले रहा है—"यह वह, यह वह—" ?

चेट—और तुम भी इस समय कौए कि भाँति क्या "काँव-काँव" कर रहे हो ? "यह कौन है, यह कौन है"

विदूषक—तो कह !

चेटः—( स्वगतम् ) भोदु एव्वं भणिश्शं । ( प्रकाशम् ) अले, पण्हं दे दइश्शं । [ भवतु, एवं भणिष्यामि । अरे, प्रश्नं ते दास्यामि । ]

विदूषकः—अहं दे मुंडे गोड्डुं दइस्सं । [ अहं ते मस्तके पादं दास्यामि । ]

चेटः—अले, जाणाहि दाव, तेण हि कश्शिं काले चूआ मोलेंति । [ अरे, जानीहि तावत्; तेन हि कस्मिन् काले चूता मुकुलिता भवन्ति । ]

विदूषकः—अरे दासीए पुत्ता ! गिम्हे । [ अरे दास्याःपुत्र ! ग्रीष्मे । ]

चेटः—( सहासम् ) अले, णहि णहि । [ अरे, नहि नहि । ]

विदूषकः—( स्वगतम् ) किं दाणिं एत्थ कहिस्सं ? । ( विचिन्त्य ) भोदु, चारुदत्तं गदुअ पुच्छिस्सं । ( प्रकाशम् ) अरे, मुहुत्तअं चिट्ठ । ( चारुदत्तमुपसृत्य ) भो वअस्स ! पुच्छिस्सं दाव, कस्सिं काले चूआ मोलेंति ? । [ किमिदानीमत्र कथयिष्यामि ? । भवतु, चारुदत्तं गत्वा प्रक्ष्यामि । अरे, मुहूर्तकं तिष्ठ । भो वयस्य ! प्रक्ष्यामि तावत्, कस्मिन् काले चूता मुकुलिता भवन्ति ? । ]

चारुदत्तः—मूर्ख ! वसन्ते ।

---

चेट—( स्वयं ही ) ऐसा कहूँ । ( प्रकाश में ) तुमको एक प्रश्न देता हूँ ।

विदूषक—अरे ! मैं तेरे मस्तक पर लात दूँगा ।

चेट—क्या जानते हो कि—"आम किस समय मुकुलित होते ( मौरते) हैं ?"

विदूषक—अरे दासीपुत्र ! ग्रीष्म ऋतु में ।

चेट—( हँसता हुआ ) अजी, नहीं नहीं ।

विदूषक—( स्वयं ही ) मैं क्या कहूँ ? ( सोचकर ) अस्तु, "चारुदत्त" से पूछूँगा । ( प्रकाश में ) अरे ! एक क्षण ठहर । ( "चारुदत्त" के पास जाकर ) "मित्र ! मैं पूछता हूँ कि आम कब मुकुलित होते हैं ?"

चारुदत्त—मूर्ख ! वसन्त में ।

विदूषकः—( चेटमुपगम्य ) मुक्ख ! वसंते । [ मूर्ख ! वसन्ते । ]

चेटः—दुदिअं दे पण्हं दइश्शं । शुशमिद्धाणं गामाणं का लक्खअं कलेदि ? । [ द्वितीयं ते प्रश्नं दास्यामि । सुसमृद्धानां ग्रामाणां का रक्षां करोति ? । ]

विदूषकः—अरे, रच्छा । [ अरे, रथ्या । ]

चेटः—( सहासम् ) अले, णहि णहि । [ अरे, नहि नहि । ]

विदूषकः—भोदु, संसए पडिदम्हि । ( विचिन्त्य ) भोदु, चारुदत्तं पुणो वि पुच्छिस्सं । ( पुनर्निवृत्य चारुदत्तं तथैवोदाहरति ) [ भवतु, संशये पतितोऽस्मि । भवतु चारुदत्तं पुनरपि प्रक्ष्यामि । ]

चारुदत्तः—वयस्य ! सेना ।

विदूषकः—( चेटमुपगम्य ) अरे दासीए पुत्ता ! सेणा । [ अरे दास्याःपुत्र ! सेना । ]

चेटः—अले दुवे वि एक्कश्शिं कदुअ शिग्घं भणाहि । [ अरे, द्वे अप्येकस्मिन् कृत्वा शीघ्रं भण । ]

---

विदूषक—( चेट के पास पहुँचकर ) मूर्ख ! वसन्त में ।

चेट—अरे ! मैं तुमसे दूसरा प्रश्न करता हूँ ! "समृद्ध गाँवों की रक्षा कौन करती है ?"

विदूषक—अरे ! 'रथ्या' !

चेट—( हँसता हुआ ) अजी ! नहीं ! नहीं !

विदूषक—ओह ! मैं तो संशय में पड़ गया हूँ । ( सोचकर ) अस्तु; ( "चारुदत्त" से पूछूँगा । ( पुनः "चारुदत्त" के पास जाकर ज्यों का त्यों प्रश्न करता है । )

चारुदत्त—मित्र ! "सेना" ।

विदूषक—अबे ! दासीपुत्र ! "सेना" ।

चेट—अरे ! दोनों को एक साथ मिलाकर शीघ्र कहो !

विदूषकः—सेणावसंते। [ सेनावसन्ते। ]

चेटः—णं पलिवत्तिअ भणाहि। [ ननु परिवर्त्य भण।

विदूषकः—( कायेन परिवृत्य ) सेणावसंते। [ सेनावसन्ते। ]

चेटः—अले मुक्ख बडुका ! पदाइं पलिवत्तावेहि। [ अरे मूर्ख चटुक ! पदे परिवर्तय। ]

विदूषकः—( पादौ परिवर्त्य ) सेणावसंते। [ सेनावसन्ते। ]

चेटः—अले मुक्ख ! अक्खलपदाइं पलिवत्तावेहि। [ अरे मूर्ख! अक्षरपदे परिवर्तय। ]

विदूषकः—( विचिन्त्य ) वसंतसेणा। [ वसन्तसेना। ]

चेटः—एशा शा आअदा। [ एषा सागता। ]

विदूषकः—ता जाव चारुदत्तस्स णिवेदेमि। ( उपसृत्य )। भो चारुदत्त ! धणिओ दे आअदो। [ तद्यावच्चारुदत्तस्य निवेदयामि। भो चारुदत्त ! धनिकस्त आगतः। ]

चारुदत्तः—कुतोऽस्मत्कुले धनिकः ?।

---

विदूषक—"सेना वसन्त"।

चेट—अजी ! पलटकर बोलो।

विदूषक—( शरीर से पलटकर ) "सेना वसन्त।"

चेट—अरे ! मूर्ख ब्राह्मण ! 'पदों' ( शब्दों ) को बदल कर कहो।

विदूषक—( पैरों को मोड़कर ) "सेनावसन्त"।

चेट—अरे ! अक्षरों को बदल कर कहो।

विदूषक—( सोचकर ) "वसन्तसेना"—।

चेट—"यह आ गई है"।

विदूषक—इसलिए मैं तो "चारुदत्त" से निवेदन करता हूँ। ( समीप जाकर ) चारुदत्त ! तुम्हारा 'धनिक' आ गया है।

चारुदत्त—हमारे कुल में धनिक कहाँ से आया !

विदूषकः—जइ कुले णत्थि, ता दुवारे अत्थि; एसा वसंतसेणा आअदा । [ यदि कुले नास्ति, तद्द्वारेऽस्ति; एषा वसन्तसेनागता । ]

चारुदत्तः—वयस्य ! किं मां प्रतारयसि ? ।

विदूषकः—जइ मे वअणे ण पत्तिआअसि, ता एदं कुंभीलअं पुच्छ । अरे दासीए पुत्ता कुंभीलअ ! उवसप्प । [ यदि मे वचने न प्रत्ययसे, तदिमं कुम्भीलकं पृच्छ । अरे दास्याःपुत्र कुम्भीलक ! उपसर्प । ]

चेटः—( उपसृत्य ) अज्ज ! वंदामि । [ आर्य ! वन्दे । ]

चारुदत्त—भद्र ! स्वागतम्; कथय सत्यं प्राप्ता वसन्तसेना ?

चेटः—एशा शा आअदा वशंतशेणा । [ एषा सागता वसन्तसेना । ]

चारुदत्तः—( सहर्षम् ) भद्र ! न कदाचित्प्रियवचनं निष्फलीकृतं मया, तद्गृह्यतां पारितोषिकम् । ( इत्युत्तरीयं प्रयच्छति )

चेटः—( गृहीत्वा प्रणम्य, सपरितोषम् ) जाव अज्जआए णिवेदेमि.

---

विदूषक—यदि कुल में नहीं तो द्वार पर तो है। यह "वसन्तसेना" आ गई।

चारुदत्त—मित्र ! मुझको धोखा क्यों देते हो ?

विदूषक—यदि मेरा विश्वास नहीं करते तो इस "कुम्भीलक" से पूछ लो। अबे ! कुम्भीलक ! यहाँ आ !

चेट—( आकर ) आर्य ! प्रणाम करता हूँ ।

चारुदत्त—सौम्य ! स्वागत है ! कहो, क्या सचमुच "वसन्तसेना" आ गई ?

चेट—( जी हाँ; ) यह "वसन्तसेना" आ गई !

चारुदत्त—भद्र ! मैंने कभी भी "प्रिय सन्देश" निष्फल नहीं किया, इसलिए यह पारितोषिक लो !

( दुपट्टा दे देता है । )

चेट—( लेकर प्रणाम करते हुए सन्तोषपूर्वक ) तब तक मैं "आर्या" से

[ यावदार्याया निवेदयामि । ] । ( इति निष्क्रान्तः )

विदूषकः—भो ! अवि जाणासि, किंणिमित्तं ईदिसे दुद्दिणे आअदे त्ति ? । [ भो ! अपि जानासि, किंनिमित्तमीदृशे दुर्दिन आगतेति ? । ]

चारुदत्तः—वयस्य ! न सम्यगवधारयामि ।

विदूषकः—मए जाणिदं । अप्पमुल्ला रअणावली, बहुमुल्लं सुवण्णभंडअं त्ति ण परितुट्टा अवरं मग्गिदुं आअदा । [ मया ज्ञातम्। अल्पमूल्या रत्नावली, बहुमूल्यं सुवर्णभाण्डमिति न परितुष्टाऽपरं याचितुमागता । ]

चारुदत्तः—( स्वगतम् ) परितुष्टा यास्यति ।

( ततः प्रविशत्युज्ज्वलाभिसारिकावेशेन वसन्तसेना, सोत्कण्ठा छत्रधारिणी, विटश्च )

विटः—( वसन्तसेनामुद्दिश्य )

**अपद्मा श्रीरेषा प्रहरणमनङ्गस्य ललितं,**

---

उज्ज्वलाभिसारिकावेशां वसन्तसेनामुपलक्ष्य विटो ब्रूते—अपद्मेति ।

---

निवेदन करता हूं ।

[ चला जाता है । ]

विदूषक—क्या तुम जानते हो कि यह ऐसे 'दुर्दिन' में भी क्यों आई है ?

चारुदत्त—मित्र ! ठीक-ठीक नहीं समझ पाता ।

विदूषक—मैंने जान लिया है । "रत्नावली" अल्प मूल्यवाली है और वह सुवर्ण-पात्र मूल्यवान् । अतः उससे सन्तुष्ट न होकर और माँगने आई है ।

चारुदत्त—( स्वयं ही ) सन्तुष्ट होकर जायगी ।

[ तदनन्तर 'शुक्लाभिसारिका' के वेश में उत्कण्ठित "वसन्तसेना" छत्रधारिणी सेविका तथा "विट" प्रवेश करते हैं । ]

विट—( "वसन्तसेना" को लक्ष्य कर )

"यह साक्षात्—"श्री" ( लक्ष्मी ) है ( अन्तर इतना है कि ) यह कमल

कुलस्त्रीणां शोको मदनवरवृक्षस्य कुसुमम् ।
सलीलं गच्छन्ती रतिसमयलज्जा प्रणयिनी,

[ अत्रेदं बोद्धव्यम्—अभिसारिका हि कृष्णपक्षे कृष्णवर्णानि वस्त्राणि, शुक्ल-पक्षे च शुक्लानि वस्त्राण्याधाय गच्छति । अभिसारिकालक्षणं च—

"अभिसारयते कान्तं, या मन्मथवशंवदा ।
स्वयं वाभिसरत्येषा, धीरैरुक्ताभिसारिका ॥" इति ।
संलीना स्वेषु गात्रेषु, मूकीकृतविभूषणा ।
अवगुण्ठनसंवीता, कुलजाभिसरेद्यदि ॥
विचित्रोज्ज्वलवेशा तु बलन्नूपुरनिस्वना ।
प्रमोदस्मेरवदना, स्याद् वेश्याभिसरेद्यदि ॥
मदस्खलितसंलापा, विभ्रमोत्फुल्ललोचना ।
आविद्धगति-संचारा, स्यात् प्रेष्याभिसरेद्यदि ॥

—इति साहित्य-नियमानुसारं वेश्या वसन्तसेना "उज्ज्वलाभिसारिका" इति लाक्षता कविना । ]

विटो वसन्तसेनायाः सौन्दर्यातिशयं वर्णयति—इयं हि साक्षात् श्रीरेवास्ति, अन्तरं तु केवलमियदस्ति, यदियं पद्मसम्भवा नास्ति । भगवती कमला च कमलालयेति प्रसिद्धा । अनङ्गस्य ललितं प्रहरणमेवेयम् । प्रहरणं कठोरं भवति, अत्र च लालित्यमित्येतावदन्तरम् । कुलस्त्रीणां कृते त्वियं शोकस्वरूपैव । इमामतिसुन्दरीं निरीक्ष्य कुल-पुत्रा अपि कामाकृष्टाः स्वपत्नीः परित्यज्यामुं कामयन्ते, ताश्च शोकविधुरा भवन्तीति शोकरूपत्वमस्या उचितमेवेति हृदयम् । मदनरूपस्य पादपस्य कुसुमम्=प्रसूनम् । मदनस्य यत्र पुरुषे प्रभावो निपतति, कामरूपो वृक्षस्तत्रारोप्यते । वृक्षस्य च पुष्परूपतामियमेव धत्ते । पुष्पान्तरमेव कामसाफल्यमाधीयते । एतां विना काम-पादपो निष्फल एवेति परमरहस्यम् । रति-

से उत्पन्न नहीं हुई है, कामदेव का सुन्दर शस्त्र है, उच्चकुल की वधुओं के लिए शोक है, ( कुलपुत्र इस के वश में आ जाते हैं तो उनकी पत्नियाँ शोक

रतिक्षेत्रे रङ्गे प्रियपथिकसार्थैरनुगता ॥१२॥

वसन्तसेने! पश्य पश्य—

गर्जन्ति शैलशिखरेषु विलम्बिबिम्बा,
मेघा वियुक्तवनिताहृदयानुकाराः।

---

समये या स्वाभाविकी लज्जेव, न तु वास्तविकी लज्जा, वेश्यानां तस्या अभावात्। तस्यां प्रणयोऽस्या अस्तीति तथोक्तम्, अस्याः एकस्मिन्नेव चारुदत्तेऽनुरक्तत्वात् लज्जा कथञ्चिदुचितैवेति विज्ञा एवात्र साक्षिणः। रतिक्षेत्रे रङ्गस्थाने सलीलं गच्छन्तो सतीयं प्रियपथिकानां सार्थैः = समूहैरनुगता भवति। यदेयं रङ्गस्थाने = नृत्य-गायनादिस्थाने सलीलं गच्छति, तदा शतशः प्रियकामुका एनामनुसरन्तो जीवन-साफल्यं स्वीयं मन्यन्ते, इति सारः।

अत्र रूपकम्, अधिकारूढरूपकम्, परिणामः, इत्येषामलङ्काराणां सन्देह सङ्करालङ्कारः। उपमेये उपमानारोपात् रूपकम्। कस्यचिदं शस्याधिक्ये चाधिकारूढरूपकम्। प्रकृतकार्यसाधकत्वे परिणामालङ्कारः।

शिखरिणी च्छन्दः। तल्लक्षणञ्च यथा—

"रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणी।" इति ॥१२॥

मेघानामुदये कामोद्दीपकता भवति। अतो मेघसन्निधानमेव वर्णयति—गर्जन्ति—इति। वसन्तसेने! पश्य, शैलानां = पर्वतानां शिखरेषु विलम्बीनि बिम्बानि = आकृतयो येषां ते, वियुक्तवनितानां हृदयमनुकुर्वन्तीति तथाविधा मेघा गर्जन्ति, यथा वियुक्तानां वनितानां हृदयानि सर्वदा सन्तापमालाकुलितानि ध्वनन्तीव,

---

से सन्तप्त होती हैं।) 'मदन वृक्ष' का पुष्प है, रमण के समय लज्जा-प्रणयिनी है, और नृत्य आदि के स्थानों पर यह अपने प्रेमियों के समूहों से अनुगत होती है।" ॥ १२ ॥

वसन्तसेने! देखो! देखो!

"पर्वत—शिखरों पर लटकती हुई आकृति वाले तथा विरहिणी वनिताओं के हृदयों का अनुकरण करने वाले मेघ गरज रहे हैं। जिन के शब्द से एकदम,

येषां रवेण सहसोत्पतितैर्मयूरैः,
खं वीज्यते मणिमयैरिव तालवृन्तैः ॥१३॥

अपि च,—

पङ्कक्लिन्नमुखाः पिबन्ति सलिलं धाराहता दर्दुराः,
कण्ठं मुञ्चति बर्हिणः समदनो, नीपः प्रदीपायते ।
संन्यासः कुलदूषणैरिव जनैर्मेघैर्वृतश्चन्द्रमा,

तथैव मेघा अपि गर्जन्तीति भावः । येषां मेघानां रवेण=ध्वनिना सहसा समुत्पतितैर्मयूरैः । मणिजटितैस्तालवृन्तैः=व्यजनैरिव खम्=आकाशं वीज्यते इव । मेघानां गर्जन-ध्वनिं निशम्य मयूरा आकाशे उत्पतन्ति, तस्मिन् समये आकाशं मणिमयैर्व्यजनैर्वीजितमिवाभातीति भावः । योऽयं मेघोदयो मयूराणामपि कामवर्धकः स मानवानां कृते कथं न स्यादिति तवाप्ययमेवोत्तमोऽभिसारस्य समयः, इति सावधानया भवत्या भवितव्यमिति तत्त्वम् ।

अत्रोत्प्रेक्षाऽलङ्कारः । वसन्ततिलका च्छन्दः ॥१३॥

पुनरपि विटो मेघारम्भकालिकीं दशां वर्णयितुमुपक्रमते—पङ्कक्लिन्नेति । पङ्के पतिताः क्लिन्नाननाश्च दर्दुराः=मण्डूकाः धाराभिः=मेघोन्मुक्ताभिर्जलधाराभिः आहताः=सन्ताडिताः सन्तः, सलिलं पिबन्ति, बर्हिणः=मयूरः ( मयूरो बर्हिणो बर्ही, इति कोषः ) समदनः सन्=कामपरवशः सन् कण्ठं मुञ्चति=मुक्तकण्ठः सन् तीव्रस्वरेण शब्दं करोतीत्यर्थः । तथा नीपः=कदम्बवृक्षः विकासं भजमानः प्रदीपायते=प्रदीपतुल्यः प्रतिभाति । कुलदूषणैः=कुलकलङ्कैर्जनैः संन्यास इव मेघै·

उड़ने वाले मयूरों के मणिमय पङ्खों से आकाश झला जा रहा है । ( जिस मेघ गर्जन को सुन कर मयूर भी कामार्त हो जाते हैं उसे सुनकर मनुष्य क्यों न स्मरार्त हो जायँगे ? )" ॥ १३ ॥

और भी—

"कीचड़ से सने हुए मुख वाले मेंढक जलधारा से ताड़ित होकर जल पी रहे हैं, मयूर कामार्त होकर विमुक्तकण्ठ होकर बोल रहे हैं, कदम्ब ( विकसित

विद्युन्नीचकुलोद्गतेव युवतिर्नैकत्र संतिष्ठते ॥१४॥

वसन्तसेनाः—भाव ! सुट्ठु दे भणिदं । [ भाव ! सुष्ठु ते भणितम् । ] एषा हि

मूढे ! निरन्तरपयोधरया मयैव,
कान्तः सहाभिरमते यदि किं तवात्र ? ।

---

श्चन्द्रः समावृतः । निन्दिता जनाः यथा संन्यासाश्रमे समागताः सन्तस्तमपि, निन्दितं कुर्वन्ति, तथैव मेघैश्चन्द्रमा अपि सर्वतः समाक्रान्तः । नीचवंशोत्पन्ना युवतिर्यथा एकत्र न तिष्ठति, एकं मानवं परित्यज्यापरं स्वीकरोति, तथैव विद्युदपि एकस्मिन् स्थाने न तिष्ठति, क्षणे क्षणे चापल्यं धारयति, अत एव सा चपलेति जाता ।

अत्रोपमाऽलङ्कारः । शार्दूलविक्रीडितं च्छन्दः ॥१४॥

विटस्य कथनमुचितमिति मत्वा वसन्तसेना निशाया अनाचारं प्रदर्शयन्ती वदति—मूढे !—इति । अत्र "एषा हि" इति गद्योक्तं समन्वेति । एषा निशा सपत्नीव मां गर्जनैः सन्तर्जयन्ती सती कथयतीव, किमित्याह—"मूढे !=अनभिज्ञे, वसन्तसेने ! निरन्तरः पयोधरो=मेघो यस्यां तया तादृश्या मया=निशाया सह अथ च—निरन्तरौ=निबिडौ पयोधरौ=कुचौ यस्या एवंभूतया मया सह यदि मम प्रियः=चन्द्रः, निशानायकः, रमते=रमणं करोति, तर्हि, अत्र विषये तव किम् ? तव का हानिः ?" इति मेघानां गर्जनेन स्वगर्जितेनेव मां तर्जयन्तीयं निशा,

---

हो जाने के कारण ) दीपकों-सा हो रहा है, जिस प्रकार कुल-कलङ्क मनुष्य सन्यास को ( घेर कर उसे निन्दित करते हैं ) उसी प्रकार मेघों ने चन्द्रमा को घेर लिया है और नीच कुल में उत्पन्न हुई युवती की भाँति 'चपला' एक स्थान पर स्थिर नहीं रहती ( चञ्चल होकर इस क्षण यहाँ और उस क्षण वहाँ इस प्रकार व्यभिचारिणी तरुणी की भाँति एक स्थान पर नहीं ठहर पाती । )" ॥१४॥

वसन्तसेना—भाव ! तुमने ठीक कहा है । यह—

"निशा सपत्नी ( सौत ) के समान—"ऐ अनभिज्ञे वसन्तसेने ! यदि पयोधर वाली ( मेघ तथा निबिड़ कुचवाली ) मुझसे मेरा प्रिय ( चन्द्रमा ) रमण करता है तो

मां गर्जितैरपि मुहुर्विनिवारयन्ती,
मार्गं रुणद्धि कुपितेव निशासपत्नी ॥१५॥

विटः—भवतु एवं तावत्; उपालभ्यतां तावदियम्।

---

सपत्नीव मम मार्गं कुपिता सती रुणद्धि = निषेधति, इवाभाति।

अत्रेदं तत्त्वम्—अहं (वसन्तसेना) पयोधरभारयुता स्वप्रियेण (चारुदत्तेन) सहाभिरमितुं प्रवृत्ता, किन्तु सपत्नीतुल्या रात्रिः दूरादेव गर्जनं विधाय मम पन्थानमवरुणद्धि। एषा च कथयतीव—यदिदानीं ममावसरोऽभिरमणस्य, न तवावसरः। अनवसरे कुत्र चलितासि? किमु त्वं निरन्तरपयोधरेति कृत्वा स्वकान्तसमागमाभिलाषिणी गच्छसि चेत्, अहमपि तथाविधास्मीति त्वया निभृतया स्थेयम्। स्त्रीणां कृते निरन्तरपयोधरत्वमेव रमणावर्जकं भवतीत्यनेन विशेषणेनोभयोर्निशावसन्तसेनयोः साम्यमपि सूचितं कविना।

पद्यमिदं मनोहरं सूक्तिरत्नं दुर्बोधभावञ्चेति सावधानतयाऽध्येतव्यमिति।

अत्र "पयोधर"—पदे श्लेषालङ्कारः। उपमा, प्रतीयमानोत्प्रेक्षा च। वसन्ततिलका छन्दः॥१५॥

निशाया दुराचारं स्वार्थपरताञ्चाकर्ण्य विटो वसन्तसेनां प्रति कथयति—भवतु—इति। अयमत्राशयः—यदीयं निशा तव मार्गावरोधनाय गर्जनं करोति, तर्हि त्वयापीयमुपालभ्यताम् = किमित्येवं करोषि मम हृदयं न जानासि, इति सम्यगुपा-

---

तेरी क्या हानि है?" इस प्रकार मेघों के गर्जन से मानों मुझ को बार—बार रोकती हुई—सी कुपित होकर मेरा मार्ग रोक रही है। (अर्थात्—"वसन्तसेना" कहती है कि—"मैं अपने प्रिय "चारुदत्त" से रमण करने जा रही हूँ; परन्तु 'रात्रि' सपत्नी की भाँति मुझे निषेध कर रही है। वह मानों कह रही है कि "अब मेरे अभिरमण का समय है तू मत जा। और यदि तुझे "निरन्तर पयोधरता" का गर्व तो यह व्यर्थ है क्योंकि मैं भी "पयोधरवती" हूँ। अतः तू रमणार्थ मत जा"।)" ॥ १५ ॥

विट—यदि ऐसा है तो इस को उपालम्भ दो।

वसन्तसेना—भाव ! किमनया स्त्रीस्वभावदुर्विदग्धयोपालब्धया ? ।
पश्यतु भावः—

**मेघा वर्षन्तु गर्जन्तु मुञ्चन्त्वशनिमेव वा ।**
**गणयन्ति न शीतोष्णं रमणाभिमुखाः स्त्रियः ॥१६॥**

---

लभ्यताम् = अधिक्षिप्यतामिति यावत् ।

उक्तप्रकारेण विटस्योपालम्भप्रेरणामनुचितां मन्वाना वसन्तसेना प्राह—भाव ! इति । भाव ! समादरणीय ! स्त्री-स्वभाव-दुर्विदग्धया अनया उपालब्धया सत्यापि किं फलम् ? स्त्रीणां स्वभाव एवेदृशो भवति । स्त्रियो हि सर्वथा स्वार्थसाधिका एव भवन्ति, अपरेषां दुःखं, विशेषतः सपत्नीनां, नैव परिचिन्वन्त्येताः, इति उपालम्भेनापि किमपि विशिष्टं फलं नोपलप्स्यते, इति भावः ।

स्वाभिलषितं प्रदर्शयन्ती वदति वसन्तसेना—मेघाः–इति । इयं निशा यथेच्छं करोतु तर्जनादिकम् । परन्तु—भवता सुनिश्चितं मम मतं निशम्यताम्—मेघाः कामं वर्षन्तु, गर्जनां कुर्वन्तु, अशनिम् = वज्रम् वा पातयन्तु, इदं सर्वमपि मेघानां कृत्यं व्यर्थम् । यतो रमणाभिमुखाः = रमणं प्रति चलिताः स्त्रियः शीतोष्णं = शैत्यम्-उष्णताम् ( उपलक्षणमिदं, सर्वेषामुचितानुचितानां सुखदुःखादीनाम् ) नैव गणयन्ति = नैव परिचिन्तयन्ति । ततश्च मयेदानीं स्वप्रियस्य सविधे निश्चितं गन्तव्यमेवेति भावः ।

अत्र पूर्वार्धे दीपकालङ्कारः । उत्तरार्धे चाप्रस्तुतप्रशंसेत्यनयोः संसृष्टिः । अनुष्टुप् छन्दः ॥१६॥

---

वसन्तसेना—भाव ! स्त्री-स्वभाव के कारण मूर्खा इस को उपालम्भ देने से भी क्या लाभ है ? ( सपत्नी होने से ईर्ष्या से भरे हुए इस के हृदय में उपालंम्भ भी कोई प्रभाव न कर सकेगा । ) आप देखें—

"चाहे मेघ बरसें-गरजें और चाहे वज्र ही क्यों न गिरा दें ? परन्तु रमणाभिमुख रमणियाँ इन सर्दी–गर्मियों को कुछ नहीं समझती । ( अतः मैं अवश्य ही 'रमण' ( प्रिय ) के साथ रमण करने जाऊँगी । )" ॥ १६ ॥

विटः—वसन्तसेने पश्य पश्य, अयमपरः—

पवनचपलवेगः स्थूलधाराशरौघः,
स्तनितपटहनादः स्पष्टविद्युत्पताकः ।
हरति करसमूहं खे शशाङ्कस्य मेघो,
नृप इव पुरमध्ये मन्दवीर्यस्य शत्रोः ॥१७॥

वसन्तसेना—एव्वं ण्णेदं । ता कधं एसो अवरो ? । [ एवं न्विदम् । तत्कथमेषोऽपरः ? ]

एतैरेव यदा गजेन्द्रमलिनैराध्मातलम्बोदरै-

---

स्वप्रतिभानुरूपं विटो वदति—पवनेति । वसन्तसेने ! पश्य, अयमपरो मेघः शशाङ्कस्य = चन्द्रस्य करसमूहं = किरणजालं, हरति = आवृणोति । यथा मन्दबलवीर्यस्य शत्रोर्नगरे प्रविश्य प्रबलेन वेगेन शरवर्षणं विधाय वाद्यं वादयित्वा समुन्नतपताकः कश्चिच्छत्रुः करस्य = राजदेयस्य धनस्याहरणं करोति, तथैवायमपि पवनेन कृत्वा चपलवेगयुक्तः, स्थूलधारा-रूपान् शरान् प्रक्षिपन्, गर्जनं कुर्वन्, विद्युद्रूपां पताकामुन्नमय्य, आकाशे चन्द्रस्य किरणजालमाच्छादयतीत्यर्थः ।

अत्रोपमा-रूपकयोः अङ्गाङ्गिभावतया संकरालङ्कारः । मालिनी च्छन्दः । तल्लक्षणञ्च यथा—"ननमयययुतेयं मालिनी भोगिलोकैः" इति ॥१७॥

विटोक्तिं समर्थयमाना वसन्तसेना ब्रूते—एतैरेवेति । भाव ! यद्वदति भवान्

---

विट—वसन्तसेने ! देखो ! देखो ! यह दूसरा—

"जैसे किसी दुर्बल राजा के नगर में कोई शत्रु बड़े वेग से शरवर्षा, भेरीनाद, तथा ऊँची पताका करके 'कर' ( टैक्स ) का अपहरण कर लेता है वैसे ही यह दूसरा मेघ—पवन से तीव्र गति होकर मोटी-मोटी धारा-रूपी बाण बरसाता तथा गर्जन करता हुआ चमकती हुई बिजली की पताका ऊँची कर दुर्बल शत्रु के सदृश चन्द्रमा के किरण-जाल को ढक रहा है ।" ॥१७॥

वसन्तसेना—ऐसा ही है । तो क्यों यह दूसरा ?—

"जब हाथी के समान काले काले लटकते तथा गरजते हुए, बिजली वाले

गर्जद्भिः सतडिद्बलाकशबलैर्मेघैः सशल्यं मनः ।
तत्किं प्रोषितभर्तृवध्यपटहो हा हा हताशो बकः,
प्रावृट् प्रावृडिति ब्रवीति शठधीः क्षारं क्षते प्रक्षिपन् ॥१८॥

तत्तु सत्यमेव, परमयमपरो बकः किमिति मुधैव "प्रावृट्-प्रावृट्" इति शब्दं कृत्वा वियुक्ताः कामिनीः पीडयति ? अत्र कारणं चिन्तनीयम् । यतः कामिनीमनसस्तापाय तु वक्ष्यमाणा एते पर्याप्ताः । अस्यावश्यकतैव नास्तीत्यर्थः । स्पष्टरूपेण कथयति— यदा गजेन्द्रवत् मलिनैः = श्यामवर्णैः ( जलसहितत्वात् ) आध्मातानि = वारि-पूर्णानि अत एवाधो लम्बमानान्युदराणि येषां तैः, गर्जनां कुर्वद्भिः तडिद्भिः सहिता बलाका = बकानां पङ्क्तिः, तया कृत्वा शबलैः = चित्राकारैः, एतैः = अमीभिः सम्मुखे वर्तमानैः, मेघैरेव वियोगिनीनाम् ( विशेषतश्चाधुना क्षणस्यापि वियोग-मसहमानाया मम ) मनः सशल्यं = शोक-शङ्कु-सहितं सम्पादितमेवास्ते, तत् = ततः प्रोषिताः = परदेशं गताः भर्तारो यासां तासां ( कृते ) वध्य-पटहः = वधयो-ग्यस्य मानवस्य प्राणदण्डसमये ताडनीयो यः पटहो = वाद्यविशेषः ( इवोपलक्षितः ) हताशः = हता विनष्टा आशा यस्य सः । मम तु स्वकान्तेन समागमोऽवश्यंभावी, पुनर्ममावरोधस्तु न सम्भाव्यते, अतो हताशत्वं युक्तमेवास्येति भावः । शठधीः बकः क्षते = साघाते शरीरे क्षारं = लवणं क्षिपन्निव किमर्थं "प्रावृट् प्रावृट्" इति ब्रवीति ? मेघं दृष्ट्वैव विरहिणीनां सन्तापो भवति, एतस्यैवं कथनं तु वस्तुतोऽधिकं खेदावहमिति भावः ।

अत्र-उपमा, रूपकम्, तद्गुणः, निदर्शना चैतेऽलङ्काराः परस्परं संसृष्टाः ।
तद्गुणस्य लक्षणञ्च यथा—
तद्गुणः स्वगुणत्यागादत्युत्कृष्टगुणग्रहः" इति । निदर्शना लक्षणञ्च यथा—

एवं बकपंक्तियों से चित्रित सजल जलदों से ही वियोगियों के हृदय में पीड़ा होती है तब वियोगिनी स्त्रियों के लिए पटहस्वरूप यह हताश ( कम्बख्त ) 'बक' "प्रावृट् प्रावृट्" की पुकार मचाकर 'जले पर नमक' क्यों छिड़क रहा है ?" ( "मेघ दर्शन ही वियोगिनियों को 'स्मरार्दिता' बनाने के लिए पर्याप्त है फिर यह बक क्यों चिल्ला चिल्ला कर और भी अधिक पीड़ा दे रहा है ? )" ॥१८॥

विटः—वसन्तसेने ! एवमेतत् । इदमपरं पश्य—

बलाका पाण्डुरोष्णीषं विद्युदुत्क्षिप्तचामरम् ।
मत्तवारणसारूप्यं कर्तुकाममिवाम्बरम् ॥१९॥

वसन्तसेना—भाव ! पेक्ख पेक्ख । [ भाव ! पश्य पश्य । ]

एतैरार्द्रतमालपत्रमलिनैरापीतसूर्यं नभो,

---

"सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् ।
यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शना ॥" इति ।

शार्दूलविक्रीडितं च्छन्दः ॥१८॥

विटः प्रकारान्तरेण मेघं वर्णयति—बलाकेति । इदमपरमपि दृश्यं पश्य, वसन्तसेने ! इदमम्बरं बलाका = बकपङ्क्तिरेवोष्णीषः = शिरोवेष्टनम् किरीटश्च, ( "उष्णीषः शिरोवेष्ट किरीटयोः" इत्यमरः ) यस्य तत् , विद्युदेवोत्क्षिप्तः = उपरि धृतश्चामरो येन तत् , मत्तस्य वारणस्य = गजेन्द्रस्य सारूप्यं = समानरूपतां कर्तुकाममिव विद्यते । यथा गजस्य शिरसि उष्णीषः सन्निबध्यते, तथैवात्र बलाका वर्तते, विद्युच्च चामरस्थानीया, एवञ्च प्रतीयते—आकाशमिदं मत्तगजस्य समानतां कर्तुमिच्छति ।

अत्र रूपकोत्प्रेक्षे । अनुष्टुप् च्छन्दः ॥१९॥

पुनः स्वप्रतिभानुसारं वसन्तसेना मेघप्रभावं प्रदर्शयति—एतैरिति । एतैः= एभिः, आर्द्रतमालपत्रवन्मलिनैः मेघैः आसमन्तात् पीतः = समाच्छन्नः सूर्यो यस्मा-देवंविधं नभो = गगनम् सम्पादितमिति शेषः । अत्र सायंकाले सूर्यस्याभावादेवं

---

विट—वसन्तसेने ! ठीक है । यह दूसरा ( दृश्य ) देखो !—

"यह आकाश बक पंक्ति रूपी पगड़ी तथा विद्युत्-रूपी चँवर से मद मस्त गजेन्द्र की समानता-सी कर रहा है ।" ॥१९॥

वसन्तसेना—भाव ! देखो ! देखो !

"भीगे तमाल के पत्तों के समान मलिन इन बादलों ने सूर्य को ढक कर आकाश को ( मेघाच्छन्न ) बना दिया, बाणों से मारे गये हाथियों की भाँति

वल्मीकाः शरताडिता इव गजाः सीदन्ति धाराहताः।
विद्युत्काञ्चनदीपिकेव रचिता प्रासादसंचारिणी,
ज्योत्स्ना दुर्बलभर्तृकेव बनिता प्रोत्सार्य मेघैर्हृता ॥२०॥

---

कथनेन साधारणतया सार्वदिकी परिस्थितिः सूचिता। अथवा—दिने एवाकस्मान्मेघानामुदयात् निशा-समयं (प्रदोषारम्भं) मत्त्वा वसन्तसेनाया औत्कण्ठ्यातिशयादभिसारवाञ्छाया उदयान्न कोऽपि शङ्काकलङ्कः। अथवा—"सूर्य"—शब्दस्य लक्षणया सायन्तनः प्रभा-सम्भारो गृह्यते। मेघैश्च साम्प्रतं सूर्यस्य प्रभापि समाच्छादिता। एतेन मेघानामाधिक्यं वस्तु व्यज्यते। किञ्च—मेघोत्सृष्टाभिर्जलधाराभिः समाहता वल्मीकाः = वामलूराख्याः कीटसम्पादिता मृत्तिकासमुदायाः, शरैस्ताडिता गजा इव सीदन्ति = दुखिताः सन्तोऽभितो द्रवन्ति। मेघ-मुक्तेन जलेन मृत्तिकासमूहा नष्टो भवति, यथा बाणानामाघातेन गजा विद्रुता भवन्तीत्यर्थः। अपि च—प्रासादेषु = राजभवनेषु सञ्चरण-शीला काञ्चनमयी दीपिकेवयं विद्युद् विरचितास्ति। किञ्च—अमीभिर्मेघैः दुर्बलो भर्ता यस्याः एवंविधा वनितेव ज्योत्स्ना = चन्द्रिका प्रोत्सार्य = बलादपहृत्य दूरं नीता। यथा—यस्याः वनितायाः पतिर्दुर्बलो वीर्यपराक्रमरहितो भवति बलादन्यैर्दूरं नीयते। वीरभोग्याः स्त्रियः श्रियश्चेति सिद्धान्तादिति भावः। एतेन मेघेषु बलात्कारिजन तुल्यप्रभावो द्योतितः। तेऽपि अन्येषां गृहेषु समाक्रमणं कुर्वन्ति, बाणप्रहारादिना लोकान् ताडयन्ति, प्रज्वलन्तीं दीपिकामादाय भवनेषु स्थितान् पदार्थान् गवेषयन्ति, स्त्रीश्चापहरन्तीति भावः।

---

बमियाँ जलधारा गिरने से नष्ट हो रही हैं, विद्युत् प्रासादों पर भ्रमण करने वाली स्वर्णमयी दीपिका ( लालटेन ) बना ली गई है और ज्योत्स्ना ( कौमुदी ) का दुर्बल पति की पत्नी की भाँति मेघों ने बलपूर्वक अपहरण कर लिया है। ( ये मेघ बलात्कारी हैं। वे भी दूसरों के घर पर आक्रमण करते हैं, लोगों को मारते हैं, लालटेन लेकर घरों में रखे हुए पदार्थ ढूँढते हैं और स्त्रियों को भी चुरा लेते हैं।)" ॥ २० ॥

विटः—वसन्तसेने ! पश्य पश्य

**एते हि विद्युद्गुणबद्धकक्षा गजा इवान्योन्यमभिद्रवन्तः ।**
**शक्राज्ञया वारिधराः सधारा गां रूप्यरज्ज्वेव समुद्धरन्ति ॥२१॥**

अपि च, पश्य—

**महावाताध्मातैर्महिषकुलनीलैर्जलधरै-**

---

अत्रोपमाऽलङ्कारः । समासोक्तिश्च व्यज्यते । शार्दूल-विक्रीडितं छन्दः ॥२०॥

विटोऽतिमनोहरामुक्तिमुपस्थापयति—एते हि—इति । अस्यायं सारः—यथा किञ्चित् भाराधिक्य युक्तं वस्तु समद्धर्तुं रज्ज्वादिना आबध्यैव लोकैरुपरितने स्थाने, समुपविश्य समाकृष्यते, तथैव—एते वारिधराः = मेघाः सधाराः = जलधारभिः सहिताः, रूप्यस्य = रजतस्य रज्ज्वा सन्निबध्य विद्युद्गुणैः बद्धा कक्षा = कक्षभागो येषां तादृशाः अन्योऽन्यमभिद्रवन्तः = युद्धमिव कुर्वन्तः, गजा इव, शक्रस्य = इन्द्रस्याज्ञया गां = पृथिवीं समुद्धरन्तीव = उत्कर्षन्तीवेति भावः ।

अत्र रूपकम्, उत्प्रेक्षा चालङ्कारौ । उपजातिर्वृत्तम् ॥२१॥

पुनरपि विटः प्रकारान्तरेण मेघानां वर्णनं करोति—महावातेति । अन्तरिक्षे प्रचलन्तः समुद्धा इवैते मेघामन्ये मणिमयानां बाणानां प्रहारेण भगवतीं धरणीं

---

विट—वसन्तसेने ! देखो ! देखो !

"ये मेघ जलधारा रूपी चाँदी की रस्सियों से बाँधकर, बिजली रूपी डोर को अपने में कसकर परस्पर युद्ध करते हुए हाथियों की भाँति इन्द्र की आज्ञा से पृथ्वी को मानों उठा रहे हैं । ( जैसे कोई भारी वस्तु रस्सियों से बाँधकर ऊपर उठाई जाती है वैसे ही ये मेघ अपनी जलधारा रूपी चाँदी की रस्सियों से जल में डूबी हुई पृथ्वी को उठा-सा रहे हैं । ) ॥२१॥

और भी देखो !—

"पवन से परिपूर्ण, भैंसों के समान नीले, और विद्युत्-रूपी पङ्खों से चञ्चल,

श्चलैर्विद्युत्पक्षैर्जलधिभिरिवान्तःप्रचलितैः ।
इयं गन्धोद्दामा नवहरितशष्पाङ्कुरवती,
धरा धारापातैर्मणिमयशरैर्भिद्यत इव ॥२२॥

वसन्तसेना—भाव ! एसो अवरो ! । [ भाव ! एषोऽपरः । ]

एह्येहीति शिखण्डिनां पटुतरं केकाभिराक्रन्दितः,
प्रोड्डीयेव बलाकया सरभसं सोत्कण्ठमालिङ्गितः ।

भिन्दन्तीवेत्याशयं विशदयति । तथाहि—महावातैः = पवनैः ( कृत्वा ) आध्मातैः = परिपूर्णैः महिषकुलवन्नीलैः जलधरैः = जलपूरितैर्मेघैः, विद्युदेव पक्षा येषां तैः अत एव चलैः जलधिरिव = समुद्रैरिव, तैरपि चान्तः = अन्तरीक्षाभ्यन्तरे प्रचलितैरिव, इयम् गन्धेन = नववर्षणोद्भूतगन्धेन, उद्दामा = उत्कृष्टप्रभावा, नवैः हरिद्वर्णैः शष्पाङ्कुरैश्च युक्ता धरा धाराणां = जलधाराणां सम्पातैर्मणिमयशरैरिव भिद्यते इव । नवहरिद्वर्णा अङ्कुराः शरा इव भूमौ संलग्नाः प्रतिभान्तीयपि केषाञ्चित् कल्पना ।

अत्रोपमा, रूपकम् , उत्प्रेक्षा चालङ्काराः । शिखरिणी च च्छन्दः ॥२२॥

वसन्तसेनापि नवीनयैव शैल्या पुनरपरस्य मेघस्योत्थानं वर्णयति—एह्येहीति । सा कथयति—भाव ! पश्य, अयमपरो मेघः समायाति । आगच्छन्तमेतं मेघमेते मयूरा अस्माकं सुहृदिति बुध्या "एहि–एहि" इति स्ववाग्भिः = केकाभिः पटुतरं यथा स्यात्तथा कुशलतया समाक्रन्दयन्ति । यथा समागतं मित्रं दृष्ट्वा मित्राणि

समुद्रों की भाँति अन्तरिक्ष में घूमते हुए इन मेघों के द्वारा—यह सौंधी सुगन्ध वाली तथा नये हरे–हरे अङ्कुरों वाली पृथ्वी धराओं–रूपी मणिमय शरों से मानो बींधी जा रही है । ( "नये–नये अङ्कुर बाणों के समान भूमि में लग रहे हैं" यह अर्थ भी सुन्दर है । )" ॥२२॥

वसन्तसेना—भाव ! यह दूसरा—

"मोरों के द्वारा "आओ ! आओ !" कहकर बुलाया गया, बक–पंक्तियों से बड़ी उत्कण्ठापूर्वक आलिङ्गित, और हंसों के द्वारा कमल छोड़कर खेदपूर्वक देखा

हंसैर्लब्ज्झितपङ्कजैरतितरां सोद्वेगमुद्वीक्षितः,
कुर्वन्नञ्जनमेचका इव दिशो मेघः समुत्तिष्ठति ॥२३॥

विटः—एवमेतत् ; तथा हि पश्य—

निष्पन्दीकृतपद्मषण्डनयनं नष्टक्षपावासरं,

---

दूरादेव "आगच्छ–आगच्छ–" इति कोलाहलपूर्वकं स्वागमयन्ति, तथैवैते मयूरा अपि मेघस्य स्वागतं सम्पादयन्तीत्याशयः । बलाकया = बकानां पङ्क्त्या न प्रकर्षेण समुत्सुत्यैव महत्योत्कण्ठया सरभसं = सवेगमालिङ्गितः । मेघानां समागमे मयूराणां हर्षातिरेकः, बलाकानाञ्च गर्भधारणा जायते । इति सरभसमालिङ्गन-मुचितमेवेति भावः । अपि चायं ससारो द्वन्द्वमयः—एकः पदार्थः कस्यचित्कृते यदि सुखप्रदः, तर्हि स एवापरस्य कृते दुःखप्रदोऽप्यस्ति, इति दृष्टान्तधिया पङ्कजेषु सुखं विहरतां हंसानां समूहैरयमस्माकं खेदावह इति बुध्या सोद्वेगं यथा स्यात्तथा समुद्वीक्षितः, पङ्कजानि विहाय तैरपि मानसगमनार्थमधुना बद्धपरिकरैर्भवितव्य-मिति समुचित एवोद्वेगः, इति भावः । किञ्चायं मेघः सर्वा अपि दिशः अञ्जनवन्मे-चकाः = कृष्णवर्णाः सम्पादयन्नुत्थितः ।

अत्र मेघोदयेन कविना व्यङ्ग्यरूपेण संसारस्य सुख–दुःखात्मकता सूचिता ।

अत्रोत्प्रेक्षोपमा चालङ्कारौ । प्रसादो गुणः । शार्दूलविक्रीडितं छन्दः ॥२३॥

विटोऽपि प्रकारान्तरेण मेघ–समयं वर्णयति—निष्पन्दीकृतेति । अत्रायं सारः–इदं सर्वमपि जगत् चक्षुषी निमील्य पयसो धारा–रूपे गृहे स्वपिति, उपरि भागे चास्य जगतो मेघाश्छत्ररूपेणाच्छादकाः सन्ति । एतदेव व्याख्यायते–इदं जगत् निष्पन्दीकृतानि = निश्चेष्टानि यानि पद्मानां = कमलानां षण्डानि = समूहाः ( "अब्जादिकदम्बे षण्डमस्त्रियाम्" इत्यमरः । ) तान्येव नयने यस्य तादृशमिति

---

गया यह मेघ दिशाओं को अञ्जन के समान काला बनाता हुआ उमड़ रहा है ।" ॥२३॥

विट—ऐसा ही है । देखो—

"यह जगत् कमल-समूहरूपी आँखों को बन्दकर ( सो रहा है । सूर्य के न-

विद्युद्भिः क्षणनष्टदृष्टतिमिरं प्रच्छादिताशामुखम् ।
निश्चेष्टं स्वपितीव संप्रति पयोधारागृहान्तर्गतं,
स्फीताम्भोधरधामनैकजलदच्छत्रापिधानं जगत् ॥२४॥

वसन्तसेना—भाव एव्वं ण्णेदं । ता पेक्ख पेक्ख । [भाव ! एवं न्विदम्; तत्पश्य पश्य । ]

---

जगतो विशेषणम्, इदानीं सूर्याभावात् कमलान्येव लोकस्य नयनस्थानानि तानि च मुद्रितानि जातानि । शयानस्यापि लोकस्य लोचने मुद्रिते भवतः । एष स्वभावः नष्टौ = अदर्शनं गतौ ( अविज्ञेयौ ) क्षपा-वासरौ क्षपा = रात्रिः, वासरः = दिवसस्तौ रात्रि-दिवसौ यत्र तत् मेघैरावृतत्त्वात् दिनस्य रात्र्याश्च परिज्ञानमेव न भवति । शयानोऽपि जनो गाढनिद्रायां तथा रात्रि-दिवसयोः परिज्ञानं कर्तुमसमर्थ एव भवति । विद्युद्भिः क्षणमात्रेण नष्टम्, क्षणाच्च पुनर्दृष्टं तिमिरम् = अन्धकारो यत्र तत् : विद्युत्प्रकाशेन तिमिरस्य क्षणं विनाशो भवति, अनन्तरञ्च पुनः पूर्ववत् भवत्यन्धकारसमुदायः । प्रच्छादितानि = समाच्छन्नानि आशानां = दिशां मुखानि यत्र तत्, मेघाच्छन्नत्त्वात् दिशां मुखानां परिज्ञानमपि सम्यङ् न जायते, इति भावः । अतो निश्चेष्टं जगत् पयोधारारूपे गृहे वर्तमानं सत् स्फीतानाम् = बहूनाम्, अम्भसां = जलानां धराः = धारकाः ये धामानि आधारभूताः, नैके जलदाः = मेघाः ते एव छत्राणि—अपिधानानि समाच्छादकानि यस्य तथाविधं जगत्

---

निकलने से संसार के नेत्रभूत कमल बन्द हो गये हैं ।) ( मेघों के कारण ) रात-दिन का पता नहीं लग रहा है । ( सोते हुए मनुष्य को भी निद्रा में रात-दिन का पता नहीं चलता ), विद्युत् से क्षणभर के लिए अन्धकार नष्ट होता है और क्षणानन्तर पुनः व्याप्त हो जाता है, मेघों से दिशाएँ भी ढक रही हैं । इस प्रकार—बहुत से जल को धारण करने वाले जलधर ( मेघ ) जिसके आच्छादक हैं ऐसा यह संसार इस समय "जलधारा-रूपी" घर के अन्दर निश्चेष्ट होकर सो रहा है ।" ॥२४॥

वसन्तसेना—भाव ! ऐसा ही है । देखो ! देखो !

गता नाशं तारा उपकृतमसाधाविव जने,
विमुक्ताः कान्तेन स्त्रिय इव न राजन्ति ककुभः ।
प्रकामान्तस्तप्तं त्रिदशपतिशस्त्रस्य शिखिना,
द्रवीभूतं मन्ये पतति जलरूपेण गगनम् ॥२५॥

स्वपिति—इव = शयनं करोतीव । सर्वत्र जगति मेघानां समावरणं, सततवृष्टिश्च वर्तते । सूर्याभावाच्च कमलानामपि विकासो नास्ति । अन्धकारः सर्वत्र विस्तृतिं लभते । अतश्चेष्टाशून्यं विश्वमिदं शयनमिव विधत्ते, इति विशदीकरणम् ।

अत्र रूपकम्, उत्प्रेक्षा चालङ्कारौ । शार्दूलविक्रीडितं च्छन्दः ॥२४॥

वसन्तसेना तदुक्तिं समर्थयमाना स्वयमपि पुनर्वर्णयति—गता नाशमिति । भाव ! पश्य, इदानीम् असाधुपुरुषे कृतमुपकृतमिव तारा नाशं गताः । असज्जनः कस्याप्युपकारभारं नैव मन्यते, तथैव मेघानामावरणात् ताराः अपि अदर्शनं गताः । अत्रोपमायां "ताराः" इत्यत्र स्त्रीत्वम्, "उपकृतम्" इत्यत्र च क्लीबत्वम्, इति कवेरलङ्कारशैथिल्यं व्यनक्ति । कान्तेन वियुक्ताः वनिता इव ककुभः = दिशाः न राजन्ति । ककुभां कान्तश्च भगवान् भास्कर एव, स चाधुना विदेशं गतः, इति हेतोस्ता अपि शोभारहिता इव सञ्जाताः, इति भावः । तिस्रो दशाः = बाल्य यौवन-वार्धक्यरूपा येषां ते त्रिदशाः । देवाः सर्वदा एकरूपा एव भवन्ति । अथवा—काम-( यथेच्छ )-रूपत्वाद्देवा यदा यादृशीमवस्थां वाञ्छन्ति, तदैव तेषां तादृशी अवस्था सम्पद्यते, अत एव ते त्रिदशा इत्युच्यन्ते । तेषामधिपतिः = इन्द्रः, तस्य शस्त्रस्य = वज्रस्य, शिखिना = वह्निना, द्रवीभूतम् = द्रवतां नीतम्, गगनमेवेदं जलरूपेण पतति । इत्यहं मन्ये = उत्प्रेक्षे ।

"ताराएँ, दुर्जन के साथ किए गये उपकार के समान नष्ट हो गई हैं, दिशाएँ प्रियतम से वियुक्त स्त्रियों की भाँति सुशोभित नहीं हो रही हैं, इन्द्र के वज्र की अग्नि से अन्दर ही अन्दर तपाया गया यह आकाश, प्रतीत होता है कि, पिघल—पिघल कर जल-रूप में गिर रहा है । ( यह जल नहीं प्रत्युत आकाश ही गल-गल कर गिर रहा है । क्या ही सुन्दर विचार है ! )" ॥२५॥

अपि च, पश्य

उन्नमति नमति वर्षति, गर्जति मेघः करोति तिमिरौघम् ।
प्रथमश्रीरिव पुरुषः, करोति रूपाण्यनेकानि ॥२६॥

विटः—एवमेतत्—

विद्युद्भिर्ज्वलतीव संविहसतीवोच्चैर्बलाकाशतै-

---

अत्रोपमोत्प्रेक्षा चालङ्कारौ । शार्दूलविक्रीडितं च छन्दः ॥ २५ ॥

पुनरपि वर्णयति—उन्नमति-इति । अयं मेघः प्रथमा श्रीर्यस्य सः, येन पुरुषेणादावेव लक्ष्मीः प्राप्ता, स इव, अनेकानि रूपाणि करोति, तथाहि—कदाचिदुन्नमति = उन्नतो भूत्वा वर्षति, कदाचिच्च नमति = नम्रो भवति, कदाचिद् वर्षति, जातुचिच्च गर्जति = गर्जनां करोति । कदाचित् तिमिरस्य = अन्धकारस्य ओघम् = आधिक्यं विधत्ते । एवमेव प्रथमेव प्राप्तधनो जनोऽप्यनेकानि कार्याणि कुरुते ।

अत्रैकस्मिन् मेघेऽनेकक्रियाणां सम्बन्धात् क्रियादीपकम्, उपमा चालङ्कारौ । आर्या च्छन्दः ॥ २६ ॥

विटोऽन्यथैव मेघाऽडम्बरं कथयति—विद्युद्भिरिति । वसन्तसेने ! पश्येदमम्बरम्—विद्युद्भिः कृत्वा ज्वलतीव—आकाशे विद्युतो न प्रकाशन्ते, अपि त्वम्बरं प्रज्वलतीवेत्यर्थः । शतशो बलाकाभिर्हास्यमिव करोति, धारा-रूप-बाणवर्षिणा महेन्द्रसम्बन्धिना धनुषा विशेषतया वल्गतीव = पादपरिवर्तनं करोतीव । युद्धार्थं

---

और भी देखो—

"यह मेघ—पहिले ही पहिले धन प्राप्त करने वाले मनुष्य की भाँति—कभी उमड़ता है, कभी नीचा होता है, कभी बरसता और गरजता है और कभी घना अन्धकार फैला कर अनेक रूप धारण कर रहा है । ( पहिले-पहिले धन पाने वाला मनुष्य भी अनेक कौतुक करता है । )" ॥२६॥

विट—ऐसा ही है—

"यह विद्युत् से प्रज्वलित-सा हो रहा है, सैकड़ों बक-पङ्क्तियों से हँस-सा

माहेन्द्रेण विवल्गतीव धनुषा धाराशरोद्गारिणा ।
विस्पष्टाशनिनिस्वनेन रसतीवाघूर्णतीवानिलै-
नीलैः सान्द्रमिवाहिभिर्जलधरैर्धूपायतीवाम्बरम् ॥२७॥

वसन्तसेना—

जलधर ! निर्लज्जस्त्वं यन्मां दयितस्य वेश्म गच्छन्तीम् ।
स्तनितेन भीषयित्वा धाराहस्तैः परामृशसि ॥२८॥

---

कमपि शत्रुभूतमाह्वयतीवेति भावः । विस्पष्टं यथा स्यात्तथा अशनेः = वज्रस्य निस्वनेन = ध्वनिना रसतीव = शब्दं करोतीव । अनिलैः = पवनैः आघूर्णतीव इतस्ततः प्रचलतीव, किञ्च—सान्द्रमिदं नभोमण्डलम् अहिभिः = सर्पैरिव नीलैः मेघैः धूपायतीव = अङ्गानि धूपयुक्तानीव करोतीत्यर्थः । आकाशे वर्तमाना विद्युदादयः पदार्थाः कविनाऽत्राकाशलीलाकरा इवाभिमताः ।

अत्रोत्प्रेक्षालङ्कारः । शार्दूलविक्रीडितं छन्दः ॥ २७ ॥

वसन्तसेना साधिक्षेपं मेघमुद्दिश्य कथयति—जलधरेति । भो मेघ ! वस्तुतस्त्वमतीव निर्लज्जोऽसि, यतो मामिदानीं स्वकान्तस्य गृहं गच्छन्तीं स्तनितेन = गर्जितेन भीषयित्वा स्वकीयैर्धारारूपिभिर्हस्तैर्मां स्पृशसि ! नहि समुन्नतानामिदमुचितं कर्म, अन्यस्य प्रेयसीमालोक्यापि महान्तो लज्जिता भवन्ति, त्वञ्च मां भीषयसि, स्पृशसि च, अतस्तव निर्लज्जत्वं शङ्काकरमेवेदमिति भावः ।

---

रहा है, धारा-रूपी बाण-वर्षा करनेवाले इन्द्र धनुष से पैंतरें-से बदल रहा है, अस्पष्ट वज्र की ध्वनि से गरज सा रहा है, वायु से इधर उधर घूम-सा रहा है इस प्रकार यह आकाश-मण्डल सर्पों के समान नीले नीले मेघों से ( अङ्गों को ) धूप-सी दे रहा है ।" ॥ २७ ॥

वसन्तसेना—"मेघ ! वास्तव में तू निर्लज्ज है जो कि प्रियतम के घर जाती हुई मुझको गर्जन से डराकर जलधारा रूपी हाथों से छू रहा है । ( सज्जन पुरुष कभी किसी की स्त्री को नहीं छूते, परन्तु तू तो मुझे डरा और छू रहा है अतः वास्तव में तू निर्लज्ज है । )" ॥ २८ ॥

भोः शक्र !

**किं ते ह्यहं पूर्वरतिप्रसक्ता यत्त्वं नदस्यम्बुद ! सिंहनादैः ।**
**न युक्तमेतत्प्रियकाङ्क्षिताया मार्गं निरोद्धुं मम वर्षपातैः ॥२९॥**

अपि च,—

**यद्वदहल्याहेतोर्मृषा वदसि शक्र ! गौतमोऽस्मीति ।**

---

अत्र मेघे कस्यचित् कामुकस्य व्यवहारारोपात् समासोक्तिरलङ्कारः । तल्लक्षणञ्च यथा—
"समासोक्तिः समैर्यत्र, कार्यलिङ्गविशेषणैः ।
व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः ॥' इति । आर्या च्छन्दः ॥ २८ ॥

पुनरप्यधिक्षिपति—किं ते—इति । भोः शक्र ! इति गद्यस्थपदमत्रान्वेति । भोः शक्र ! किमहं कदाचिदपि पूर्वं तव रतौ = प्रेमणि प्रसक्ता ? त्वया सह कदाचिदहं प्रीतिं कृतवती किमु ? यतस्त्वं मां पूर्वपरिचितामिव मत्वा सिंहनादैर्नदसि = गर्जसि ? अम्बुद ! तवेदं सर्वथाऽनुचितमिदम् । यदिदानीं प्रियेण चारुदत्तेनाकाङ्क्षिताया मम मार्गं वर्षाणां निपातैरवरुणत्सि ! अन्यकान्ताया मार्गेऽवरोधः, परिहासादिकञ्च भद्रजनोचितं कार्यं नास्ति, इति विरमाऽस्मात् कर्मण इति भावः ।

अत्र काव्यलिङ्गालङ्कारः । इन्द्रवज्रोपेन्द्रवज्रयोः सम्मेलनादुपजातिश्छन्दः ॥२९॥

पुनरिन्द्रं सम्बोध्य कथयति—यद्वदहल्येति । भो इन्द्र ! यथा त्वं कामपीडितः सन् अहल्यायाः कारणात् "अहं गौतमोऽस्मीति" कथितवानसि; तथैव ममापि

---

ऐ इन्द्र !

"क्या मैंने कभी तेरे साथ प्रेम किया है जिससे कि तू मुझे ( पूर्वपरिचिता समझकर ) सिंहनाद पूर्वक गरज रहा है ? मेघ ! प्रिय के द्वारा आकाङ्क्षित मेरा जल धाराएँ बरसाकर मार्गावरोध करना उचित नहीं । ( तू इस असत्कर्म से निवृत्त हो जा । )" ॥ २९ ॥

और भी—

"इन्द्र ! जिस प्रकार तू ने "अहिल्या" के लिए झूँठ ही "मैं 'गौतम' हूँ"

तद्वन्ममापि दुःखं निरपेक्ष ! निवार्यतां जलदः ॥३०॥

अपि च,—

गर्ज वा वर्ष वा शक्र ! मुञ्च वा शतशोऽशनिम् ।
न शक्या हि स्त्रियो रोद्धुं प्रस्थिता दयितं प्रति ॥३१॥

---

स्वप्रियतमसविधे रमणार्थं गच्छन्त्या मार्गावरोधकोऽयं मेघस्त्वया निवार्यताम् । भुक्तभोगोऽपि यद्यपरेषां दुःखं न प्रशमयसि, तदा तु चिन्तनीयोऽसि । अतो मम विघ्ननिवारणं कर्तव्यमिति भावः ।

पुरा शक्रः श्रीगौतमस्याश्रमे शिष्यरूपेण निवसन् कदाचित् प्रातरेव स्नानार्थं गते गौतमे कामपीडितोऽसौ शक्रः "अहं गौतमः" इत्युक्त्वा तामहल्यां दूषितवान् । सहस्रयोनिर्भवेति गौतमेनाभिशप्तः, त्वमपि पाषाणशिला भवेति चाहल्यापि शप्तेति पौराणिकी कथाऽत्रानुसन्धातव्या । आर्या च्छन्दः ॥३०॥

एतावतापि न ते शान्तिस्तदा मम सिद्धान्तः श्रूयताम्—गर्ज वेति । भो शक्र ! यथेच्छं गर्जनं कुरु, वर्षणं वा विधेहि, शतवारं मुञ्च वा वज्रम् । तदपि दयितं प्रति प्रस्थिताः स्त्रियस्त्वया निरोद्धुं न शक्यन्ते ! इति त्वया निश्चितं मन्तव्यम् । अतो ममावरोधस्तु त्वया कर्तुमेव न शक्यते, पुनर्गर्जनादिकं व्यर्थं किमिति करोषि ? अर्थान्तरन्यासो दीपकश्चात्रालङ्कारौ । अनुष्टुप् च्छन्दः ॥३१॥

---

ऐसा कह दिया था उसी प्रकार तू मेरे मार्गावरोधक इस मेघ को हटा ले । ( तू तो कामाग्नि का भुक्तभोगी है । अंतः मुझ पीडिता के तापशान्त्यर्थ इस मेघ को रोक ले । )" ॥ ३० ॥

और भी—

"हे इन्द्र ! चाहे तू गरज या बरस अथवा सैकड़ों वज्र छोड़ परन्तु रमणाभिमुखी स्त्रियाँ नहीं रोकी जा सकतीं । ( अतः मेरा अवरोध तुझसे सम्भव नहीं । तेरी यह सब गर्जना व्यर्थ है । )" ॥ ३१ ॥

यदि गर्जति वारिधरो, गर्जतु तन्नाम निष्ठुराः पुरुषाः ।

अयि ! विद्युत्प्रमदानां, त्वमपि च दुःखं न जानासि ॥३२॥

विटः—भवति ! अलमलमुपालम्भेन । उपकारिणी तवेयम् ,—

ऐरावतोरसि चलेव सुवर्णरज्जुः,

---

इदानीं चञ्चलां प्रति स्वाभिप्रायं वदति—यद्ययं वारिधरो गर्जति, तदा गर्जतु । अस्य तु स्वभाव एवेदृशः । यतः पुरुषाः प्रायेण निष्ठुरा भवन्ति । निष्ठुराश्च तेऽपरेषां दुःखं नैव परिचिन्वन्ति । त्वन्तु स्त्रीजातावेव जातासि, विद्युत् ! प्रमदानां दुःखं न जानासि ? आश्चर्यस्यायं विषयः । त्वमपि स्वकान्ते मेघेऽनुरक्तासि, इतस्ततः प्रचलसि, कामविमोहिता सती । अत एव प्रकृष्टमदशालिनी त्वमपि यदि प्रमदानां दुःखविमोक्षणं न करिष्यसि कस्तर्हि करिष्यसि ?

अत्र "दुःखमि"त्यस्य स्थाने "हृदयमि"ति निवेशने कापि विच्छित्तिः स्यादिति ममाभाति । यदि रोचते सहृदयशिरोमणिभ्यः । शोभनमिदं पद्यरत्नमेतदीय-मिति मनाङ्मुद्रितलोचनाञ्चला नारीहृदयमालोचयन्तु विज्ञाः ! आर्या चेयम् ॥३२॥

विद्युदुपालम्भो नोचितः, इति विटः कथयति—भवति !—इति । वसन्तसेने ! एतस्याः विद्युतः समुपालम्भो न विधेयः । इयं तु तवोपकारिणी = इयं तु तव महान्तमुपकारं करोति । एनां प्रति तु तव प्रत्युपकार एव शोभते, न पुनः प्रत्युपालम्भः ।

कथमुपकरोतीति विटः स्फुटीकरोति—ऐरावतोरसि—इति । इयं हि विद्युत्

---

"ऐ विद्युत् ! यदि 'जलधर' गरजता है तो गरजने दे क्योंकि प्रायः पुरुष निष्ठुर होते हैं ( अतः वे "पराई पीर" नहीं जानते ) परन्तु तू तो स्त्री होकर भी स्त्रियों का दुःख नहीं जानती । ( कुछ अपनी जाति का ध्यान रख ! यदि तू ही उपेक्षा करेगी तो ध्यान ही कौन रखेगा ? अतः इस चमक-दमक को रहने दे ! )" ॥ ३२ ॥

विट—आर्ये ! अधिक उपालम्भ मत दो । यह तो तुम्हारी उपकारिणी है—

"यह ऐरावत के वक्षःस्थल पर चञ्चल सुवर्ण-रज्जु-सी, पर्वत-शिखर पर

शैलस्य मूर्ध्नि निहितेव सिता पताका ।
आखण्डलस्य भवनोदरदीपिकेय-
माख्याति ते प्रियतमस्य हि संनिवेशम् ॥३३॥

वसन्तसेना—भाव ! एव्वं तं ज्जेव्व एदं गेहं । [ भाव ! एवं तदेवैतद्गेहम् । ]

विटः—सकलकलाभिज्ञाया न किंचिदिह तवोपदेष्टव्यमस्ति । तथापि स्नेहः प्रलापयति । अत्र प्रविश्य कोपोऽत्यन्तं न कर्तव्यः ।

---

ऐरावतस्योरसि चला सुवर्णनिर्मिता रज्जुरिवाभाति, शैलस्य शिखरे निहिता श्वेतपताकेवास्ति, आखण्डलस्य = इन्द्रस्य भवनोदरे = भवनस्य मध्ये स्थिता दीपकेवेयं तव प्रियतमस्य चारुदत्तस्य सन्निवेशम् = गृहम्, आख्याति = कथयति, इव !

प्रकाशप्रदानेनेयमेव तव प्रियतमस्य गृहमुपदर्शयति । नो चेदन्धकारे तद्भवनपरिज्ञानं दुर्लभमेवाभविष्यद् यदीयं नाभविष्यदिति भावः ।

अत्रोत्प्रेक्षाऽलङ्कारः । वसन्ततिलका च्छन्दः ॥३३॥

विद्युत्प्रकाशेनार्यचारुदत्तस्य गेहं समीपवर्तीति विज्ञाय तत्र प्रवेशात् पूर्वं वसन्तसेनायाः कर्तव्यमुपदिशति—सकलकलेति । वसन्तसेने ! सकलकलासु विज्ञासि स्वयमेव, एवंविधे समये किं कर्तव्यमिति ममोपदेशस्य यद्यपि काचिदावश्यकता नास्ति तथापि स्नेहो मां वक्तुं प्रेरयति । अतः स्नेहवशादेवोच्यते मया । अत्र

---

लगाई हुई श्वेत-पताका जैसी तथा इन्द्र भवन की दीपिका के समान तुम्हारे प्रियतम का घर दिखला रही है । ( यह दीपिका-तुल्य तुम्हें मार्ग दिखाने में सहायता कर रही है—अतः बहुत उपकारिणी है । इस पर कुपित मत होओ ! )" ॥ ३३ ॥

वसन्तसेना—भाव ! क्या यह वही घर है ?

विट—सम्पूर्ण कलाओं में कुशल आपको यद्यपि कुछ उपदेश देना उचित नहीं है तथापि स्नेह मुझसे कहला रहा है । वहाँ जाकर अत्यन्त "मान"

**यदि कुप्यसि नास्ति रतिः, कोपेन विनाऽथवा कुतः कामः ? ।**
**कुप्य च कोपय च त्वं, प्रसीद च त्वं प्रसादय च कान्तम् ॥३४॥**

भवतु, एवं तावत् । भो भोः ! निवेद्यतामार्यचारुदत्ताय—
**एषा फुल्लकदम्बनीपसुरभौ काले घनोद्भासिते,**

---

गेहे प्रविश्य भवत्याऽत्यन्तं कोपो नैव कार्यः । अत्यधिक-कोपेन प्रीतिरसो दग्धप्रायो भवति ।

एतदेव स्पष्टयति पद्येन—यदि कुप्यसि-इति । यदि त्वमत्र स्वकान्तस्य सविधे कोपं करिष्यसि, तदा रतिः = प्रीतिर्न भविष्यति, अथवा—कोपेन विना कामो नाभिवर्धते । अतः संक्षेपतः कथ्यते—त्वमपि मर्यादया कुपिता भविष्यसि, स्वप्रियतममपि च कोपयिष्यसि, क्षणं पुनः प्रसन्ना भूत्वा तमपि प्रसादयिष्यसि, तदैव कामोपासेनारहस्यं सफलं सम्पत्स्यते, इति भावः । अत्रार्यागीतिश्छन्दः । तल्लक्षणं यथा—

"आर्या प्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ।
दलयोः कृतयति शोभां तां गीतिं गीतवान् भुजङ्गेशः" ॥३४॥

सम्प्रति विटो वसन्तसेनायाः समागतिं सूचयितुमुपक्रमते—एषेति । भो निवेद्यतामार्यचारुदत्ताय-एषा वसन्तसेना भवतो दर्शनार्थमागता, इति ज्ञात्वा कालोचितं क्रियताम् । तथाहि—एषा फुल्लैः = विकसितैः कदम्बैः नीपैश्च सुरभिते, घनैः = मेघैः उद्भासिते विकसिते च काले, कदम्बादिसुगन्धिते वर्षासमये,

---

मत करना ।

"यदि कोप करोगी तो प्रेम न होगा अथवा विना कोप के काम कहाँ अभिवृद्ध होता है ? अतः ( मर्यादा में ) कुपित भी होना तथा प्रियतम को भी कुपित करना ( और इसके अनन्तर अपने वैदग्ध्य से ) तुम स्वयं भी प्रसन्न होना तथा 'प्रिय' को भी प्रसन्न करना ।" ॥ ३४ ॥

अच्छा तो ( सेवको ! ) "आर्य चारुदत्त" से निवेदन करो कि—

"विकसित कदम्ब तथा नीप से सुगन्धित एवं उमड़ते हुए मेघों के समय

कान्तस्यालयमागता समदना हृष्टा जलार्द्रालका ।
विद्युद्वारिदगर्जितैः सचकिता त्वद्दर्शनाकाङ्क्षिणी,
पादौ नूपुरलग्नकर्दमधरौ प्रक्षालयन्ती स्थिता ॥३५॥

चारुदत्तः—( आकर्ण्य ) वयस्य ! ज्ञायतां किमेतदिति ।

विदूषकः—जं भवं आणवेदि । ( वसन्तसेनामुपगम्य, सादरम् ) सोत्थि भोदीए । [ यद्भवानाज्ञापयति । स्वस्ति भवत्यै । ]

वसन्तसेना—अज्ज ! वंदामि । साअदं अज्जस्स । ( विटं प्रति ) भाव ! एसा छत्तधारिआ भावस्स ज्जेव्व भोदु । [ आर्य ! वन्दे ! स्वागतमार्यस्य । भाव ! एषा छत्रधारिका भावस्यैव भवतु । ]

---

स-मदना = कामपरवशा, जलेन = वर्षावारिणा, आर्द्राः अलकाश्चूर्णकुन्तला यस्याः सा । हृष्टा प्रसन्ना, कान्तस्य भवनमुपेता, विद्युद्भिः वारिदानां = मेघानां गर्जनैश्च सचकिता सती भवतां दर्शनेच्छावती, नूपुरसंलग्नकर्दमौ पादौ प्रक्षालयन्ती स्थिता वर्तते ।

येषां गृहे प्रणयिन्यः स्वयमेवेदृशे काले समागच्छन्ति, ते धन्याः । अत आर्यचारुदत्तं प्रति सूचयन्तु तस्य सेवकाः ।

अत्र स्वभावोक्तिः, अलङ्कारः । शार्दूलविक्रीडितञ्च छन्दः ॥ ३५ ॥

---

वर्षा के जल से भीगे अलकों वाली, प्रसन्न एवं कामार्त ( "वसन्तसेना" ) अपने प्रियतम के घर आई है । बिजली की कड़क और बादलों की तड़क से चकित होती हुई तुम्हारे ( "चारुदत्त" के ) दर्शनों की अभिलाषिणी यह कीचड़ से सने हुए नूपुरों वाले पैरों को धोती हुई ( बाहर ) खड़ी है ।" ॥ ३५ ॥

चारुदत्त—( सुनकर ) मित्र ! पता लगाओ कि—"यह क्या है ?"

विदूषक—जो आप कहते हैं ! ( "वसन्तसेना" के पास जाकर आदर-पूर्वक ) आपका कल्याण हो !

वसन्तसेना—आर्य ! प्रणाम करती हूँ । आपका स्वागत है । ( विट से ) भाव ! यह छत्रधारिणी ( सेविका ) आपके ही साथ रहे ।

विटः—( स्वगतम् ) अनेनोपायेन निपुणं प्रेषितोऽस्मि । ( प्रकाशम् ) एवं भवतु भवति वसन्तसेने !

**साटोपकूटकपटानृतजन्मभूमेः,**
**शाठ्यात्मकस्य रतिकेलिकृतालयस्य ।**
**वेश्यापणस्य सुरतोत्सवसंग्रहस्य,**

---

"इयं छत्रधारिणी चेटी तवैव छत्रं गृह्णातु, ममावश्यकता नास्ति" इति वाक्यं निशम्य परावर्तमानो विटः पुनरपि वसन्तसेनामुपदेशव्याजेन शुभाशीर्वादं वितरति—साटोपेति । वसन्तसेने ! अहन्तु कामये यत् सुखेन युवयोः सुरतानन्दप्राप्तिः स्यात् ! त्वयापि चेदानीमर्थस्य धनस्य लोभो नैव कार्यः । यतो वेश्यानां व्यापार एवेदृशो भवति, यत्र कपटादिकं कृत्वैव धनमादातुं यत्नः क्रियते । परन्त्वयं तवाभीष्टः कान्तस्तु निर्धनः, अतो धनाशां विहाय दाक्षिण्यपूर्वकमेव यौवन सुख-संग्रहो मूल्यत्त्वेन निर्णेयः । सानन्दमुदारतया सुरतोत्सवसमारम्भः क्रियतामिति भावः ।

व्याख्या चाधस्तात् प्रदर्श्यते—साटोपम् = दम्भसहितम् , यत् कूटं = प्रवञ्चनादिकम् , कपटम् = छलम् , अनृतम् = मिथ्याभाषणम् , एतेषां जन्मभूमेः = उत्पत्तिस्थानस्य, शाठ्यात्मकस्य = शठतापूर्णस्य, रतिकेलिकृतालयस्य = रतिक्रीडानिमित्तं कृतो निर्मितः आलयः स्थानं यत्र तस्य, वेश्याजनो रतिसुखार्थमालयनिर्माणं करोति । सुरतोत्सवस्य संग्रहो यस्मिन् तस्य, वेश्यानां आपणस्य

---

विट—( स्वगत ) इस प्रकार बड़ी चतुरता पूर्वक मुझको लौटा दिया है ! ( प्रकाश में ) ऐसा ही हो । आर्यं वसन्तसेने !

"दम्भ, छल, कपट, झूठ इनके उत्पत्ति-केन्द्र, शठतापूर्ण, रति के लिए स्थान बने हुए, सम्भोग के आस्पद तथा वेश्याओं के व्यवहार का दाक्षिण्य ( कुशलता ) ही मूल्य साधक हो । ( अर्थात्—"विट" आशीर्वाद देता है कि "तुम दोनों आनन्द करो । परन्तु तुमको यहाँ लोभ नहीं करना चाहिए

दाक्षिण्यपण्यसुखनिष्क्रयसिद्धिरस्तु ॥३६॥

( इति निष्क्रान्तो विटः )

वसन्तसेना—अज्ज मित्तेअ ! कहिं तुम्हाणं जूदिअरो ? । [ आर्य मैत्रेय ! कुत्र युष्माकं द्यूतकरः ? । ]

विदूषकः—( स्वगतम् ) ही ही भो, जूदिअरो त्ति भणंतीए अलंकिदो पिअवअस्सो । ( प्रकाशम् ) भोदि ! एसो खु सुक्खरुक्खवाडिआए [ आश्चर्यं, भोः द्यूतकर इति भणन्त्यालंकृतः प्रियवयस्यः । भवति ! एष खलु शुष्कवृक्षवाटिकायाम् । ]

---

=पण्यवीथिकायाः व्यवहारस्य वा दाक्षिण्यस्य = दक्षिणनायकत्वस्य = कुशलताया वा, यत् पण्यं = विक्रेयं वस्तु मुखं = प्रधानं यस्मिन् एवंविधस्य निष्क्रयस्य मूल्यस्य-सिद्धिरस्तु । अन्योन्यदाक्षिण्यपूर्वकं युवयोरुभयोरपि सुरतसमागम-सुख-सिद्धिरस्तु ।

अत्र कूट—कपटयोः समानार्थत्वेऽपि कश्चिद्भेदोऽस्ति । कूटे—दलस्य गोपनम्, कपटे च प्रकटता भवतीति दिक् । किञ्च—ग्रन्थमध्ये माङ्गलिकमिदं पद्यमित्यपि

---

क्योंकि तुम्हारा "प्रिय" निर्धन है अतः उदारता-पूर्वक ही सम्भोग सुख प्राप्त करना । )" ॥ ३६ ॥❀

[ "विट" चला जाता है ]

वसन्तसेना—आर्य ! आपके "द्यूतकर" कहाँ हैं ?

विदूषक—( स्वगत ) ओह ! "द्यूतकर" की उपाधि देती हुई इसने तो प्रियमित्र को अलङ्कृत ही कर दिया ! ( प्रकाश में ) आर्ये ! यह सूखी हुई वृक्ष-वाटिका में हैं ।

---

❀"मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते" इस नियम के अनुसार इस श्लोक को "ग्रन्थ के मध्य का मङ्गल" समझना चाहिए । "विट" का "सुरतोत्सव लाभ" करने का आशीर्वाद देने से यह "आशीर्वादात्मक मङ्गल" है ।

वसन्तसेना—अज्ज ! का तुम्हाणं सुक्खरुक्खवाडिआ वुच्चदि ?। [ आर्य ! का युष्माकं शुष्कवृक्षवाटिकोच्यते ? । ]

विदूषकः—भोदि ! जहिं ण खाईअदि, ण पीईअदि । [ भवति ! यत्र न खाद्यते, न पीयते । ]

( वसन्तसेना स्मितं करोति )

विदूषकः—ता पविसदु भोदी । [ तस्मात्प्रविशतु भवती । ]

वसन्तसेना—( जनान्तिकम् ) एत्थ पविसिअ किं मए भणिदव्वं ?। [ अत्र प्रविश्य किं मया भणितव्यम् ? ।

चेटी—'जूदिअर ! अवि सुहो दे पदोसो ? त्ति । [ 'द्यूतकर ! अपि सुखस्ते प्रदोषः ?' इति । ]

वसन्तसेना—अवि पारइस्सं ? । [ अपि पारयिष्यामि ? । ]

चेटी—अवसरो ज्जेव्व पारइस्सदि । [ अवसर एव पारयिष्यति । ]

---

ध्येयम्, सुरतसिद्धेराशीर्वादश्च प्रकृते आवश्यक एवेति भावः ।

वसन्ततिलका च्छन्दः ॥३६॥

---

वसन्तसेना—आर्य ! कौन-सा स्थान आपका "शुष्कवृक्ष-वाटिका" कहलाता है ?

विदूषक—आर्ये ! जहाँ न खाना मिलता है, न पीना ।

( "वसन्तसेना" मुस्कराती है । )

विदूषक—इसलिए आप प्रवेश करें ।

वसन्तसेना—( दर्शकों के पास को ) यहाँ प्रवेश कर मुझे क्या कहना चाहिए ?

चेटी—"द्यूतकर ! तुम्हारे लिए यह प्रदोष सुख-कारी तो है ?" ( यह कहना चाहिए । )

वसन्तसेना—क्या कह सकूँगी ?

चेटी—अवसर ही कहला देगा ।

विदूषकः—पविसदु भोदी । [ प्रविशतु भवती । ]

वसन्तसेना—( प्रविश्योपसृत्य च, पुष्पैस्ताडयन्ती ) अइ जूदिअर ! अवि सुहो दे पदोसो ? । [ अयि द्यूतकर ! अपि सुखस्ते प्रदोषः ? । ]

चारुदत्तः—( अवलोक्य ) अये, वसन्तसेना प्राप्ता ! ( सहर्षमुत्थाय ) अयि प्रिये !

**सदा प्रदोषो मम याति जाग्रतः,**
**सदा च मे निःश्वसतो गता निशा ।**
**त्वया समेतस्य विशाललोचने !**
**ममाद्य शोकान्तकरः प्रदोषकः ॥३७॥**

---

वसन्तसेनासमागमेनातितमां प्रसन्नश्चारुदत्तः—अद्यतनस्य प्रदोषस्य साफल्यं भविष्यतीत्याशयेनाह—सदा प्रदोष इति । प्रिये वसन्तसेने ! त्वं किं पृच्छसि, "अपि सुखस्ते प्रदोषः ? इति । यत् सत्यम्, मम प्रदोषस्तु सदा जाग्रतः एव व्यत्येति, निशा चापि तथैव । विशाललोचने ! वस्तुतोऽद्यैव त्वया सह सुखोपभोगमनुभविष्यतो मम प्रदोषः शोकान्तकरो भविष्यति ।

अत्र वंशस्थं छन्दः ॥३७॥

---

विदूषक—आप प्रवेश करें ।

वसन्तसेना—( प्रविष्ट हो पास जाकर पुष्पों से मारती हुई ) द्यूतकर जी ! आपका प्रदोष सुखकारी तो है ?

चारुदत्त—( देखकर ) ओह ! "वसन्तसेना" आ गई ! ( सहर्ष उठकर ) प्रिये !

"सदा मेरा प्रदोष जागते ही जागते बीतता है और रात्रि लम्बी आहें भरते हुए ही कट जाती हैं; परन्तु विशाललोचने ! तुमसे मिलने पर आज का प्रदोष मेरे शोक का अन्त करने वाला है । ( तुम्हारा सङ्गम करने से यह प्रदोष वास्तव में शोकान्तकारी होगा । )" ॥३७॥

तत्स्वागतं भवत्यै, इदमासनम् ; अत्रोपविश्यताम् ।

विदूषकः—इदं आसणं, उवविसदु भोदी । [ इदमासनम्, उपविशतु भवती । ]

( वसन्तसेना नाट्येनासीना, ततः सर्वे उपविशन्ति )

चारुदत्तः—वयस्य ! पश्य पश्य—

वर्षोदकमुद्गिरता श्रवणान्तविलम्बिना कदम्बेन ।
एकः स्तनोऽभिषिक्तो नृपसुत इव यौवराज्यस्थः ॥३८॥

तद्वयस्य ! क्लिन्ने वाससी वसन्तसेनायाः । अन्ये प्रधानवाससी समुपानीयेतामिति ।

---

आसीनेषु सर्वेषु वसन्तसेनामवलोक्य सहर्षं प्राह चारुदत्तः—वर्षोदकमिति । वर्षाजलविन्दुमुद्गिरता = प्रक्षिपता, श्रवणान्ते = कर्णान्ते विलम्बिना = समवलम्बितेन, कदम्ब—पुष्पेण यौवराज्ये तिष्ठतीति यौवराज्यस्थः नृप—पुत्र इव अस्या वसन्तसेनाया एकः स्तनोऽभिषिक्तः । मन्ये, एकस्य स्तनस्यैवाभिषेकः क्रियते, इति भावः । अत्रोत्प्रेक्षालङ्कारः । उपमा वा । आर्या च्छन्दः ॥३८॥

वसन्तसेनाया वस्त्रपरिवर्तनार्थं चारुदत्तो विदूषकं प्रति कथयति—तद्वयस्येति । वयस्य = मैत्रेय ! तत् = तस्मात् कारणात् वसन्तसेनाया वाससी = वस्त्रे अधोवस्त्र-

---

अतः आपका स्वागत है ! यह आसन है । इस पर बैठिए !

विदूषक—यह आसन है । आप बैठें !

[ "वसन्तसेना" बैठती है; तदनन्तर सब बैठ जाते हैं । ]

चारुदत्त—मित्र ! देखो ! देखो !

"( शोभा के लिए ) कान में लगे हुए कदम्ब-पुष्प ने वर्षा की बूँदें डालते हुए—युवराज पद पर आसीन किसी नृप-पुत्र की भाँति ( "वसन्तसेना" के ) एक स्तन का मानों अभिषेक कर दिया है ।" ॥३८॥

इसलिए मित्र ! "वसन्तसेना" के वस्त्र भीग गये हैं; तुम और सूखे हुए वस्त्र ( पहिनने के लिए ) लाओ !

विदूषकः—जं भवं आणवेदि । [ यद्भवानाज्ञापयति । ]

चेटी—अज्ज मित्तेअ ! चिट्ठ तुमं; अहं ज्जेव्व अज्जअं सुस्सूसइस्सं । ( तथा करोति ) [ आर्य मैत्रेय ! तिष्ठ त्वम् ; अहमेवार्यां शुश्रूषयिष्यामि । ]

विदूषकः—( अपवारितकेन ) भो वअस्स ! पुच्छामि दाव तत्थभोदिं किं पि । [ भो वयस्य ! पृच्छामि तावत्तत्रभवतीं किमपि । ]

चारुदत्तः—एवं क्रियताम् ।

विदूषकः—( प्रकाशम् ) अध किंणिमित्तं उण ईदिसे पणट्ठचंदालोए दुद्दिणअंधआरे आअदा भोदी ? । [ अथ किं निमित्तं पुनरीदृशे प्रनष्टचन्द्रालोके दुर्दिनान्धकार आगता भवती ? । ]

---

मुपरितनञ्च । क्लिन्ने = वर्षाजलेनार्द्रे जाते, अपरे वाससी ( शुष्के ) समाहर ।

विदूषकः ( अपवारितकेन ) चारुदत्तं पृच्छति भो—वयस्येति । सखे ! किमु वसन्तसेनां किमप्यवसरोचितं पृच्छामि ? अपवारितस्य लक्षणञ्च—साहित्यदर्पणकारेणोक्तम्—"तद्भवेदपवारितम्—

रहस्यन्तु यदन्यस्य, परावृत्य प्रकाश्यते ।" इति ।

"जनान्तिकस्य" लक्षणञ्चापि तत्रैवोक्तम्—

"त्रिपताककरेणान्यानपवार्यान्तरा कथाम् ।

अन्योन्यामन्त्रणं यत् स्याज्जनान्ते तज्जनान्तिकम् ॥" इति ।

---

विदूषक—जो आज्ञा !

चेटी—आर्य मैत्रेय ! तुम ठहरो ! मैं ही "आर्या" की सेवा करूँगी ।

[ वैसा करती है । ]

विदूषक—( अलग से ) मित्र ! माननीया इनसे कुछ पूछूँ ?

चारुदत्त—पूछिये ।

विदूषक—( प्रकाश में ) "ऐसे कौमुदीविहीन अन्धकारपूर्ण दुर्दिन में आपके आगमन का क्या कारण है ?

चेटी—अज्जए ! उज्जुओ बम्हणो । [ आर्ये ! ऋजुको ब्राह्मणः । ]

वसन्तसेना—णं णिउणोत्ति भणाहि । [ ननु निपुण इति भण । ]

चेटी—एसा खु अज्जआ एव्वं पुच्छिदुं आअदा—'केत्तिअं ताए रअणावलीए मुल्लं' त्ति । [ एषा खल्वार्या एवं प्रष्टुमागता—'कियत्तस्या रत्नावल्या मूल्यम्' इति । ]

विदूषकः—( जनान्तिकम् ) भो ! भणिदं मए—जधा अप्पमुल्ला रअणावली, बहुमुल्लं सुवण्णभंडअं । ण परितुट्टा अवरं मग्गिदुं आअदा । [ भोः ! भणितं मया—यथाऽल्पमूल्या रत्नावली, बहुमूल्यं सुवर्णभाण्डम् । न परितुष्टा, अपरं याचितुमागता । ]

चेटी—सा खु अज्जआए अत्तणकेरकेत्ति भणिअ जूदे हारिदा । सो अ सहिओ राअवात्थहारी ण जाणीअदि कहिं गदो त्ति । [ सा खल्वार्यया आत्मीयेति भणित्वा द्यूते हारिता । स च सभिको राजवार्ताहारी न ज्ञायते कुत्र गत इति । ]

विदूषकः—भोदि ! मंतिदं ज्जेव मंतीअदि । [ भवति ! मन्त्रितमेव मन्त्र्यते ]

---

चेटी—आर्ये ! ब्राह्मण बहुत सीधा है ।

वसन्तसेना—अरी ! "निपुण है" ऐसा कह !

चेटी—"आर्या" यह पूछने आई है कि "उस रत्नावली का मूल्य कितना है ?"

विदूषक—( सामाजिकों के समीप ) मैंने जान लिया कि रत्नावली अल्प मूल्य वाली है और सुवर्णपात्र अधिक मूल्यवान् है अतः उससे सन्तुष्ट न होकर और माँगने आई है ।

चेटी—उसे 'आर्या' ने अपनी समझ कर जूए में हरा दी और वह राजवार्ताहारी सभिक न जाने कहाँ चला गया ?

विदूषक—यह तो पहिले ही विचारा हुआ कहा जा रहा है ।

चेटी—जाव सो अण्णेसीअदि, ताव एदं ज्जेव्व गेण्ह सुवण्णभंडअं। [ यावत्सोऽन्विष्यते, तावदिदमेव गृहाण सुवर्णभाण्डम् । ] ( इति दर्शयति )

( विदूषको विचारयति )

चेटी—अदिमेत्तं अज्जो णिज्झाअदि। ता किं दिट्ठपुरुव्वो दे ? । [ अतिमात्रमार्यो निध्यायति । तत्किं दृष्टपूर्वस्ते ? ।

विदूषकः—भोदि ! सिप्पकुसलदाए ओवंधेदि दिट्ठिं । [ भवति! शिल्पकुशलतयावबध्नाति दृष्टिम् । ]

चेटी—अज्ज ! वंचिदोसि दिट्ठीए। तं ज्जेव्व एदं सुवण्णभंडअं। [ आर्य ! वञ्चितोऽसि दृष्ट्या । तदेवेदं सुवर्णभाण्डम् । ]

विदूषकः—( सहर्षम् ) भो वअस्स ! तं ज्जेव्व एदं सुवण्णभंडअं, जं अम्हाणं गेहे चोरेहिं अवहिदं । [ भो वयस्य ! तदेवेदं तत्सुवर्णभाण्डम् , यदस्माकं गृहे चौरैरपहृतम् । ]

चारुदत्तः—वयस्य !

---

चेटी—इसलिए जब तक वह ढूँढी जाय तब तक के लिए इस 'सुवर्णपात्र' को ही ले लीजिए। ( दिखाती है। )

( "विदूषक" सोचता है। )

चेटी—आप बड़े ध्यानपूर्वक देख रहे हैं तो क्या आपने इसे कभी पहिले देखा है ?

विदूषक—शिल्प-कुशलता ( कारीगरी ) दृष्टि को अपनी ओर आकृष्ट कर रही है।

चेटी—आर्य ! आपकी आँखें धोखा खा रही हैं—यह वही 'सुवर्णपात्र' है।

विदूषक—( सहर्ष ) मित्र ! यह वही 'सुवर्णपात्र' है जो कि हमारे घर से चोरों ने चुरा लिया था।

चारुदत्त—मित्र !—

योऽस्माभिश्चिन्तितो व्याजः कर्तुं न्यासप्रतिक्रियाम् ।
स एव प्रस्तुतोऽस्माकं किंतु सत्यं विडम्बना ॥३९॥

विदूषकः—भो वअस्स ! सच्चं सवामि बम्हण्णेण । [ भो वयस्य ! सत्यं शपे ब्राह्मण्येन । ]

चारुदत्तः—प्रियं नः प्रियम् ।

विदूषकः—( जनान्तिकम् ) भो ! पुच्छामि-णं कुदो एदं समासादिदं त्ति । [ भोः ! पृच्छामि-ननु कुत इदं समासादितमिति । ]

चारुदत्तः—को दोषः ? ।

---

सुवर्णभाण्डमवलोक्य चारुदत्तः कथयति विदूषकं प्रति—योऽस्माभिरिति । वयस्य ! न्यासरूपेणास्माकं गृहे स्थापितस्य तस्यैव चौरेणापहृतस्य सुवर्णभाण्डस्य प्रतिक्रियां कर्तुं य एव व्याजः = कपटाचरणमस्माभिश्चिन्तितः = तत्कृतेऽस्माकं मत्त्वा द्यूते हारितम्, एषा रत्नावली च तदर्थं दत्ता, इत्यादि यदस्माभिश्चिन्तितम्, स एवास्माकमुपस्थितो व्याजः । किन्तु सत्यन्तु "विडम्बनैव ।" यादृशं कर्म परस्मै क्रियते चिन्त्यते वा, तादृशमेव स्वस्मै समुपस्थितं भवति । अस्माभिश्छलं कृतम्, तर्हि छलमेवास्माकं समुपस्थितम्, परमस्ति सर्वापीयं विडम्बना एव ॥३९॥

---

"जो बहाना हमने इसको धरोहर लौटाने के लिए किया था वही हमारे सामने आ गया है परन्तु यह सब कुछ 'विडम्बना' ही है । ( अथवा—"मनुष्य जैसा कर्म दूसरे के लिए करता है वैसा ही उसके सामने आ जाता है" इसके अनुसार हमने छल किया और हमारे सामने छल ही आगया है किन्तु यह सब धोखा मात्र ही है । )" ॥३९॥

विदूषक—मित्र ! मैं अपनी शपथ खाकर कहता हूँ ।

चारुदत्त—यह हमारे लिए बहुत अच्छा है ।

विदूषक—( प्रेक्षकों के पास को ) मैं पूछता हूँ कि—"यह कहाँ से मिला ?"

चारुदत्त—क्या दोष ( हर्ज ) है ? ( पूछ लो । )

विदूषकः—( चेट्याः कर्णे ) एव्वं विअ । [ एवमिव । ]
चेटी—( विदूषकस्य कर्णे ) एव्वं विअ । [ एवमिव । ]
चारुदत्तः—किमिदं कथ्यते ? । किं वयं बाह्याः ? ।
विदूषकः—( चारुदत्तस्य कर्णे ) एव्वं विअ । [ एवमिव । ]
चारुदत्तः—भद्रे ! सत्यं तदेवेदं सुवर्णभाण्डम् ?
चेटी—अज्ज ! अध इं । [ आर्य ! अथ किम् ? ]
चारुदत्तः—भद्रे ! न कदाचित्प्रियनिवेदनं निष्फलीकृतं मया । तद्गृह्यतां पारितोषिकमिदमङ्गुलीयकम् । ( इत्यनङ्गुलीयकं हस्तमवलोक्य लज्जां नाटयति )
वसन्तसेना—( आत्मगतम् )अदो ज्जेव्व कामीअसि । [अत एव काम्यसे।]

---

विदूषकः सशपथं तदेवेदं भाण्डमिति कथयति, चारुदत्तोऽपि चेटी मुखात्तदेवेति निशम्य प्रसन्नो भूत्वा पारितोषिकं दातुं कथयति—भद्रे ! इति । भद्रे ! मया प्रियनिवेदकः कोऽपि विफलो न कृतः, अतोऽङ्गुलीयकं गृह्यतामिति यावदेव वदति तावदेव रिक्तामङ्गुलीं निरीक्ष्य सन्तप्तो भवति ।

---

विदूषक—( "चेटी" के कान में ) "ऐसे ऐसे......" ।
चेटी—( "विदूषक" के कान में ) ऐसे-ऐसे......" ।
चारुदत्त—यह क्या काना-फूँसी कर रहे हो ? क्या हम कोई और ( ग़ैर ) हैं ?
विदूषक—( "चारुदत्त" के कान में ) ऐसे-ऐसे......" ।
चारुदत्त—भद्रे ! क्या सचमुच यह वही 'सुवर्णपात्र' है ?
चेटी—आर्य ! जी हाँ ।
चारुदत्त—भद्रे ! मैंने कभी शुभ-समाचार को निष्फल नहीं किया अतः यह अँगूठी पारितोषिक-रूप में लो । ( ऐसा कहकर अँगूठी-रहित अँगुली देखकर लज्जित हो जाता है । )
वसन्तसेना—( आत्मगत ) इसी लिए ( इन्हीं गुणों के कारण ) तो मैं

चारुदत्तः—( जनान्तिकम् ) भोः ! कष्टम् ;

**धनैर्वियुक्तस्य नरस्य लोके किं जीवितेनादित एव तावत् ।**
**यस्य प्रतीकारनिरर्थकत्वात् कोपप्रसादा विफलीभवन्ति ॥४०॥**

अपि च,—

**पक्षविकलश्च पक्षी शुष्कश्च तरुः सरश्च जलहीनम् ।**
**सर्पश्चोद्धृतदंष्ट्रस्तुल्यं लोके दरिद्रश्च ॥४१॥**

अपि च,—

---

पुनश्चारुदत्तो जनान्तिकं विदूषकं कथयति—धनैर्वियुक्तस्येति । मित्र ! धनविरहितस्य मनुजस्य प्रथमतो जीवनमेव निष्फलम् । यस्य कोपः प्रसादो वा मुधैव जायते । अत्राप्रस्तुतप्रशंसा, काव्यलिङ्गश्चालङ्कारौ । उपजातिश्छन्दः ॥४०॥

अन्यदप्याह—पक्षेति । पक्षरहितः पक्षी, शुष्को वृक्षः, जलरहितः सरोवरः, उद्धृता = उत्खाता दंष्ट्रा यस्यैवंविधः सर्पः, दरिद्रः पुरुषश्च लोके एते सर्वेऽपि समानाः सन्ति । संसारे एतेषां किमपि प्रयोजनं नास्तीति ममेदानीं जीवनं विफलमिति भावः । अत्र मालोपमालङ्कारः । आर्या च्छन्दः ॥४१॥

---

चाहतो हूँ ।

चारुदत्त—( पारिषदों के पास ) ओह ! कष्ट है !

"धनरहित मनुष्य के प्रथम तो जीवन से ही क्या लाभ ? जिसके प्रतिविधान में असमर्थ होने के कारण, क्रोध और अप्रसन्नता ( दोनों ही ) निष्फल हो जाती हैं ।" ॥ ४० ॥

और भी—

"पङ्खविहीन पक्षी, सूखा वृक्ष, जलरहित सरोवर, दाँत तोड़ा हुआ सर्प और दरिद्र ये सब संसार में समान हैं । संसार में इनका कोई प्रयोजन नहीं है । )" ॥ ४१ ॥

और भी—

शून्यैर्गृहैः खलु समाः पुरुषा दरिद्राः
कूपैश्च तोयरहितैस्तरुभिश्च शीर्णैः ।
यद्दृष्टपूर्वजनसंगमविस्मृताना-
मेवं भवन्ति विफलाः परितोषकालाः ॥४२॥

विदूषकः—भो ! अलं अदिमेत्तं संतप्पिदेण । ( प्रकाशं, सपरिहासम् ) भोदि ! समप्पीअदु ममकेरिआ ण्हाणसाडिआ । [ भोः ! अलमतिमात्रं संतापितेन । भवति ! समर्प्यतां मम स्नानशाटिका । ]

वसन्तसेना—अज्ज चारुदत्त ! जुत्तं ण्णेदं इमाए रअणावलीए इमं

---

अपरमपि कथयति—शून्यैर्गृहैरिति । अस्मिन् संसारे निर्धनाः पुरुषा शून्यगृहैः, जलरहितैः कूपैः, शुष्कत्वाद्भूमौ निपतितैः पादपैश्च साम्यं धारयन्ति । यतः दृष्टपूर्वजनस्य = पूर्वपरिचितस्य जनस्य संगमेनापि सञ्जायमानेऽप्यानन्दसमये एवं = ममेव, पारितोषकाला अपि येषां विफला भवन्ति । सर्वेषाञ्चेतसि पूर्वपरिचितजनस्य दर्शनेनानन्दातिरेकः प्रादुर्भवति, हन्त ! परं दरिद्रस्यानन्दकालोऽपि नैव भाग्ये लिखितः । मम जीवनं निरर्थकं, योऽहमेवंविधेऽपि समये परितोषमपि प्रकाशयितुमक्षमः । अप्रस्तुतप्रशंसा, उपमा चालङ्कारौ । वसन्ततिलका च्छन्दः ॥४२॥

परिहासार्थं, चारुदत्तस्य मनसः परिसान्त्वनार्थं च विदूषकः प्राह—भोदि—इति । भवति ! सा मम स्नानार्थे मलिना जीर्णा च शाटिका यस्यामिदं सुवर्णभाण्डं सन्निबद्धमासीत्, कुत्र वर्तते ? देहि मह्यम् ।

---

"दरिद्र पुरुष ( इस संसार में ) शून्य गृहों, जलरहित कूपों तथा जर्जर वृक्षों के समान हैं जिनके—पूर्वपरिचितों के प्राप्त होने पर सन्तोष के समय भी ( मेरी भाँति ही ) इसी प्रकार विफल हो जाते हैं।" ॥४२॥

विदूषक—मित्र ! सन्ताप मत करो ( प्रकाश में हँसी करता हुआ ) आर्ये ! वह मेरी स्नान की धोती ( जिसमें वह 'सुवर्णपात्र' बँधा हुआ था ) दीजिये ।

वसन्तसेना—आर्य चारुदत्त ! इस 'रत्नावली' से मेरी परीक्षा करना आपको उचित नहीं था ।

जणं तुलइदुं। [ आर्य चारुदत्त! युक्तं नेदमनया रत्नावल्या इमं जनं तुलयितुम्। ]

चारुदत्तः—( सविलक्षस्मितम् ) वसन्तसेने ! पश्य पश्य—

**कः श्रद्धास्यति भूतार्थं सर्वो मां तुलयिष्यति।**
**शङ्कनीया हि लोकेऽस्मिन् निष्प्रतापा दरिद्रता ॥४३॥**

विदूषकः—हञ्जे ! किं भोदीए इध ज्जेव्व सुविदव्वं ?। [ चेटि! किं भवत्या इहैव सुप्तव्यम् ?। ]

चेटी—( विहस्य ) अज्ज मित्तेअ ! अदिमेत्तं दाणि उज्जुअ अत्ताणअं दंसेसि। [ आर्य मैत्रेय ! अतिमात्रमिदानीमृजुमात्मानं दर्शयसि। ]

विदूषकः—भो वअस्स ! एसो खु ओसारअंतो विअ सुहोवविट्टं जणं

---

वसन्तसेनाया "रत्नावली-प्रदानेनेमं जनं तुलयितुं युक्तं न" इति वचनं निराकर्तुं चारुदत्तो वदति—कः—इति। वसन्तसेने ! सर्वोऽपि जनो मदीयामेव निन्दां करिष्यति, मयैवेदं सुवर्णभाण्डं सकपटं स्वगृहे धृतम्, चौर्यें गतमिति तु छद्ममात्रमेवेति लोको मां लघूकरिष्यति। यतो दरिद्रता प्रतापरहिता भवति। दारिद्र्योपहतस्य विश्वास एव न सम्भाव्यते, इति सर्वमालोच्यैव मया रत्नावली प्रेषितेति भावः ॥४३॥

मेघसमागमं सूचयति विदूषकः—भो वअस्सेति। वयस्य चारुदत्त ! सुखेनो-

---

चारुदत्त—( लज्जित हो मुस्कराता हुआ ) वसन्तसेने ! देखो ! देखो !

"इस वास्तविक बात पर कौन विश्वास करेगा ? सब मुझ पर ही सन्देह करेंगे। क्योंकि इस संसार में तेज-विहीन दरिद्रता ही सन्देहास्पद होती है" ॥४३॥

विदूषक—हञ्जे ! क्या आज "आर्या" यहीं शयन करेंगी ?

चेटी—( हँसकर ) आर्य मैत्रेय ! इस समय तुम अपने को बहुत ही सीधा सिद्ध कर रहे हो।

विदूषक—मित्र ! सुखपूर्वक बैठे हुए हमको पुनः अपनी मोटी-मोटी धाराओं

पुणो वित्थारिवारिधाराहिं पविट्ठो पज्जण्णो । [ भो वयस्य ! एष खल्वपसारयन्निव सुखोपविष्टं जनं पुनरपि विस्तारिवारिधाराभिः प्रविष्टः पर्जन्यः । ]

चारुदत्तः—सम्यगाह भवान् ,—

**अमूर्हि भित्त्वा जलदान्तराणि, पङ्कान्तराणीव मृणालसूच्यः ।**
**पतन्ति चन्द्रव्यसनाद्विमुक्ता, दिवोऽश्रुधारा इव वारिधाराः॥४४॥**

अपि च,—

**धाराभिरार्यजनचित्तसुनिर्मलाभि-**
**श्चण्डाभिरर्जुनशरप्रतिकर्कशाभिः ।**

प्रविष्टस्य लोकस्यापसारणार्थमिवायं मेघः पुनरपि विस्तारिताभिः जलधाराभिः सहात्र प्रविष्ट इवेति, सम्प्रति बहिरवस्थानं नोचितं अभ्यन्तरे प्रविश्य कालोचितं कार्यं क्रियतामिति हृदयम् ।

चारुदत्तः समर्थयमानः प्राह—अमूर्हि—इति । मृणालानां सूच्यो यथा पङ्कं विदार्य बहिरायान्ति, तथैव जलधारा अप्येताः जलदानामन्तर्भागं विदार्य निःसरन्ति । अहन्तु मन्ये, चन्द्रस्य मेघावरण—रूप—विपत्तेः आकाशमेव रोदिति वारिधाराच्छलेनेति ।

अत्र उपमा, उत्प्रेक्षा, समासोक्तिश्लेत्यलङ्काराः साङ्कर्यं भजन्ते ॥ उपजातिश्छन्दः ॥४४॥

भूयोऽप्यतिचातुर्येण काव्यं प्रकाशयन्नाह चारुदत्तः—धाराभिरिति ।

से मानों हटाने के लिए यह मेघ उमड़ आया है । ( अतः अन्दर चलें । )

चारुदत्त—आपने ठीक कहा है—

"जिस प्रकार कमलसूचियाँ कीचड़ को फोड़कर बाहर निकल आती हैं वैसे ही ये जलधारायें मेघ को फोड़कर निकल रही हैं । (मेरी समझ में तो) "चन्द्रमा के मेघों से ढके जाने की विपत्ति" के कारण ही यह आकाश मानों जलधाराओं के बहाने से रो रहा है ।" ॥४४॥

और भी—

"बलदेव जी के वस्त्र के समान कान्तिवाले ये मेघ—सज्जनों के चित्त के

मेघाः स्रवन्ति बलदेवपटप्रकाशाः,
शक्रस्य मौक्तिकनिधानमिवोद्गिरन्तः ॥४५॥

प्रिये ! पश्य पश्य—

एतैः पिष्टतमालवर्णकनिभैरालिप्तमम्भोधरैः,
संसक्तैरुपवीजितं सुरभिभिः शीतैः प्रदोषानिलैः ।
एषाम्भोदसमागमप्रणयिनी स्वच्छन्दमभ्यागता,

---

बलदेवस्य वसनतुल्याः श्यामवर्णा मेघाः आर्यजनानां चित्तवत् सुनिर्मलाभिः, चण्डाभिः = तीव्रवेगवतीभिः, अर्जुनस्य शरप्रहारवत् कर्कशाभिर्जलधाराभिः इन्द्रस्य लब्ध मौक्तिक-कोषमिवोद्गिरन्तः स्रवन्ति । जलरूपेण मौक्तिकवृष्टिं कुर्वन्तीवेति भावः । अत्रोपमा, उत्प्रेक्षा चालङ्कारौ । वसन्ततिलका च्छन्दः ॥४५॥

चारुदत्तो विद्युता संपृक्तं मेघमालोक्य सोत्कण्ठं वसन्तसेनामवलोकयितुं प्रार्थयते—एतैः-इति । प्रिये ! पश्य, एतैः = अमीभिः, पिष्टैः = चूर्णितैः, तमाल-वृक्षस्य वर्णकैरिव, कृष्णवर्णैः मेघैः आ = समन्ताल्लिप्तम् = व्याप्तम्, संसक्तैः = सर्वदा प्रवहण-शीलैः, शीतलैः प्रदोषानिलैः = प्रदोषकालिक-पवनैः, सुगन्धितैः सद्भिः, उपवीजितं = कृतव्यजनमिव, अम्बरं = आकाशम् कान्तम् = प्रियतमम्,

---

समान निर्मल, तीव्र वेग वाली तथा "अर्जुन" के बाणों के समान कठोर जल-धाराओं से मानों ( प्राप्त किये हुए ) "इन्द्र" के मोतियों के कोष को बरसा रहे हैं । ( जल-रूप में मोतियों की वर्षा कर रहे हैं । )" ॥४५॥

प्रिये ! देखो ! देखो !

"इन पिसे हुए तमाल के रङ्ग के समान काले-काले मेघों से व्याप्त तथा शीतल, मन्द, सुगन्ध-सायंकालिक समीरण से पङ्खा किये जाते हुए आकाश को, स्वयं आई हुई प्रियतम में अनुरक्त प्रिया की भाँति, मेघ के सङ्गम से उत्कण्ठित विद्युत् आलिङ्गन कर रही है । ( जैसे कोई कान्ता सङ्गम की इच्छा से सुगन्धित तथा

**रक्ता कान्तमिवाम्बरं प्रियतमा विद्युत्समालिङ्गति ॥४६॥**

( वसन्तसेना श्रृङ्गारभावं नाट्यन्ती चारुदत्तमालिङ्गति )

चारुदत्तः—( स्पर्शं नाटयन् प्रत्यालिङ्ग्य )

**भो मेघ ! गम्भीरतरं नद त्वं तव प्रसादात् स्मरपीडितं मे ।**
**संस्पर्शरोमाञ्चितजातरागं कदम्बपुष्पत्वमुपैति गात्रम् ॥४७॥**

---

रक्ता = रक्तवर्णा, अनुरक्ता च कान्ता इव, अम्भोदस्य = मेघस्य समागमे प्रणयिनी = प्रीत्यतिशया, स्वच्छन्दं समागता च, विद्युत् समालिङ्गति ।

यथा—काचित् प्रियतमा स्वयमेव समागता रमणेच्छया सुगन्धितैरालेपैर्लिप्तदेहं, शीतलैः पवनैः परिपुष्टम्, प्रियतमा समालिङ्गति, तथैवेयं विद्युदपि मेघसमागमप्रणयिनी नभोभवने समागत्य विभ्राजते इवेति भावः । यथा विद्युन्मेघं समालिङ्गति, तथैव त्वमपि मया सह यथेच्छं समालिङ्गन-सुखमनुभवेत्यपि च ध्वन्यते । अत्रोपमाऽलङ्कारः । शार्दूलविक्रीडितं च्छन्दः ॥४६॥

आलिङ्गन-सुखमनुभवन् चारुदत्तः कथयति—भो मेघेति । भो मेघ ! त्वं महता वेगेन गम्भीरतरं यथा स्यात्तथा गर्जनां कुरु, तवैव प्रसादात् काम-पीडितं ममेदं गात्रम्, संस्पर्शमात्रेणैव रोमाञ्चितं सत् रागयुक्तञ्च कदम्बपुष्पत्वमुपैति = प्राप्नोति । प्रियसमागमे सर्वोऽपि पदार्थोऽनुकूलतां भजते, इति भावः ।

---

सुसज्जित प्रियतम का आलिङ्गन करती है वैसे ही विद्युत् भी प्रियतम—आकाश का आलिङ्गन कर रही है । )" ॥४६॥

[ "वसन्तसेना" श्रृङ्गारभाव का अभिनय करती हुई "चारुदत्त" से आलिङ्गन करती है । ]

चारुदत्त—( स्पर्श-सुख का अनुभव कर, प्रत्यालिङ्गन करता हुआ )

"ऐ मेघ ! तू और भी गम्भीरता से गरज ! क्योंकि तेरी ही कृपा से कामदेव से पीड़ित मेरा गात्र ( "वसन्तसेना" के ) स्पर्श से रागयुक्त होकर "कदम्ब" पुष्प के समान हो रहा है । ( स्पर्श-सुख से मेरा शरीर रोमाञ्चित हो रहा है । )" ॥४७॥

विदूषकः—दासीए पुत्त दुद्दिण ! अणज्जो दाणिं सि तुमं, जं अत्तभोदिं विज्जुआए भायावेसि । [ दास्याःपुत्र दुर्दिन ! अनार्य इदानीमसि त्वम्, यदत्रभवतीं विद्युता भीषयसि । ]

चारुदत्तः—वयस्य ! नार्हस्युपालब्धुम्,—

**वर्षशतमस्तु दुर्दिनमविरतधारं शतह्रदा स्फुरतु ।**
**अस्मद्विधदुर्लभया यदहं प्रियया परिष्वक्तः ॥४८॥**

अपि च, वयस्य !

**धन्यानि तेषां खलु जीवितानि, ये कामिनीनां गृहमागतानाम् ।**

---

अत्र निदर्शनाऽलङ्कारः । इन्द्रवज्रोपेन्द्रवज्रयोः सम्मेलनादुपजातिश्छन्दः ॥४७॥

भो दुर्दिन ! अतीवानार्योऽसि, यदिमां वसन्तसेनां विद्युता भाययसीति विदूषकोक्तिं स्वाननुकूलां मन्यमानश्चारुदत्तः कथयति—वर्षशतमिति । भो मैत्रेय ! अयं मेघो विद्युच्चेयं ममातीवोपकारं कुरुतः; कथं निन्दसि ? अनयोः कृपयैवाद्य दुर्लभया कान्तया समालिङ्गितोऽस्मि । अतोऽहं तु कामये—वर्षशतं यावद्दुर्दिनमेवास्तु, शतह्रदा = विद्युच्चाविरतधारं यथा स्यात्तथा निरन्तरं स्फुरतु = प्रकाशताम् । यस्योपकारो मया शिरसि धार्यते तन्निन्दाकरणं किमु तवोचितम् ? आर्या च्छन्दः॥४८॥

पुनः समागममालिङ्गनादिना स्वस्य भाग्यशालितां मन्यमानश्चारुदत्तः प्राह—धन्यानीति । भो मित्र ! सत्यं मन्यताम्—तेषां मानवानामेव जीवनं प्रशंस-

---

विदूषक—अरे ! दासीपुत्र ! दुर्दिन ! तू ( वास्तव में ) शठ है जो कि "आर्या" को विद्युत् से भयभीत कर रहा है ।

चारुदत्त—मित्र ! तुमको इस प्रकार उपालम्भ न देना चाहिए ।

"यह दुर्दिन सैकड़ों वर्षों तक निरन्तर बरसे तथा यह चपला भी चमकती रहे, जिसकी कृपा से आज मेरा दुर्लभ प्रियतमा ने आलिङ्गन किया है ।" ॥४८॥

और भी मित्र !

"( यह सच समझो ! ) उन मनुष्यों के जीवन धन्य हैं, जो स्वयं ही ( रमण

आर्द्राणि मेघोदकशीतलानि, गात्राणि गात्रेषु परिष्वजन्ति॥४९॥

प्रिये वसन्तसेने !

स्तम्भेषु प्रचलितवेदिसंचयान्तं,
शीर्णत्वात् कथमपि धार्यते वितानम् ।
एषा च स्फुटितसुधाद्रवानुलेपात्
संक्लिन्ना सलिलभरेण चित्रभित्तिः ॥५०॥

नीयं भवति, ये स्वयं स्वगृहमागतानां, कामिनीनां मेघमुक्तेन जलेनार्द्राणि शरीराणि स्वशरीरेण सह परिष्वजन्ति = समालिङ्गन्ति । ततश्चेयमद्यास्माकं गेहे स्वयमागता, मेघजलेन क्लिन्नदेहा च मामालिङ्गितवती, ततश्च सर्वोऽप्ययमनुग्रहो दुर्दिनस्येति नोपालम्भयोग्योऽयमिति तत्त्वम् ।

अत्राप्रस्तुतप्रशंसाऽलङ्कारः । इन्द्रवज्रा च्छन्दः ॥ ४९ ॥

स्वगृहस्य भित्तयो जीर्णाः । वृष्टेश्चाधिक्यमित्यत्रावस्थानमसम्भवीति भवनान्तःप्रवेशं प्रस्तुवन् कथयति चारुदत्तः—स्तम्भेषु–इति । प्रिये वसन्तसेने ! प्रचलितो वेदीनां = परिष्कृतभूमिभागानां सञ्चयस्य = समुदायस्यान्तः = पर्यन्तभागो यस्य तदेतद्वितानं, शीर्णत्वात् = जीर्णप्रायत्वात् स्तम्भेषु कथमपि धार्यते । कदाचिद् वृष्टेराधिक्यादस्य निपातो भवेत् । अपि च—एषा चित्रसहिता भित्तिरपि स्फुटितसुधाद्रवानुलेपात् = सर्वोऽपि सुधायाः संलेपभागः समन्तात् परिस्फुटितः । सलिलस्य = जलस्य भरेण = आधिक्यात् स क्लिन्ना = आर्द्रा सञ्जाता । अतो-

के लिए ) घर आई हुई रमणियों के मेघों के जल से भीगे शरीर को अपने शरीर से सटाकर आलिङ्गन करते हैं । ( आज 'दुर्दिन' की कृपा से मुझे यह सौभाग्य मिला है अतः इसे उपालम्भ मत दो ! ।" ॥४९॥

प्रिये वसन्तसेने !

परिष्कृत भूमि भागों के हिलने से जर्जरता के कारण यह छत जैसे-तैसे खम्भों पर रुकी हुई है; और यह चित्रित भीत, फूट जाने के कारण—कलई धुलने से जल से भीग गई है । ( अतः यहाँ बैठना ठीक नहीं—अन्दर चलें । )" ॥५०॥

( ऊर्ध्वमवलोक्य ) अये इन्द्रधनुः; प्रिये ! पश्य पश्य—

विद्युज्जिह्वेनेदं महेन्द्रचापोच्छ्रितायतभुजेन ।
जलधरविवृद्धहनुना विजृम्भितमिवान्तरिक्षेण ॥५१॥

तदेहि, अभ्यन्तरमेव प्रविशावः ( इत्युत्थाय परिक्रामति )

तालीषु तारं, विटपेषु मन्द्रं, शिलासु रुक्षं, सलिलेषु चण्डम् ।

---

ऽत्रावस्थानमनुचितमिति भावः । प्रहर्षिणी च्छन्दः । तल्लक्षणञ्च यथा—

"म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् ।" इति ॥ ५० ॥

आकाशे शक्रचापमवलोक्याह चारुदत्तः—विद्युदिति । विद्युद् रूपा जिह्वा यस्य, महेन्द्रचाप, एवायतो = विस्तृतो भुजो यस्य, जलधर एव विशेषरूपेण वृद्धः = समेधमानो हनुः = चिबुकं यस्य, तथाविधेनान्तरीक्षेणाद्य विजृम्भितम् = अन्तरीक्षमिदानीं विकासं भजमानमिवाभाति ।

अत्र रात्राविन्द्रधनुषोऽसम्भवात् वर्णनस्यानौचित्यं तु कथञ्चिन्निरङ्कुशत्वात् समाधेयम् । अथवा—सायंकाले एवं धनुषः स्थितिः कथञ्चित् सम्भाव्यते ।

अत्र समासोक्तिरलङ्कारः । आर्या च्छन्दः ॥ ५१ ॥

गृहान्तःप्रविशन् चारुदत्तो वृष्टेः स्वरूपं वर्णयति—तालीषु—इति । अहो ! जलस्य धाराः तालीषु = ताडी पादपेषु तारस्वरेण विटपेषु = वृक्षाणां शाखासु मन्द्रध्वनिना, शिलासु च रुक्षस्वरेण, सलिलेषु चण्डस्वरेण तालानुसारेण = तालानुरूपम्; संगीतार्थं सुसज्जिता वीणा इव निपतन्ति । वृष्टेः स्वाभाविकीं सुषमां

---

( आकाश की ओर देखकर )

"यह आकाश, विद्युत् रूपी, जिह्वा से, इन्द्र धनुष रूपी हाथ उठाकर, मेघरूपी लम्बी ठोड़ी करके मानों जँभाई ले रहा है ।" ॥५१॥

इसलिए आओ ! अन्दर चलें !

[ उठकर घूमता है । ]

"ये जलधारायें—ताड़ वृक्षों पर उच्च स्वर से, (साधारण) पादपों पर गम्भीर स्वर से, शिलाओं पर रूखा तथा जल में कठोर शब्द कर गिरती हुई—सङ्गीत-

संगीतवीणा इव ताड्यमानास्तालानुसारेण पतन्ति धाराः ॥५२॥

( इति निष्क्रान्ताः सर्वे )

## दुर्दिनो नाम पञ्चमोऽङ्कः ।

---

सूचयतीदं पद्यम् । यथा—संगीत-समये सङ्गीतज्ञानां सङ्गीतस्वरं वीक्ष्य मन्द्र-मध्यतारस्वरेण वीणा वाद्यते, लयानुरूपञ्च ध्वनिविस्तारादिकं भवति, तथैवेयं वृष्टिरपि यादृशो वस्तूनामाधारः, तादृशमेव ध्वनिमातनोति । तालीपत्राणि तार-स्वरोचितानि, एवमेवान्योऽपि पदार्थसार्थः । स्वानुरूपध्वनिमाचरति । क्रमेण वृष्टेराधिक्यं सूच्यते । अत्र किमपि वैशिष्ट्यं स्थापितं कविना ॥

उपमा । उपजातिः ॥ ५२ ॥

( इति सर्वे रङ्गस्थानान्निष्क्रान्ताः )

इति मृच्छकटिकस्य "श्रीप्रियम्वदा" ख्यटीकायां
पञ्चमाङ्कः सम्पूर्णतां गतः ।

---

वीणा की भाँति 'लय' के अनुसार गिर रही हैं । ( जिस प्रकार वीणा तार, मन्द, मृदु आदि स्वरों से बजाई जाती है वैसे ही, प्रतीत होता है कि मानों ये जलधाराएँ भी 'ताल' के अनुसार ही गिर रही हों । )" ॥५२॥

[ सब चले जाते हैं । ]

"श्रीप्रियम्वदा"—टीकालङ्कृत "मृच्छकटिक"
के "दुर्दिन" नामक पञ्चम अङ्क का
भाषानुवाद समाप्त ॥

———

## षष्ठोऽङ्कः

( ततः प्रविशति चेटी )

चेटी—कधं अज्ज वि अज्जआ ण विवुज्झदि ?। भोदु, पविसिअ पडिबोधइस्सं। [ कथमद्याप्यार्या न विबुध्यते ?। भवतु, प्रविश्य प्रतिबोधयिष्यामि। ] ( इति नाट्येन परिक्रामति )

( ततः प्रविशत्याच्छादितशरीरा प्रसुप्ता वसन्तसेना )

चेटी—( निरूप्य ) उत्थेदु उत्थेदु अज्जआ। पभादं संवुत्तं। [ उत्तिष्ठत्तिष्ठत्वार्या। प्रभातं संवृत्तम्। ]

वसन्तसेना—( प्रतिबुध्य ) कधं रत्ति ज्जेव्व पभादं संवुत्तं ?। [ कथं रात्रिरेव प्रभातं संवृत्तम् ?। ]

चेटी—अम्हाणं एसो पभादो। अज्जआए उण रत्ति ज्जेव्व।

---

प्रसुप्तां वसन्तसेनां प्रतिबोधयितुं चेटी प्रविश्य कथयति—कधमिति। किं कारणम् ? आर्या वसन्तसेना अधुनापि निद्रां न त्यजति ? आस्तां तर्हि गृहाभ्यन्तरे प्रविश्याहमेव बोधयिष्यामि।

"उत्तिष्ठतु भवती" त्याकर्ण्य चेट्या वचनं वसन्तसेना साश्चर्यमाह—कधमिति। रात्रिरेव प्रभातं संजातम् ? अये, इदानीं तु रात्रिरेव वर्तते। किमु, अस्मिन् गेहे रात्रिरेव "प्रभात"-शब्देनोच्यते ?

---

[ तदनन्तर "चेटी" प्रवेश करती है। ]

चेटी—क्या 'आर्या' ( "वसन्तसेना" ) अब भी नहीं उठीं ? अस्तु; जाकर जगाती हूँ।

( घूमने का अभिनय करती है। )

[ तदनन्तर कपड़ा ओढ़कर सोई हुई "वसन्तसेना" का प्रवेश होता है। ]

चेटी—( देखकर ) आर्ये ! उठिये ! उठिये !

वसन्तसेना—( जागकर ) क्या रात्रि ही प्रभात हो गई ?

[ अस्माकमेष प्रभातः । आर्यायाः पुना रात्रिरेव । ]

वसन्तसेना—हञ्जे ! कहिं उण तुम्हाणं जूदिअरो ? । [ चेटि ! कुतः पुनर्युष्माकं द्यूतकरः ? । ]

चेटी—अज्जए ! वड्ढमाणअं समादिसिअ पुप्फकरंडअं जिण्णुज्जाणं गदो अज्जचारुदत्तो । [ आर्ये ! वर्धमानकं समादिश्य पुष्पकरण्डकं जीर्णोद्यानं गत आर्यचारुदत्तः । ]

वसन्तसेना—किं समादिसिअ ? । [ किं समादिश्य ? । ]

चेटी—जोएहि रात्तीए पवहणं, वसन्तसेना गच्छदु त्ति । [ योजय

---

चेटी समुत्तरति—अम्हाणमिति । अस्माकं तु प्रभातं सञ्जातम् । अस्माकं गृहे सर्वोऽपि जनः ब्राह्ममुहूर्ते निद्रां त्यजति । आर्यायाः परं रात्रौ जनानां गतागतप्रसंगेन जागरणं भवति, कथंकथमपि प्रातः काले एव गतेषु मित्रेषु निद्रा लभ्यते । जागरणं प्रभाते, शयनञ्च रात्रौ, ततश्च भवत्याः कृते तु रात्रिरेवेति भवती अपि सर्वां रात्रीं वार्तालापेनैवात्यवाहयदिति शयनस्यायमेवावसरो लब्धः, इति परमार्थः । कामिभिर्जाग्रद्भिरेव निशातिवाह्यते, इति तु निष्कर्षः । एतेनास्याश्चेट्याश्चातुर्यं द्योत्यते ।

---

चेटी—हमारा तो यह "प्रभात" है किन्तु आपकी रात्रि❀ ही है ।

वसन्तसेना—हला ! परन्तु तुम्हारे "द्यूतकर" कहाँ हैं ?

चेटी—आर्ये ! "वर्धमानक" को आदेश देकर "आर्य चारुदत्त" "पुष्प करण्डक" नामक जीर्णोद्यान में गये हैं ।

वसन्तसेना—क्या आदेश देकर ? ( गये हैं । )

चेटी—"रात वाला रथ जोड़कर "वसन्तसेना" को ले आना" ( यह

---

❀ "चेटी" का यह कथन बड़ा ही "विदग्धता-पूर्ण" है । "आपकी तो यह रात्रि ही है" में एक रहस्य सन्निहित है । वह यह कि—"आपका मित्रों के साथ वार्तालाप करते हुए ही रात्रि का बहुत सा समय बीत जाता है । नाचते-गाते ही रात्रि व्यतीत हो जाती है । प्रातःकाल आपकी आँखें झपने लगती हैं और होते-होते निद्रा आ जाती है । इस प्रकार आपके लिए "दिन" "रात" है और "रात" "दिन" ।

-रात्रौ प्रवहणम् , वसन्तसेना गच्छत्विति ! ]

वसन्तसेना—हञ्जे ! कहिं मए गंतव्वं ? । [ चेटि ! कुत्र मया गन्तव्यम् ? । ]

चेटी—अज्जए ! जहिं चारुदत्तो । [ आर्ये ! यत्र चारुदत्तः । ]

वसन्तसेना—( चेटीं परिष्वज्य ) हञ्जे ! सुट्ठु ण णिज्झाइदो रत्तीए, ता अज्ज पच्चक्खं पेक्खिस्सं । हञ्जे ! किं पविट्ठा अहं इह अब्भंतर-चदुस्सालअं ? । [ चेटि ! सुष्ठु न निध्यातो रात्रौ, तदद्य प्रत्यक्षं प्रेक्षिष्ये । चेटि ! किं प्रविष्टाहमिहाभ्यन्तरचतुःशालकम् ? । ]

चेटी—ण केवलं अब्भंतरचदुस्सालअं, सव्वजणस्स वि हिअअं पविट्ठा । [ न केवलमभ्यन्तरचतुःशालकम् , सर्वजनस्यापि हृदयं प्रविष्टा । ]

---

चेटीं समालिङ्गय, हर्षोत्फुल्लनयना वसन्तसेना प्राह—हञ्जे, इति । रात्रौ मया सम्यङ् न दृष्टश्चारुदत्तः, इदानीं यथार्थरूपेण प्रेक्षिष्ये । किमहं चतुःशालाया अभ्यन्तरं प्रविष्टा ? वेश्यात्वान्ममात्र प्रवेशो दुर्लभ एवासीदिति भावः ।

चेटी वैदग्ध्येनोत्तरयति—ण केवलमिति । केवलं चतुःशालायामेव न प्रविष्टा भवती, प्रत्युत सर्वेषामत्रत्यानां हृदयेषु चापि सन्निविष्टा । सर्वेऽपि भवत्या सह प्रीत्यतीशयं मन्यन्ते, इत्यर्थः ।

---

आदेश है । )

वसन्तसेना—सखि ! मुझे कहाँ जाना है ?

चेटी—आर्ये जहाँ "चारुदत्त" हैं ।

वसन्तसेना—( "चेटी" का आलिङ्गन कर ) सखि ! रात्रि में मैंने उन्हें भलीभाँति नहीं देखा था अतः आज प्रत्यक्षरूपेण देखूँगी । हला ! क्या मैं अन्दर के प्रकोष्ठ में प्रविष्ट हो गई हूँ ? ( वेश्या होने के नाते मेरा यहाँ प्रवेश कठिन ही था । )

चेटी—केवल अन्दर के प्रकोष्ठ में ही नहीं प्रत्युत ( यहाँ के ) सभी प्राणियों के मन में समा गई हैं ।

वसन्तसेना—अवि संतप्पदि चारुदत्तस्स परिअणो ? । [ अपि संतप्यते चारुदत्तस्य परिजनः ? । ]

चेटी—संतप्पिस्सदि । [ संतप्स्यति । ]

वसन्तसेना—कदा ? । [ कदा ? । ]

चेटी—जदो अज्जआ गमिस्सदि । [ यदार्या गमिष्यति । ]

वसन्तसेना—तदो मए पढमं संतप्पिदव्वं । ( सानुनयम् ) हञ्जे ! गेण्ह एदं रअणावलिं । मम बहिणीआए अज्जाधूदाए गदुअ समप्पेहि । भणिदव्वं च—'अहं सिरिचारुदत्तस्स गुणणिज्जिदा दासी, तदा तुम्हाणं पि । ता एसा तुह ज्जेव्व कंठाहरणं होदु रअणावली' । [ तदा मया प्रथमं संतप्तव्यम् । चेटि ! गृहाणैतां रत्नावलीम् । मम भगिन्यै आर्याधूतायै गत्वा समर्पय । वक्तव्यं च—'अहं श्रीचारुदत्तस्य गुणनिर्जिता दासी, तदा युष्माकमपि । तदेषा तवैव कण्ठाभरणं भवतु रत्नावली' । ]

---

वसन्तसेना–प्रश्नानन्तरं श्रीचारुदत्तस्य परिजनो भवत्या गमनानन्तरं सन्तप्तो भविष्यतीति निशम्य प्राह सा–तदो·इति । ततो मया सर्वेभ्यः प्रथमं सन्तप्तव्यम् = अहमेव पूर्वं गमिष्यामि, मयैव च सन्तापोऽनुभवितव्यः, एवंविधस्य परिजनस्य विरहेण सन्तापस्यावश्यम्भावित्वात्, इति भावः ।

---

वसन्तसेना—(मेरे यहाँ रहने से) क्या "चारुदत्त" का परिवार दुखी है ?

चेटी—दुखी होगा ।

वसन्तसेना—कब ?

चेटी—जब आप चली जायँगी ।

वसन्तसेना—तब तो मुझे ही सर्वप्रथम सन्तप्त होना है ( क्योंकि ऐसे गुणवान् परिवार से मैं वियुक्त हो जाऊँगी । ) ( सविनय ) सखि ! इस 'रत्नावली' को लो और जाकर मेरी बहिन आर्या "धूता" को दे दो । और कहना कि—"मैं "श्री चारुदत्त" जी के गुणों से जीती हुई जैसी दासी हूँ वैसी आपकी भी । अतः यह 'रत्नावली' आपके ही कण्ठ को सुशोभित करे ।"

चेटी--अज्जए ! कुपिस्सदि चारुदत्तो अज्जाए दाव। [ आर्ये! कुपिष्यति चारुदत्त आर्यायै तावत्। ]

वसन्तसेना—गच्छ; ण कुपिस्सदि। [ गच्छ; न कुपिष्यति। ]

चेटी--( गृहीत्वा ) जं आणवेदि। ( इति निष्क्रम्य, पुनः प्रविशति ) अज्जए ! भणादि अज्जा धूदा—'अज्जउत्तेण तुम्हाणं पसादीकिदा; ण जुत्तं मम एदं गेण्हिदुं। अज्जउत्तो ज्जेव्व मम आहरणविसेसो त्ति जाणादु भोदी'। [ यदाज्ञापयति। आर्ये! भणत्यार्या धूता—आर्यपुत्रेण युष्माकं प्रसादीकृता; न युक्तं ममैतां ग्रहीतुम्। आर्यपुत्र एव ममाभरणविशेष इति जानातु भवती। ]

( ततः प्रविशति दारकं गृहीत्वा रदनिका )

रदनिका—एहि वच्छ ! सअडिआए कीलम्ह। [ एहि वत्स! शकटिकया क्रीडावः। ]

दारकः—( सकरुणम् ) रदणिए ! किं मम एदाए मट्टिआसअडिआए ?। तं ज्जेव सोवण्णसअडिअं देहि। [ रदनिके ! किं ममैतया मृत्तिकाशकटिकया ?। तामेव सौवर्णशकटिकां देहि। ]

---

चेटी—आर्ये ! इस प्रकार "आर्य चारुदत्त" "आर्या" ( "धूता" ) पर क्रोध करेंगे।

वसन्तसेना--जा, क्रोध नहीं करेंगे।

चेटी—(लेकर) जो आज्ञा ! (कहकर चली जाती है और पुनः प्रवेश कर) आर्ये ! "आर्या धूता" कहती हैं कि—"इसे 'आर्यपुत्र' ने आपको समर्पित की है अतः मुझे इसे लेना उचित नहीं है। और आप यह समझें कि—"आर्यपुत्र ही मेरे "सब आभूषणों के आभूषण" हैं"।

[ तदनन्तर बच्चे को लेकर "रदनिका" प्रवेश करती है। ]

रदनिका—लल्ला ! आओ ! गाड़ी से खेलेंगे।

दारक--( रोता हुआ ) मुझे इस "मिट्टी की गाड़ी" से क्या प्रयोजन ! मुझे तो वही "सोने की गाड़ी" दो।

रदनिका—( सनिर्वेदं निःश्वस्य ) जाद ! कुदो अम्हाणं सुवण्णववहारो ? । तादस्स पुणो वि रिद्धीए सुवण्णसअडिआए कीलिस्ससि । ता जाव विणोदेमि । णं अज्जआवसंतसेणाए समीवं उवसप्पिस्सं । ( उपसृत्य ) अज्जए ! पणमामि । [ जात ! कुतोऽस्माकं सुवर्णव्यवहारः ? । तातस्य पुनरपि ऋद्ध्या सुवर्णशकटिकया क्रीडिष्यसि । तद्यावद्विनोदयाम्येनम् । आर्यावसन्तसेनायाः समीपमुपसर्पिष्यामि । आर्ये ! प्रणमामि । ]

वसन्तसेना—रदणिए ! साअदं दे; कस्स उण अअं दारओ ? । अणलंकिदसरीरो वि चंदमुहो आणंदेदि मम हिअअं । [ रदनिके ! स्वागतं ते; कस्य पुनरयं दारकः ? । अनलंकृतशरीरोऽपि चन्द्रमुख आनन्दयति मम हृदयम् । ]

रदनिका—एसो खु अज्जचारुदत्तस्स पुत्तो रोहसेणो णाम [ एष खल्वार्यचारुदत्तस्य पुत्रो रोहसेनो नाम । ]

वसन्तसेना—( बाहू प्रसार्य ) एहि मे पुत्तअ ! आलिंग । ( इत्यङ्क उपवेश्य ) अणुकिदं अणेण पिदुणो रूवं । [ एहि मे पुत्रक ! आलिङ्ग । अनुकृतमनेन पितू रूपम् । ]

---

रदनिका—( उदास भाव से दीर्घ निःश्वास छोड़ कर )

भैय्या ! अब हमारे यहाँ सोना कहाँ से आयगा ? पिता जी के पुनः समृद्ध होने पर पुनः सोने की गाड़ी से खेलोगे । ( स्वगत ) इसलिए मैं इसका मनोविनोद करती हूँ । "आर्या वसन्तसेना" के पास चलूँगी । ( समीप जाकर ) आर्ये ! प्रणाम करती हूँ ।

वसन्तसेना—रदनिके ! तुम्हारा स्वागत है । यह किसका बच्चा है ? शरीर पर बिना कोई आभूषण पहिने हुए भी जिसका चाँद-सा मुखड़ा मेरे हृदय को आनन्दित कर रहा है ।

रदनिका—यह "आर्य चारुदत्त" के पुत्र "रोहसेन" हैं ।

वसन्तसेना—( हाथ फैलाकर ) बेटे ! आओ ! मुझसे आलिङ्गन करो । ( गोदी में बैठाकर ) यह तो बिल्कुल अपने पिताजीकी ही आकृति के समान है ।

रदनिका—ण केवलं रूवं, सीलं पि तक्केमि। एदिणा अज्जचारुदत्तो अत्ताणअं विणोदेदि। [न केवलं रूपम्, शीलमपि तर्कयामि। एतेनार्यचारुदत्त आत्मानं विनोदयति।]

वसन्तसेना—अध किंणिमित्तं एसो रोअदि?। [अथ किंनिमित्तमेष रोदिति?।]

रदनिका—एदिणा पडिवेसिअगहवइदारअकेरिआए सुवण्णसअडिआए कीलिदं। तेण अ सा णीदा। तदो उण तं मग्गंतस्स मए इअं मट्टिआसअडिआ कदुअ दिण्णा। तदो भणादि—'रदणिए! किं मम एदाए मट्टिआसअडिआए?। तं ज्जेव्व सोवण्णसअडिअं देहि' त्ति। [एतेन प्रतिवेशिकगृहपतिदारकस्य सुवर्णशकटिकया क्रीडितम्। तेन च सा नीता। ततः पुनस्तां याचतो मयेयं मृत्तिकाशकटिका कृत्वा दत्ता। ततो भणति—'रदनिके! किं ममैतया मृत्तिकाशकटिकया?। तामेव सौवर्णशकटिकां देहि' इति।]

वसन्तसेना—हद्धी हद्धी; अअं पि णाम परसंपत्तीए संतप्पदि। भअवं कअंत! पोक्खरवत्तपडिदजलबिंदुसरिसेहिं कीलसि तुमं पुरिसभाअधेएहिं। (इति साश्रा) जाद! मा रोद। सुवण्णसअडिआए

---

बालकोऽपि परसम्पत्त्या खिन्न इति साश्चर्यमाह वसन्तसेना—भअवमिति। भगवन्, कृतान्त! पुष्कराणां=कमलानाम्, पत्रे पतितैः जलविन्दुसदृशैः पुरुषाणां

---

रदनिका—"केवल रूप ही नहीं प्रत्युत स्वभाव भी वैसा ही है" ऐसा मैं समझती हूँ। इनसे "आर्य चारुदत्त" अपना मन बहलाया करते हैं।

वसन्तसेना—तो यह रो क्यों रहा है?

रदनिका—यह एक पड़ोसी के बालक की सोने की गाड़ी से खेल रहे थे। वह अपनी गाड़ी ले गया। तब फिर माँगने पर मैंने इन्हें, यह "मिट्टी की गाड़ी" दे दी। तब से यह कह रहे हैं कि—"रदनिके! मुझे इस "मिट्टी की गाड़ी" से क्या प्रयोजन? मुझे तो वही सोने की दो!"

वसन्तसेना—हा! दुःख है! यह बालक भी दूसरे की सम्पत्ति से खिन्न

कीलिस्ससि । [ हा धिक् हा धिक्; अयमपि नाम परसंपत्त्या संतप्यते । भगवन् कृतान्त ! पुष्करपत्रपतितजलबिन्दुसदृशैः क्रीडसि त्वं पुरुषभागधेयैः । जात ! मा रुदिहि । सौवर्णशकटिकया क्रीडिष्यसि । ]

दारकः—रदणिए ! का एसा ? । [ रदनिके ! कैषा ? । ]

वसन्तसेना—दे पिदुणो गुणणिज्जिदा दासी । [ ते पितुर्गुणनिर्जिता दासी । ]

रदनिका—जाद ! अज्जआ दे जणणी भोदि । [ जात ! आर्या ते जननी भवति । ]

दारकः—रदणिए ! अलिअं तुमं भणासि; जइ अम्हाणं अज्जआ जणणी, ता कीस अलंकिदा ? । [ रदनिके ! अलीकं त्वं भणसि; यद्यस्माकमार्या जननी, तत्किमर्थमलंकृता ? । ]

---

भाग्यैः सह कथं क्रीडसि ? को जानाति-कस्य जनस्य भाग्यं कदा कीदृशं भवति ? अयमार्यश्चारुदत्तः प्रथमं धनपतिरासीदिदानीञ्च निर्धनः समजनीति भाग्यविपर्ययः केवलं विधातुः क्रीडा-कौतुकमेव प्रदर्शयतीति भावः ।

"इयमार्या तव जननीति" रदनिका-वाक्यमाकर्ण्याह रोहसेनः—रदणिए ! इति । रदनिके ! त्वमलीकं = मिथ्या वदसि यदीयं मे माता तर्हि कथमलङ्कारैर-

---

है ? दैव ! कमल-पत्र पर पड़े हुए जल की बूँदों के समान ( चञ्चल ) मनुष्य के भाग्य के साथ क्यों खेल करते हो ? ( कभी यह "चारुदत्त" धनी थे और आज एकदम निर्धन ! यह तुम्हारा खेल नहीं तो और क्या है ? )

( आँखों में आँसू भर कर ) मुन्ने ! रोओ मत ! सोने ही की गाड़ी से खेलोगे ।

दारक—रदनिके ! यह कौन है ?

वसन्तसेना—तेरे पिता जी के गुणों से जीती हुई उनकी दासी हूँ ।

रदनिका—चाँद ! यह तुम्हारी माता लगती हैं ।

दारक—रदनिके ! तुम झूठ बोलती हो । यदि मेरी माता हैं तो फिर अलङ्कृत क्यों है ? ( मेरी माता के पास तो आभूषण नहीं हैं । )

वसन्तसेना—जाद ! मुद्धेण मुहेण अदिकरुणं मंतेसि। ( नाट्येनाभरणान्यवतार्य रुदती ) एसा दाणिं दे जणणी संवुत्ता; ता गेण्ह एदं अलंकारअं, सोवण्णसअडिअं घडावेहि। [ जात ! मुग्धेन मुखेनातिकरुणं मन्त्रयसि। एषेदानीं ते जननी संवृत्ता; तद्‌गृहाणैतमलंकारम्, सौवर्णशकटिकां कारय। ]

दारकः—अवेहि, ण गेण्हिस्सं; रोदसि तुमं। [ अपेहि, न ग्रहिष्यामि; रोदिषि त्वम्। ]

वसन्तसेना—( अश्रूणि प्रमृज्य ) जाद ण रोदिस्सं। गच्छ, कील। ( अलंकारैर्मृच्छकटिकां पूरयित्वा ) जाद ! कारेहि सोवण्णसअडिअं

---

लङ्कृता ? मम मातुः समीपे नास्ति कोऽप्यलङ्कारः।

वसन्तसेना स्निग्धाश्रुभिः सहिता स्वाङ्गेभ्योऽलङ्कारानवतार्य बालकाय दित्सति ( दातुमिच्छति ) परमसौ रोहसेनस्तथाविधां तामाह—अवेहि-इति। त्वं तु रोदिषि, नाहं ग्रहीष्यामि तवालङ्कारान् !

वसन्तसेना स्वाश्रुपरिमार्जनं विधायालङ्कारैर्मृच्छकटिकाम् = मृत्तिकानिर्मितां शकटिकामापूर्य कथयति—जादेति। वत्स ! एभिरलङ्कारैः सुवर्णशकटिकां निर्मापय। अत्रेदं बोध्यम्—कविना प्रकरणस्यास्य नामकरणमेतैरेवालङ्कारैर्मृदः शकटिका परिपूर्णेति कृत्वा कृतम्। वसन्तसेना हि प्रकरणस्यास्याभूषणतां गतेति तत्त्वम्। "नाम कार्यं नाटकस्य गर्भितार्थप्रकाशकम्" इति साहित्यकृतां सिद्धान्तानुसारमेतन्नाम कृतमिति।

---

वसन्तसेना—वत्स ! इस सीधे साधे मुख से बहुत ही करुणापूर्ण बातें कह रहा है।

( अभिनय से आभूषण उतार कर रोती हुई )

अब मैं तेरी "माता" बन गई। इसलिए इन आभूषणों को ले और "सोने की गाड़ी" गढ़ा ले !

दारक—नहीं, मैं नहीं लूँगा। ( क्योंकि ) तुम रो रही हो।

वसन्तसेना—( आँसू पोंछकर ) बच्चे ! नहीं रोती हूँ। जा ! खेल ! आभू-

[ जात ! न रोदिष्यामि । गच्छ, क्रीड । जात ! कारय सौवर्णशकटिकाम् । ]

( इति दारकमादाय निष्क्रान्ता रदनिका )

( प्रविश्य प्रवहणाधिरूढः )

चेटः—लदणिए लदणिए ! णिवेदेहि अज्जआए वशंतशेणाए—"ओहालिअं पक्खदुआलए शज्जं पवहणं चिट्ठदि'। [ रदनिके रदनिके ! निवेदयार्यायै वसन्तसेनायै—'अपवारितं पक्षद्वारके सज्जं प्रवहणं तिष्ठति' । ]

( प्रविश्य )

रदनिका—अज्जए ! एसो वड्ढमाणओ विण्णवेदि—'पक्खदुआरए सज्जं पवहणं' त्ति [ आर्ये ! एष वर्धमानको विज्ञापयति—'पक्षद्वारे सज्जं प्रवहणम्' इति । ]

वसन्तसेना—हञ्जे चिट्ठदु मुहुत्तअं; जाव अहं अंत्ताणअं पसाधेमि ।

---

चेटः प्रवहणं सुसज्जितमिति सूचयति—लदणिए—इति । रदनिके ! बहिः अपवारितम् = आच्छादितम् प्रवहणं वर्तते, इति वसन्तसेना त्वया सूच्यताम् ।

---

षणों से "मिट्टी की गाड़ी"❀ को भरकर ) दारक ! "सोने की गाड़ी" बनवा ले ।

[ "रदनिका" बच्चे को लेकर चली जाती है । ]

[ रथ पर बैठे हुए प्रवेश कर ]

चेटी—रदनिके ! रदनिके ! "आर्या वसन्तसेना" से निवेदन करना कि—"द्वार पर सजा सजाया बन्द रथ तैयार खड़ा है ।"

( प्रवेश कर )

रदनिका—आर्ये ! यह "वर्धमानक" निवेदन करता है कि—"द्वार पर रथ तैयार खड़ा है ।"

वसन्तसेना—हला ! क्षणभर ठहरो ! तबतक मैं अपना शृङ्गार कर

---

❀ कविवर "शूद्रक" ने अपनी इस कृति का नाम "मृच्छकटिक" रखा है । "अलङ्कारों से मृत्-शकटिका" भरी गई थी इसीलिए यह नाम उचित है । आगे की सारी घटनाएँ इस "मिट्टी की गाड़ी" से ही सम्बन्धित हैं, अत एव इसका यह नामकरण यथार्थ है ।

[ चेटि ! तिष्ठतु मुहूर्तकम् ; यावदहमात्मानं प्रसाधयामि ।

रदनिका—( निष्क्रम्य ) वड्ढमाणआ ! चिट्ठ मुहुत्तअं; जाव अज्जआ अत्ताणअं पसाधेदि । [ वर्धमानक ! तिष्ठ मुहूर्तकम् ; यावदार्यात्मानं प्रसाधयति । ]

चेटः—ही ही भो, मए वि जाणत्थलके विशुमलिदे । ता जाव गेण्हिअ आअच्छामि । एदे णश्शालज्जुकडुआ बइल्ला । भोदु, पवहणेण ज्जेव गदागदिं कलिश्शं । [ ही ही भोः ! मयापि यानास्तरणं विस्मृतम् । तद्यावद्गृहीत्वागच्छामि । एतौ नासिकारज्जुकटुकौ बलीवर्दौ । भवतु, प्रवहणेनैव गतागतिं करिष्यामि । ] ( इति निष्क्रान्तश्चेटः )

वसन्तसेना—हञ्जे ! उवणेहि मे पसाहणं । अत्ताणअं पसाधइस्सं । [ चेटि ! उपनय मे प्रसाधनम् । आत्मानं प्रसाधयिष्यामि । ]

( इति प्रसाधयन्ती स्थिता )

---

कञ्चित्कालं विरम्यात्मानं प्रसाध्यागमिष्यामि, तावदयं वर्धमानकस्तिष्ठतु, इति श्रुत्वा यानास्तरणम् = याने यदास्तीर्य जना उपविशन्ति, तद् वस्त्रं मया परित्यक्तमिति तावदानयामि, इति वर्धमानकः—प्राह-एदे, इति । एतौ बलीवर्दौ = वृषभौ नासा—कटुकौ, नासिकायां मनागपि रज्ज्वाघातं न सहेते । अतिचपलाविति भावः । अतो यानेनैव गच्छामि, सत्त्वरमागमिष्यामि चेति सारः ।

---

लेती हूँ ।

रदनिका—( निकलकर ) वर्धमानक ! क्षणभर ठहर ! जबतक "आर्या" अपना शृङ्गार करती हैं ।

चेट—आश्चर्य है ! मैं भी रथ में बिछाने की गद्दी आदि भूल आया हूँ; तो तबतक मैं उन्हें ले आता हूँ । ये बैल बहुत बिदकने हैं अतः रथ से ही गतागत करूँगा ।

[ "चेट" चला जाता है । ]

वसन्तसेना—हला ! शृङ्गार की पिटारी ले आ । मैं शृङ्गार करूँगी ।

( प्रसाधन करती हुई बैठी रहती है । )

( प्रविश्य प्रवहणाधिरूढः )

स्थावरकश्चेटः—आणत्तम्हि लाअशालअशंठाणेण—'यावलआ ! पवहणं गेण्हिअ पुप्फकलंडअं जिण्णुज्जाणं तुलिदं आअच्छेहि' त्ति। भोदु, तहिं ज्जेव गच्छामि। वहध बइल्ला ! वहध। ( परिक्रम्यावलोक्य च ) कधं गामशअलेहिं लुद्धे मग्गे ?। किं दाणिं एत्थ कलइश्शं ?। ( साटोपम् ) अले ले, ओशलध ओशलध। ( आकर्ण्य ) किं भणाध—'एशे कश्शकेलके पवहणे' त्ति ?। एशे लाअशालअशंठाणकेलके पवहणे त्ति। ता शिग्घं ओशलध। ( अवलोक्य ) कधं एशे अवले शहिअं विअ मं पेक्खिअ शहश ज्जेव जूदपलाइदे विअ जूदिअले ओहालिअ अत्ताणअं अण्णदो अवक्कंते ?। ता को उण एशे ? अधवा किं मम एदिणा ? तुलिदं गमिश्शं। अले ले गामलुआ ! ओशलध ओशलध। ( आकर्ण्य ) किं भणाध—'मुहुत्तअं चिट्ठ, चक्कपलिवट्टिं देहि' त्ति ?। अले ले, लाअशालअशंठाणकेलके हग्गे शूले चक्कपलिवट्टिं दइश्शं ?। अधवा एशे एआई तवश्शी। ता एव्वं कलेमि। एदं पवहणं अज्जचालुदत्तश्श रुक्खवाडिआए पक्खदुआलए थावेमि। ( इति प्रवहणं संस्थाप्य ) एशे म्हि आअदे। [ आज्ञप्तोऽस्मि राजश्यालकसंस्थानेन—'स्थावरक ! प्रवहणं गृहीत्वा पुष्पकरण्डकं जीर्णोद्यानं त्वरितमागच्छ' इति। भवतु,

---

"स्थावरक" नामा शकारस्य सेवकस्तदर्थं प्रवहणमादाय, ग्रामशकटैरवरुद्धं मार्गमालोक्य किंकर्तव्यतां चिन्तयति, तावदेव कश्चिच्छकटवाहकः—एनं दृष्ट्वा दूरतो गतः—तथाविधं तमालोक्य प्राह—कथमिति। यथा द्यूतक्रीडकः सभिकं निरीक्ष्य प्रपलायते तथैवायमपि मां निरीक्ष्य पलायते कोऽयमस्तीति ? ग्रामशाकटिकानां प्रार्थनया चक्रस्य = शकटिकाचक्रस्य परिवृत्तिं कर्तुं स्वकीयं प्रवहणमार्य-

---

[ प्रवेश कर रथ पर बैठा हुआ ]

**स्थावरक चेट—**

मुझे राजा के साले "संस्थानक" ने आज्ञा दी है कि—"स्थावरक ! रथ लेकर "पुष्पकरण्ड" नामक जीर्णोद्यान में शीघ्र आना।" इसलिए अब मैं जाता हूँ।

तत्रैव गच्छामि । वहतं बलीवर्दाः ! वहतम् । कथं ग्रामशकटै रुद्धो मार्गः ? । किमिदानीमत्र करिष्यामि ? । अरे रे, अपसरत अपसरत । किं भणथ—'एतत्कस्य प्रवहणम्' इति ? । एतद्राजश्यालकसंस्थानस्य प्रवहणमिति । तच्छीघ्रमपसरत । कथमेषोऽपरः सभिकमिव मां प्रेक्ष्य सहसैव द्यूतपलायित इव द्यूतकरोऽपवार्यात्मानमन्यतोऽपक्रान्तः ? । तत्कः पुनरेषः ? । अथवा किं ममैतेन ? । त्वरितं गमिष्यामि । अरे रे ग्राम्याः ! अपसरत अपसरत । किं भणथ—'मुहूर्तकं तिष्ठ, चक्रपरिवृत्तिं देहि' इति ? । अरे रे, राजश्यालकसंस्थानस्याहं शूरश्चक्रपरिवृत्तिं दास्यामि ? अथवा एष एकाकी तपस्वी । तदेवं करोमि । एतत्प्रवहणमार्यचारुदत्तस्य वृक्षवाटिकायाः पक्षद्वारके स्थापयामि । एषोऽस्म्यागतः । ] ( इति निष्क्रान्तः )

चेटी—अज्जए ! णेमिसद्दो विअ सुणीअदि । ता आअदो पवहणो ।

---

चारुदत्तस्य वाटिकाद्वारे संस्थापितवान्, वसन्तसेना चार्यचारुदत्तस्य रथोऽयमिति

---

बैलो ! चलो ! ( घूम तथा देखकर ) क्या गाँव की गाड़ियों से मार्ग रुका हुआ है ? अब यहाँ क्या करूँ ? ( अभिमानपूर्वक ) अरे ! हटो ! हटो ! ( सुनकर ) क्या कहते हो कि—"यह किसका रथ है ?" यह राजा के साले "संस्थानक" का है । अतः शीघ्र हट जाओ ! (देख कर) अरे ! जिस प्रकार जुआरी 'सभिक'को देखकर भाग जाते हैं उसी प्रकार यह कौन मुझे देखकर ही अपने को छिपा कर भाग गया ? तो यह कौन है ? अथवा मुझे इससे क्या प्रयोजन ? मैं शीघ्र ही जाऊँगा । अरे ! ग्रामीणो ! हटो ! हटो ! ( सुनकर ) क्या कहते हो कि—"क्षणभर ठहरो । जरा पहिये में सहारा लगा दो" ?

अरे ! राजा के साले "संस्थानक" का रथवाहक होकर मैं पहिये का सहारा लगवाऊँगा ? अथवा, यह बेचारा अकेला है तो मैं सहायता करता हूँ । इस रथ को "आर्य चारुदत्त" की वृक्षवाटिका के द्वार पर खड़ा करता हूँ । ( रथ को खड़ा कर ) अभी आता हूँ । [ चला जाता है । ]

चेटी—आर्ये ! धुरे का सा शब्द सुनाई पड़ता है ( इससे प्रतीत होता है

[ आर्ये ! नेमिशब्द इव श्रूयते । तदागतं प्रवहणम् । ]

वसन्तसेना—हञ्जे ! गच्छ तुवरदि मे हिअअं; ता आदेसेहि पक्खदुआलअं । [ चेटि ! गच्छ, त्वरयति मे हृदयम्; तदादिश पक्षद्वारम् । ]

चेटी—एदु एदु अज्जआ । [ एत्वेत्वार्या । ]

वसन्तसेना—( परिक्रम्य ) हञ्जे ! वीसम तुमं । [ चेटि ! विश्राम्य त्वम् । ]

चेटी—जं अज्जआ आणवेदि । [ यदार्याज्ञापयति । ] ( इति निष्क्रान्ता )

वसन्तसेना—( दक्षिणाक्षिस्पन्दं सूचयित्वा, प्रवहणमधिरुह्य च ) किं ण्णेदं फुरदि दाहिणं लोअणं ? अधवा चारुदत्तस्स ज्जेव दंसणं अणिमित्तं पमज्जइस्सदि । [ किं न्विदं स्फुरति दक्षिणं लोचनम् ? अथवा चारुदत्तस्यैव दर्शनमनिमित्तं प्रमार्जयिष्यति । ]

( प्रविश्य )

स्थावरकश्चेटः—ओशालिदा मए शअडा । ता जाव गच्छामि । ( इति

---

मत्वा समारुढा तदेव यानम् । दक्षिणाक्षिस्पन्दनेन चाशुभनं श्रीचारुदत्तस्य दर्शनेनैव शान्तिमेष्यतीति विचारितवती, इति सर्वस्य प्रसंगस्य सारः ।

---

कि ) रथ आ गया ।

वसन्तसेना—हला ! जाओ ! मेरा हृदय उत्सुक हो रहा है । अतः द्वार का मार्ग वताओ ।

चेटी—आर्या इधर से आइये ।

वसन्तसेना—( घूमकर ) सखि ! तुम अब विश्राम करो !

चेटी—जो आज्ञा !

[ चली जाती है । ]

वसन्तसेना—( दायीं आँख का फड़कना सूचित कर तथा रथ में सवार हो कर ) यह दाहिनी आँख क्यों फड़क रही है ? अथवा, "आर्य चारुदत्त" का दर्शन ही अनिष्ट को दूर कर देगा ।

( प्रवेश कर )

स्थावरक चेट—मैंने गाड़ियाँ हटा दी हैं । अतः अब जाता हूँ । ( अभि-

नाट्येनाधिरुह्य चालयित्वा, स्वगतम् ) भालिके पवहणे । अधवा चक्कपलिवट्टिआए पलिश्शंतश्श भालिके पवहणे पडिभाशेदि । भोदु, गमिश्शं । जाध गोणा ! जाध । [ अपसारिता मया शकटाः । तद्यावद्गच्छामि । भारवत् प्रवहणम् । अथवा चक्रपरिवर्तनेन परिश्रान्तस्य भारवत् प्रवहणं प्रतिभासते । भवतु, गमिष्यामि । यातं गावौ ! यातम् । ]

( नेपथ्ये )

अरे रे दोवारिआ ! अप्पमत्ता सएसु गुम्मट्ठाणेसु होध । एसो अज्ज गोवालदारओ गुत्तिअं भंजिअ गुत्तिवालअं वावादिअ बंधणं भेदिअ परिब्भट्टो अवक्कमदि, ता गेण्हध गेण्हध । [ अरे रे दौवारिकाः ! अप्रमत्ताः स्वेषु स्वेषु गुल्मस्थानेषु भवत । एषोऽद्य गोपालदारको गुप्तिं भङ्क्त्वा गुप्तिपालकं व्यापाद्य बन्धनं भित्वा परिभ्रष्टोऽपक्रामति, तद्गृह्णीत गृह्णीत । ]

---

( नेपथ्ये इति ) "गोपालदारकः आर्यकः" यः खलु राज्ञा पालकेन सिद्धादेशादयमेव राजा भविष्यतीति भीतभीतेन बन्धनागारे निक्षिप्तः, स एवेदानीं बन्धनागारं कथंचित् त्रोटयित्वा, रक्षकञ्च व्यापाद्य निर्गतः । अतो भोः ! गुल्मस्थान रक्षकाः ! सावधानतया एतस्य परिग्रहणे तत्परा भवन्तु" इति ।

गुल्मस्थानञ्च—मनूक्तलक्षणानुसारं द्वयोः, त्रयाणां पञ्चानां वा ग्रामाणामन्तराले सत्स्वभावानां रक्षकाणां स्थानं ( "थाना" हिन्दीभाषायाम् ) कथ्यते । तथा चोक्तं श्रीमनुना—

"द्वयोस्त्रयाणां पञ्चानां मध्ये गुल्ममधिष्ठितम् ।

---

नय से रथ पर चढ़कर चलाता हुआ स्वयं ही ) रथ भारी लगता है । अथवा, पहिये में जोर लगाने के कारण थके हुए मुझको रथ भारी-सा लग रहा है । अच्छा तो अब जाता हूँ । चलो बैलो ! चलो !

( नेपथ्य में )

"अरे दौवारिको ! आप अपने-अपने स्थानों पर सतर्क हो जाएँ ? यह गोपाल-पुत्र ( "आर्यक" ) बन्धनागार को तोड़, पहरेदार को मार तथा हथकड़ी बेड़ियाँ काटकर भाग गया है । अतः पकड़ो ! पकड़ो !

( प्रविश्यापटीपेक्षेण संभ्रान्त एकचरणलग्ननिगडोऽवगुण्ठित
आर्यकः परिक्रामति )

चेटः—( स्वगतम् ) महंते णअलीए शंभमे उप्पण्णे । ता तुलिदं तुलिदं गमिश्शं । [ महान्नगर्यां संभ्रम उत्पन्नः । तत्त्वरितं त्वरितं गमिष्यामि । ]

( इति निष्क्रान्तः )

आर्यकः—

हित्वाहं नरपतिबन्धनापदेश-
　　व्यापत्तिव्यसनमहार्णवं महान्तम् ।
पादाग्रस्थितनिगडैकपाशकर्षी,
　　प्रभ्रष्टो गज इव बन्धनाद्भ्रमामि ॥१॥

---

तथा ग्रामशतानाञ्च कुर्याद्राष्ट्रस्य संग्रहम् ॥" इति ।

आर्यकः प्रविष्टः स्वमनोगतान् भावान् प्रकटयति—हित्वाहमिति । अहं नरपतिबन्धनच्छलेन विशिष्टापत्तिरूपं महान्तं सागरमुत्तीर्य, सम्प्रति एकस्मिन् पादे लौहनिर्मितं निग्रहं—( "बेडी" संज्ञकम् ) कर्षन् बन्धनान्मुक्तो गज-इव परिभ्रमामि । बन्धनं तन्नासीदपि तु महती विपदेवासीत् , सा च मया कथञ्चित् स्वमित्रशर्विलकस्य साहाय्येन समाप्तिं नीता ।

अत्रोपमाऽलङ्कारः । प्रहर्षिणी च्छन्दः । तल्लक्षणञ्च यथा—

---

[ बिना पर्दा हटाये हुए एक पैर में बेड़ी पड़े, मुख ढके
तथा घबराये हुए "आर्यक" का प्रवेश होता है । ]

चेट—( स्वयं ही ) नगर में बहुत बड़ा उपद्रव हो गया है ! इसलिए शीघ्र ही जाता हूँ ।

[ चला जाता है । ]

आर्यक—"मैं राजा ( "पालक" ) की कठोर आज्ञा रूपी विपत्सागर को पारकर एक पैर में पड़ी हुई "बेड़ी" को खींचता हुआ बन्धन से मुक्त हाथी की भाँति घूम रहा हूँ ।" ॥१॥

भोः, अहं खलु सिद्धादेशजनितपरित्रासेन राज्ञा पालकेन घोषादानीय विशसने गूढागारे बन्धनेन बद्धः। तस्माच्च प्रियसुहृच्छर्विलकप्रसादेन बन्धनात् परिभ्रष्टोऽस्मि। ( अश्रूणि विसृज्य )

भाग्यानि मे यदि तदा मम कोऽपराधो ?
यद्बन्यनाग इव संयमितोऽस्मि तेन।
दैवी च सिद्धिरपि लङ्घयितुं न शक्या,
गम्यो नृपो बलवता सह को विरोधः ? ॥२॥

तत्कुत्र गच्छामि मन्दभाग्यः ?। ( विलोक्य ) इदं कस्यापि साधोरना-

---

"म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्।" इति ॥ १ ॥

पुनरपि शोकाकुलितोऽश्रूणि विमुच्य कथयति—भाग्यानि—इति। यदि भाग्यानीदृशान्येव, येषां बलेनाहं नृपो भविष्यामि, तदा मम कोऽपराधः ? तेन राज्ञा पालकेनाहं वनेचरो गज इव निबध्य बन्धनागारे क्षिप्तः। किमु कश्चिद् दैवीं सिद्धिं लङ्घयितुं समर्थः ? नृपश्चासौ समाक्रमणीयः ! हन्त ! बलवता सह विरोधः कथं विधेयो मया ! मयेदानीं किं कर्तव्यमिति नैव जानामि ! अत्रोपमाऽर्थान्तरन्यासयोः परस्परनिरपेक्षत्वात् संसृष्टिः। वसन्ततिलका च छन्दः ॥ २ ॥

---

अरे ! मुझे सिद्ध के आदेश के भय से डरे हुए राजा "पालक" ने घोष से पकड़ कर भयङ्कर काल कोठरी में बेड़ी बाँधकर डाल दिया। वहाँ से प्रिय मित्र "शर्विलक" की कृपा से छूट गया हूँ। ( आँसू गिराकर )

यदि मेरे भाग्य ही ऐसे हैं ( कि मैं राजा बनूँगा ) तो इसमें मेरा क्या अपराध है जिससे कि मुझे राजा ( "पालक" ) ने जंगली हाथी की भाँति बाँधकर डाल दिया है ? विधाता की लिखी हुई बातें झूठी नही होतीं। और यह राजा बलवान् है इसके साथ विरोध कैसे सम्भव है ? (इन सब बातों से मैं अपना कोई मत स्थिर नहीं कर पा रहा हूँ। क्या करूँ ? )" ॥२॥

तो हतभाग्य मैं कहाँ जाऊँ ? ( देखकर ) यह किसी सज्जन का खुले हुए

वृतपक्षद्वारं गेहम् ।

**इदं गृहं भिन्नमदत्तदण्डो, विशीर्णसंधिश्च महाकपाटः ।**
**ध्रुवं कुटुम्बी व्यसनाभिभूतां, दशां प्रपन्नो मम तुल्यभाग्यः ॥३॥**

तदत्र तावत् प्रविश्य तिष्ठामि ।

( नेपथ्ये )

जाध गोणा ! जाध । [ यातं गावौ, ! यातम् । ]

आर्यकः—( आकर्ण्य ) अये, प्रवहणमित एवाभिवर्तते ।

**भवेद्गोष्ठीयानं न च विषमशीलैरधिगतं,**
**वधूसंयानं वा तदभिगमनोपस्थितमिदम् ।**

---

सम्मुखे चारुदत्तस्य गेहमवलोक्य तत्रैव प्रविविक्षुः सन् वदति—इदं गृहमिति । इदमनावृतद्वारं कस्यापि गृहम् भिन्नमिवास्ते । कपाटावपि महान्तौ, परं विशीर्णसन्धी वर्तेते । मन्ये कोऽपि कुटुम्बो, मादृश इव व्यसनाभिभूतः, इमां दशां प्रपन्नः, अस्यैव मत्तुल्यभाग्यस्य गृहमिदं मम त्राणायाऽधुनोपयुक्तमिति भावः ।

अत्रोपमालङ्कारः । उत्प्रेक्षा च । उपेन्द्रवज्रा च्छन्दः ॥ ३ ॥

नेपथ्ये वर्द्धमानको रथमादाय वृषौ चालयन् रथं वाहयति, तस्य ध्वनिमाकर्ण्यार्यकः रथोऽपीत एवागच्छतीति विचारयति—भवेदिति । कदाचिद् विषमशीलैः

---

द्वारवाला घर है ।

"यह घर टूटा हुआ है, इसमें मूसला भी नहीं लगा है, इसके बड़े-बड़े किवाड़ों में दराजें खुली हुई हैं । मैं समझता हूँ कि कोई मेरे समान भाग्यवाला विपत्ति का मारा व्यक्ति है ( जिसका यह घर है । मेरे भाग्य के समान होने के कारण इस घर में मुझे आश्रय मिल सकेगा । )" ॥३॥

इसलिये मैं इसमें घुसता हूँ ।

आर्यक—( सुनकर ) अरे रथ इधर ही आ रहा है ।

"कदाचित् यह रथ दुश्चरित्र मनुष्यों से सेवित न हो ? कहीं किसी नव-वधू की सवारी न हो ? ( यह भी उचित नहीं क्योंकि बहुत से मनुष्यों के साथ मैं

बहिर्नेतव्यं वा प्रवरजनयोग्यं विधिवशा-
द्विविक्तत्वाच्छून्यं मम खलु भवेद्दैवविहितम् ॥४॥

( ततः प्रवहणेन सह प्रविश्य )

वर्धमानकश्चेटः—हीमाणहे, आणीदे मए जाणत्थलके। लदणिए ! णिवेदेहि अज्जआए वशंतशेणाए—'अवत्थिदे शज्जे पवहणे अहिलुहिअ पुप्फकलंडअं जिण्णुज्जाणं गच्छदु अज्जआ'। [ आश्चर्यम्, आनीतं मया यानास्तरणम्। रदनिके ! निवेदयार्यायै वसन्तसेनायै—'अवस्थितं सज्जं प्रवहणमधिरुह्य पुष्पकरण्डकं जीर्णोद्यानं गच्छत्वार्या'। ]

आर्यकः—( आकर्ण्य ) गणिकाप्रवहणमिदम्। बहिर्यानं च। भवतु,

---

=दुश्चरित्रैर्जनैरधिष्ठितमिदं गोष्ठी यानं सभा-समुपस्थापनयोग्यं प्रवहणमिदं भवेत् ? यद्येवम् ? तदा ममानुपयुक्तमिति भावः ? पुनराशङ्कते—अथवा कस्याश्चिद् बध्वाः, तस्या अभिगमनोचितं यानं स्यात् ? यदि काचिद् नववधूर्याति, तदा तया सह बहूनां जनानां सम्भवान्ममारोहणमसम्भवमेव ! अथवा—प्रवरजनानां कृते योग्यमिदं बहिर्नेतव्यं स्यात् ? विधि-वशाद्=भाग्यवशाद्दैवप्रेरितमिव कदाचित् विविक्तं =विजनं, शून्यं भवेत् ? तदा तु ममारोहणं सम्भवति। एवञ्च ममास्मात् स्थानात् पलायनं सम्भविष्यतीति भावः।

अत्र सन्देहालङ्कारः। तस्य लक्षणञ्च यथा—

"सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः॥" इति। शिखरिणी च्छन्दः ॥४॥

---

बैठ नहीं सकता ) या सज्जनों के बाहर ले जाने के लिए हो ? और यदि कदाचित् भाग्यवश यह शून्य हुआ तो मेरा चढ़ना सम्भव है।" ॥४॥

[ रथ के साथ प्रवेश कर ]

वर्धमानक चेट—ओह ! मैं रथ की बिछावन ले आया हूँ। रदनिके ! "आर्या वसन्तसेना" से निवेदन करो कि—"सजे हुए रथ पर बैठकर आप "पुष्पकरण्डक" नामक जीर्णोद्यान में जाइये।"

आर्यक—( सुनकर ) यह वेश्या का रथ है और बाहर जायगा अतः

अधिरोहामि । ( इति स्वैरमुपसर्पति )

चेटः—( श्रुत्वा ) कधं णेउलशद्दे ? । ता आअदा खु अज्जआ । अज्जए ! इमे णश्शाकड्डुआ बइल्ला । ता पिट्ठदो ज्जेव आलुहदु अज्जआ । [ कथं नूपुरशब्दः ? । तदागता खल्वार्या । आर्ये ! इमौ नासिकारज्जुकटुकौ बलीवर्दौ । तत्पृष्ठत एवारोहत्वार्या । ]

( आर्यकस्तथा करोति )

चेटः—पादुप्फाचालिदाणं णेउलाणं वीशंतो शद्दो, भलक्कंते अ पवहणे । तथा तक्केमि शंपदं अज्जआए आलूढाए होदव्वं; ता गच्छामि । जाध गोणा ! जाध । [ पादोत्फालचालितानां नूपुराणां विश्रान्तः शब्दः, भाराक्रान्तं च प्रवहणम् । तथा तर्कयामि सांप्रतमार्ययारूढया भवितव्यम् ; तद्गच्छामि । यातं गावौ ! यातम् । ] ( इति परिक्रामति )

---

वर्धमानकस्य कथनाद् गणिकाया इदं प्रवहणं बहिर्गच्छति । ततो मयाऽवश्यमारोहणं विधेयमित्युक्त्वा शनैरारूढ आर्यकः । नूपुरध्वनिमिव निगडध्वनिं श्रुत्वा समारूढां वसन्तसेनां विज्ञाय—आर्ये ! चपलाविमौ वृषौ । पृष्ठत एव भवत्योपवेष्टव्यमिति श्रुत्वा आर्यकस्तथा तिष्ठति । वर्धमानकस्तथाऽनुमाय कथयति—पादुप्फालेति । पादयोरुत्फालनेन = उपर्युत्थाप्य सन्धारणेन, नूपुरशब्दो विश्रान्तिं गतः । भाराक्रान्तं च यानमिति मन्ये सम्यगुपविष्टाऽत्राऽऽर्या वसन्तसेनेति गच्छामि । यातं वृषौ ! यातमित्युक्त्वा रथं चालयन्निष्क्रान्तः ।

---

चढ़ता हूँ ।

( धीरे-से चढ़ जाता है । )

चेट—( सुनकर ) क्या नूपुरों का शब्द है ? तो आर्या आ गई हैं । आर्ये ! ये बैल बिदकने हैं अतः आप पीछे-से ही चढ़ें ।

( "आर्यक" वैसा ही करता है । )

चेट—पैरों को उठाने-रखने से होने वाला नूपुरों का शब्द बन्द हो गया है और रथ भारी है । अतः मैं अनुमान करता हूँ कि अब आर्या बैठ गई हैं । इसलिए मैं चलता हूँ । बैलो ! चलो ! ( घूमता है । )

( प्रविश्य )

वीरकः--अरे रे, अरे जअ-जअमाण-चंदणअ-मंगल पुल्लभद्द-प्पमुहा !

**किं अच्छध वीसद्धा ? जो सो गोवालदारओ बद्धो ।**

**भेत्तूण समं वच्चइ णरवइहिअअं अ बंधणं चावि ॥५॥**

अले पुरत्थिमे पदोलीदुआरे चिट्ठ तुमं । तुमं पि पच्छिमे, तुमं पि दक्खिणे, तुमं पि उत्तरे । जो वि एसो पाआरखंडो, एदं अहिरुहिअ चंदणेण समं गदुअ अवलोएमि । एहि चंदणअ ! एहि, इदो दाव । [ अरे रे, अरे जय-जयमान-चन्दनक-मङ्गल-पुष्पभद्रप्रमुखाः !

किं स्थ विश्रब्धा ? गच्छथ यः स गोपालदारको बद्धः ।

भित्त्वा समं व्रजति नरपतिहृदयं च बन्धनं चापि ॥

अरे, पुरस्तात् प्रतोलीद्वारे तिष्ठ त्वम् , त्वमपि पश्चिमे, त्वमपि दक्षिणे, त्वमप्युत्तरे । योऽप्येष प्राकारखण्डः, एनमधिरुह्य चन्दनेन समं गत्वावलोकयामि । एहि चन्दनक ! एहि । इतस्तावत् । ]

---

वीरकः प्रविश्य गोपालदारको निर्गत इति सूचयितुं रक्षकान् प्रबोधयति--किं अच्छध-इति । अरे ! यूयं विश्वासपूर्वकं कथं स्थिताः ? किं न ज्ञायते युष्माभिर्यत् यो गोपालदारकः कारागारे बद्धः, स राज्ञो हृदयं बन्धनागारञ्च सममेव भित्त्वा

---

[ प्रवेश कर ]

वीरक--अरे "जय"--"जयमान"--"चन्दनक" "मङ्गल"--"पुष्पभद्र" प्रमुखो !

"विश्वस्त होकर क्यों खड़े हो ? ( क्या नहीं जानते कि ) वह 'गोपाल-पुत्र' ( "आर्यक" ) अपने बन्धन तथा राजा ( "पालक" ) के हृदय को साथ ही छिन्न-भिन्न कर भाग गया है ?" ॥५॥

इसलिए तुम सामने के फाटक पर रहो ! तुम पश्चिम में, तुम दक्षिण में तथा तुम उत्तर में सावधान होकर खड़े हो जाओ ! मैं इस प्राचीर खण्ड पर चढ़कर "चन्दनक" के साथ देखता हूँ । चन्दनक ! आओ !

( प्रविश्य संभ्रान्तः )

चन्दनकः—अरे रे वीरअ विसल्ल-भीमंगअ-दंडकालअ-दंड-सूर-प्पमुहा !

आअच्छध वीसत्था तुरिअं जत्तह लहु करेज्जाह ।
लच्छी जेण ण रण्णोपहवइ गोत्तंतरं गंतुं ॥६॥

अवि अ,—

उज्जाणेसु सहासु अ मग्गे णअरीअ आवणे घोसे ।
तं तं जोहह तुरिअं संका वा जाअए जत्थ ॥७॥

---

व्रजति । अतः पूर्वादिदिग्भागेषु सावधाना स्थिता भवत ! अहमपि चन्दनकेन सह प्राकारखण्डमारुह्यावलोकयामि । अत्र सहोक्तिरलङ्कारः । आर्या च्छन्दः ॥५॥

चन्दनकोऽपि सम्भ्रान्तः सन् प्रविश्य कथयति—आअच्छधेति । अरे ! वीरकप्रमुखाः ! विश्वासपूर्वकमागच्छत । त्वरितं प्रयत्नः क्रियताम् । शीघ्रं कार्यं कुरुत । येनास्य नृपतेर्लक्ष्मीगोत्रान्तरं = अन्यवंशं गन्तुं न प्रभवेत् । स आर्यकनामा गोपालदारको यदि राजा भविष्यति, तदा महाननर्थः सम्भविष्यति ! अस्माकञ्चापि वीरता पुनः कीदृशी ? अतः समयात् पूर्वमेव यत्नः क्रियताम् ॥ ६ ॥

पुनरप्याह—उज्जाणेसु-इति । उपवनेषु, सभासु, आपणे = पण्यवीथिकायाम्, घोषे = आभीराणां पशुबन्धन-स्थाने, यस्मिन् कस्मिन्न शङ्का स्यात्, स अन्वेष्टव्यः॥७॥

---

( प्रवेश कर घबराया हुआ )

चन्दनक—अरे ! "वीरक"—"विशल्य"—"भीमाङ्गद" "दण्डकाल"—"दण्डशूर" प्रमुखो !

"विश्वास पूर्वक आओ ! शीघ्र प्रयत्न करो ! एकदम कार्य करो ! जिससे कि राजा ( "पालक" ) की राज्यलक्ष्मी किसी दूसरे गोत्र में न जा सके ।" ॥६॥

और भी—

"उद्यानों, सभाओं, मार्ग, बाजार, घोष, आदि उन सभी स्थानों को ढूँढ डालो जहाँ तुमको कोई सन्देह हो ।" ॥७॥

रे रे वीरअ ! किं किं दरिसेसि भणाहि दाव वीसद्धं ।
भेत्तूण अ बंधणअं को सो गोवालदारअं हरइ ॥८॥
कस्सट्ठमो दिणअरो कस्स चउत्थो अ वट्टए चंदो ।
छट्ठो अ भग्गवगहो भूमिसुओ पंचमो कस्स ? ॥९॥
भण कस्स जम्मछट्ठो जीवो णवमो तहेअ सूरसुओ ।
जीअंते चंदणए को सो गोवालदारअं हरइ ॥१०॥

[ अरे रे वीरक-विशल्य-भीमाङ्गद-दण्डकाल-दण्डशूरप्रमुखाः,
आगच्छथ विश्वस्तास्त्वरितं यतध्वं लघु कुरुत ।
लक्ष्मीर्येन न राज्ञः प्रभवति गोत्रान्तरं गन्तुम् ॥

---

वीरकं प्रति वदति—रे रे वीरक ! इति । रे रे वीरक ! त्वं किं दर्शयसि ? विश्रब्धं वद, कोऽसौ जनः, यो गोपालदारकं नीतवान् ? ॥ ८ ॥

एवंविधं दुष्करं कार्यं यः करोति, स कीदृशः ? तस्य जन्मलग्नपत्रिकायां वक्ष्यमाणा ग्रहाः सन्ति ? दिनकरः कस्याष्टमो जातः ? चतुर्थश्चन्द्रः ? षष्ठस्थाने च भार्गवः ( शुक्रः ), भूमिसुतः = भौमः पञ्चमः, जन्मतः षष्ठस्थाने स्थितो जीवः ( गुरुः ), सूरसुतः = शनैश्चरो नवमः ? चन्दनके जीवति सति कोऽसौ वीरपुरुषः, यो गोपालपुत्रमार्यकमपहरति ? स किमु कथितानां ग्रहाणां फलं भोक्तुं नैव जानाति ?

जन्मतोऽष्टमदिनकरस्य फलम्—"मरणम्" ।
जन्मतश्चतुर्थचन्द्रस्य फलम्—"कुक्षिरोगः" ।
जन्मतः षष्ठस्थानस्थभार्गवस्य फलम्—"मरणम्" ।
जन्मतः पञ्चमभौमस्य फलम्—"उद्वेगः" ।

---

"अरे वीरक ! क्या दिखा रहा है ? विश्वस्त होकर बोल ! कि हथकड़ी-बेड़ी काटकर किसने गोपाल-पुत्र ( "आर्यक" ) का हरण किया है ?" ॥८॥

"सूर्य किसके लिए आठवाँ है ? चन्द्रमा किसके लिए चौथा है ? शुक्र किसके लिए छठा है ? भूमिसुत ( भौम ) किसके पाँचवा पड़ा हुआ है ? ( जो कि "आर्यक" को ले जा रहा है ! )" ॥९॥

अपि च,—

उद्यानेषु सभासु च मार्गे नगर्यामापणे घोषे ।
तं तमन्वेषयत त्वरितं शङ्का वा जायते यत्र ॥
रे रे वीरक ! किं किं दर्शयसि भणसि तावद्विश्रब्धम् ।
भित्त्वा च बन्धनकं कः स गोपालदारकं हरति ॥
कस्याष्टमो दिनकरः ? कस्य चतुर्थश्च वर्तते चन्द्रः ? ।
षष्ठश्च भार्गवग्रहो ? भूमिसुतः पञ्चमः कस्य ? ॥
भण कस्य जन्मषष्ठो जीवो नवमस्तथैव सूरसुतः ? ।
जीवति चन्दनके कः स गोपालदारकं हरति ? ॥

जन्मतः षष्ठस्थानस्थजीवस्य फलम्—"शत्रुवृद्धिर्मनोदुःखं च ।
जन्मतो नवमशनैश्चरस्य फलञ्च—"धननाशः" ।

बालजनसौकर्यार्थं ग्रहाणां फलसूचकं चित्रं दीयते—

| संख्या | ग्रहाः | स्थानम् | फलम् |
|---|---|---|---|
| १— | सूर्यः | अष्टमः | मृत्युः । |
| २— | चन्द्रः | चतुर्थः | कुक्षिरोगः । |
| ३— | शुक्रः | षष्ठः | मरणम् । |
| ४— | भौमः | पञ्चमः | उद्वेगः । |
| ५— | बृहस्पतिः | षष्ठः | शत्रुवृद्धिः, मनसो दुःखञ्च । |
| ६— | शनैश्चरः | नवमः | धननाशः । |

ग्रन्थविस्तरभयादुक्तफलप्रतिपादकानि पद्यानि नोद्धृतानि ज्योतिःशास्त्रतो ज्ञेयानि विशेषार्थिभिः ॥९–१०॥

"( और बता तो सही ) बृहस्पति किसके छठे स्थान में है ? और "सूर-सुत" ( शनिश्चर ) किसको नवाँ है ( जिससे प्रेरित होकर ) मुझ "चन्दनक" के जीते-जी कौन "आर्यक" का अपहरण कर रहा है ?" ❀ ॥१०॥

❀ ये श्लोक कवि के ज्यौतिष-शास्त्र-विषयक पाण्डित्य" का प्रदर्शन कराने के लिए पर्याप्त हैं । इन श्लोकों में प्रयुक्त ग्रहों का यह फल होता है—

"सूर्य का "आठवाँ" होना "मृत्यु का", "चन्द्रमा" का "चतुर्थ" होना

वीरकः—भड चंदणआ !

**अवहरइ कोवि तुरिअं चंदणअ सवामि तुज्झ हिअएण ।**
**जइ अद्धूइददिणअरे गोवालअदारओ खुडिदो ॥११॥**

[ भट चन्दनक !

अपहरति कोऽपि त्वरितं चन्दनक शपे तव हृदयेन ।
यथार्घोदितदिनकरे गोपालदारकः खुटितः ॥ ]

चेटः—जाध गोणा ! जाध । [ यातं गावौ ! यातम् । ]

चन्दनकः—( दृष्ट्वा ) अरे रे, पेक्ख पेक्ख

**ओहारिओ पवहणो वच्चइ मज्झेण राअमग्गस्स ।**

---

वीरकश्चन्दनकं सशपथं ब्रवीति—अवहरइ-इति । भटचन्दनक ! अहं तव हृदयाय शपे, अर्धोदिते एव भगवति भास्करे कोऽपि गोपालदारकं बन्धनान्मोचयित्वा कुत्रचिद्गतः । रात्रौ तु वयं सावधानतया तस्य रक्षां कृतवन्तः, ततो यावदेव विश्रामार्थं गतास्तावदेवासौ मुक्तबन्धनः कृतोऽपहृतश्चेत्यत्र नास्ति सन्देहः । आर्या च्छन्दः ॥११॥

चारुदत्तरथमवलोक्य चन्दनकः कथयति—ओहारिओ-इति । वस्त्रेणा-

---

वीरक—वीरवर ! चन्दनक !

"मैं तुम्हारी शपथ खाकर कहता हूँ कि—"गोपालदारक को किसी ने आधे सूर्य के निकल आने पर पकड़ा है । (रात्रि में नहीं, क्योंकि हम अपने स्थान पर सतर्क थे परन्तु प्रातः ज्यों ही हम विश्राम करने गये त्योंही इसी बीच में किसी ने "आर्यक" का अपहरण कर लिया । )" ॥११॥

चेट—चलो ! बैलो ! चलो !

चन्दनक—( देखकर ) अरे ! देखो ! देखो !

---

'कुक्षिरोग' का, 'शुक्र' का छठा होना 'मरण' का, "भौम" का "पञ्चम" होना "उद्वेग" का 'बृहस्पति' का छठा होना "शत्रुवृद्धि" का और "शनिश्चर" का 'नवाँ' होना "धननाश" का सूचक है ।

एदं दाव विआरह कस्स कहिं पवसिओ पवहणो त्ति ॥१२॥

अरे रे, पश्य पश्य

अपवारितं प्रवहणं व्रजति मध्येन राजमार्गस्य।
एतत्तावद्विचारय कस्य कुत्र प्रोषितं प्रवहणमिति ॥ ]

वीरकः—( अवलोक्य ) अरे पवहणवाहआ! मा दाव एवंपवहणं वाहेहि। कस्सकेरकं एदं पवहणं? को वा इध आरूढो कहिं वावज्जइ?। [ अरे प्रवहणवाहक! मा तावदेतत् प्रवहणं वाहय। कस्यैतत् प्रवहणम्? को वा इहारूढः कुत्र वा व्रजति?। ]

चेटः—एशे खु पवहणे अज्जचालुदत्ताह केळके। इध अज्जआ वशंतशेणा आलूढा पुप्फकरंडअं जिण्णुज्जाणं कीलिदुं चालुदत्तश्श णीअदि। [ एतत्खलु प्रवहणमार्यचारुदत्तस्य। इहार्या वसन्तसेनारूढा पुष्पकरण्डकं जीर्णोद्यानं क्रीडितुं चारुदत्तस्य नीयते। ]

वीरकः—( चन्दनमुपसृत्य ) एसो पवहणवाहओ भणादि—'अज्जचालुदत्तस्स पवहणं वशंतशेणा आलूढा। पुप्फकरंडअं जिण्णुज्जाणं णीअदि' त्ति। [ एष प्रवहणवाहको भणति—'आर्यचारुदत्तस्य प्रवहणं वसन्त-

---

च्छादितोऽयं रथो राजमार्गे याति, भद्रवीरक! विचारय तावत्—कस्यायं रथः? कुत्र च प्रयाति? इति ॥१२॥

---

"यह ढका हुआ रथ राजमार्ग से जा रहा है ( अतः 'वीरक!' ) देखो कि यह किसका है और कहाँ जा रहा है?" ॥१२॥

वीरक—( देखकर ) अरे! रथवाहक! रथ रोक! यह किसका रथ है? कौन बैठा है? और कहाँ जा रहा है?

चेट—यह "आर्य चारुदत्त" का रथ है। इसमें "आर्या वसन्तसेना" बैठी है। और यह "पुष्पकरण्डक जीर्णोद्यान" में "चारुदत्त" से केलि करने के लिए ले जाई जा रही है।

वीरक—( "चन्दनक" के पास जाकर ) यह रथवाहक कहता है कि—

सेनारूढा । पुष्पकरण्डकं जीर्णोद्यानं नीयते' इति ।

चन्दनकः—ता गच्छदु । [ तद्गच्छतु । ]

वीरकः—अणवलोइदो ज्जेव्व ? । [ अनवलोकित एव ? । ]

चन्दनकः—अध इं । [ अथ किम् । ]

वीरकः—कस्स पच्चएण ? । [ कस्य प्रत्ययेन ? । ]

चन्दनकः—अज्जचारुदत्तस्स । [ आर्यचारुदत्तस्य । ]

वीरकः—को अज्जचारुदत्तो, का वा वसंतसेणा, जेण अणवलोइदं वज्जइ ? । [ क आर्यचारुदत्तः, का वा वसन्तसेना, येनानवलोकितं व्रजति ? । ]

चन्दनकः—अरे, अज्जचारुदत्तं ण जाणासि, ण वा वसंतसेणिअं ? । जइ अज्जचारुदत्तं वसंतसेणिअं वा णं जाणासि, ता गअणे जोण्हासहिदं चंदं पि तुमं ण जाणासि ।

---

आर्यचारुदत्तस्य रथे वसन्तसेना याति तर्हि अनवलोकित एव गच्छतु रथः—इति श्रुत्वा वीरकः कुपितो ब्रूते कः सः ? का वा सा ? इति । चन्दनकः तयोः

---

"आर्य चारुदत्त" का रथ है, "वसन्तसेना" बैठी हैं और 'पुष्पकरण्डक जीर्णोद्यान" में ले जाई जा रही हैं।"

चन्दनक—तो जाने दो !

वीरक—बिना देखे ही ?

चन्दनक—जी हाँ।

वीरक—किसके विश्वास से ?

चन्दनक—"आर्य चारुदत्त" के ।

वीरक—कौन "आर्य चारुदत्त" है ? और कौन "वसन्तसेना" ? जिसके विश्वास से इसे बिना देखेही ले जाने दिया जाय ?

चन्दनक—अरे ! "आर्य चारुदत्त" को नहीं जानता और न "वसन्तसेना" को ही ? यदि तू "आर्य चारुदत्त" और "वसन्तसेना" को नहीं जानता तो चन्द्रिका सहित चन्द्र को भी नहीं जानता ।

**को तं गुणारविंदं सीलमिअंकं जणो ण जाणादि ?**
**आवण्ण दुक्खमोक्खं चउसाअरसारअं रअणं ॥१३॥**
**दो ज्जेव पूअणीआ इह णअरीए तिलअ भूदा अ ।**
**अज्जा वसंतसेणा धम्मणिही चारुदत्तो अ ॥१४॥**

[ अरे आर्यचारुदत्तं न जानासि, न वा वसन्तसेनाम् ? । यद्यार्यचारुदत्तं वसन्तसेनां वा न जानासि, तदा गगने ज्योत्स्नासहितं चन्द्रमपि त्वं न जानासि ।

कस्तं गुणारविन्दं शीलमृगाङ्कं जनो न जानाति ?
आपन्नदुःखमोक्षं चतुःसागरसारं रत्नम् ॥
द्वावेव पूजनीयाविह नगर्यां तिलकभूतौ च ।
आर्या वसन्तसेना धर्मनिधिश्चारुदत्तश्च ॥ ]

वीरकः—अरे चंदणआ !

**जाणामि चारुदत्तं वसंतसेणं अ सुट्ठु जाणामि ।**

---

प्रशंसां कुर्वन्नाह—को तमिति । चतुःसमुद्रोद्भवं रत्नतुल्यं गुणानां कृते कमलम्, शीलस्य कृते चन्द्रम्, आपन्नानां = शरणागतानां दुःखमोक्षकं तं चारुदत्तं को न जानाति ? तादृशः कोऽत्रोजयिन्यां वर्तते ? अत्र रूपकालङ्कारः । आर्या छन्दः ॥१३॥

इदानीं वसन्तसेनां प्रशंसति—दो ज्जेव-इति । अस्यां नगर्यां तिलकतुल्यौ तौ द्वावेव पूजनीयौ स्तः, आर्या प्रशस्तानेकगुणगणयुक्ता वसन्तसेना, धर्मनिधिश्चारुदत्तश्चेति । तदापि तौ न जानासि वीरक ! ॥ १४ ॥

तयोः प्रशंसां श्रुत्वा वीरक आह—जाणामि-इति । भोश्चन्दनक ! यथा त्वं

---

"गुणों के लिए कमल, शील के लिए चन्द्रमा, विपद्ग्रस्त मनुष्यों को मोक्षदायक तथा "चारों समुद्रों के सारभूत रत्न" उनको कौन नहीं जानता ?" ॥१३॥

"इस 'उज्जयिनी' नगरी में तिलक—तुल्य "आर्या वसन्तसेना" तथा धार्मिक "आर्य चारुदत्त" ये दो ही पूजनीय हैं ।" ॥१४॥

वीरक—अरे चन्दनक !

"मैं "आर्य चारुदत्त" तथा "आर्या वसन्तसेना" को बहुत अच्छी तरह

**पत्ते अ राअकज्जे पिदरं पि अहं ण जाणामि ॥१५॥**

[ अरे चन्दनक !

जानामि चारुदत्तं वसन्तसेनां च सुष्ठु जानामि ।
प्राप्ते च राजकार्ये पितरमप्यहं न जानामि ॥ ]

आर्यकः—( स्वगतम् ) अयं मे पूर्ववैरी, अयं मे पूर्वबन्धुः, यतः

**एककार्यनियोगेऽपि नानयोस्तुल्यशीलता ।**
**विवाहे च चितायां च यथा हुतभुजोर्द्वयोः ॥१६॥**

---

वदसि, तत्सत्यमेव, अहं वसन्तसेनामपि जानामि, आर्यचारुदत्तमपि च जानाम्येव; तथापि राजकार्ये समुपस्थिते अहं स्वकीयं पितरमपि नैव जानामि । ततश्चाहं—तु रथवश्यमवलोकयिष्यामीति भावः ॥ १५ ॥

उभयोरपि तयोः संवादं श्रुत्वा आर्यकश्चन्दनकं स्वमित्रं, वीरकञ्च रिपुं मन्यमानः प्राह—एककार्येति । यद्यपीमौ द्वावपि एकस्मिन् = रक्षात्मके कार्ये नियुक्तौ, तथापि, एतयोः शीलं समानं नास्ति । एकस्तीक्ष्णस्वभावः, अन्यश्च साधुस्वभावः । यथा—विवाहे चितायाञ्च वर्तमानोऽपि वह्निः समानो नास्ति ।

---

से जानता हूँ परन्तु राजकार्य आने पर तो मैं अपने पिता को भी नहीं जानता ।” † ॥१५॥

आर्यक—(स्वयं ही) यह मेरे पहिले जन्मका शत्रु है और यह मित्र। क्योंकि—

“एक कार्य में नियुक्त होने पर भी इनका स्वभाव एक-सा नहीं है । जैसे—विवाह और चिता दोनों में अग्नि के समान होने पर भी क्रियाएँ भिन्न होती हैं ।” ॥१६॥

---

† “वीरक” का यह कथन वास्तव में एक आदर्श सैनिक के ही योग्य है । राजकार्य में कैसा मित्र और कैसा शत्रु ? इस प्रकार के कार्य में तो अपने पिता से भी समान व्यवहार करना चाहिए । “वीरक” के ये शब्द उसके चरित्र को उज्ज्वल बना रहे हैं ।

चन्दनकः—तुमं तंतिलो सेणावई रण्णो पच्चइदो। एदे धारिदा मए बइल्ला। अवलोएहि। [ त्वं तन्तिल्लः सेनापती राज्ञः प्रत्ययितः। एतौ धारितौ मया बलीवर्दौ। अवलोकय। ]

वीरकः—तुमं पि रण्णो पच्चइदो बलवई। ता तुमं ज्जेव अवलोएहि। [ त्वमपि राज्ञः प्रत्ययितो बलपतिः। तस्मात् त्वमेवावलोकय। ]

चन्दनकः—मए अवलोइदं तुए अवलोइदं भोदि ?। [ मयावलोकितं त्वयावलोकितं भवति ?। ]

वीरकः—जं तुए अवलोइदं तं रण्णा पालएण अवलोइदं। [ यत् त्वया-वलोकितं तद्राज्ञा पालकेनावलोकितम्। ]

चन्दनकः—अरे, उण्णामेहि धुरं। [ अरे, उन्नामय धुरम्। ]

( चेटस्तथा करोति )

आर्यकः—( स्वगतम् ) अपि रक्षिणो मामवलोकयन्ति। अशस्त्रश्चास्मि मन्दभाग्यः। अथवा—

---

वहित्त्वेऽपि माङ्गलिका माङ्गलिकत्त्वं तु तयोरस्त्येवेति भावः। अत्रोपमाऽलङ्कारः। पथ्यावक्त्रं च्छन्दः ॥ १६ ॥

---

चन्दनक—तुम राजा के परामर्शदाता तथा विश्वस्त सेनापति हो। मैंने बैलों को रोक लिया है। इसलिए देखो !

वीरक—तुम भी राजा के विश्वस्त सेनापति हो अतः तुमही देख लो !

चन्दनक—मेरा देखा तुम्हारा ही देखा होगा।

वीरक—तुम्हारा देखा "राजा पालक" का ही देखा होगा।

चन्दनक—अरे ! रथ रोक !

( "चेट" रोक लेता है। )

आर्यक—( स्वयं ही ) क्या रक्षक मुझे देखते हैं ? और हतभाग्य मैं शस्त्रहीन हूँ। अथवा—

भीमस्यानुकरिष्यामि बाहुः शस्त्रं भविष्यति ।
वरं व्यायच्छतो मृत्युर्न गृहीतस्य बन्धने ॥१७॥

अथवा साहसस्य तावदनवसरः ।

( चन्दनको नाट्येन प्रवहणमारुह्यावलोकयति )

आर्यकः—शरणागतोऽस्मि ।

चन्दनकः—( संस्कृमाश्रित्य ) अभयं शरणागतस्य ।

आर्यकः—

त्यजति किल तं जयश्रीर्जहति च मित्राणि बन्धुवर्गश्च ।
भवति च सदोपहास्यो यः खलु शरणागतं त्यजति ॥१८॥

---

अवलोकनार्थमवरुद्धे रथे, आर्यकः ( स्वगतं ) रक्षिजनावलोकनमनुचितमिति मत्वा कथयति—भीमस्येति । अथवा मम किं करिष्यन्ति रक्षिणः, अहमिदानीं भीमस्यानुकरणं करिष्यामि । मदीयो बाहुरेव शस्त्ररूपेण परिणतं भविष्यति । युद्धं कुर्वतो यदि मम मृत्युरपि स्यात्तदा वरम्, बन्धने तु स्वं नोचितं मन्ये । अथवा, साहसस्यायमवसरो नास्ति । समयं समीक्ष्यैव कार्यं कार्यम् । त्वरा निन्दितेति तथा स्थितः ॥ १७ ॥

चन्दनको रथमारोहति, आर्यकः "शरणागतोऽस्मीति वदति, सोऽप्यभयं शरणागतस्येति वदति, युक्तश्चेदं शरणागतत्राणमिति युक्त्या समर्थयते, आर्यकः—त्यजति–इति । भो वीरवरचन्दनक ! यः शरणागतं जहाति, विजयलक्ष्मीः,

---

"मैं "भीम" का अनुकरण करूँगा । मेरी भुजा ही शस्त्र होगी । क्योंकि—युद्ध करते हुए मृत्यु अच्छी, परन्तु बन्धन में पड़कर रहना अच्छा नहीं ।" ॥१७॥

अथवा—यह साहस का अवसर नहीं है ।

[ "चन्दनक" अभिनय से रथ पर चढ़कर देखता है । ]

आर्यक—शरणागत हूँ ।

चन्दनक—( संस्कृत में ) शरणागत को अभय है !

आर्यक—"जो शरणागत का परित्याग कर देता है उसको विजयश्री, मित्र और बन्धु-वर्ग सब छोड़ देते हैं तथा उसकी संसार में हँसी होती है ।" ॥१८॥

चन्दनकः--कधं अज्जओ गोवालदारओ सेणवित्तासिदो विअ पत्तरहो साउणिअस्स हत्थे णिवडिदो ? । ( विचिन्त्य ) एसो अणवराधो सरणाअदो अज्जचारुदत्तस्य पवहणं आरूढो, पाणप्पदस्स मे अज्जसव्विलअस्स मित्तं । अण्णदो राअणिओओ । ता किं दाणिं एत्थ जुत्तं अणुचिट्ठिदुं ? । अधवा जं भोदु तं भोदु, पढमं ज्जेव अभअं दिण्णं ।

**भीदाभअप्पदाणं दत्तस्स परोवआररसिअस्स ।**
**जइ होइ होउ णासो तहवि हु लोए गुणो ज्जेव ॥१९॥**

( सभयमवतीर्य ) दिट्ठो अज्जो—( इत्यर्धोक्ते ) ण, अज्जआ वसंतसेणा । तदो

---

मित्रसमुदायः, बन्धुवर्गश्च त परित्यजत्येव । सर्वदा च स परिहासयोग्यो भवति । अतो भवता शरणागतस्य मम परित्राणमवश्यं विधातव्यमिति भावः ।

अत्रार्या च्छन्दः ॥ १८ ॥

अये ! अयं निरपराध आर्यकश्चारुदत्तस्य रथमारुढः । मम सुहृदः शर्विलकस्य सुहृदयम् । किं क्रियताम् मया ? इति विचार्य, पुनः स्थिरतया शरणागतरक्षा मया कर्तव्येति वदति--भीदाभअेति । यदि भीतस्यास्य परिरक्षारूपे परोपकारे मम मृत्युर्भवति, तथापि युक्तमेव । लोके प्रशंसा तु स्थास्यत्येवेति भावः ॥ १९ ॥

---

चन्दनक--अरे ! क्या यह गोपाल-पुत्र "आर्यक" बाज से डरे हुए पक्षी की भाँति व्याध के हाथ में आ पड़ा है ! ( सोचकर ) यह निरपराध है, शरणागत है, "आर्य चारुदत्त" के रथ पर चढ़ा हुआ है तथा मुझे जीवनदान देने वाले "शर्विलक" का मित्र है । और दूसरी ओर यह राजाज्ञा है । तो अब क्या करना चाहिए ? अथवा अब चाहे जो हो, सो हो । मैंने पहिले ही अभय-दान कर दिया है ।

"यदि भयभीत को अभय देते हुए और परोपकाररत मेरी मृत्यु भी हो जाती है तो भी यह संसार में गुण ही होगा ।" ॥१९॥

( भय सहित उतरकर ) "आर्य देख लिये—" ( बीच ही में ) नहीं,

एसा भणादि—'जुत्तं णेदं, सरिसं णेदं, जं अहं अज्जचारुदत्तं अहिसारिदुं गच्छंती राअमग्गे परिभूदा'। [ कथमार्यको गोपालदारकः श्येनत्रित्रासित इव पत्ररथः शाकुनिकस्य हस्ते निपतितः ?। एषोऽनपराधः शरणागत आर्यचारुदत्तस्य प्रवहणमारूढः, प्राणपदस्य मे आर्यशर्विलकस्य मित्रम्। अन्यतो राजनियोगः। तत्किमिदानीमत्र युक्तमनुष्ठातुम् ?। अथवा यद्भवतु तद्भवतु, प्रथममेवाभयं दत्तम्।

भीताभयप्रदानं ददतः परोपकाररसिकस्य।
यदि भवति भवतु नाशस्तथापि खलु लोके गुण एव ॥

दृष्ट आर्यः—। न, आर्या वसन्तसेना। तदेषा भणति,—'युक्तं नेदम्, सदृशं नेदम्, यदहमार्यचारुदत्तमभिसर्तुं गच्छन्ती राजमार्गे परिभूता'। ]

वीरकः—चंदणआ ! एत्थ मह संसओ समुप्पण्णो। [ चन्दनक ! अत्र मे संशयः समुत्पन्नः। ]

चन्दनकः—कधं दे संसओ ?। [ कथं ते संशयः ?। ]

वीरकः—

**संभमघग्घरकंठो तुमं पि जादो सि जं तुए भणिदं।**
**दिट्ठो मए खु अज्जो पुणो वि अज्जा वसंतसेणेत्ति ॥२०॥**

---

चन्दनकस्य वचसि सन्दिहानो वीरको ब्रूते—संभमेति। चन्दनक ! पूर्वं तु तव कण्ठे घर्घरध्वनिः सञ्जातः, ततश्च त्वया "दृष्टः" इत्युक्तम्। अनन्तरञ्च दृष्टा वसन्तसेनेति कथितम्। अतो ममाविश्वासोऽत्र विषये जातः ॥ २० ॥

---

"आर्या वसन्तसेना" देखलीं। ये कहती हैं कि—"यह ठीक नहीं है ! यह उचित नहीं है कि "आर्य चारुदत्त" से रमण करने के लिए जाती हुई मुझको तिरस्कृत किया गया है।"

वीरक—चन्दनक ! इसमें मुझे सन्देह हो गया है।

चन्दनक—तुझे सन्देह क्यों है ?

वीरक—"( क्योंकि ) पहिले तो तेरा कण्ठ-स्वर घबराहटपूर्ण हो रहा है और दूसरी बात यह है कि पहिले तूने "मैंने 'आर्य' को देख लिया" कहा तथा

एत्थ मे अप्पच्चओ ।

[ सम्भ्रमघर्घरकण्ठस्त्वमपि जातोऽसि यत्त्वया भणितम् ।
दृष्टो मया खल्वार्यः पुनरप्यार्या वसन्तसेनेति ॥

अत्र मेऽप्रत्ययः । ]

चन्दनकः—अरे, को अप्पच्चओ तुह ? । वअं दक्खिणत्ता अवत्तभासिणो । खल-खत्ति-खडो-खडट्टोविलअ-कण्णाट-कण्ण-प्पावरणअद्दविड-चोल-चीण-बब्बर-खेर-खान-मुख-मधुघादपहुदाणं मिलिच्छजादीणं अणेअदेसभासाभिण्णा जहेट्ठं मंतआम, दिट्ठो दिट्ठा वा अज्जो अज्जआ वा । [ अरे, कोऽप्रत्ययस्तव ? । वयं दाक्षिणात्या अव्यक्तभाषिणः । खष-खत्ति-कड-कडट्ठोबिल-कर्णाट-कर्ण-प्रावरण-द्राविड-चोल-चीन-बर्बर-खेर-खान-मुख-मधुघात-प्रभृतीनां म्लेच्छजातीनामनेकदेशभाषाभिज्ञा यथेष्टं मन्त्रयामः, दृष्टो दृष्टा वा, आर्य आर्या वा । ]

वीरकः—णं अहं वि पलोएमि । राअअण्णा एसा । अहं रण्णो पच्चइदो । [ नन्वहमपि प्रलोकयामि । राजाज्ञैषा । अहं राज्ञः प्रत्ययितः । ]

---

सम्प्रति किं करणीयमिति चन्दनको विचार्य वदति—कण्णाटकेति । अथवा—कर्णाटककलहं करिष्यामि । अहमेतेन साकं कलहं कृत्त्वैवार्यकस्य रक्षां करिष्यामीति तत्त्वम् ।

---

फिर "आर्या वसन्तसेना" देख लीं—यह कहा है । ( इन दोनों परस्पर-विरोधी वाक्यों तथा तेरी आकृति से मुझे सन्देह हो गया है । )" ॥२०॥

इसमें मुझे विश्वास नहीं है ।

चन्दनक—अरे ! तेरे अविश्वास का क्या कारण है ? हम दक्षिणी हैं अतः अस्पष्टभाषी हैं । खष-खत्ति-कड-कडट्ठोविल-कर्णाट-कर्ण—प्रावरण-चीन-द्राविड़-चोल-बर्बर खेर-खान-मुख-मधुघात आदि म्लेच्छ जातियों तथा अनेक देशों की भाषाएँ हम जानते हैं । इसलिए यदि "देखी" को "देखा" और "आर्य" को "आर्या" कह दिया तो इससे क्या हुआ ?

वीरक—तो मैं भी देख लूँ । क्योंकि यह राजाज्ञा है और मैं राजा का

चन्दनकः—ता किं अहं अप्पच्चइदो संवुत्तो ? । [ तत्किमहमप्रत्ययितः संवृत्तः ? । ]

वीरकः—णं सामिणिओओ । [ ननु स्वामिनियोगः । ]

चन्दनकः—( स्वगतम् ) अज्जगोवालदारओ अज्जचारुदत्तस्स पवहणं अहिरुहिअ अवक्कमदि त्ति जइ कहिज्जदि, तदो अज्जचारुदत्तो रण्णा सासिज्जइ । ता को एत्थ उवाओ ? । ( विचिन्त्य ) कण्णाटकलहप्पओअं करेमि । ( प्रकाशम् ) अरे वीरअ ! मए चंदणकेण पलोइदं पुणो वि तुमं पलोएसि ? । को तुमं ? । [ आर्यगोपालदारक आर्यचारुदत्तस्य प्रवहणमधिरुह्यापक्रामतीति यदि कथ्यते, तदार्यचारुदत्तो राज्ञा शास्यते । तत् कोऽत्रोपायः ? । कर्णाटकलहप्रयोगं करोमि । अरे वीरक ! मया चन्दनकेन प्रलोकितं पुनरपि त्वं प्रलोकयसि ? । कस्त्वम् ? । ]

वीरकः—अरे, तुमं पि को ? । [ अरे, त्वमपि कः ? । ]

चन्दनकः—पूइज्जंतो माणिज्जंतो तुमं अप्पणो जादिं ण सुमरेसि ? । [ पूज्यमानो मान्यमानस्त्वमात्मनो जातिं न स्मरसि ? । ]

वीरकः—( सक्रोधम् ) अरे, का मह जादी ? । [ अरे, का मम

---

विश्वासपात्र हूँ ।

चन्दनक—तो क्या मैं अविश्वासपात्र हो गया ?

वीरक—कहता तो हूँ कि—"स्वामी की आज्ञा है ।"

चन्दनक—( स्वयं ही ) यदि—"आर्य गोपालदारक" "आर्य चारुदत्त" के रथ पर चढ़कर भागा जा रहा है" यह कह दूँ तो "आर्य चारुदत्त" को राजा दण्ड देगा। तो क्या करना चाहिए ? अच्छा, "कर्नाटकों" जैसा कलह करता हूँ । ( प्रकाश में ) अरे वीरक ! मुझ "चन्दनक" के द्वारा देखे हुए को भी पुनः तू देख रहा है ? ( देखने वाला ) तू कौन है ?

वीरक—अरे ! तू भी कौन है ?

चन्दनक—तू अपनी ऊँची जाति को याद नहीं करता ?

वीरक—( क्रोध से ) अरे मेरी कौन-सी जाति है ?

जातिः ? । ]

चन्दनकः—को भणउ ? । [ को भणतु ? । ]

वीरकः—भणउ । [ भणतु । ]

चन्दनकः—अहवा ण भणामि,—

**जाणंतो वि हु जादिं तुज्झ अ ण भणामि सीलविहवेण ।**
**चिट्ठउ मह च्चिअ मणे किं च कइत्थेण भग्गेण ॥२१॥**

अथवा न भणामि,—

जानन्नपि खलु जातिं तव च न भणामि शीलविभवेन ।
तिष्ठतु ममैव मनसि किं च कपित्थेन भग्नेन ॥ ]

वीरकः—णं भणउ, भणउ । [ ननु भणतु, भणतु । ]

( चन्दनकः संज्ञां ददाति )

वीरकः—अरे, किं णेदं ? । [ अरे, किं न्विदम् ? । ]

---

तथैव कर्तुमिच्छन् वीरकस्य जातिं स्मारयितुं प्रस्तौति—जाणन्तो वि—इति । अथवा—वीरक ! तव जातिं जानानोऽपि शीलस्य विभवेन = शीलसम्पदं निरीक्ष्य न कथयामि । ममैव मनसि तिष्ठतु । कपित्थेन भग्नेन को लाभः ? ॥ २१ ॥

---

चन्दनक—( अब ) कौन कहे ! ( रहने दे ! )

वीरक—कह दे !

चन्दनक—अथवा नहीं कहता हूँ ।

"तेरी जाति जानता हुआ भी सङ्कोचवश कुछ नहीं कहता हूँ । मेरे ही मनमें बात रहने दे । कैथ तोड़ने से क्या लाभ ? ( भण्डा-फोड़ करने से क्या प्रयोजन ?" )

वीरक—अरे कह न ! ॥२१॥

( "चन्दनक" उस्तरा पैनाने का सङ्केत करता है । )

वीरक—अरे ! यह क्या है ?

चन्दनकः—

सिण्णसिलाअलहत्थो पुरिसाणं कुच्चगंठिसंठवणो ।
कत्तरिवावुदहत्थो तुमं पि सेणावई जादो ॥२२॥

[ शीर्णशिलातलहस्तः पुरुषाणां कूर्चग्रन्थिसंस्थापनः ।
कर्तरीव्यापृतहस्तस्त्वमपि सेनापतिर्जातः ॥ ]

वीरकः—अरे चंदणआ ! तुमं पि माणिज्जंतो अप्पणो केरिकं जादिं ण सुमरेसि ? । [ अरे चन्दनक ! त्वमपि मान्यमान आत्मनो जातिं न स्मरसि ? । ]

चन्दनकः—अरे, का मह चंदणअस्स चंदविसुद्धस्स जादी ? । [ अरे, का मम चन्दनकस्य चन्द्रविशुद्धस्य जातिः ? । ]

वीरकः—को भणउ ? । [ को भणतु ? । ]

चन्दनकः—भणउ, भणउ । [ भणतु, भणतु । ]

( वीरको नाट्येन संज्ञां ददाति )

---

चन्दनको वीरककथनानन्तरं तस्य जातिं वर्णयितुमुपक्रमते—सिण्णसिलेति । अरे ! त्वमपि सेनापतिः संवृत्तः ? न जानासि स्वकीयां जातिम् ? तव हस्ते शीर्णशिलातलं, क्षुरस्य तीक्ष्णतायै करोषि शिलाशकलं हस्ते, पुरुषाणां कूर्चग्रन्थिं=चिबुककचान् गृह्णासि, कर्तरीचालने च सततं कुशल–करः, त्वमपि नापितः सन् सेनापतिः सञ्जातः ? आश्चर्यम् ॥ २२ ॥

---

चन्दनक—"( उस्तरा पैनाने के लिए ) एक टूटा पत्थर का टुकड़ा हाथ में लेने वाला, पुरुषों की दाढ़ी बनाने का कार्यकर्ता तथा कैंची हाथ में लिये फिरने वाला तू ( नाई होकर ) भी सेनापति हो गया है ! ॥ २२ ॥

वीरक—अरे चन्दनक ! तू भी अपनी ऊँची जाति को भूल गया !

चन्दनक—अरे ! चन्द्रमा के समान शुद्ध मुझ "चन्दनक" की कौन सी जाति है ?

[ "वीरक" चन्दनक" को ( 'चमार' होने का ) सङ्केत करता है । ]

चन्दनकः—अरे, किं णेदं ? । [ अरे किं न्विदम् ? । ]

वीरकः—अरे, सुणाहि, सुणाहि,—

**जादी तुज्झ विसुद्धा मादा भेरी पिदा वि दे पडहो ।**
**दुम्मुह ! करडअभादा तुमं पि सेणावई जादो ॥२३॥**

[ अरे, शृणु शृणु,—

जातिस्तव विशुद्धा माता भेरी पितापि ते पटहः ।
दुर्मुख ! करटकभ्राता त्वमपि सेनापतिर्जातः ॥ ]

चन्दनकः—( सक्रोधम् ) अहं चंदणओ चम्मारओ ता पलोएहि पवहणं । [ अहं चन्दनकश्चर्मकारः, तत्प्रलोकय प्रवहणम् ! ]

---

वीरकोऽपीदानीं परिकुपितश्चन्दनकस्य जातिं स्मारयति—जादीति । अरे ! तव जातिः परमविशुद्धाऽस्ति ! भेरी = दुन्दुभिः, तव माता = मातृस्थानीया, पटहः = वाद्यविशेषश्च तव पिता, रे दुर्मुख ! करटको वाद्यविशेषस्ते भ्रातास्ति, त्वमपि चर्मकारः सन् सेनापतिः सञ्जातः । सर्वेष्वप्येषु वाद्येषु चर्मण एव वैशिष्ट्यम्, ततश्च त्वं चर्मकारोऽसीति पुनरपि मामधिक्षिपसि ? न च मुखाकृतिरपि तव शोभना ! पूर्वमात्मनो मुखमादर्शे समवलोकय, कीदृशोऽसीति, पश्चान्मां वक्ष्यसि ? इति सपरिहासं प्राह ॥ २३ ॥

---

चन्दनक—अरे ! यह क्या है ?

वीरक—अरे ! सुन ! सुन !

"तेरी जाति एक दम शुद्ध-विशुद्ध है, "दुन्दुभि" तेरी माता, 'पटह' ( तासा ) पिता, और 'करटक' भाई है ( इतने पर भी ) दुर्मुख ! तू भी सेनापति हो गया ? ( सर्वदा चमड़े से ही स्नेह करता है । तेरी सूरत से भी घृणा होने लगती है, जरा अपना मुख शीशे में तो देख ! मुझे बड़ा आश्चर्य है कि तुझ जैसा "चर्मकार" भी सेनापति हो गया ! )" ॥ २३ ॥

चन्दनक—( क्रोध से ) यदि मैं "चन्दनक" चमार हूँ तो तू भी रथ को देखले ! ( यदि साहस हो तो देख ! )

वीरकः—अरे, पवहणवाहआ ! पडिवत्तावेहि पवहणं। पलोइस्सं। [ अरे प्रवहणवाहक ! परिवर्तय प्रवहणम् , प्रलोकयिष्यामि । ]

( चेटस्तथा करोति, वीरकः प्रवहणमारोढुमिच्छति, चन्दनकः सहसा केशेषु गृहीत्वा पातयति, पादेन ताडयति च )

वीरकः—( सक्रोधमुत्थाय ) अरे, अहं तुए वीसत्थो राआणत्तिं करेंतो सहसा केसेसु गेण्हिअ पादेन ताडिदो। ता सुणु रे, अहिअरणमज्झे जइ दे चउरंगं ण कप्पावेमि, तदो ण होमि वीरओ। [ अरे, अहं त्वया विश्वस्तो राजाज्ञप्तिं कुर्वन् सहसा केशेषु गृहीत्वा पादेन ताडितः। तच्छृणु रे, अधिकरणमध्ये यदि ते चतुरङ्गं न कल्पयामि, तदा न भवामि वीरकः। ]

चन्दनकः—अरे ! राअउलं अहिअरणं वा वच्च। किं तुए सुणअसरिसेण ?। [ अरे ! राजकुलमधिकरणं वा व्रज । किं त्वया शुनकसदृशेन ?। ]

वीरकः—तथा। ( इति निष्क्रान्तः )

---

वीरक—अरे रथवाहक ! रथ को फेर ! मैं देखूँगा !

[ "चेट" रथ रोक लेता है। "वीरक" रथ पर चढ़ना चाहता है। "चन्दनक" अकस्मात् उसको बाल पकड़ कर गिरा देता है तथा पैर का प्रहार करता है। ]

वीरक—( क्रोध से उठकर )

अरे ! तू ने मुझ विश्वस्त व्यक्ति को राजाज्ञा का पालन करते हुए सहसा बाल पकड़ कर लात से मारा है। इसलिए सुन रे ! यदि कचहरी में तुझे चौरङ्ग न कराया तो मैं भी "वीरक" नहीं।

चन्दनक—अरे ! राजदरबार या कचहरी चाहे जहाँ जा। कुत्ते जैसे तुझ से क्या भय ?

वीरक—बहुत अच्छा ! [ चला जाता है। ]

चन्दनकः—( दिशोऽवलोक्य ) गच्छ रे पवहणवाहआ ! गच्छ । जइ को वि पुच्छेदि तदो भणेसि—'चंदणअवीरएहिं अवलोइदं पवहणं वच्चइ । अज्जे वसंतसेणे ! इमं च अहिण्णाणं दे देमि । [ गच्छ रे प्रवहणवाहक ! गच्छ । यदि कोऽपि पृच्छति तदा भण—'चन्दनक-वीरकाभ्यामवलोकितं प्रवहणं व्रजति' । आर्ये वसन्तसेने ! इदं चाभिज्ञानं ते ददामि । ] ( इति खड्गं प्रयच्छति )

आर्यकः—( खड्गं गृहीत्वा, सहर्षमात्मगतम् )

**अये शस्त्रं मया प्राप्तं स्पन्दते दक्षिणो भुजः ।**
**अनुकूलं च सकलं हन्त संरक्षितो ह्यहम् ॥२४॥**

चन्दनकः—अज्जए !

**एत्थ मए विण्णविदा पच्चइदा चंदणं पि सुमरेसि ।**

---

चन्दनकादुपलब्धं शस्त्रं गृहीत्वा स्वगतमाह आर्यकः—अये—इति । अये, शस्त्रं मया सम्प्राप्तम्, दक्षिणो भुजश्च स्पन्दते, अनुकूलमेवेदं सर्वमपि मे वृत्तम् । हन्त ! सम्प्रति संरक्षितोऽस्मि । इदानीं गृहीतशस्त्रस्य मम भयं नास्ति ॥ २४ ॥

वसन्तसेनारूपेण प्रच्छन्नमार्यकं चन्दनकः किमपि प्रार्थयते—एत्थ मए-इति । आर्ये ! त्वमिदानीं प्रार्थिता सती सत्यवसरे चन्दनकमपि स्मरिष्यसीति मम हढो

---

चन्दनक—( चारों ओर देख कर ) अरे रथवाहक ! जा । यदि कोई पूछे तो कह देना कि—"वीरक" "चन्दनक" ने रथ का निरीक्षण कर लिया है । आर्ये वसन्तसेने ! तुम को यह अभिज्ञान ( निशानी ) देता हूँ ।

( तलवार दे देता है । )

आर्यक—( खड्ग लेकर, हर्षपूर्वक स्वयं ही )

"अरे ! मैंने शस्त्र पा लिया, मेरी दायीं भुजा फड़क रही है, और मैं सब-कुछ अपने अनुकूल देख रहा हूँ । वाह ! मैं बच गया ।" ॥ २४ ॥

चन्दनक—आर्ये !

"मेरे द्वारा प्रार्थित आप मुझ "चन्दनक" को स्मरण रखना । मैं किसी

ण भणामि एस लुद्धो णेहस्स रसेण बोल्लामि ॥२५॥

[ आर्ये !

अत्र मया विज्ञप्ता प्रत्ययिना चन्दनमपि स्मरसि ।

न भणाम्येष लुब्धः स्नेहस्य रसेन ब्रूमः । ]

आर्यकः—

चन्दनश्चन्द्रशीलाढ्यो दैवादद्य सुहृन्मम ।

चन्दनं भोः स्मरिष्यामि सिद्धादेशस्तथा यदि ॥२६॥

चन्दनकः—

अभअं तुह देउ हरो विण्हू बम्हा रवी अ चंदो अ ।

हत्तूण सत्तुवक्खं सुंभणिसुंभे जधा देवी ॥२७॥

---

विश्वासः । अत्र च मया सह वीरकस्य प्रबलो वैरः संवृत्तः, एतस्य फलं सर्वथा न शुभाय, इदञ्च सर्वं तव रक्षणार्थं एव कृतमिति स्मरणीयमिदं सर्वमपि । अपि च—विशेषतया न मे स्वार्थसाधनलिप्सा, प्रत्युत स्नेहस्य रसेनैव ब्रवीमि ॥ २५ ॥

आर्यकः स्वगतमेवाह—चन्दन इति । चन्दनवच्छीतलोऽयं चन्दनकोऽद्य मम सुहृत् सञ्जातः । यदि सिद्धस्यादेशः सत्यः तर्हि चन्दनकमवश्यं स्मरिष्यामि ॥२६॥

चन्दनकः प्रस्थानकालिकं शुभाशीर्वादं वितरति—अभअमिति । ब्रह्मा, विष्णुः, प्रमुखादेवास्तव सदा मङ्गलं कुर्वन्तु । यथा च शत्रुपक्षं हतवती भगवती,

---

लोभ से यह बातें नहीं कर रहा हूँ; किन्तु स्नेह के कारण ही यह सब कुछ निवेदन कर रहा हूँ ।" ॥ २५ ॥

आर्यक—"चन्द्रमा के समान शीलवाला यह "चन्दनक" आज सौभाग्यवश मेरा मित्र हो गया है । यदि 'सिद्धादेश' सत्य हो गया तो चन्दनक ! मैं तेरा अवश्य ही स्मरण करूँगा ।" ॥ २६ ॥

चन्दनक—"ब्रह्मा, विष्णु, महेश, चन्द्रमा और सूर्य ये सब तुमको अभयदान दें । और जिस प्रकार देवी "दुर्गा" ने "शुम्भ" और "निशुम्भ" को

[ अभयं तव ददातु हरो विष्णुर्ब्रह्मा रविश्च चन्द्रश्च ।
हत्वा शत्रुपक्षं शुम्भनिशुम्भौ यथा देवी । ]

( चेटः प्रवहणेन निष्क्रान्तः )

चन्दनकः—( नेपथ्याभिमुखमवलोक्य ) अरे ! णिक्कमंतस्स मे पिअवअस्सो सव्विलओ पिट्ठदो ज्जेव अणुलग्गो गदो । भोदु, पधाणदंडधारओ वीरओ राअपच्चअआरो विरोहिदो । ता जाव अहंपि पुत्तभादुपडिवुदो एदं ज्जेव अणुगच्छामि । [ अरे ! निष्क्रमतो मम प्रियवयस्यः शर्विलकः पृष्ठत एवानुलग्नो गतः । भवतु, प्रधानदण्डधारको वीरको राजप्रत्ययकारो विरोधितः । तद्यावदहमपि पुत्रभ्रातृपरिवृत एतमेवानुगच्छामि । ]

( इति निष्क्रान्तः )

## इति प्रवहणविपर्ययो नाम षष्ठोऽङ्कः ।

---

दुर्गा, तथैव तवापि शत्रुपक्षक्षयो भवत्विति भावः ॥ २७ ॥

शर्विलकोऽपि गतः, अहमपि तमेवानुसरामि । इत्युक्त्वा सोऽपि निष्क्रान्तः ।

इति मृच्छकटिकस्य "श्रीप्रियम्वदाख्य"—
टीकायां षष्ठोऽङ्कः समाप्तः ॥

---

मार डाला था ( वैसे ही तुम्हारे शत्रु भी नष्ट हो जाँय ।" ॥ २७ ॥

[ "चेट" रथ लेकर चला जाता है ]

चन्दनक—( नेपथ्य की ओर देखकर ) अरे ! निकलते हुए मेरे पीछे से मित्र "शर्विलक" निकल गया है । मैंने राजा के विश्वासपात्र, प्रधान सेनापति "वीरक" से विरोध कर लिया है अतः पुत्र—कलत्र आदि के साथ इसी का अनुगमन करता हूँ । [ चला जाता है । ]

"श्री प्रियम्वदा"—टीकालङ्कृत "मृच्छकटिक"
के "प्रवहणविपर्यय" नामक छठे अङ्क
का भाषानुवाद समाप्त ।

# सप्तमोऽङ्कः

( ततः प्रविशति चारुदत्तो विदूषकश्च )

विदूषकः—भो ! पेक्ख पेक्ख पुप्फकरंडअजिण्णुज्जाणस्स सस्सिरीअदां । [ भोः ! पश्य पश्य पुष्पकरण्डकजीर्णोद्यानस्य सश्रीकताम् । ]

चारुदत्तः—वयस्य ! एवमेतत्; तथा हि—

**वणिज इव भान्ति तरवः, पण्यानीव स्थितानि कुसुमानि ।**
**शुल्कमिव साधयन्तो, मधुकरपुरुषाः प्रविचरन्ति ॥१॥**

विदूषकः—भो ! इमं असक्काररमणीअं सिलाअलं उवविसदु भवं । [ भोः ! इदमसंस्काररमणीयं शिलातलमुपविशतु भवान् । ]

---

पुष्पकरण्डकस्य स-श्रीकतां = शोभा-सम्पत्तियुक्ततां पश्येति विदूषकस्य वचनं समर्थयितुं चारुदत्तः कथयति—वणिज इवेति । वयस्य ! यत् त्वं वदसि, तदुचितं मन्ये, तथाहि—अत्रोपवने तरवो वणिग्जना इव, कुसुमरूपाणि पण्यानि = विक्रेतव्य-वस्तूनि प्रसार्य स्थिताः इव सन्ति, मधुकराश्चैतेषां पुष्प-पण्यानां मूल्यं साधयन्त इव परितो भ्रमन्ति । मन्ये, नेदमुपवनम् , अपि तु पण्यवीथिका । अत्रोपमोत्प्रेक्षयोः सन्देहसंकरालङ्कारः । आर्या च्छन्दः ॥ १ ॥

विदूषकः—शिलातले समुपवेष्टुं चारुदत्तं प्रेरयति—भोः ! इममिति । भो वयस्य ! असंस्कारेऽपि रमणीयम् = स्वभावेनैव मनोहरं शिलातलमुपविशतु भवान् ।

---

[ तदनन्तर "चारुदत्त" और "विदूषक" प्रवेश करते हैं। ]

विदूषक—मित्र ! "पुष्पकरण्डक जीर्णोद्यान" की शोभा देखो !

चारुदत्त—मित्र ! ऐसा ही है। क्योंकि—

"( इस उद्यान के ) वृक्ष वणिक् से लग रहे हैं, पुष्प विक्रेतव्य पदार्थ से हैं और ये भौंरें पुरुषों की भाँति इन का शुल्क-सा लेते ( वसूल करते ) हुए फिर रहे हैं।" ॥ १ ॥

विदूषक—मित्र ! बिना किसी संस्कार के भी ( बिना धोये-झाड़े भी ) सुन्दर शिलातल पर आप बैठिये !

चारुदत्तः—( उपविश्य ) वयस्य ! चिरयति वर्धमानकः ।

विदूषकः—भणिदो मए वड्ढमाणओ—'वसंतसेणिअं गेण्हिअ लहुं लहुं आअच्छ' त्ति । [ भणितो मया वर्धमानकः—'वसन्तसेनां गृहीत्वा लघु लघ्वागच्छ' इति । ]

चारुदत्तः—तत्किं चिरयति ?

**किं यात्यस्य पुरः शनैः प्रवहणं तस्यान्तरं मार्गते ?**
**भग्नेऽक्षे परिवर्तनं प्रकुरुते छिन्नोऽथ वा प्रग्रहः ?**
**कर्मान्तोज्झितदारुवारितगतिर्मार्गान्तरं याचते ?**

---

वर्धमानकः कथमधुनापि नायातः ? इति विचिकित्सां ( सन्देहम् ) करोति चारुदत्तः—किमिति । किं वर्धमानकस्य पुरतः किमपि यानं याति, येन तस्य मार्गावरोधः सञ्जातः, अन्यं मार्गञ्च स याचते, अत एव विलम्बावलम्बोऽभूत् ? अथवा अक्षे = धूर्वहे लौह—कीलके भग्ने सति, तस्य परिवर्तनं कुर्वाणो विलम्बते ? किं वा प्रग्रहः = वलीवर्दरज्जुरेव छिन्नः = त्रुटितः ? आहोस्वित् कर्मान्तेन = राजनियोगेन, उज्झितेन = निपातितेन दारुणा = मार्गावरोधकेन काष्ठेन वारिता = रुद्धा गतिर्यस्यैवंविधः सन् मार्गान्तरम् = अन्यो मार्गो मार्गान्तरं = कमपि नूतनं मार्गं याचते ? यातायातप्रत्यवरोधाय राजाज्ञया लम्बमानं काष्ठं राजमार्गे निपातयन्ति, अधिकृताः पुरुषाः, कदाचिदेवं स्यादिति विलम्बहेतुः ? अथवा स्वैरं

---

चारुदत्त—( बैठ कर ) मित्र ! "वर्धमानक" देर कर रहा है ।

विदूषक—मैंने "वर्धमानक" से कह दिया था कि—"वसन्तसेना" को लेकर शीघ्रातिशीघ्र आना ।"

चारुदत्त—तो फिर किस लिए देरी कर रहा है ?

"क्या उस के रथ के आगे कोई दूसरा रथ धीरे-धीरे चल रहा है ? ( जिससे कि उसका मार्ग रुक गया है ) अथवा, धुरा टूटने के कारण उस को बदल रहा है ? या 'नाथ' ही टूट गई है ? या फिर राज-कर्मचारियों के द्वारा राजमार्ग में डाले किसी लक्कड़ आदि से रास्ता रुक जाने के कारण दूसरे मार्ग

**स्वैरं प्रेरितगोयुगः किमथवा स्वच्छन्दमागच्छति? ॥ २ ॥**

( प्रविश्य, गुप्तार्यकप्रवहणस्थः )

चेटः—जाध गोणा ! जाध । [ यातं गावौ ! यातम् । ]

आर्यकः—( स्वगतम् )

**नरपतिपुरुषाणां दर्शनाद्भीतभीतः,**
**सनिगडचरणत्वात् सावशेषापसारः ।**
**अविदितमधिरूढो यामि साधोस्तु याने,**
**परभृत इव नीडे रक्षितो वायसीभिः ॥ ३ ॥**

---

= मन्दं मन्दं प्रेरितं = चालितं गोयुगं = बलीवर्दद्वयं येन तादृशः सन्, स्वच्छन्दं = यथेच्छं समायाति, अतो विलम्बितः? एतदतिरिक्तं किं कारणं सम्भाव्यते? अहं तु न निश्चिनोमि । अत्र सन्देहालङ्कारः । शार्दूलविक्रीडितं छन्दः ॥ २ ॥

रथे स्थित आर्यको मनसि विचारयति—नरपति-पुरुषाणामिति । अहं नरपति-पुरुषाणां = रक्षकाणां दर्शनाद् भीतभीत इव निगडयुक्तचरणत्वात् हेतोः सावशेषः = अवशिष्टः, अपसारः = अपसरणम् पलायनमिति यावत्, यस्य । नगडितचरणतया मया धावनं नैव कृतम्, अविदितमेव यथा स्यात्तथा साधोः = चारुदत्तस्य याने = रथे, अधिरूढः सन् यामि, यथा नीडे = कुलाये, वायसीभिः = काकीभिः परिरक्षितो परभृतः=कोकिलो गच्छति, तथैवाहमपि गच्छामीति भावः ।

---

से आ रहा है? अथवा, धीरे-धीरे बैलों को हाँकता हुआ स्वतन्त्रता ( मौज ) से आ रहा है? ( जिस से कि देर हो गई है? )" ॥ २ ॥

[ छिप कर बैठे हुए "आर्यक" के रथ पर बैठे हुए प्रवेश कर ]

चेट—चलो ! रे बैलो ! चलो !

आर्यक—( स्वयं ही )—

"राजपुरुषों के देखने से भयभीत, बेड़ियों से पैर जकड़े रहने के कारण भागने में असमर्थ मैं गुप्त रूप से सज्जन "आर्य चारुदत्त" के रथ में, वायसियोंके द्वारा पाली हुई कोयल की भाँति जा रहा हूँ ।" ॥ ३ ॥

अहो, नगरात् सुदूरमपक्रान्तोऽस्मि; तत्किमस्मात् प्रवहणादवतीर्य वृक्षवाटिकागहनं प्रविशामि ? उताहो प्रवहणस्वामिनं पश्यामि ? अथ वा कृतं वृक्षवाटिकागहनेन । अभ्युपपन्नवत्सलः खलु तत्रभवानार्यचारुदत्तः श्रूयते; तत्प्रत्यक्षीकृत्य गच्छामि ।

**स तावदस्माद्व्यसनार्णवोत्थितं निरीक्ष्य साधुः समुपैति निर्वृतिम् ।**
**शरीरमेतद्गतमीदृशीं दशां धृतं मया तस्य महात्मनो गुणैः ॥४॥**

कोकिलाः स्वशिशून् काकानां कुलायेषु संस्थाप्यागच्छन्ति । ते च शिशवः स्वापत्यबुद्ध्यैव काक-पत्नीभिः परिपाल्यन्ते । तत्र यथा कोऽपि कोकिल सुतः व्याघादि भयान्निभृतं यथा स्यात्तथा तिष्ठति, तथैवाहमपि रक्षकभयान्निगडितपादः प्रपलायनेऽसमर्थः सन् साधुपुरुषस्यास्मिन् रथे निभृतं स्थितोऽस्मि इति भावः । ततश्च वसन्तसेनाभ्रमाद् रिक्ते रथे स्थितोऽस्मि, इति पूर्णोपमाऽलङ्कारः । मालिनी च च्छन्दः ॥

नगराद् दूरं समागतः, किमहमिदानीं रथादवतीर्य पलायनं स्वीकरोमि, अथवा रथस्वामिनं निरीक्ष्यैव गमिष्यामीति कृतनिश्चय आर्यकश्चारुदत्तस्य साधुस्वभावतां समर्थयते—स तावदिति । स महानुभावश्चारुदत्तोऽस्माद्व्यसनसागरादवतीर्णं माममवलोक्य निर्वृतिम् = सन्तोषमेति = प्राप्स्यति । ( वर्तमानसामीप्याद् भविष्यत्यपि वर्तमानत्त्वं प्रयुक्तम् । ) ईदृशीं दशां = बन्धनागारादि-दुःखसमूहं गतमपीदृशं शरीरं तस्यैव महात्मनश्चारुदत्तस्य गुणैरेव धृतम् । अन्यथा रक्षिभिर्गृहीतस्य मम न जाने

---

ओह ! नगर से बहुत दूर निकल आया हूँ । तो क्या इस ( चलते हुए ) रथ से उतरकर ( कूदकर ) इस सघन बाग में घुस जाऊँ ? या रथ के स्वामी का दर्शन करूँ ? अथवा बाग़ में छिपने को रहने दूँ । "आर्य चारुदत्त" बड़े दयालु सुने जाते हैं । इसलिए ( उनसे ) साक्षात्कार करके जाऊँगा ।

"वह सज्जन मुझको इस विपत्ति से उबरा हुआ देखकर सन्तुष्ट हो जायँगे । और मेरा यह शरीर, ऐसी भयङ्कर विपत्तियों में पड़कर भी, ( मैं समझता हूँ ) उन महोदय के गुणों से ही बच पाया है । ( उनकी कृपा से ही मैं बचा हूँ । यदि अब भी मैं उनका दर्शन नहीं करता तो यह बड़ी भारी ,कृतघ्नता है अतः मैं उनका दर्शन अवश्य ही करूँगा । )" ॥ ४ ॥

चेटः—इमं तं उज्जाणं, जाव उवशप्पामि। ( उपसृत्य ) अज्ज-मित्तेअ !। [ इदं तदुद्यानम् , यावदुपसर्पामि। आर्यमैत्रेय ! । ]

विदूषकः—भो ! पिअं दे णिवेदेमि । वड्ढमाणओ मंतेदि। आगदाए वसंतसेणाए होदव्वं। [ भोः ! प्रियं ते निवेदयामि । वर्धमानको मन्त्रयति । आगतया वसन्तसेनया भवितव्यम् । ]

चारुदत्तः—प्रियं नः प्रियम् ।

विदूषकः—दासीए पुत्ता ! किं चिरइदो सि ? । [ दास्याःपुत्र ! किं चिरायितोऽसि ? । ]

चेटः—अज्जमित्तेअ ! मा कुप्प; जाणत्थलके विशुमलिदे त्ति कदुअ गदागदं कलेंते चिलइदेम्हि । [ आर्यमैत्रेय ! मा कुप्य; यानास्तरणं विस्मृतमिति कृत्वा गतागतं कुर्वंश्चिरायितोऽस्मि । ]

चारुदत्तः—वर्धमानक ! परिवर्तय प्रवहणम्। सखे मैत्रेय ! अव-तारय वसन्तसेनाम् ।

विदूषकः—किं णिअडेण बद्धा से गोड्डा, जेण सअं ण ओदरेदि ?।

---

कीदृशी दुर्दशा सम्पन्ना स्यादिति यस्य कृपया मम शरीररक्षा संजाता, तस्य दर्शन-मकृत्वा गमनमकृतज्ञतामेव मम सूचयिष्यति। कृतघ्नस्य च कल्याणं नैव सम्भव-तीति शास्त्रकृतां वचनम् । तस्य दर्शने च न मे हानिसम्भावना कापीति तत्त्वम् ।

अत्र–अर्थान्तरन्यासोऽलङ्कारः । वंशस्थविलं च च्छन्दः । तल्लक्षणञ्च यथा—"जतौ तु वंशस्थमुदीरितं जरौ ।" इति । वंशस्थं वंशस्थविलञ्चैकमेव ॥ ४ ॥

---

चेट—यह वह उद्यान है । अतः प्रविष्ट होता हूँ । (समीप जा) आर्य मैत्रेय !

विदूषक—तुमसे "प्रिय निवेदन" करता हूँ । "वर्धमानक" बोल रहा है । अतः "वसन्तसेना" आ गई है ( ऐसा मेरा अनुमान है । )

चारुदत्त—मेरे लिए प्रिय है ।

विदूषक—अवे दासीपुत्र ! तूने देर कैसे की ?

चेट—आर्य मैत्रेय ! क्रुद्ध मत होओ ! मैं रथ की बिछावन भूल गया था उस को लेने के लिए गतागत करने के कारण विलम्ब हो गया है ।

चारुदत्त—वर्धमानक ! रथ को फेर दे ! मित्र मैत्रेय ! "वसन्तसेना" को उतारो !

( उत्थाय, प्रवहणमुद्घाट्य ) भो ! ण वसंतसेणा, वसंतसेणो क्खु एसो ।
[ किं निगडेन बद्धावस्याः पादौ, येन स्वयं नावतरति ? । भोः ! न वसन्तसेना, वसन्तसेनः खल्वेषः । ]

चारुदत्तः—वयस्य ! अलं परिहासेन । न कालमपेक्षते स्नेहः । अथ वा स्वमेवावतारयामि । ( इत्युत्तिष्ठति )

आर्यकः—( दृष्ट्वा ) अये अयमेव प्रवहणस्वामी ? न केवलं श्रुतिरमणीयो दृष्टिरमणीयोऽपि । हन्त, रक्षितोऽस्मि ।

चारुदत्तः—( प्रवहणमधिरुह्य, दृष्ट्वा च ) अये, तत्कोऽयम् ? ।

---

प्रवहणे समागते चारुदत्ताज्ञया रथमारुह्य नेयं वसन्तसेना, अपि तु कश्चिदन्यो वसन्तसेनः, इति परिहासवचनं ( यथार्थमपि ) श्रुत्वा कालहरणमनुचितमिति कथयति चारुदत्तः—वयस्येति । मित्र ! परिहासस्यायमवसरो नास्ति, परिहासशीलस्त्वं परिहासस्य कालमपि न जानासि ? पश्य, स्नेहः कालहरणं नापेक्षते, स्नेहस्यायं स्वभावः—यत् स समयातिपातं विलम्बं वा न सहते । अतः सत्वरमवतारय वसन्तसेनाम् । अथवा—तिष्ठ त्वम् । अहमेवावतारयामि ।

दूरत एवार्यचारुदत्तं निरीक्ष्यार्यकः कथयति—अयमेवेति । अहो ! अयमेवास्य रथस्य प्रभुः । अयं न केवलं श्रुतिमात्रेणैव रमणीयः, अपि तु दृष्टिरमणीयोऽप्यस्ति । अस्य गुणश्रवणमात्रेणैवानुरज्याम्यस्य गुणेषु, परन्तु दर्शनमात्रेणाप्ययमति-

---

विदूषक—क्या इस के पैर बँधे हुए हैं जो स्वयं नहीं उतरती ? ( उठ कर तथा रथ की खिड़की खोलकर ) मित्र ! यह "वसन्तसेना" नहीं "वसन्तसेन" है ।

चारुदत्त—मित्र ! हँसी मत करो ! "स्नेह विलम्ब नहीं सहता ।" अथवा, मैं स्वयं ही उतारता हूँ । ( उठता है । )

आर्यक—( देख कर ) ओह ! यही रथ का स्वामी है । यह केवल सुनने में ही सुन्दर नहीं, किन्तु देखने में भी मनोहर है । वाह ! अब तो मेरी रक्षा हो गई ( क्योंकि ऐसे दिव्य पुरुष किसी को कष्ट नहीं पहुँचाया करते हैं । )

चारुदत्त—( रथ पर चढ़ तथा देखकर ) अरे ! यह कौन है ?

करिकरसमबाहुः सिंहपीनोन्नतांसः,
पृथुतरसमवक्षास्ताम्रलोलायताक्षः।
कथमिदमसमानं प्राप्त एवंविधो यो,
वहति निगडमेकं पादलग्नं महात्मा ॥५॥

---

मनोहरः प्रतिभाति। हन्त! प्रसन्नताया इयं वार्ता। अहमिदानीं रक्षितोऽस्मि। एवंविधा मनोहराकृतयः कस्याप्यहितं नैव कुर्वन्ति। अस्मादिदानीं मम भयं नेति भावः।

चारुदत्तो रथमारुह्यापरिचितस्य दर्शनमात्रेणैव साश्चर्यः सन् कथयति—करिकरसमबाहुरिति। अये! कोऽयं महानुभावः? अस्य भुजावपि हस्ति-शुण्डा-दण्ड इव पीनौ विस्तृतौ च वर्तेते, अंसश्च सिंहस्यांस इवोन्नतः, पीनश्चास्ति, समुन्नतस्कन्धोऽयमस्तीति भावः। पृथुतरं = विशालम्, समं च वक्षो यस्य तादृशः, ताम्रवर्णे लोले = चञ्चले, आयते = दीर्घे चाक्षिणी यस्यैवंविधः, एवंविधोऽप्ययं महात्मा, इदमसमानं पादलग्नं निगडं वहति। एतत्तु सर्वथा विपरीतमिव प्रतिभाति, यदीदृशोऽपि निगडितचरणः? तत् कोऽयमिति जिज्ञासते—"को भवान्?" इति।

अत्र विरूपयोः पदार्थयोः संघटनाद् विषमालङ्कारः। मालिनी च्छन्दः।

अस्मिन् पद्ये च सिंह-स्कन्धोपमा साहित्यशास्त्रे न दीयते, प्रत्युत वृषस्कन्धोपमा दीयते, इति प्रसिद्धि-विरुद्धत्वदोषोऽस्ति। यदि तु कवीनां निरङ्कुशत्वात् समाधानमेवेष्टं तर्हि सिंहानां ग्रीवा-परिवर्तनं न भवतीत्यस्यापि तथेति कथञ्चित् समाधानं कार्यम् ॥५॥

---

"हाथी की सूँड़ के समान भुजावान्, सिंह के समान मोटे तथा ऊँचे कन्धों वाला, विशाल एवं समान वक्षःस्थल तथा ताँबे के समान अरुणवर्ण और चञ्चल नेत्रों वाला होकर भी यह महानुभाव इस प्रकार पैर में बँधी हुई इस अननुरूप बेड़ी को क्यों धारण कर रहा है?" ॥ ५ ॥

( कहाँ इसका आकर्षक शरीर? और कहाँ यह कठोर बेड़ी? यह सर्वथा अनुचित है। )"

ततः को भवान् ? ।

आर्यकः—शरणागतो गोपालप्रकृतिरार्यकोऽस्मि ।

चारुदत्तः—किं घोषादानीय योऽसौ राज्ञा पालकेन बद्धः ? ।

आर्यकः—अथ किम् ।

चारुदत्तः—

विधिनैवोपनीतस्त्वं चक्षुर्विषयमागतः ।
अपि प्राणानहं जह्यां न तु त्वां शरणागतम् ॥६॥

( आर्यको हर्षं नाटयति )

चारुदत्तः—वर्धमानक ! चरणान्निगडमपनय ।

चेटः—जं अज्जो आणवेदि । ( तथा कृत्वा ) अज्ज ! अवणीदाइं

---

चारुदत्तप्रश्नानन्तरमार्यकः स्वपरिचयं दातुमाह—शरणागत इति । गोपालः-प्रकृतिः = मूलकारणं यस्य सः । गोपालपुत्रः शरणागतोऽस्म्यार्यकः इति ।

चारुदत्तस्तस्य परिचयेन प्रमुदितः प्राह—विधिनैवेति । अद्य त्वं विधिनैव मम लोचनगोचरतां नीतोऽसि । प्राणपरित्यागेऽपि तव रक्षां कर्तुं विमुखो न भविष्यामि । प्राणा यदि यान्ति—कामं यान्तु, परं शरणागतं त्वां न परित्यक्ष्यामीति भावः ॥ ६ ॥

---

इसलिए आप कौन हैं ?

आर्यक—शरणागत गोपाल जाति का "आर्यक" हूँ ।

चारुदत्त—क्या वही, जिसको राजा "पालक ने घोष से लाकर बन्धन में डाल दिया था ?

आर्यक—जी हाँ !

चारुदत्त—"सौभाग्य से ही यहाँ लाये हुए आपका दर्शन हुआ है । मैं प्राण–परित्याग बड़ी प्रसन्नता से कर दूँगा ; परन्तु आपको नहीं छोड़ूँगा ।" ॥६॥

[ "आर्यक" हर्ष का अभिनय करता है । ]

चारुदत्त—वर्धमानक ! पैर से बेड़ी खोलो ?

णिगलाइं। [ यदार्य आज्ञापयति। आर्य ! अपनीतानि निगडानि। ]

आर्यकः—स्नेहमयान्यन्यानि दृढतराणि दत्तानि।

विदूषकः—संगच्छेहि णिअडाइं। एसो वि मुक्को। संपदं अम्हे वच्चिस्सामो। [ संगच्छस्व निगडानि। एषोऽपि मुक्तः। सांप्रतं वयं व्रजिष्यामः। ]

चारुदत्तः—धिक्, शान्तम्।

आर्यकः—सखे चारुदत्त ! अहमपि प्रणयेनेदं प्रवहणमारूढः; तत्क्षन्तव्यम्।

---

चरणान्निगडे दूरीभूते आर्यको ब्रूते—स्नेहेति। लौहमयं निगडमपाकृत्य भवता स्नेहमयानि निगडानि मम पादयोः प्रत्यर्पितानीति मुक्तबन्धनोऽपि नवीनेन स्नेहबन्धनेन बद्धोऽस्मि, इति भावः।

सपरिहासं विदूषकश्चारुदत्तं प्रति कथयति—संगच्छेहीति। भो मित्र ! साम्प्रतमेष तु मुक्तः, परन्तु निगडानि त्वं परिधेहि। सांप्रतं वयं व्रजिष्यामः कारागारे—इति शेषः। अयमाशयः—अस्य पादान्निगडानि भवता दूरे कृतानि। अयं च राजापथ्यकारी। चारचक्षुषो हि राजानो भवन्तीति राजा पालको नूनमेवेदृशं समाचारं विज्ञायैतस्य स्थानेऽस्मान् सर्वानपि निगडितचरणान् कृत्वा बन्धनागारे निपातयिष्यतीति। परोपकारिणा त्वया सहास्माभिरपि कारावास-सुखमनुभवितव्यं भविष्यतीति तत्त्वम्।

---

चेट—जो आज्ञा ! ( खोलकर ) आर्य ! बेड़ियाँ खोल दीं।

आर्यक—और—इनसे भी अधिक दृढ़ स्नेह की बेड़ियाँ पहिना दीं।

विदूषक—बन्धन खोल दिए ? यह मुक्त हो गया और अब हम बँधेंगे। ( अर्थात्—इसे तो आपने मुक्त कर दिया परन्तु दूतों से पता लगने पर "राजा पालक" हमको बाँधकर डाल देगा। )

चारुदत्त—चुप रहो !

आर्यक—मित्र चारुदत्त ! मैं भी प्रेम के कारण ही इस रथ पर चढ़ गया था। अतः क्षमा कीजियेगा।

चारुदत्तः—अलंकृतोऽस्मि स्वयंग्राहप्रणयेन भवता ।

आर्यकः—अभ्यनुज्ञातो भवता गन्तुमिच्छामि ।

चारुदत्तः—गम्यताम् ।

आर्यकः—भवतु, अवतरामि ।

चारुदत्तः—सखे ! नावतरितव्यम् । प्रत्यग्रापनीतसंयमनस्य भवतोऽलघुसंचारा गतिः । सुलभपुरुषसंचारेऽस्मिन् प्रदेशे प्रवहणं विश्वासमुत्पादयति, तत्प्रवहणेनैव गम्यताम् ।

आर्यकः—यथाह भवान् ।

चारुदत्तः—

**क्षेमेण व्रज बान्धवान्**

---

अवतारं कामयमानस्यार्यकस्य संचारे क्षतिं सम्भाव्य चारुदत्तो निषेधत्यवतर—सखे ! इति । मित्र ! अवतरणस्य ( रथात् ) आवश्यकता नास्ति । यतः सद्योऽपनीतनिगडतया गत्यवरोधो भवतः सम्भाव्यते । किञ्च—एतस्मिन् प्रान्ते पुरुषाः प्रायः परितश्चरन्तीति रथेनैव गच्छेति भावः ।

गमनाऽभ्यनुज्ञां ददाति चारुदत्तः—क्षेमेणेति । वयस्य ! सानन्दं स्वबान्धवान् व्रज, तत्र गत्वा तान् सर्वानपि स्वबन्धून् सन्तोषय ।

---

चारुदत्त—स्वयं ही स्नेह करनेवाले आपको पाकर मैं अलङ्कृत हो गया हूँ ।

आर्यक—आपकी आज्ञा से जाना चाहता हूँ ।

चारुदत्त—जाइये ।

आर्यक—अच्छा, तो उतरता हूँ ।

चारुदत्त—मित्र ! उतरिये मत ! क्योंकि एकदम बेड़ी काटने से सुन्न पैरों के कारण आपकी गति रुक सकती है । मनुष्यों के आने-जानेवाले इस स्थान में रथ विश्वास उत्पन्न कर देगा अतः रथ से ही जाइये ।

आर्यक—जो आप कहते हैं !

चारुदत्त—"आप सकुशल बन्धु-बान्धवों के पास जाइये—"

आर्यकः—

नन्‌ु मया लब्धो बान्धवः,

चारुदत्तः—

स्मर्तव्योऽस्मि कथान्तरेषु भवता

आर्यकः—

स्वात्मापि विस्मर्यते ?

चारुदत्तः—

त्वां रक्षन्तु पथि प्रयान्तममराः,

---

आर्यकः कथयति—ननु—इति। ननु भोः ! मया तु भवानेवाभिनवो बान्धवः समुपलब्धः, ते मम बान्धवास्तु लौकिकाः, परन्तु भवाँस्तु परमसौभाग्येनैवालौकिक गुणगणपरिपूर्णः समाप्तः ।

चारुदत्तः पुनराह—स्मर्तव्य इति । भवताऽहमपि स्वीयैः सह कथान्तरेषु = वार्तालाप— संगेषु स्मर्तव्योऽस्मि । कदाचिन्ममापि स्मरणं कर्तव्यम् ।

एतस्यात्युचितमुत्तरं ददात्यार्यकः—स्वात्मेति । किन्तु कदाचित् स्वात्मापि विस्मर्यते ? भवान् मम सर्वात्मना आत्मरूप एव । यदि भवन्तं विस्मरिष्यामि, तर्हि स्वात्मानमेव विस्मरिष्यामीति नैवं वक्तव्यम् ।

पुनश्चारुदत्तः शुभाशिषा संवर्धयति—त्वामिति । पथि = मार्गे प्रयान्तं त्वां, अमराः = देवाः रक्षन्तु ।

---

आर्यक—मैंने आप जैसा बन्धु पा लिया—"

चारुदत्त—"कभी कभी बात-चीत में मेरा स्मरण करते रहना—"

आर्यक—"क्या अपनी आत्मा भी भुलाई जाती है ? (आप तो मेरी आत्मा के सदृश हैं—आपको कैसे भुलाया जा सकता है ?)

चारुदत्त—मार्ग में जाते हुए आपकी देवगण रक्षा करें ।"

आर्यकः—

संरक्षितोऽहं त्वया ।

चारुदत्तः—

स्वैर्भाग्यैः परिरक्षितोऽसि,

आर्यकः—

ननु हे तत्रापि हेतुर्भवान् ॥७॥

---

आर्यकः सकृतज्ञमाह—भवतैव संरक्षितोऽस्मि । त्वत्तोऽधिकः को देव ममेति भावः ।

आर्यकवचनं श्रुत्वा चारुदत्तः स्वौदार्येण परिप्लुतः समाधत्ते—स्वैरिति । वयस्य ! मयाऽत्र किं कृतम् ? त्वं तु स्वकीयै र्भाग्यैरेव परिरक्षितः ।

आर्यकः सर्वमपि संरक्षणभारं चारुदत्ते एव निक्षिपन्नाह—ननु हे ! चारुदत्त ! तत्रापि मम रक्षायां भवानेव हेतुः । यदि भवतो रथो नोपलब्धोऽभविष्यत्, कुतस्तर्हि ममाभिरक्षाऽभविष्यदिति भवानेव कारणभूतो मम परिरक्षणे, इति भावः ।

अत्र विमर्शसन्धिः ! तत्र सन्धिसामान्यलक्षणमुक्तं साहित्यदर्पणे—"सन्धिरेकान्वये सति ।" इति ।

"सन्धयो नाट्यमातरः" इत्यभियुक्तोक्तेर्नाटकेषु पञ्च सन्धयो निवेश्यन्ते । ते च क्रमशो यथा—मुखसन्धिः, प्रतिमुखसन्धिः, गर्भसन्धिः, विमर्शसन्धिः, उपसंहारसन्धिश्चेति । अत्र च—विमर्शसन्धेर्लक्षणम्—

यत्र मुख्यफलोपायः, उद्भिन्नो गर्भतोऽधिकः ।
शापाद्यैः सान्तरायश्च, स विमर्श इति स्मृतः ॥" इति ॥

शार्दूलविक्रीडितं च्छन्दः ॥७॥

---

आर्यक—"आपने ही मेरी रक्षा कर ली है ।"

चारुदत्त—"आप तो अपने सौभाग्य से ही बचे हैं ।"

आर्यक—"तो भी रक्षा करने में हेतु आप ही हैं ।" ॥ ७ ॥

चारुदत्तः—यदुच्यते पालके महती रक्षा न वर्तते, तच्छीघ्रमपक्रामतु भवान् ।

आर्यकः—एवम्, पुनर्दर्शनाय । ( इति निष्क्रान्तः )

चारुदत्तः—

**कृत्वैवं मनुजपतेर्महद्व्यलीकं,**
**स्थातुं हि क्षणमपि न प्रशस्तमस्मिन् ।**
**मैत्रेय ! क्षिप निगडं पुराणकूपे,**
**पश्येयुः क्षितिपतयो हि चारदृष्ट्या ॥८॥**

---

चारुदत्तः सत्वरं गन्तुं कारणमुपन्यस्यति—यदुच्यते—इति । यतः समुदयशीलो राजा पालकः, अतो रक्षायाः सम्भावना नास्ति, ततस्तु शीघ्रमेवेतो गन्तव्यम् । केवलं वार्तालापेनैव समयो न नेतव्यः, इति भावः ।

आर्यकः चारुदत्तस्य वचनं स्वीकुर्वन्नाह—एवमिति । एवं = मया भवदादेशानुसारं गम्यते, परं पुनर्दर्शनार्थम् । पुनरपि शीघ्रमेव दर्शनं यथा भवेत् तथा करिष्यामीति ।

चारुदत्तः स्वकर्तव्यं समुपदिशन्नाह—कृत्वैवमिति । भो मैत्रेय ! ईदृशं व्यलीकम् = अपराधं कृत्वा, अत्र क्षणमपि न स्थातव्यमस्माभिः । अतो निगडमिदं

---

चारुदत्त—उदयशील "पालक" से बहुत देर तक ( यहाँ खड़े खड़े ) रक्षा नहीं हो सकती । अतः आप शीघ्र ही भाग जाइये ।

आर्यक—फिर आपका दर्शन करने के लिए ( जाता हूँ । )

[ चला जाता है । ]

चारुदत्त—"इस प्रकार राजा का यह महान् अपराध करके यहाँ क्षणभर भी ठहरना उचित नहीं है । अतः मैत्रेय ! तुम इस बेड़ी को पुराने कूएँ में डाल दो । अन्यथा राजा देख लेगा क्योंकि राजागण "चार-चक्षु" होते हैं । ( ऐसा न हो कि कोई कहदे । अतः दूतों के अनुसार ही कार्य करने वाले राजा से बचना चाहिए । )" ॥ ८ ॥

( वामाक्षिस्पन्दनं सूचयित्वा ) सखे मैत्रेय ! वसन्तसेनादर्शनोत्सुकोऽयं जनः। पश्य—

**अपश्यतोऽद्य तां कान्तां वामं स्फुरति लोचनम् ।**
**अकारणपरित्रस्तं हृदयं व्यथते मम ॥९॥**

तदेहि, गच्छावः ( परिक्रम्य ) कथमभिमुखमनाभ्युदयिकं श्रमणकदर्शनम् ? । ( विचार्य ) प्रविशत्वयमनेन पथा । वयमप्यनेनैव पथा गच्छामः । ( इति निष्क्रान्ताः सर्वे )

## इत्यार्यकापवाहनं नाम सप्तमोऽङ्कः ।

---

पुराणकूपे निक्षिप । राजानो हि चारेक्षणा भवन्ति । कदाचित् कश्चित् सूचयेत् कोऽपीति भावः । प्रहर्षिणी च्छन्दः ॥ ८ ॥

वसन्तसेनादर्शनाय त्वरमाणश्चारुदत्तः प्राह—अपश्यत इति । तां वसन्तसेनामनालोकयतो मम चेतश्चिन्ताचुम्बितं भवति । अकारणं परित्रस्तं मम हृदयमधिकं व्यथते ॥ ९ ॥

सम्मुखे क्षपणकमुद्वीक्ष्य मार्गान्तरमनुसरन् प्रयाति सविदूषकश्चारुदत्तः ।

इति मृच्छकटिके 'श्रीप्रियम्वदा'ख्य-टीकायां सप्तमोऽङ्को विरतः ।

---

( बाँयीं आँख फड़कने की सूचना देता हुआ ) मित्र मैत्रेय ! मैं "वसन्तसेना" को देखने के लिए बहुत उत्कण्ठित हूँ । देखो—

"आज प्रियतमा को न देखते हुए मेरा वामनेत्र फड़क रहा है । और अकारण ही किसी अज्ञात भय से मेरा हृदय काँप रहा है ।" ॥ ९ ॥

इसलिए आओ, चलें । ( घूमकर ) क्या सामने से ही अनिष्टकारी क्षपणक का दर्शन हुआ ? ( सोचकर ) यह इसी रास्ते से आवे और हम इस ( दूसरे ) मार्ग से जाते हैं । [ "विदूषक" के साथ चला जाता है । ]

"श्री प्रियम्वदा–" टीकालङ्कृत मृच्छकटिक" के "आर्यकापहरण" नामक सातवें अङ्क का भाषानुवाद समाप्त ॥

# अष्टमोऽङ्कः

( ततः प्रविशत्यार्द्रचीवरहस्तो भिक्षुः )

भिक्षुः—अज्ञा ! कलेध धम्मशंचअं,—

**शंजम्मध णिअपोटं, णिच्चं जग्गेध झाणपडहेण ।**
**विशमा इंदिअचोला, हलंति चिलशंचिदं धम्मं ॥१॥**

अवि अ, अणिच्चदाए पेक्खिअ णवलं दाव धम्माणं शलणम्हि ।

---

हस्ते निजान्यार्द्रवस्त्राणि गृहीत्वा भिक्षुः प्रविशति कथयति च—शंजम्मध-इति । अरे, अज्ञाः ! जनाः ! सर्वदा सावधानतया निजोदर-रक्षां कुरुत । उदरार्थमेव प्रायः सर्वेऽनर्थाः क्रियन्ते जनैः । एतदेव सर्वथा रक्षणीयम् । नित्यं ध्यानपटहेन जाग्रत । ध्यान-रूपं वाद्यं वादयन्तो जागरणं कुरुत । यतः एते इन्द्रिय-चौराः चिरात् सञ्चितं धर्म-धनं हरन्ति, संसारे विदुषामपि मनश्चञ्चलं सम्पन्नं सत् पातयत्यात्मानम्, साधारणस्य तु कथैव का ? इत्थञ्च सर्वतः प्रथममिन्द्रियाणां संरक्षणं साधकैः कार्यम् । यथा च श्रीगीतायामुक्तम्—

"इन्द्रियाणां हि चरतां, यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां, वायुर्नावमिवाम्भसि ॥" इति ।

अत्र रूपकालङ्कारः । आर्या च्छन्दः ॥ १ ॥

संसारोऽनित्यः । अतोऽहं सर्वदा धर्माणामेव शरणमस्मि—इत्याशयेन पुनः

---

[ तदनन्तर भीगे कपड़े लिए हुए 'भिक्षु' प्रवेश करता है । ]

भिक्षु—अरे अज्ञानियो ! धर्मोपार्जन करो !

"सदा अपने उदर पर नियन्त्रण रखो ! ( क्योंकि इसी के लिए सारे अनर्थ होते हैं । ) और नित्य ही ध्यान रूपी बाजा बजा कर जागते रहो; क्योंकि ये इन्द्रिय-रूपी चोर बड़े भयङ्कर हैं ( देखते ही देखते ) बहुत दिनों से उपार्जित धर्म का अपहरण कर लेते हैं ।" ॥ १ ॥

**पंचज्जण जेण मालिदा, इत्थिअ मालिअ गाम लक्खिदे ।**
**अबले क चंडाल मालिदे, अवसं वि शे णल शग्ग गाहदि ॥२॥**
**शिलो मुंडिदे तुंड मुंडिदे चित्त ण मुंडिदे कीश मुंडिदे ।**
**जाह उण अ चित्त मुंडिदे, शाहु शुट्ठु शिलो ताह मुंडिदे ॥३॥**

---

स्वमन्तव्यं प्रकाशयति—पञ्चज्जण-इति । येन पञ्च जना मारिताः = अर्थात्—पञ्चेन्द्रियाणि जितानि । स्त्रियं मारयित्वा ग्रामस्य रक्षा कृता । अर्थात्—अविद्यां विजित्य ग्रामः ( शरीरं ) रक्षितः । अविद्याया एष प्रभावो यद्बलादनात्मपदार्थेष्वपि सात्म्य-बुद्धिरुत्पद्यते । आत्मनः पातिकामविद्यां स्ववशे विधायैवात्मानन्दानुभूतिर्भवति, इति भावः । अपि च—अबलः = निर्बलः, असहाय इति यावत् । चण्डालः = ( अहङ्कारः ) मारितः, अवश्यं स नरः स्वर्गं गाहते = गच्छति । स्वर्गगमनार्थमिन्द्रियादीनां सावधानतया वशीकार आवश्यक इति सारः । अत्र वैतालीयं छन्दः । तल्लक्षणं यथा—

"षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः ।
न समाऽत्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ।" इति ॥ २ ॥

पुनरपि धर्मवाक्यमाह—शिल-इति । यदि साधकेन भिक्षुणा शिरो मुण्डितम्, तुण्डं = मुखमपि मुण्डितम्, चित्तञ्च न मुण्डितम्, तदा किं मुण्डितम्? यस्य चित्तं मुण्डितं, साधोस्तस्यैव शिरो मुण्डितम् । न केवलं शिरोमुण्डनेन कषायवसनधारणेन च लाभो भवति, चित्तस्य शोधनमेवावश्यकमिति भावः । तथा च मनुनोक्तम्—

---

और भी—( संसार की ) अनित्यता देखकर अब मैं धर्म की ही शरण में हूँ ।

"जिस ने इन्द्रिय रूपी पाँच जन जीत लिए तथा 'अविद्या' रूपी स्त्री को मार कर गाँव ( शरीर ) की रक्षा कर ली एवं दुर्बल 'चाण्डाल' ( अहङ्कार ) का दमन कर दिया है, वह मनुष्य अवश्य ही स्वर्ग प्राप्त कर लेता है ।" ॥ २ ॥

"सिर मुँडाया, मुख को भी मुण्डित कर लिया, परन्तु यदि चित्त नहीं मुड़ाया ( निर्मल किया ) तो इस मुण्डन से क्या लाभ? और जिसका चित्त निर्मल हो गया है सिर मुँडाना तो उसका ही सार्थक है ।" ॥ ३ ॥

गिहिद्कशाओद्ए एशे चीवले, जाव एदं लट्टिअशालकाहकेलके उज्जाणे पविशिअ, पोक्खलिणीए पक्खालिअ, लहुं लहुं अवक्कमिश्शं [ अज्ञाः ! कुरुत धर्मसंचयम् ,—

संयच्छत निजोदरं नित्यं जाग्रत ध्यानपटहेन ।
विषमा इन्द्रियचौरा हरन्ति चिरसंचितं धर्मम् ॥

अपि च, अनित्यतया प्रेक्ष्य केवलं तावद्धर्माणां शरणमस्मि ।

पञ्चजना येन मारिता, अविद्यां मारयित्वा ग्रामो रक्षितः ।
अबलः क चण्डालो मारितोऽवश्यमपि स नरः स्वर्गं गाहते ॥
शिरो मुण्डितं तुण्डं मुण्डितं चित्तं न मुण्डितं किमर्थं मुण्डितम् ।
यस्य पुनश्च चित्तं मुण्डितं साधु सुष्ठु शिरस्तस्य मुण्डितम् ॥

गृहीतकषायोदकमेतच्चीवरम् , यावदेतद्राष्ट्रियश्यालकस्योद्याने प्रविश्य, पुष्करिण्यां प्रक्षाल्य, लघु लघ्वपक्रमिष्यामि । ] ( परिक्रम्य, तथा करोति )

( नेपथ्ये )

शकारः—च्चियश्ट ले दुश्टशमणका ! च्चियश्ट । [ तिष्ठ रे दुष्टश्रमणक ! तिष्ठ । ]

भिक्षुः—( दृष्ट्वा, सभयम् ) ही अविद–माणहे, एशे शे लाअशालशंठाणे आअदे । एक्केण भिक्खुणा अवलाहे किदे, अण्णं पि जहिं जहिं

---

"क्लृप्तकेशनखश्मश्रुः, पात्री दण्डी कुसुम्भवान् ।
विचरेन्नियतो नित्यम् , सर्वभूतान्यपीडयन् ॥" इति ॥
अत्रापि वैतालीयं च्छन्दः ॥ ३ ॥

---

यह भीगा हुआ गेरुआ वस्त्र मैंने ले लिया है, इसलिए इस राजा के साले ( "संस्थानक" ) के बाग की बावड़ी में इन्हें धोकर धीरे-धीरे चला जाऊँगा । [ घूमकर वैसा ही करता है । ]

( नेपथ्य में )

शकार—ठहर बे ! दुष्ट श्रमणक ! ठहर !

भिक्षु—( देख कर भयपूर्वक ) ओह ! यह राजश्यालक "संस्थानक" आ

भिक्खुं पेक्खदि, तहिं तहिं गोणं व्व णाशं विंधिअ ओवाहेदि; ता कहिं अशलणे शलणं गमिश्शं ? । अथवा भट्टालके ब्जेव बुद्धे मे शलणे । [ आश्चर्यम्, एष स राजश्यालसंस्थानक आगतः, एकेन भिक्षुणापराधे कृतेऽन्यमपि यत्र यत्र भिक्षुं पश्यति, तत्र तत्र गामिव नासां विद्ध्वापवाहयति; तत्कुत्राशरणः शरणं गमिष्यामि ? । अथवा भट्टारक एव बुद्धो मे शरणम् । ]

( प्रविश्य, सखड्गेन विटेन सह )

शकारः—चियश्ट ले दुश्टशमणका ! चियश्ट; आवाणअमज्झपविश्टश्श; विअ लत्तमूलअश्श शीशं दे मोडइश्शं । ( इति ताडयति ) [ तिष्ठ रे दुष्टश्रमणक ! तिष्ठ; आपानकमध्यप्रविष्टस्येव रक्तमूलकस्य शीर्षं ते भङ्क्ष्यामि । ]

विटः—काणेलीमातः ! न युक्तं निर्वेदधृतकषायं भिक्षुं ताडयितुम् ।

---

शकारः श्रमणकं ( बौद्धसंन्यासिनं ) निरीक्ष्य कथयति—चिट्ठ-इति । अरे दुष्ट श्रमणक ! तिष्ठ । आपानकस्य = मद्यपानां समाजस्य मध्ये यथा रक्तवर्णकं मूलकं ( "मूली" इति प्रसिद्धम् ) बलात् त्रोटयन्ति पातारः, तथैव तव शिरस्त्रोटयिष्यामि ।

विटः शकारं निषेधति—काणेलीमातः–इति । काणेली = दुराचारिणी माता यस्य तत्सम्बुद्धौ हे काणेलीमातः ! शकार ! निर्वेदवशाद्धृतमनेन भिक्षुणा कषाय-

---

गया । किसी एक भिक्षु के अपराध कर देने पर अब यह जहाँ जहाँ "भिक्षुक" को पाता है वहाँ-वहाँ ही उसको बैल की भाँति नाथकर भगा देता है । तो शरणविहीन मैं कहाँ जाऊँ ? अथवा, स्वामी "भगवान् बुद्ध" मेरे शरणदाता हैं ।

( तलवार लिए हुए "विट" के साथ प्रवेश कर )

शकार—ठहर बे ! दुष्ट श्रमणक ! ठहर ! जिस प्रकार मद्यपों की मण्डली में पियक्कड़ लोग लाल मूली को ( अधिक नशा चढ़ाने के लिए ) तोड़ते हैं उसी प्रकार मैं तेरा सिर तोड़ डालता हूँ । ( पीटता है । )

विट—पुंश्चलीपुत्र ! वैराग्य से काषाय ग्रहण करनेवाले इस भिक्षु को मारना

तत्किमनेन ? । इदं तावत् सुखोपगम्यमुद्यानं पश्यतु भवान् ।

**अशरणशरणप्रमोदभूतैर्वनतरुभिः क्रियमाणचारुकर्म ।**
**हृदयमिव दुरात्मनामगुप्तं नवमिव राज्यमनिर्जितोपभोग्यम् ॥४॥**

भिक्षुः—शाअदं; पशीददु उवाशके । [ स्वागतम् ; प्रसीदतु-

---

वन्नम् । अस्य ताडनमनुचितम् । त्वं पूर्वमुद्यानस्य, शोभामेव पश्य ।

तदेव प्रतिपादयति—अशरणशरणमिति । इदमुपवनं रक्षकाणामभावादपि स्वाभाविक-सौन्दर्य-सम्पन्नं सत् चेतसः प्रसादकमस्ति, तथाहि—नास्ति शरणं = गृहं येषां तेषां शरणानि रक्षकाः, तथा सर्वेषां प्रमोदभूताः = आनन्दप्रदाः । ये गृह-विहीना भवन्ति, प्रायस्ते पादपानामधस्तान्निवसन्ति, छाया फल पत्रादिदानेन सर्वेषा-मामोदप्रदा भवन्ति पादपाः । एवंविधैरुपवनस्थतरुभिः क्रियमाणं चारु धार्मिकं कर्म, छायादिप्रदानरूपम् । दुरात्मनां जनानां हृदयमिव, अगुप्तं रक्षाहीनम् , अथ च नवं राज्यमिव अनिर्जितम् = साधुशासनरहितम् , नवे राज्ये शासनादिव्यवस्था साधुतया नैव भवति । किञ्च-उपभोग्यम् = उपभोक्तुं योग्यम् , यः कोऽप्युपवनस्योप-भोगं कर्तुं प्रभवति । अत्रोपमालङ्कारः । पुष्पिताग्रा च्छन्दः । तल्लक्षणञ्च यथा— "अयुजि न युगरेफतो यकारो, युजि च नजौ जरगाश्च पुष्पिताग्रा ।" इति ॥४॥

---

उचित नहीं है । अतः इससे ( झगड़ने से ) क्या लाभ ? आप इस आनन्ददायी उद्यान की शोभा देखिये ।

"अशरणों के लिए शरण तथा आनन्ददायक वृक्षों के सुन्दर ( छायादान आदि ) कार्यों से ( सुशोभित ) यह उपवन—दुष्टों के हृदय की भाँति अरक्षित एवं नये राज्य की भाँति सुव्यवस्था-रहित है ( इसका प्रबन्ध सुन्दर नहीं है । ) और यह उपभोग के योग्य भी है ।" ॥ ४ ॥ ❁

भिक्षु—स्वागत है ! उपासक प्रसन्न हों ।

---

❁ इस श्लोक से—शृङ्खला रहित तथा नये राज्य की सूचना मिलने से—"आर्यक" द्वारा अधिकृत राज्य कबतक विशृङ्खलित रहेगा ?" इस अर्थ की अभिव्यक्ति होती है ।"

पासकः । ]

शकारः—भावे ! पेक्ख पेक्ख, आक्कोशदि मं। [ भाव ! पश्य पश्य, आक्रोशति माम् । ]

विटः—किं ब्रवीति ? ।

शकारः—उवाशके त्ति मं भणादि, किं हग्गे णाविदे ? । [ उपासक इति मां भणति, किमहं नापितः ? । ]

विटः—बुद्धोपासक इति भवन्तं स्तौति ।

शकारः—थुणु शमणका ! थुणु । [ स्तुनु श्रमणक ! स्तुनु । ]

भिक्षुः—तुमं धण्णे, तुमं पुण्णे । [ त्वं धन्यः, त्वं पुण्यः । )

शकारः—भावे ! धण्णे पुण्णे त्ति मं भणादि । किं हग्गे शलावके कोश्टके कोंभकाले वा ? । [ भाव ! धन्यः पुण्य इति मां भणति । किमहं शलावकः ( चार्वाकः ) कोष्टकं कुम्भकारो वा ? । ]

विटः—काणेलीमातः ! ननु 'धन्यस्त्वम्' 'पुण्यस्त्वम्' इति भवन्तं स्तौति ।

---

शकार—भाव ! देखो ! देखो ! यह मुझे कोस रहा है । ( मुझको गाली दे रहा है । )

विट—क्या कहता है ?

शकार—मुझको "उपासक" कहता है तो क्या मैं नाई हूँ ?

विट—"बुद्ध का उपासक" कहकर आपकी प्रशंसा करता है ।

शकार—श्रमणक ! बार बार प्रशंसा कर !

भिक्षु—"तुम धन्य हो ! तुम पुण्य हो !"

शकार—भाव ! यह मुझको "धन्य-पुण्य" कहता है । तो क्या मैं कोई "चार्वाक", "लोभी" अथवा "कुम्हार" हूँ ?

विट—काणेलीपुत्र ! "तुम धन्य हो ! तुम पुण्य हो" इस प्रकार तुम्हारी स्तुति कर रहा है ।

शकारः—भावे ! ता कीश एशे इध आगदे ? । [ भाव ! तत्कि-मर्थमेष इहागतः ? । ]

भिक्षुः—इदं चीवलं पक्खालिदुं । [ इदं चीवरं प्रक्षालयितुम् । ]

शकारः—अले दुश्टशमणका ! एशे मम बहिणीवदिणा शव्वुज्जा-णाणं पवले पुप्फकलंडुज्जाणे दिण्णे, जहिं दाव शुणहका शिआला पाणिअं पिअंति । हग्गे वि पवलपुलिशे मणुश्शके ण ण्हाआमि; तहिं तुमं पुक्खलिणीए पुलाणकुलुत्थजूशशवण्णाइं उश्शगंधिआइं चीवलाइं पक्खालेशि ? । ता तुमं एक्कपहालिअं कलेमि । [ अरे दुष्टश्रम-णक ! एतन्मम भगिनीपतिना सर्वोद्यानानां प्रवरं पुष्पकरण्डोद्यानं दत्तम्, यत्र तावच्छुनकाः शृगालाः पानीयं पिबन्ति । अहमपि प्रवरपुरुषो मनुष्यको न स्नामि; तत्र त्वं पुष्करिण्यां पुराणकुलित्थयूषसवर्णान्युग्रगन्धीनि चीव-राणि प्रक्षालयसि ? । तत् त्वामेकप्रहारिकं करोमि । ]

विटः—काणेलीमातः ! तथा तर्कयामि यथानेनाचिरप्रव्रजितेन

---

यस्मिन् सरोवरेऽहमस्नानं नैव करोमि, तत्र त्वं पुराणकुलुत्थस्य = अन्नविशे-षस्य यूषतुल्यानि प्राचीनानि चीवराणि प्रक्षालयसि ? अतस्त्वामेकेनैव खड्गप्रहारेण समाप्तं करोमि । यूषो = मण्डः । इति सकारवचनं श्रुत्वा तस्य दुष्टस्वभावतां जानानो विटः कथयति—अचिरप्रव्रजितोऽयमिति तव माहात्म्यं नैव वेत्ति, अतः

---

शकार—तो यह यहाँ क्यों आया है ?

भिक्षु—इस वस्त्र को धोने के लिए ।

शकार—अरे दुष्ट श्रमणक ! यह मेरे जीजा ने सब उद्यानों में श्रेष्ठ "पुष्प-करण्डक" नामक उद्यान मुझे दिया है, जहाँ कुत्ते और गीदड़ पानी पीते हैं और अत्यन्त सुन्दर पुरुष मैं भी नहीं नहाता वहीं तू वापी में पुरानी "कुल्थि" के माँड के समान दुर्गन्धयुक्त इन वस्त्रों को धो रहा है ! इसलिए मैं तुझे एक प्रहार में ही मार डालता हूँ ।

विट—काणेलीपुत्र ! इससे मैं अनुमान करता हूँ कि यह अभी हाल ही में

भवितव्यम् ।

शकारः—कधं भावे जाणादि ? । [ कथं भावो जानाति ? । ]

विटः—किमत्र ज्ञेयम् ? । पश्य,

**अद्याप्यस्य तथैव केशविरहाद्गौरी ललाटच्छविः,**
**कालस्याल्पतया च चीवरकृतः स्कन्धे न जातः किणः ।**
**नाभ्यस्ता च कषायवस्त्ररचना दूरं निगूढान्तरं,**
**वस्त्रान्तं च पटोच्छ्रयात् प्रशिथिलं स्कन्धे न संतिष्ठते ॥५॥**

---

क्षन्तव्यः । कथं ज्ञायते ? इति चेदाह—अद्याप्यस्येति । अस्य ललाटस्य छविरधुनाऽपि केशानामभावाद्गौरवर्णाऽस्ति, यथा गृहस्थावस्थायां ललाटकान्तिर्भवति, तथैवास्याद्यापि विद्यते । कालस्याल्पतया च स्कन्धे चीवरेण = वस्त्रेण कृतः किणः = चिह्नविशेषोऽपि न जातः । कषायवस्त्ररचना चानेन साधु न शिक्षिता । अस्तव्यस्तं धारयति वस्त्रम् । दूरं निगूढमन्तरं यस्य तदिदं वस्त्रस्यान्तम् = अन्तभागः, पटस्योच्छ्रयादुन्नतत्त्वात् स्कन्धे न संतिष्ठते । सिद्धाभ्यासस्य च वस्त्रान्तभागः स्कन्धे समुचितरूपेण स्थितिं प्राप्नोति, न चास्य तथेति सिद्धम् नवीनोऽयं भिक्षुरिति । एतस्य मारण-ताडनादिकं सर्वथाऽनुचितमिति भावः । शार्दूलविक्रीडितं छन्दः ॥५॥

---

सन्यासी हुआ है ।

**शकार**—आप कैसे जानते हैं ?

**विट**—इसमें जानना ही क्या है ? देखो !—

“आज भी केशों के अभाव से उसके मस्तक की शोभा वैसी ही है, थोड़ा ही समय होने के कारण इसके कन्धे पर वस्त्र का चिह्न (घट्टा) भी नहीं हुआ है, इसने गेरुआ वस्त्र पहिनना भी नहीं सीखा है ( वैसे ही लपेट रखा है ) और यह वस्त्र ऊँचा नीचा तथा ढीला-ढाला होने के कारण इसके कन्धे पर भी नहीं ठहर पाता है । ( इन सब बातों से स्पष्ट है कि यह नया ही सन्यासी है । इसे दुखी मत करो । )” ॥ ५ ॥

भिक्षुः—उवाशके ! एव्वं । अचिलपव्वजिदे हग्गे । [ उपासक ! एवम् । अचिरप्रव्रजितोऽहम् । ]

शकारः—ता कीशं तुमं जातमेत्तक ज्जेव ण पव्वजिदे ? । [ तत्किमर्थं त्वं जातमात्र एव न प्रव्रजितः ? । ] ( इति ताडयति )

भिक्षुः—णमो बुद्धश्श । [ नमो बुद्धाय । ]

विटः—किमनेन ताडितेन तपस्विना ? मुच्यताम् ; गच्छतु ।

शकारः—अले ! च्यिश्ट दाव जाव शंपधालेमि । [ अरे ! तिष्ठ तावत् , यावत् संप्रधारयामि । ]

विटः—केन सार्धम् ? ।

शकारः—अत्तणो हडक्केण । [ आत्मनो हृदयेन । ]

विटः—हन्त, न गतः ।

शकारः—पुत्तका हडक्का ! भश्टके पुत्तके ! एशे शमणके अवि णाम किं गच्छदु, किं च्यिश्टदु । ( स्वगतम् ) णावि गच्छदु, णावि च्यिश्टदु । ( प्रकाशम् ) भावे शंपधालिदं मए हडक्केण शह । एशे मह हडक्के भणादि । [ पुत्रक हृदय ! भट्टारक पुत्रक ! एष श्रमणकोऽपि नाम किं गच्छतु, किं तिष्ठतु ? । नापि गच्छतु, नापि तिष्ठतु । भाव ! संप्रधारितं

---

भिक्षु—उपासक ! ऐसा ही है । मैं नया ही सन्यासी हूँ ।

शकार—तो तू जन्म से ही सन्यासी क्यों नहीं हुआ ? ( पीटता है । )

भिक्षु—भगवान् "बुद्ध" को नमस्कार है ।

विट—इस बेचारे को पीटने से क्या लाभ ? छोड़ो ! जाने दो !

शकार—अरे ! जरा ठहर ! जबतक मैं सलाह करता हूँ ।

विट—किस के साथ ?

शकार—अपने हृदय के ।

विट—खेद है ! अब भी नहीं गया ?

शकार—बेटे हृदय ! राजा हृदय ! यह 'श्रमणक' जाय या ठहरे ? ( स्वयं ही ) न जाय, न ठहरे । ( प्रकाश में ) भाव ! मैंने हृदय से निश्चय कर लिया है ।

मया हृदयेन सह । एतन्मम हृदयं भणति । ]

विटः—किं ब्रवीति ? ।

शकारः—मावि गच्छदु, मावि चिट्ठदु । मावि ऊशशदु, मावि णीशशदु; इध ज्जेव झत्ति पडिअ मलेदु । [ मापि गच्छतु, मापि तिष्ठतु; माप्युच्छ्वसितु, मापि निःश्वसितु । इहैव झटिति पतित्वा म्रियताम् । ]

भिक्षुः—णमो बुद्धश्श; शलणागदम्हि । [ नमो बुद्धाय; शरणागतोऽस्मि । ]

विटः—गच्छतु ।

शकारः—णं शमएण । [ ननु समयेन । ]

विटः—कीदृशः समयः ? ।

शकारः—तधा कद्दमं फेलदु, जधा पाणिअं पंकाइलं ण होदि । अधवा पाणिअं पुंजीकदुअ कद्दमे फेलदु । [ तथा कर्दमं प्रक्षिपतु, यथा पानीयं पङ्काविलं न भवति । अथवा पानीयं पुञ्जीकृत्य कर्दमे क्षिपतु ]

यद्ययं श्रमणकस्तथा पङ्कं क्षिपेद् यथा जलमाविलम्=पंकदूषितं न भवेत्, पानीयं वा राशीकृत्य (सञ्चित्य) कर्दमे क्षिपेत्तदा गन्तुं शक्नुयात्, इति मूर्खतापूर्णं,

---

यह कहता है कि—

विट—क्या कहता है ?

शकार—न जाय, न ठहरे । न साँस ले, न छोड़े । यहीं गिर कर शीघ्रही मर जाय ।

भिक्षु—भगवान् "बुद्ध" को नमस्कार है । शरणागत हूँ ।

विट—जाने दो ।

शकार—एक समय ( शर्त ) पर ।

विट—कैसी शर्त ?

शकार—( यह कि या तो बावड़ी के ) कीचड़ को इस प्रकार फेंके कि पानी गँदला न होने पाये अथवा, पानी को इकठ्ठा कर कीचड़ में फेंक दे" ( तो जा सकता है । )

विटः—अहो मूर्खता,--

विपर्यस्तमनश्चेष्टैः शिलाशकलवर्ष्मभिः ।
मांसवृक्षैरियं मूर्खैर्भाराक्रान्ता वसुंधरा ॥६॥

( भिक्षुर्नाट्येनाक्रोशति )

शकारः—किं भणादि ? । [ किं भणति ? । ]

विटः —स्तौति भवन्तम् ।

शकारः—थुणु थुणु, पुणो वि थुणु । [ स्तुनु स्तुनु, पुनरपि स्तुनु । ]

( तथा कृत्वा निष्क्रान्तो भिक्षुः )

विटः—काणेलीमातः ! पश्योद्यानस्य शोभाम्—

---

शकारस्य वचनं निशम्य विटः कथयति—विपर्यस्तेति । अहो मूर्खताऽस्य । एवं-विधैर्मांसवृक्षैर्मूर्खैर्वसुन्धरा समाक्रान्ता वर्तते । येषां मनसश्चेष्टा = व्यापारः विपर्यस्ता । कदा मनसि किमायातीति निश्चय एव नास्ति । शिलाशकलतुल्यमेषां वर्ष्म = शरीर-मस्ति । यथा वृक्षास्तथा एतेऽपि मांसनिर्मिता वृक्षा एव सन्ति ।

अत्र रूपकालङ्कारः । पथ्यावक्त्रं च्छन्दः ॥ ६ ॥

---

विट—ओह ! इसकी मूर्खता !—

"अनिश्चित इच्छाओं, पाषाण-खण्ड के समान शरीर वाले इन मूर्ख मांस-वृक्षों से यह पृथ्वी भारवती हो रही है । ( ये नाममात्र के ही मनुष्य हैं यथार्थ में तो मांस के वृक्ष ही हैं । )" ॥६॥

( भिक्षु गाली देने का अभिनय करता है । )

शकार—क्या कहता है ?

विट—आपकी स्तुति करता है ।

शकार—बार-बार स्तुति कर !

( प्रशंसा करके भिक्षु चला जाता है । )

विट—काणेलीपुत्र ! इस उद्यान की शोभा देखो !—

अमी हि वृक्षाः फलपुष्पशोभिताः,
कठोरनिष्पन्दलतोपवेष्टिताः ।
नृपाज्ञया रक्षिजनेन पालिता,
नराः सदारा इव यान्ति निर्वृतिम् ॥७॥

शकारः—शुद्धु भावे भणादि—
बहुकुशुमविचित्तिदा अ भूमी,
कुशुमभलेण विणामिदा अ लुक्खा ।
दुमशिहलळदाअलंबमाणा,

---

अथ शकारमनुरञ्जयितुं विट उपवनस्य शोभां वर्णयति—अमीहि—इति । फलैः पुष्पितैः शोभिताः कठोराभिः—परिपक्वावस्थासम्पन्नाभिः लता-गृहिणीभिः समालिङ्गिताः, एते वृक्षाः राजाज्ञया रक्षिभिः परिपालिताः सपत्नीका गृहस्था इव परमसुखमनुभवन्त इवोपलक्ष्यन्ते । यथा पुत्रपौत्रादिसहिताः, कान्तयासमालिङ्गित-कायाः गृहस्थाः सुरक्षिभिः परिपालिताः सुखेन कालं यापयन्ति तथैवेते पादपा अपि सानन्दं लतावधूसहिताः समयं यापयन्तीत्यर्थः ।

अत्रोपमालङ्कारः । वंशस्थं च्छन्दः ॥ ७ ॥

शकारोऽपि स्ववैदग्धी-धोरणीं ( परिपाटीम् ) प्रकाशयितुमाह—बहुकुशुमेति । भाव ! यद्भवतोक्तं, तत्साधु । ममापि काव्यामृतं पीयताम्—अत्रत्या भूमी बहुवर्णैः

---

"फल-पुष्पों से सुशोभित तथा परिपक्व लताओं से लिपटे हुए ये वृक्ष—राजा की आज्ञा से रक्षकों के द्वारा रक्षित सपत्नीक पुरुषों की भाँति सुखपूर्वक खड़े हुए-से प्रतीत हो रहे हैं। ( जिस प्रकार अच्छे राज्य में मनुष्य अपने परिवार के साथ आनन्दित रहते हैं उसी प्रकार ये वृक्ष भी लता-बधुओं से आलिङ्गित होकर सुख का अनुभव कर रहे हैं। )" ॥७॥

शकार—भाव ! आप ठीक कह रहे हैं।

"यह भूमि बहुत से पुष्पों के गिरने से चित्र-विचित्र हो रही है, वृक्ष पुष्पों ( और फलों ) के भार से झुके हुए हैं और वृक्षों की शाखाओं के अग्रभागों पर

**पणशफला विअ वाणला ललंति ॥ ८ ॥**

[ सुष्ठु भावो भणति

बहुकुसुमविचित्रिता च भूमिः कुसुमभरेण विनामिताश्च वृक्षाः ।
द्रुमशिखरलतावलम्बमानाः पनसफलानीव वानरा ललन्ति ॥ ]

विटः—काणेलीमातः ! इदं शिलावलमध्यास्यताम् ।

शकारः—एशे म्हि आशिदे । ( इति विटेन सहोपविशति ) भावे ! अज्ज वि तं वशंतशेणिअं शुमलामि । दुज्जणवअणं विअ हडक्कादो ण ओशलदि । [ एषोऽस्म्यासितः । भाव ! अद्यापि तां वसन्तसेनां स्मरामि । दुर्जनवचनमिव हृदयान्नापसरति । ]

विटः—( स्वगतम् ) तथा निरस्तोऽपि स्मरति ताम् । अथवा

**स्त्रीभिर्विमानितानां कापुरुषाणां विवर्धते मदनः ।**

---

कुसुमैर्विचित्रिताऽऽस्ते, वृक्षाश्च पुष्पाणां भरेण विनामिताः सन्ति, वृक्षाणां शिखरेषु च विहरन्तो वानराः पनस-फलानीव ( "कटहल" इति भाषायाम् ) शोभन्ते । अत्रोत्प्रेक्षा । पुष्पिताग्रा च्छन्दः ॥ ८ ॥

शिलातले समुपविष्टः शकारोऽतितमां तिरस्कृतोऽपि वसन्तसेनया पुनरपि तामेव स्मरतीति विलोक्य विटः स्वगतमाह—स्त्रीभिरिति । सत्यमेवोच्यते-स्त्रीभिर्विमानितानामसज्जनानां कापुरुषाणां कामोऽधिको भवति, सत्पुरुषाणां तु तथा स्त्रीभिर्विमा-

---

लटकते हुए बन्दर "कटहल" के फल के समान सुशोभित हो रहे हैं ।" ॥८॥

विट—शकार ! इस शिला पर बैठो ।

शकार—बैठता हूँ । ( "विट" के साथ बैठ जाता है । ). भाव ! अब भी मैं उस "वसन्तसेना" का स्मरण कर रहा हूँ जो दुष्ट मनुष्य के वचन की भाँति मेरे हृदय से नहीं निकलती है ।

विट—( स्वयं ही ) इतना तिरस्कृत होने पर भी उसका स्मरण कर रहा है । अथवा—

"नीच पुरुषों का काम स्त्रियों से तिरस्कृत होने पर और अधिक बढ़ जाता

सत्पुरुषस्य स एव तु भवति मृदुर्नैव वा भवति ॥९॥

शकारः—भावे ! का वि वेला थावलकचेडश्श भणिदश्श 'पवहणं गेण्हिअ लहुं लहुं आअच्छे' त्ति । अज्ज वि ण आअच्छदि त्ति । चिलम्हि बुभुक्खिदे । मज्झण्हे ण शक्कीअदि पादेहिं गंतुं । ता पेक्ख पेक्ख—

णहमज्झगदे शूले दुप्पेक्खे कुविदवाणलशलिच्छे ।
भूमी दढशंतत्ता हदपुत्तशदेव गंधाली ॥१०॥

[ भाव ! कापि वेला स्थावरकचेटस्य भणितस्य 'प्रवहणं गृहीत्वा लघु लघ्वागच्छ' इति । अद्यापि नागच्छतीति । चिरमस्मि बुभुक्षितः । मध्याह्ने न

---

नितानां तु कामो मृदुः = शान्तो भवति, अथवा सर्वथा न प्रादुर्भवति । सज्जनदुर्जनस्वभावे महद् वैषम्यमस्तीति भावः । आर्या छन्दः ॥९॥

शकारो मध्याह्ने पादाभ्यां गन्तुं नैव शक्यते, इति तस्य तीव्रतां प्रकटयति— णहमज्झेति । कुपितवानरसदृशो नभोमध्यगतः सूर्यः सम्प्रति दुष्प्रेक्षणीयः, हतपुत्रशता गान्धारीव दृढसन्तप्ता भूमी वर्तते । सूर्यस्तीव्रः, पृथ्वी च परितप्तेति भावः । अधमोक्तौ दोषोऽपि गुणो भवतीति वानरसाम्यादिकथनं न दोषावहम् । आर्या छन्दः ॥१०॥

---

है । परन्तु सज्जनों का तो ( तिरस्कृत होने पर ) काम-वेग शान्त हो जाता है; अथवा सर्वथा ही नहीं होता ।" ॥९॥

शकार—मुझे "स्थावरक चेट" से यह कहे हुए कि—"रथ लेकर शीघ्रातिशीघ्र आ"—बहुत समय हो गया है ( परन्तु ) वह अबतक भी नहीं आया—मुझे बड़ी भूख लगी है । मध्याह्न में पैदल चलना सम्भव नहीं है । अतः देखो ! देखो !—

"आकाश के बीचोंबीच स्थित सूर्य कुपित वानर के मुख के समान देखे नहीं जा रहे हैं और यह पृथ्वी सौ पुत्रों के मारे जाने पर "गान्धारी" की भाँति बहुत सन्तप्त हो रही है ।" ॥१०॥

शक्यते पादाभ्यां गन्तुम् । तत्पश्य पश्य

नभोमध्यगतः सूर्यो दुःप्रेक्ष्यः कुपितवानरसदृक्षः ।
भूमिर्दृढसंतप्ता हतपुत्रशतेव गान्धारी ॥ ]

विटः—एवमेतत्—

**छायासु प्रतिमुक्तशष्पकवलं निद्रायते गोकुलं,**
**तृष्णार्तैश्च निपीयते वनमृगैरुष्णं पयः सारसम् ।**
**संतापादतिशङ्कितैर्न नगरीमार्गो नरैः सेव्यते,**
**तप्तां भूमिमपास्य च प्रवहणं मन्ये क्वचित् संस्थितम् ॥ ११ ॥**

शकारः—भावे !

**शिलशि मम णिलीणे भाव शुज्जश्श पादे,**
**शउणिखगविहंगा लुक्खशाहाशु लीणा ।**

---

विटोऽपि घर्मसन्तापस्याधिक्यं वर्णयति—छायासु—इति । अधुना गवां समूहः शष्पग्रासं विहाय वृक्षाणां छायासु निद्रासुखमनुभवति, पिपासाकुलिताश्च वनमृगाः सरोवराणामुष्णं जलं पिबन्ति । अतिसन्तापात् सशङ्का नराः पुरमार्गे गतागतं न कुर्वन्ति । अतोऽहं सम्भावयामि—प्रवहणमपि तप्तां भूमीमपास्य क्वचिदेकान्ते छायायां स्थितमिति ।

अत्र स्वभावोक्तिरलङ्कारः शार्दूलविक्रीडितं च्छन्दः ॥११॥

शकारोऽपि कथयति—शिलशि—इति । भाव ! सूर्यस्य पादः = किरणाः मम

---

विट—ऐसा ही है ।

"गौएँ घास चरना छोड़कर ( वृक्षों की ) छाया में नींद ले रही हैं, प्यासे वन-मृग सरोवरों का उष्ण जल पी रहे हैं, गर्मी के भय से लोग राजमार्ग पर नहीं चल रहे हैं अतः मैं समझता हूँ कि सन्तप्त भूमि से हटकर रथ कहीं छाया में खड़ा हुआ है । ( इसीलिए अभी तक नहीं आया है । )" ॥११॥

शकार—भाव !

णलपुलिशमणुश्शा उण्हदीहं शशंता,
　　घलशलणणिशण्णा आदवं णिव्वहंति ॥१२॥

भावे ! अज्ज वि शे चेडे णाअच्छदि । अत्तणो विणोदणणिमित्तं किं पि गाइश्शं ( इति गायति ) भावे ! भावे ! शुदं तुए जं मए गाइदं ? । [भाव !

शिरसि मम निलीनो भाव ! सूर्यस्य पादः,
　　शकुनिखगविहङ्गा वृक्षशाखासु लीनाः ।
नरपुरुषमनुष्या उष्णदीर्घं श्वसन्तो,
　　गृहशरणनिषण्णा आतपं निर्वहन्ति ॥

भाव ! अद्यापि स चेटो नागच्छति । आत्मनो विनोदननिमित्तं किमपि गास्यामि । भाव भाव ! श्रुतं त्वया यन्मया गीतम् ? । ]

विटः—किमुच्यते ? । गन्धर्वो भवान् ।

शकारः—कधं गंधव्वे ण भविश्शं ? ।

हिंगुज्जले जीलकभद्दमुश्ते वचाह गंठी शगुडा अ शुंठी ।
एशे मए शेविद गंधजुत्ती कधं ण हग्गे मधुलश्शले त्ति ॥१३॥

---

शिरसि निलीनाः । पक्षिणश्च पादपानां शाखासु निलीनाः । उष्णं दीर्घञ्च श्वसन्तो मानवाः स्वेषु गृहेषु निषण्णाः = उपविष्टाः सन्तः आतपं समापयन्ति । शकारोक्तौ पुनरुक्तिर्गुणायैव भवतीति भावः ।

स्वरसाधनाय सेवितं गन्धसाधनमेव निरूपयति शकारः—हिङ्गूज्ज्वलेति ।

---

"सूर्य की किरणें मेरे शिर पर पड़ रही हैं, पक्षी ( खग, विहङ्ग ) वृक्ष की शाखाओं ( घोसलों ) में छिप गये हैं और मनुष्य ( नर, पुरुष ) लम्बी साँसें लेते हुए अपने घरों में बैठकर आतप को दूर कर रहे हैं।" ॥१२॥

भाव ! अब तक भी वह "चेट" नहीं आया। अतः अपने मनोविनोद के लिए कुछ गाता हूँ। ( गाता है। ) भाव ! तुमने सुना, जो मैंने गाया ?

विट—क्या कहना ! आप तो गन्धर्व हैं।

शकार—गन्धर्व क्यों न हूँगा ?

"हींग और जीरे के साथ "भद्रमुस्ता", "बच" की गाँठ तथा गुड़ के साथ

भावे! पुणो वि दाव गाइश्शं। ( तथा करोति ) भावे भावे! शुदं तुए जं मए गाइदं ?। [ कथं गन्धर्वो न भविष्यामि ?

हिङ्गूज्ज्वला जीरकभद्रमुस्ता वचाया ग्रन्थिः सगुडा च शुण्ठी।
एषा मया सेविता गन्धयुक्तिः कथं नाहं मधुरस्वर इति ॥

भाव! पुनरपि तावद्गास्यामि। भाव भाव! श्रुतं त्वया यन्मया गीतम् ?। ]

विटः—किमुच्यते—गन्धर्वो भवान् ?।

शकारः—कधं गंधव्वे ण भवामि ?।

**हिंगुज्जले दिण्णमलीचचुण्णे वग्घालिदे तेल्लघिएण मिश्शे।**
**भुत्ते मए पालहुदीअमंशे कधं ण हग्गे मधुलश्शलेत्ति ॥१४॥**

भावे,! अज्ज वि चेडे णाअच्छदि। [ कथं गन्धर्वो न भवामि ?।

हिङ्गूज्ज्वलं दत्तमरीचचूर्णं व्याघारितं तैलघृतेन मिश्रम्।
भुक्तं मया पारभृतीयमांसं कथं नाहं मधुरस्वर इति ॥

---

हिङ्गुसहिता जीरकसहिता च भद्रमुस्ता ( औषधविशेषः ) वचायाः ग्रन्थिः गुडेन सह शुण्ठी, प्रतिदिनमहं स्वरं शोधयितुमेषां पदार्थानां सेवनं करोमि, तदापि मधुरस्वरः कथं न भविष्यामि। अतो मधुरस्वरस्य मम गीतमपि युक्तरूपमेवेति भावः ॥१३॥

पुनरपि प्राह—भाव! प्रतिदिनमहं हिङ्गुमरीचचूर्णसहितं घृतेन तैलेन चावघारितं कोकिलामांसं भक्षयामि, कथं पुनर्मधुरस्वरो न भविष्यामि ॥१४॥

---

सोंठ—इन सुगन्धित पदार्थों का मैं ( प्रतिदिन स्वर सुधारने के लिए ) सेवन करता हूँ। इतने पर भी मेरा स्वर मधुर क्यों न होगा ?" ॥१३॥

भाव! पुनः और भी गाता हूँ ( गाता है ) भाव! मैंने जो गाया वह आपने सुना ?

विट—क्या कहना है ? आप तो गन्धर्व हैं।

शकार—गन्धर्व क्यों न हूँगा ?

"मैं प्रतिदिन हींग, तेल और मिर्च इनसे बघारा हुआ कोयल का मांस खाता हूँ इतने पर भी मेरा स्वर मधुर क्यों न होगा ?" ॥१४॥

भाव ! अद्यापि चेटो नागच्छति । ]

विटः—स्वस्थो भवतु भवान् ; संप्रत्येवागमिष्यति ।

( ततः प्रविशति प्रवणाधिरूढा वसन्तसेना चेटश्च )

चेटः—भीदे खु हग्गे, मज्झण्हिके शुज्जे । मा दाणिं कुविदे लाअशालशंठाणे हुविश्शदि । ता तुलिदं वहामि । जाध गोणा ! जाध । [ भीतः खल्वहम्, माध्याह्निकः सूर्यः । नेदानीं कुपितो राजश्यालसंस्थानको भविष्यति । तत्त्वरितं वहामि । यातं गावौ ! यातम् । ]

वसन्तसेना—हद्धी हद्धी, ण हु वड्ढमाणअस्स अअं सरसंजोओ । किं णेदं ? । किं णु खु अज्जचारुदत्तेण वाहणपडिस्समं परिहरंतेण अण्णो मणुस्सो अण्णं पवहणं पेसिदं भविस्सदि ? । फुरदि दाहिणं लोअणं, वेवदि मे हिअअं, सुण्णाओ दिसाओ, सव्वं ज्जेव विसंठुलं पेक्खामि । [ हा धिक् हा धिक्, न खलु वर्धमानकस्यायं स्वरसंयोगः । किं न्विदम् ? किं नु खल्वार्यचारुदत्तेन वाहनपरिश्रमं परिहरतान्यो मनुष्योऽन्यत्प्रवहणं प्रेषितं भविष्यति ? । स्फुरति दक्षिणं लोचनम्, वेपते मे हृदयम्, शून्या दिशः, सर्वमेव

---

वसन्तसेना प्राह—हद्धीति । रथवाहकस्य चेटस्य स्वरमाकलय्य नायं स्वरो वर्धमानस्य । अथवा कश्चिदन्य एव वाहकः प्रेषितो भवेच्चारुदत्तेन । दक्षिणञ्च लोचनं

---

भाव ! "चेट" अब भी नहीं आया ।

विट—आप विश्वास रखिये, वह अभी आयेगा ।

[ तदनन्तर रथ पर बैठी हुई "वसन्तसेना" तथा "चेट" का प्रवेश होता है । ]

चेट—मुझे बड़ा डर लगा है कि मध्याह्न हो गया । इस बात पर कहीं राजश्यालक "संस्थानक" कुपित न हों ? अतः शीघ्र ही रथ हाँकता हूँ । चलो ! बैलो ! चलो !

वसन्तसेना—हा ! खेद है ! यह "वर्धमानक" का स्वर नहीं है । यह बात क्या है ? क्या "आर्य चारुदत्त" ने रथवाहक के विश्राम के ध्यान से यह दूसरा रथ तथा वाहक तो नहीं भेज दिया ? मेरी दाँयी आँख फड़क रही है । हृदय काँप

विसंष्ठुलं पश्यामि । ]

शकारः—( नेमिघोषमाकर्ण्य ) भावे भावे ! आगदे पवहणे । [ भाव भाव ! आगतं प्रवहणम् । ]

विटः—कथं जानासि ? ।

शकारः—किं ण पेक्खदि भावे ? वुड्ढशूअले विअ घुलघुलाअमाणे लक्खीअदि । [ किं न पश्यति भावः ? वृद्धशूकर इव घुरघुरायमाणं लक्ष्यते । ]

विटः—( दृष्ट्वा ) साधु लक्षितम्, अयमागतः ।

शकारः—पुत्तका थावलका चेडा ! आगदे शि ? [ पुत्रक स्थावरक चेट ! आगतोऽसि । ]

चेटः—अध इं । [ अथ किम् । ]

शकारः—पवहणे वि आगदे ? । [ प्रवहणमप्यागतम् ? ]

चेटः—अध इं । [ अथ किम् । ]

शकारः—गोणा वि आगदे ? । [ गावावप्यागतौ ? । ]

---

स्फुरति । अहं तु सर्वमपीदं विसंष्ठुलं = अस्तव्यस्तम् विपरिवर्तमानमिव पश्यामि । भगवानेव मङ्गलमातनोतु ।

---

रहा है । दिशाएँ शून्य लग रही हैं । सब-कुछ विपरीत दिखाई पड़ रहा है ।

शकार—( रथ की घड़घड़ाहट सुनकर ) भाव ! भाव ! रथ आ गया ।

विट—कैसे जानते हो ?

शकार—क्या नहीं देखते हो कि यह बूढ़े सूअर की भाँति घुरघुरा रहा है ?

विट—( देखकर ) ठीक पहिचाना ! यह आ गया है ।

शकार—बेटे स्थावरक चेट ! आ गया ?

चेट—जी हाँ ।

शकार—रथ भी आ गया ?

चेट—जी हाँ ।

शकार—बैल भी आ गये ?

चेटः—अध इं । [ अथ किम् । ]

शकारः—तुमं पि आगदे ? । [ त्वमप्यागतः ? । ]

चेटः—( सहासम् ) भट्टके ! अहं पि आगदे ; [ भट्टारक ! अहमप्यागतः । ]

शकारः—ता पवेशेहि पवहणं । [ तत्प्रवेशय प्रवहणम् । ]

चेटः—कदलेण मग्गेण ? । [ कतरेण मार्गेण ? । ]

शकारः—एदेण ज्जेव पगालखंडेण । [ एतेनैव प्राकारखण्डेन । ]

चेटः—भट्टके ! गोणा मलेंति । पवहणे वि भज्जेदि । हग्गे वि चेडे मलामि । [ भट्टारक ! वृषभौ म्रियेते । प्रवहणमपि भज्यते । अहमपि चेटो म्रिये । ]

शकारः—अले ! लाअशालके हग्गे; गोणा मले, अवले कीणिश्शं; पवहणे भग्गे, अवलं घडाइश्शं; तुमं मले, अण्णे पवहणवाहके हुविश्शदि । [ अरे ! राजश्यालकोऽहम्; वृषभौ मृतौ, अपरौ क्रेष्यामि । प्रवहणं भग्नम्, अपरं कारयिष्यामि । त्वं मृतः अन्यः प्रवहणवाहको भविष्यति । ]

चेटः—शव्वं उववण्णं हुविश्शदि, हग्गे अत्तणकेलके ण हुविश्शं।

---

चेट—जी हाँ ।

शकार—तू भी आ गया ?

चेट—( हँसता हुआ ) स्वामिन् । मैं भी आ गया ।

शकार—तो रथ अन्दर ले आ !

चेट—किधर से ?

शकार—इसी दीवार की ओर से ।

चेट—सरकार ! बैल मर जायँगे, रथ टूट जायगा और मैं भी मर जाऊँगा ।

शकार—अरे ! मैं राजश्यालक हूँ ! बैल मर जाने पर और खरीद लूँगा । रथ टूटेगा तो और बनवा लूँगा और यदि तू मर गया तो और कोई रथवाहक रख लूँगा ।

चेट—सब कुछ हो जायगा, बस मैं न रहूँगा ।

[ सर्वमुपपन्नं भविष्यति, अहमात्मीयो न भविष्यामि । ]

शकारः—अले ! शव्वं पि णश्शदु; पगालखंडेण पवेशेहि पवहणं । [ अरे ! सर्वमपि नश्यतु, प्राकारखण्डेन प्रवेशय प्रवहणम् । ]

चेटः—विभज्ज ले पवहण ! शमं शामिणा विभज्ज । अण्णे पवहणे भोदु । भट्टके गदुअ णिवेदेमि । ( प्रविश्य ) कधं ण भग्गे ? । भट्टके ! एशे उवत्थिदे पवहणे । [ विभञ्ज रे प्रवहण ! समं स्वामिना विभञ्ज । अन्यत् प्रवहणं भवतु । भट्टारकं गत्वा निवेदयामि । कथं न भग्नम् ? । भट्टारक ! एतदुपस्थितं प्रवहणम् । ]

शकारः—ण छिण्णा गोणा ? । ण मला लज्ज ? । तुमं पि ण मले ? । [ न छिन्नौ वृषभौ ? । न मृता रज्जवः ? । त्वमपि न मृतः ? । ]

चेटः—अघ इं । [ अथ किम् । ]

शकारः—भावे ! आअच्छ; हवहणं पेक्खामो । भावे ! तुमं पि मे गुलु पलमगुलु । पेक्खीअशि शादलके अब्भंतलकेत्ति पुलक्कलणीएत्ति तुमं दाव पवहणं अग्गदो अहिलुह । [ भाव ! आगच्छ; प्रवहणं पश्यावः । भाव ! त्वमपि मम गुरुः परमगुरुः । प्रेक्ष्यसे सादरकोऽभ्यन्तरक इति पुरस्करणीय इति त्वं तावत् प्रवहणामग्रतोऽधिरोह । ]

---

शकार—अवे ! सब कुछ नष्ट हो जाय । उसी टूटी दीवार से ही रथ ला ।

चेट—टूट रे रथ ! अपने स्वामी के साथ टूट ! और दूसरा रथ हो जायगा ।स्वामी से जाकर निवेदन करता हूँ ( प्रवेश कर ) क्या नहीं टूटा ?

स्वामिन् ! यह रथ उपस्थित है ।

शकार—बैल नहीं टूटे ? रस्सी नहीं मरी ? और तू भी नहीं मरा ?

चेट—जी हाँ ।

शकार—भाव ! आओ ! रथ को देखते हैं । भाव ! तुम मेरे गुरु ( नहीं नहीं ) परमगुरु हो । आदरणीय तथा मेरे हृदय को जाननेवाले हो । तुम्हीं आगे च लनेयोग्य हो । अतः पहिले तुम ही रथ पर चढ़ो ।

विटः—एवं भवतु । ( इत्यारोहति )

शकारः—अधवा च्चियश्ट तुमं । तुह बप्पकेलके पवहणे, जेण तुमं अग्गदो अहिलुहशि । हग्गे पवहणशामी; अग्गदो पवहणं अहिलुहामि । [ अथवा तिष्ठ त्वम् । तव पितृसंबन्धि प्रवहणम्, येन त्वमग्रतोऽधिरोहसि । अहं प्रवहणस्वामी; अग्रतः प्रवहणमधिरोहामि । ]

विटः—भवानेवं ब्रवीति ।

शकारः—जइ वि हग्गे एव्वं भणामि, तधा वि तुह एशे आदले 'अहिलुह भश्टके' त्ति भणिदुं । [ यद्यप्यहमेवं भणामि, तथापि तवैष आचारः 'अधिरोह भट्टारक !' इति भणितुम् । ]

विटः—आरोहतु भवान् ।

शकारः—एशे शंपदं अहिलुहामि । पुत्तका थावलका चेडा ! पलिवत्तावेहि पवहणं । [ एष सांप्रतमधिरोहामि । पुत्रक स्थावरक चेट ! परिवर्तय प्रवहणम् । ]

चेटः—( परावर्त्य ) अहिलुहदु भट्टालके । [ अधिरोहतु भट्टारकः । ]

शकारः—( अधिरुह्यावलोक्य च शङ्कां नाटयित्वा, त्वरितमवतीर्य, विटं कण्ठेऽवलम्ब्य ) भावे भावे ! मलेशि मलेशि । पवहणाधिलूढा लक्खशी

---

विट—ऐसा ही हो । ( चढ़ता है । )

शकार—अथवा, तुम ठहरो ! क्या तुम्हारे बाप का रथ है जो पहिले चढ़ते हो ? मैं रथ का स्वामी हूँ अतः मैं ही पहिले चढूँगा ।

विट—आपने ही ऐसा कहा था ।

शकार—यदि मैंने ऐसा कहा था तो तुम्हारा भी तो कर्तव्य था कि मुझे—"आप ही रथ पर बैठें" यह कहते ।

विट—आपही चढ़ें ।

शकार—मैं चढ़ता हूँ । बेटे ! स्थावरक चेट ! रथ को फिरा दे ।

चेट—( फेर कर ) स्वामी आरोहण करें ।

शकार—( चढ़कर तथा देखकर भय दिखलाता हुआ शीघ्र ही रथ से उतर

चोले वा पडिवशदि। ता जइ लक्खशी, तदो उभे वि मूशे। अध चोले, तदो उभे वि खज्जे। [ भाव भाव ! मृतोऽसि मृतोऽसि। प्रवहणाधिरूढा राक्षसी चौरो वा प्रतिवसति। तद्यदि राक्षसी, तदोभावपि मुषितौ। अथ चौरः तदोभावपि खादितौ। ]

विटः—न भेतव्यम्; कुतोऽत्र वृषभयाने राक्षस्याः संचारः ?। मा नाम ते मध्याह्नार्कतापच्छिन्नदृष्टेः स्थावरकस्य सकञ्चुकां छायां दृष्ट्वा भ्रान्तिरुत्पन्ना ?।

शकारः—पुत्तका थावलका चेडा ! जीवेशि ?। [ पुत्रक स्थावरक चेट ! जीवसि ?। ]

चेटः—अध इं। [ अथ किम्। ]

शकारः—भावे ! पवहणाहिं इत्थिआ पडिवशदि; ता अवलोएहि। [ भाव ! प्रवहणान्तः स्त्री प्रतिवसति; तदवलोकय। ]

---

रथस्थां वसन्तसेनां निरीक्ष्य भीतं शकारं प्रति कथयति विटः—न भेत्तव्य-मिति। भो भयं मा कुरु। वृषभयाने राक्षस्याः समागमो न सम्भाव्यते। कदा-चित् त्वया स्थावरकस्य कञ्चुकस्य च्छाया तु न विलोकिता ? येन तथा सम्भा-वयसि ?

---

विट के गले से चिपट कर ) भाव ! मर गया ! मर गया ! रथ में कोई राक्षसी या चोर है। यदि राक्षसी है 'तो हम दोनों को चुरा लेगी और यदि चोर है तो दोनों को खा जायगा।

विट—डरो मत ! इस बैलगाड़ी में राक्षसी कहाँ से आई ? कहीं मध्याह्न-कालीन सूर्य से आँखें चौंधिया जाने के कारण "स्थावरक" की परछाईं से ही तो तुम्हें भय नहीं लग गया है ?

शकार—बेटे चेट ! जीता है ?

चेट—जी हाँ।

शकार—भाव ! रथ में एक स्त्री है अतः देखो।

विटः—कथं स्त्री ? ।

**अवनतशिरसः प्रयाम शीघ्रं,**
**पथि वृषभा इव वर्षताडिताक्षाः ।**
**मम हि सदसि गौरवप्रियस्य,**
**कुलजनदर्शनकातरं हि चक्षुः ॥१५॥**

वसन्तसेना—( सविस्मयमात्मगतम् ) कथं मम णअणाणं आआसअरो

---

रथे स्त्री तिष्ठति—इति शकार-वचनमाकर्ण्य स्त्री-दर्शनमस्मद्विधानां कृते पापमिति नाहं विलोकयिष्यामि त्वमेव विलोकयेति वदति—अवनतेति । यथा वर्षा-विन्दुभिस्ताडितलोचना बलीवर्दाः शिरांसि अवनमय्य ( नीचैः कृत्वा ) गच्छन्ति, तथैव वयमपि सभासु गौरवाकाङ्क्षिणः परस्त्रीदर्शननुचितं मत्वा शिरो नम्रीकृत्यैवेतः प्रयामः । इतः प्रयाणमेवोचितमस्माकमिति भावः । सज्जनानां कृते ( विशेषतो जनसमाजे निजं गौरवमाकाङ्क्षतां कृते ) परकलत्रावलोकनं सर्वथा परिहरणीयमिति हृदयम् । मम नेत्रमस्मिन् कर्मणि सर्वथा विभेति ) यदीच्छसि, स्वयमेवावलोकय ।

अत्रोपमालङ्कारः । पुष्पिताग्रा च्छन्दः । अपि च "प्रतियामः" इति सविसर्ग-पाठ एव वर्तमाने समुचितः, लोटि तथा सम्भवेऽप्यत्रार्थस्याननुकूलत्वान्न स आदर्तव्यः । अतोऽत्र च्युतसंस्कृतिर्दोषः । यदि समाधातव्यमेव ? तदा—"अस्मा-भिरितः प्रयातव्यमि" त्यर्थं मत्वा लोटः प्रयोगो विधेयः ॥१५॥

शकारस्यैव रथोऽयमिति स एव चात्रेति खिन्ना वसन्तसेना प्राह ( स्वगतम् ) कधमिति । अये ! किं मम नेत्रयोः पोडाकारी स एव शकारः ? हन्त ! मम

---

विट—क्या स्त्री है ?

"जिस प्रकार वर्षा से आहत होकर बैल सिर झुकाकर भागते हैं उसी प्रकार ( अपना गौरव चाहने वाले ) हम भी ( परस्त्री दर्शन अनुचित समझ कर ) सिर नीचा किये हुए चले जाते हैं । सभाओं में गौरवाकाङ्क्षी मेरी आँखें कुलीन स्त्रियों को देखने में समर्थ नहीं हैं ।" ॥१५॥

वसन्तसेना—( आश्चर्य से, स्वयं ही ) क्या मेरे नेत्रों में खटकने वाला यह

ब्जेव राअसालओ ? ता संसइदम्हि मंदभाआ। एसो दाणिं मम मंद-भाइणीए ऊसरक्खेत्तपडिदो विअ बीअमुट्ठी णिप्फलो इध आगमणो संवुत्तो। ता किं एत्थ करइस्सं ? । [ कथं मम नयनयोरायासकर एव राजश्यालः ? । तत्संशयितास्मि मन्दभाग्या। एतदिदानीं मम मन्दभागिन्या ऊषरक्षेत्रपतित इव बीजमुष्टिर्निष्फलमिहागमनं संवृत्तम्। तत्किमत्र करिष्यामि ? । ]

शकारः—कादले खु एशे वुड्ढचेडे प्रवहणं णावलोएदि। भावे ! आलोएहि पवहणं। [ कातरः खल्वेष वृद्धचेटः प्रवहणं नावलोकयति। भाव ! आलोकय प्रवहणम्। ]

विटः—को दोषः ? । भवत्वेवं तावत्।

शकारः—कधं शिआला उड्डेंति, वाअशा वच्चेंति ? । ता जाव भावे अक्खीहिं भक्खीअदि, दंतेहिं पेक्खीअदि, ताव हग्गे पलाइश्शं। [ कथं श्रृगाला उड्डीयन्ते, वायसा व्रजन्ति ? तद्यावद्भावोऽक्षिभ्यां भक्ष्यते, दन्तैः प्रेक्ष्यते,

---

जीवनेऽपि सन्देह एव संवृत्तः। ऊषरक्षेत्रे पतितानां बीजानां यथा नैष्फल्यम्, तथैव ममात्रागमनपि। किमत्र प्रतिविधेयमिति ?

विट एव शकारप्रार्थनानन्तरं यावदवलोकयितुं चेष्टते, तावदेव शकारः पलायनं कर्तुमिच्छन् भीतिं नाटयन् कथयति—कधमिति। शकारोक्तौ विपरीतता न दोषाय, प्रत्युत मूर्खताधिक्यमेव द्योत्यते। श्रृगाला उड्डयनं कुर्वन्ति, वायसाः = काकाः ( भूमौ पद्भ्यां )—व्रजन्ति, तद् यावदसौ विटो नेत्राभ्यां न खाद्यते,

---

वही राजश्यालक है ? तो मैं भाग्यहीन बड़े सन्देह में पड़ गई हूँ। मुझ मन्दभाग्य का इस समय यहाँ आना—ऊसर खेत में डाले हुए बीज की भाँति—व्यर्थ हो गया। तो क्या करूँ ?

शकार—यह बूढ़ा "चेट" कातर ( डरपोक ) होने से रथ को नहीं देखता अतः भाव ! तुम्हीं देखो।

विट—क्या दोष ( हर्ज ) है ? देखता हूँ।

शकार—क्या गीदड़ उड़ रहे हैं ? कौए भाग रहे हैं ? तो जबतक (राक्षसी) "भाव" को आँखों से नहीं खाती तथा दाँतों से नहीं देखती तबतक मैं भाग जाता

तावदहं पलायिष्ये । ]

विटः—( वसन्तसेनां दृष्ट्वा, सविषादमात्मगतम् ) कथमये, मृगी व्याघ्रमनुसरति ? । भोः ! कष्टम् ;

**शरच्चन्द्रप्रतीकाशं पुलिनान्तरशायिनम् ।**
**हंसी हंसं परित्यज्य वायसं समुपस्थिता ॥१६॥**

( जनान्तिकम् ) वसन्तसेने ! न युक्तमिदम्, नापि सदृशमिदम् ;

**पूर्वं मानादवज्ञाय द्रव्यार्थं जननीवशात् ।**

---

दन्तैश्च न प्रेक्ष्यते, तावदहं तु पलायनं करोमि । नो चेदियं प्रवहणारूढा राक्षसी विटं भक्षयित्वा मामपि भक्षयिष्यत्येवेति भावः ।

विटो वसन्तसेनां निरीक्ष्यात्मगतं कथयति—शरच्चन्द्रेति । अहो ! आश्चर्यम् ! शरच्चन्द्रतुल्यम्, कस्याश्चन सरितस्तटे कृतशयनं हंसं परित्यज्येयं हंसी काकमुपैति ! वसन्तसेनायाश्चारुदत्तं परित्यज्य शकारानुमनमपि कथितदृष्टावदनुचितमेवेति भावः । अत्राप्रस्तुतप्रशंसोपमयोः सांकर्यम् । पथ्यावक्त्रं छन्दः ॥१६॥

पुनर्जनान्तिकं, वसन्तसेनामुद्दिश्य कथयति—पूर्वं मानादिति । वसन्तसेने !

---

हूँ । ( अन्यथा मुझे भी खा लेगी । )

विट—( "वसन्तसेना" को देखकर विषादपूर्वक, स्वयं ही ) क्या हरिणी व्याघ्र का अनुसरण करती है ? खेद है !

"क्या शरत्कालीन चन्द्रमा के समान तथा किसी सरिता के तट पर विहार करने वाले हंस को छोड़कर हंसिनी कौए के पास आ गई ? ( क्या "आर्य चारुदत्त" को छोड़कर यह "वसन्तसेना" इस काकतुल्य "शकार" के पास आ गई है । )" ॥१६॥

( सामाजिकों के पास को ) वसन्तसेने ! न यह ठीक है और न तुम्हारे योग्य ही है ।

"पहिले मान से ( "शकार" का ) तिरस्कार कर अब माता के वश में होकर धन के लिए—"

वसन्तसेना—ण। [ न। ] ( इति शिरश्चालयति। )

विटः—

अशौण्डीर्यस्वभावेन वेशभावेन मन्यते ॥१७॥

ननूक्तमेव मया भवतीं प्रति—'सममुपचर भद्रे! सुप्रियं चाप्रियं च।'

वसन्तसेना—पंवहणविपज्जासेण आगदा। सरणागदम्हि। [ प्रवहण-विपर्यसेनागता। शरणागतास्मि। ]

विटः—न भेतव्यं न भेतव्यम्; भवतु। एनं वञ्चयामि। ( शकारमुपगम्य। ) काणेलीमातः! सत्यं राक्षस्येवात्र प्रतिवसति।

शकारः—भावे भावे! जइ लक्खशी पडिवशदि, ता कीश ण तुमं मूशेदि? अध चोले, ता किं तुमं ण भक्खिदे?। [ भाव भाव! यदि राक्षसी प्रतिवसति; तत्कथं न त्वां मुष्णाति?। अथ चौरः, तदा किं त्वं न भक्षितः?। ]

---

पूर्वमनेन शकारेण प्रार्थना कृता, तदा त्वयाऽस्यापमानं कृतम्, द्रव्यञ्च प्रेषितं तदपि नाङ्गीकृतम् मन्ये, इदानीं जनन्याः लोभवशात् प्रेरिता सती, वेश्याभावस्य अशौण्डीर्यत्वात् = गर्वराहित्यादेव त्वमेनं शकारमभिसर्तुं समागतासि?

---

वसन्तसेना—नहीं ( सिर-हिलाती है। )

विट—"मैं समझता हूँ कि वेश्याजनोचित आत्मगौरव की कमी के कारण ( "शकार" से अभिसरण करने आई हो। )" ॥१७॥

मैंने तुमसे पहिले ही कहा था कि—"भद्रे! प्रिय अथवा अप्रिय सबका समान सम्मान करो।"

वसन्तसेना—रथ के बदलने से ( धोखे में ) यहाँ आ गई हूँ। शरणागत हूँ।

विट—डरो मत! तो इसका ( "शकार का" ) प्रतारण करता हूँ। ( "शकार" के पास आकर ) काणेलीपुत्र! सचमुच इसमें राक्षसी ही है।

शकार—भाव! भाव! यदि यह राक्षसी है तो तुम्हें क्यों नहीं चुराया? और यदि चोर है तो खाया क्यों नहीं?

विटः—किमनेनन निरूपितेन ?। यदि पुनरुद्यानपरम्परया पद्भ्यामेव नगरीमुज्जयिनीं प्रविशावः, तदा को दोषः स्यात् ?।

शकारः—एवं किदे किं भोदि ?। [ एवं कृते किं भवति ?। ]

विटः—एवं कृते व्यायामः सेवितो धुर्याणां च परिश्रमः परिहृतो भवति।

शकारः—एवं भोदु। थावलआ चेडा ! णेहि पवहणं। अधवा च्चियश्ट। च्चियश्ट; देवदाणं बम्हणाणं च अग्गदो चलणेण गच्छामि। णहि णहि, पवहाणं अहिलुहिअ गच्छामि, जेण दूलदो मं पेक्खिअ भणिश्शंति—'एशे शे लश्टिअशाले भश्टालके गच्छदि'। [ एवं भवतु। स्थावरक चेट ! नय प्रवहणम्। अथवा तिष्ठ तिष्ठ; देवतानां ब्राह्मणानां चाग्रतश्चरणेन गच्छामि। नहि नहि, प्रवहणमधिरुह्य गच्छामि, येन दूरतो मां प्रेक्ष्य भणिष्यन्ति—'एष स राष्ट्रियश्यालो भट्टारको गच्छति'। ]

विटः—( स्वगतम् ) दुष्करं विषमौषधीकर्तुम्। भवतु। एवं तावत्।

---

मया तु प्रथममेवोक्तमासीत्—"भद्रे ! सर्वं जनं साम्येनैव भज" इति। पथ्यावक्त्रं छन्दः ॥ १७ ॥

शकारो महामूर्खः, अस्य स्वभाव-परिवर्तनं न साधारणतया सम्भाव्यते इति विटः कथयति—दुष्करमिति। विषं यथा प्राणनाशकं स्वभावेन भवति, कुशला

---

विट—इसपर विचार करने से क्या लाभ ? यदि बागों में ही होकर पैदल ही "उज्जयिनी" में प्रवेश करें तो क्या दोष है ?

शकार—ऐसा करने से क्या होगा ?

विट—ऐसा करने से व्यायाम तथा बैलों का परिश्रम दूर हो जायगा।

शकार—ऐसा ही हो। स्थावरक ! रथ ले ला ! अथवा, ठहर ! ठहर ! देवताओं और ब्राह्मणों के आगे पैदल ही चलता हूँ। नहीं, नहीं रथ पर चढ़कर चलूँगा जिससे लोग मुझे दूर से ही देखते हुए कहें कि—"यह स्वामी राजश्यालक आ रहे हैं।"

विट—( आत्मगत ) विष की औषध करना कठिन है। ( इसका स्वभाव

( प्रकाशम् ) काणेलीमातः ! एषा वसन्तसेना भवन्तमभिसारयितुमागता ।

वसन्तसेना—संतं पावं संतं पावं । [ शान्तं पापम् , शान्तं पापम् । ]

शकारः—( सहर्षम् ) भावे भावे, मं पवलपुलिशं मणुश्शं वाशुदेवकं । [ भाव भाव ! मां प्रवरपुरुषं मनुष्यं वासुदेवकम् । ]

विटः—अथ किम् ।

शकारः—तेण हि अपुव्वा शिली शमाशादिदा । तश्शिं काले मए लोशाविदा, शंपदं पादेशुं पडिअ पशादेमि । [ तेन ह्यपूर्वा श्रीः समासादिता । तस्मिन् काले मया रोषिता, सांप्रतं पादयोः पतित्वा प्रसादयामि । ]

विटः—साध्वभिहितम् ।

शकारः—एशे पादेशुं पडेमि । ( इति वसन्तसेनामुपसृत्य ) अत्तिके, अम्बिके ! शुणु मम विण्णत्तिं ।

**एशे पडामि चलणेशु विशालणेत्ते !**

---

वैद्याः पुनः संशोध्य महता प्रयासेन सेवनीयौषधरूपेण परिणमयन्ति, तथैवास्य शकारस्य स्वभावः परिवर्तयितुमतीव दुष्कर इति भावः ।

शकारो वसन्तसेनां प्रसादयितुमाह—एशे-इति । विशाल-लोचने ! दशनख-

---

बदलना दुष्कर है । ) अच्छा तो यह कहता हूँ ( प्रकाश में ) शकार ! यह "वसन्तसेना" तुमसे अभिसार करने आई है ।

वसन्तसेना—राम ! राम !

शकार—( सहर्ष ) भाव ! भाव ! मुझ सत्पुरुष 'वासुदेव' से ?

विट—जी हाँ ।

शकार—तब तो बहुत बड़ी लक्ष्मी हाथ लग गई । उस मैंने रुष्ट कर दी थी परन्तु अब पैरों में पड़कर मनाऊँगा ।

विट—बहुत ठीक कहा ।

शकार—मैं पैरों में पड़ रहा हूँ । ( "वसन्तसेना" के पास जाकर ) माता ! अम्बिके ! मेरी विनय सुनो ।

"ऐ विशाललोचने ! दशनखे ! शुद्ध दाँतों वाली वसन्तसेने ! मैं तुम्हारे चरणों

हस्तंजलिं दशणहे तव शुद्धदंति ! ।
जं तं मए अवकिदं मदणातुलेण,
तं खम्मिदाशि वलगत्ति ! तव म्हि दाशे ॥१८॥

[ एष पादयोः पतामि । मातः, अम्बिके ! शृणु मम विज्ञप्तिम् ।
एष पतामि चरणयोर्विशालनेत्रे ! हस्ताञ्जलिं दशनखे तव शुद्धदन्ति ! ।
यत्तव मयापकृतं मदनातुरेण तत्क्षामितासि वरगात्रि ! तवास्मि दासः । ]

वसन्तसेना—( सक्रोधम् ) अवेहि, अणज्जं मंतेसि । [ अपेहि, अनार्यं मन्त्रयसि । ] ( इति पादेन ताडयति )

शकारः—( सक्रोधम् )

जे चुंबिदे अंबिकमादुकेहिं, गदे ण देवाण वि जे पणामं ।
शे पाडिदे पादतलेण मुंडे, वणे शिआलेण जधा मुदंगे ॥१९॥

---

सहिते ! शुद्धदन्ति ! वसन्तसेने ! अहमिदानीं तव पादयोः पतित्वा त्वां प्रसादयामि । पूर्वं मया त्वं परिकोपिता, स तवापराधो मया क्षान्तः ( इति विपरीतभाषित्वं नैसर्गिकमस्य मर्षणीयम् ) । अहमधुना तव दासोऽस्मि । मय्यनुग्रहं कुरु । वसन्ततिलका छन्दः ॥ १८ ॥

वसन्तसेनया "अनार्यं मन्त्रयसी" ति श्रुत्वा शकारः सरोषमाह—जे चुम्बिदे—इति । इदं मदीयं शिरः केवलं ममाम्बया चुम्बितं प्रेम्णा, देवानामपि प्रणामनिमित्तं न नम्रीभूतम्, मृताङ्गं शृगालो यथा वने निपातयति, तथैव मदीयं

---

में गिरता हूँ । अयि वरगात्रि ! जो पहले कामार्त होकर मैंने तुम्हारा अपमान किया था—उसके लिए मैंने तुमको क्षमा कर दिया है—अब मैं तुम्हारा दास हूँ । प्रसन्न होओ !" ॥१८॥

वसन्तसेना—( क्रोध से ) चुप रह ! क्या बेहूदी बात बकता है । ( चरण-प्रहार करती है । )

शकार—( क्रोध से )

"जिसे केवल मेरी माता ने स्नेह से चूमा है तथा जो कभी देवताओं के

अले थावलआ चेडा ! कहिं तुए एशा शमाशादिदा ? ।
[ यच्चुम्बितमम्बिकामातृकाभिर्गतं न देवानामपि यत्प्रणामम् ।
तत्पातितं पादतलेन मुण्डं, वने शृगालेन यथा मृताङ्गम् ॥
अरे स्थावरक चेट ! कुत्र त्वयैषा समासादिता ? । ]

चेटः—भश्टके ! गामशअलेहिं लुद्धे लाअमग्गे । तदो चालुदत्तश्श लुक्खवाडिआए पवहणं थाविअ तहिं ओदलिअ जाव चक्कपलिवट्टिअं कलेमि, दाव एशा पावहणविपज्जाशेण इह आलूढे त्ति तक्केमि । [ भट्टक ! ग्रामशकटै रुद्धो राजमार्गः । तदा चारुदत्तस्य वृक्षवाटिकायां प्रवहणं स्थापयित्वा तत्रावतीर्य यावच्चक्रपरिवृत्तिं करोमि, तावदेषा प्रवहणविपर्यासेनेहारूढेति तर्कयामि । ]

शकारः—कधं पवहणविपज्जाशेण आगदा, ण मं अहिशालिदुं ? । ता ओदल ओदल ममकेलकादो पवहणादो । तुमं तं दलिद्दशत्थवाहपुत्तकं अहिशालेशि । ममकेलकाइं गोणाइं वाहेशि । ता ओदल ओदल गब्भदाशि ! ओदल ओदल । [ कथं प्रवहणविपर्यासेनागता, न मामभि-

---

शिरस्त्वया पादतलेन दूरं निपातितम् ? यथा शृगालो मृतस्य पश्वादेरङ्गं—पादेनाक्रम्य भक्षयितुमुद्यतो भवति, तथैव त्वया ममाङ्गमिदं पादतलेन निपात्य तिरस्कृतम् । इदानीमेतस्य फलमपि प्राप्स्यसीति भावः ॥ १९ ॥

---

सामने भी नहीं झुका उसी मेरे सिर को, जैसे शृगाल मुर्दे के अङ्ग को ( खींचकर खाने के लिए ) डाल देता है वैसे ही तूने चरण से आहत कर दिया है ।"॥१६॥

अरे स्थावरक चेट ! तुझे यह कहाँ से मिली ?

चेट—स्वामिन् ! मैं अनुमान करता हूँ कि—गाँव की गाड़ियों से राजमार्ग रुक जाने पर "चारुदत्त" की वृक्षवाटिका के सामने रथ खड़ा कर जैसे ही उतरकर पहिये में सहारा लगाया वैसे ही इसी बीच में यह रथ के बदलने से यह रथ पर चढ़ गई ।

शकार—क्या रथ परिवर्तन से आई है अभिसरण के लिए नहीं ? तो मेरे

सारयितुम् ! तदवतरावतर मदीयात् प्रवहणात् । त्वं तं दरिद्रसार्थवाहपुत्रमभिसरसि । मदीयौ गावौ वाहयसि । तदवतरावतर गर्भदासि ! अवतरावतर । ]

वसन्तसेना—तं अज्जचारुदत्तं अहिसारेसि त्ति जं सच्चं, अलंकिदम्हि इमिणा वअणेण । संपदं जं भोदु तं भोदु । [ तमार्यचारुदत्तमभिसरसीति यत् सत्यम्, अलंकृताऽस्म्यमुना वचनेन । सांप्रतं यद्भवति तद्भवति । ]

शकारः—

एदेहिं दे दशणहुप्पलमंडलेहिं,
हत्थेहिं चाडुशदताडणलंपडेहिं ।
कड्ढामि दे वलतणुं णिअजाणकादो,
केशेशु बालिदइअं वि जहा जडाऊ ॥२०॥

[ एताभ्यां ते दशनखोत्पलमण्डलाभ्यां,
हस्ताभ्यां चाटुशतताडनलम्पटाभ्याम् ।

---

स्वरथादवतरणे विलम्बमानां वसन्तसेनां प्रति सरोषमाह शकारः—एदेहि—इति । दश-संख्याका नखा एवोत्पलानां = कमलानां मण्डलं = समूहो ययोस्ताभ्यामेताभ्यां, चाटुशतमिव ताडनं तत्र लम्पटाभ्यां स्वहस्ताभ्यां तव केशग्रहणपुरस्सरं स्वकीयाद्रथात् जटायुर्बालिदयिताया इवापकर्षणं करोमि । हस्तयोः काठिन्ये प्रतिपादयितव्येऽपि कोमल-कमलतुल्यताभिधानं जटायु-बालिपत्नी-

---

रथ से उतर ! उतर ! तू उस दरिद्र सार्थवाह से रमण करती है और मेरे बैलों पर चढ़ती है । इसलिए वेश्यापुत्रि ! उतर ! उतर !

वसन्तसेना—"उस "आर्य चारुदत्त" से रमण करती है" सच तो यह है कि इन शब्दों से मैं अलङ्कृत हो गई हूँ । अब चाहे जो हो ।

"इन नख-कमलों से सुशोभित, प्रिय-वाक्यों की भाँति मारने में कुशल ( जैसे—मनुष्य प्रिय वचनों को प्रसन्नता से सुनते हैं वैसे ही मेरे हाथ भी पीटने में बड़े प्रसन्न होते हैं ) हाथों से तेरे सुन्दर शरीर को बाल पकड़ कर—"बालि" की स्त्री को जैसे "जटायु ने पकड़ा था—वैसे ही रथ से उतारता हूँ । ( वीरता

२७

कर्षामि ते वरतनुं विजयानकात्
केशेषु वालिदयितामिव यथा जटायुः ॥ ]

विटः—

**अग्राह्या मूर्धजेष्वेताः स्त्रियो गुणसमन्विताः ।**
**न लताः पल्लवच्छेदमर्हन्त्युपवनोद्भवाः ॥२१॥**

तदुत्तिष्ठ त्वम्, अहमेनामवतारयामि । वसन्तसेने ! अवतीर्यताम् ।

( वसन्तसेनावतीर्यैकान्ते स्थिता )

शकारः—( स्वगतम् ) जे शे मम वअणावमाणेण तदा लोशग्गी शंधुक्खिदे, अज्ज एदाए पादप्पहालेण अणेण पज्जलिदे, तं शंपदं मालेमि णं । भोदु एव्वं दाव । ( प्रकाशम् ) भावे भावे !

---

साम्यकथनञ्च सर्वमपीदं शकारस्य मौर्ख्यातिशयं प्रख्यापयति । वसन्ततिलका च्छन्दः ॥ २० ॥

एवंविधमनुचितं वचनं श्रुत्वा विटः शकारं निषेधयति—अग्राह्या-इति । भोः ! एताः सर्वगुणशोभिताः स्त्रियः केशेषु ग्राह्या न भवन्ति पश्य, उपवनोद्भवा लताः पुष्पाणां छेदं नार्हन्त्यनुभवितुम् । ततश्च त्वयैतस्याः केशाकर्षणात्मकं विगर्हितं कार्यं नैव कार्यमिति भावः । अत्र दृष्टान्तोऽलङ्कारः । पथ्यावक्त्रं च्छन्दः ॥२१॥

---

के लिए कोमल कमलों का प्रयोग तथा "वालि" और "जटायु" की उपमा देना "शकार" की अपनी निजी विशेषता है ! )" ॥२०॥

विट—"इन गुणों से युक्त स्त्रियों के बाल नहीं पकड़ने चाहिए क्योंकि उद्यान की लताओं के पत्ते नोंचना उचित नहीं होता" ॥२१॥

इसलिए तुम उठो ! मैं इसे उतारता हूँ । वसन्तसेने उतर जाओ !

( "वसन्तसेना" उतर कर एक ओर खड़ी हो जाती है । )

शकार—( स्वयं ही ) जो आग पहिले इसके तिरस्कार करने से लग गई थी वही अब पाद-प्रहार करने से जल उठी है । इसलिए अब मैं इसे मारता हूँ । अच्छा, ऐसा करूँ । ( प्रकाश में ) भाव ! भाव !

जदिच्छशे लंबदशाविशालं पावालअं शुत्तशदेहिं जुत्तं ।
मंशं च खादुं तह तुश्टि कादुं चुहू चुहू चुक्कु चुहू चुहूत्ति ॥२२॥

[ यः स मम वचनावमानेन तदा रोषाग्निः संधुक्षितः, अद्यैतस्याः पादप्रहारेणानेन प्रज्वलितः । तत्सांप्रतं मारयाम्येनाम् । भवतु एवं तावत् । भाव भाव !

यदीच्छसि लम्बदशाविशालं प्रावारकं सूत्रशतैर्हि युक्तम् ।
मांसं च खादितुं तथा तुष्टिं कर्तुं चुहू चुहू चुक्कु चुहू चुहू इति ॥ ]

विटः—ततः किम् ? ।

शकारः—मम पिअं कलेहि । [ मम प्रियं कुरु । ]

विटः—बाढं करोमि वर्जयित्वा त्वकार्यम् ।

शकारः—भावे ! अकज्जाह गंधे वि णत्थि । लक्खशी कावि णत्थि ।
[ भाव ! अकार्यस्य गन्धोऽपि नास्ति । राक्षसी कापि नास्ति । ]

विटः—उच्यतां तर्हि ।

---

भृशं परिकुपितः शकारः प्राक्कृतमपमानं स्मरन् वसन्तसेनाया मारणे कृतमतिर्विटं प्रलोभयितुमाह—जदिच्छशे-इति । भाव ! यदि त्वं लम्बमानाभिः दशाभिः=वस्त्रान्तैः विशालम्=विस्तृतं सूत्रशतसहितं प्रावारकं=उत्तरीयं वस्त्रं ग्रहीतुमिच्छसि ? मांसं वा भोक्तुं वाञ्छसि ? "चुहू" इति मांसभक्षणकालिको ध्वनिविशेषः । [ तदा वसन्तसेनां मारय-इति, अनुपदं वक्ष्यति ] अत्रोपजातिश्छन्दः ॥२२॥

---

"यदि तुम सैकड़ों धागों वाला लम्बा दुशाला अथवा "चुहू-चुहू" शब्द करते हुए मांस खाना चाहते हो तो"—( "वसन्तसेना" को मार डालो । )" ॥२२॥

विट—तो क्या ?

शकार—मेरा प्रिय कार्य करो ।

विट—हाँ, अकार्य को छोड़ कर करूँगा ।

शकार—भाव ! अकार्य का नाम भी नहीं है । 'राक्षसी' कहीं भी नहीं है ।

विट—तो कहो ?

शकारः—मालेहि वशंतशेणिअं। [ मारय वसन्तसेनाम्। ]

विटः—( कर्णौ पिधाय )

बालां स्त्रियं च नगरस्य विभूषणं च,
वेश्यामवेशसदृशप्रणयोपचाराम् ।
एनामनागसमहं यदि घातयामि,
केनोडुपेन परलोकनदीं तरिष्ये ॥२३॥

शकारः—अहं ते भेडकं दइश्शं। अण्णं च, विवित्ते उज्जाणे इध मालंतं को तुमं पेक्खिश्शदि ?। [ अहं त उडुपं दास्यामि। अन्यच्च विविक्ते उद्यान इह मारयन्तं कस्त्वां प्रेक्षिष्यते ?। ]

---

विटः पापस्यास्य श्रवणमपि निन्दितं मत्वाह—बालामिति। भो शकार ! यदि नगरस्य भूषणभूतां, वेश्याम्, असमप्रेमोपचारपरीताम्, अपराधं विनैव यदि मारयामि, तदा केन उडुपेन=पोतेन परलोक-नदीं तरिष्यामि ? "तरिष्ये" इत्यात्मनेपदं व्याकरणविरुद्धमिति च्युतसंस्कृतिदोषः।

अत्र साभिप्रायविशेषणदानात् परिकरालङ्कारः। तल्लक्षणञ्च यथा—

"उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः।" इति। वसन्ततिलकं च्छन्दः॥२३॥

पापं मत्वा नाहं मारयिष्यामीति विटवचनमाकर्ण्याह शकारः—अहं ते-इति। यदि परलोकार्थं पोतस्तव सविधे नास्ति, तर्हि न भेत्तव्यम्, अहं ते पोतं दास्यामि। अपि च—विविक्ते=एकान्ते मारयन्तं भवन्तं कः पश्यति ?

---

शकार—"वसन्तसेना" को मार डालो !"

विट—( कान बन्द कर )

"यदि मैं नगरी की ललामभूव, वेश्याओं के अयोग्य सच्चा प्रेम करने वाली इस निरपराध बाला को मार डालता हूँ तो ( बताओ तो सही ) किस यान से परलोक—नदी को पार करूँगा ॥२३॥

शकार—मैं तुम्हें यान दूँगा। और दूसरी बात यह है कि इस निर्जन उद्यान में मारते हुए तुमको कौन देखता है ?

विटः—

**पश्यन्ति मां दशदिशो वनदेवताश्च,**
**चन्द्रश्च दीप्तकिरणश्च दिवाकरोऽयम् ।**
**धर्मानिलौ च गगनं च तथान्तरात्मा,**
**भूमिस्तथा सुकृतदुष्कृतसाक्षिभूता ॥२४॥**

शकारः—तेण हि पडंतोवालिदं कदुअ मालेहि । [ तेन हि पटान्तापवारितां कृत्वा मारय । ]

विटः—मूर्ख ! अपध्वस्तोऽसि ।

शकारः—अधम्मभीलू एशे वुड्ढकोले । भोदु, थावलअं चेडं अणुणेमि । पुत्तका थावलका चेडा ! शोवण्णखंडुआइं दइश्शं । [ अधर्मभीरुरेष

---

विटः प्रतिवदति—पश्यन्ति-इति । किमेवं कथयसि ? पाप-कर्म-कारिणं मामत्र दशापि दिशः, वनदेवताः, चन्द्रः, प्रदीप्तकिरणः सूर्यश्च, धर्मः, अनिलः, आकाशम्, अन्तरात्मा, भूमिः, एते सर्वेऽपि प्राणिमात्रस्य पुण्य-पापयोः साक्षिणः सन्तः पश्यन्ति । अत एवोक्तम्—

"आदित्यचन्द्रावनिलोऽनलश्च, द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च, उभे च सन्ध्ये, धर्मश्च जानाति नरस्य वृत्तम् ॥" इति ।

पापं कर्म गोपायितुं न शक्यते, इति भावः ।

त्वं तु मूर्ख ! अपध्वस्तः = विनष्टः, अस्मात् परस्माच्चेत्युभयलोकाद्विनष्टोऽसि । नीचवंशोत्पन्न इति यावत् । अत्र तुल्ययोगितालङ्कारः । वसन्ततिलका च्छन्दः ॥२४॥

---

**विट—"मुझको दसों दिशाएँ, वन-देवता, चन्द्रमा, भास्वर ( चमकीला ) भास्कर, धर्म, वायु, अन्तरात्मा तथा पाप-पुण्य की साक्षिणी भूमि—ये सब देख रहे हैं ।" ॥२४॥**

**शकार—तो कपड़े से ढक कर मार डालो ( जिससे कोई न देख सके । )**

**विट—मूर्ख ! पागल हो गया है !**

**शकार—यह बूढ़ा अधर्म से डरता है । अतः "स्थावरक चेट" को ( इ**

वृद्धकोलः । भवतु, स्थावरकं चेटमनुनयामि । पुत्रक स्थावरक चेट ! सुवर्ण-कटकानि दास्यामि । ]

चेटः—अहं पि पहिलिश्शं । [ अहमपि परिधास्यामि । ]

शकारः—शोवण्णं दे पीढके कालइश्शं [ सौवर्णं ते पीठकं कारयिष्यामि । ]

चेटः—अहं पि उबविशिश्शं । [ अहमप्युपवेक्ष्यामि । ]

शकारः—शव्वं दे उच्छिश्टअं दइश्शं । [ सर्वं त उच्छिष्टं दास्यामि । ]

चेटः—अहं पि खाइश्शं । [ अहमपि खादिष्यामि । ]

शकारः—शव्वचेडाणं महत्तलकं कलइश्शं । [ सर्वचेटानां महत्तरकं कारयिष्यामि । ]

चेटः—भट्टके ! हुविश्शं । [ भट्टक ! भविष्यामि । ]

शकारः—ता मण्णेहि मम वअणं । [ तन्मन्यस्व मम वचनम् । ]

चेटः—भट्टके ! शव्वं कलेमि वज्जिअ अकज्जं । [ भट्टक ! सर्वं करोमि वर्जयित्वाऽकार्यम् । ]

---

बात के लिए ) मनाता हूँ ।

बेटे ! स्थावरक चेट ! तुझे सोने के कड़े दूँगा ।

चेट—मैं भी पहिनूँगा ।

शकार—मैं तेरे लिए सोने की चौकी बनवाऊँगा ।

चेट—मैं भी बैठ जाऊँगा ।

शकार—तुझे सारी जूठन दूँगा ।

चेट—मैं भी खा लूँगा ।

शकार—तुझे सब चेटों का बड़ा बना दूँगा ।

चेट—स्वामिन् ! हो जाऊँगा ।

शकार—तो मेरा कहना मान ले ।

चेट—स्वामिन् ! अकार्य को छोड़कर सब-कुछ करूँगा ।

शकारः—अकज्जाह गंधे वि णत्थि । [ अकार्यस्य गन्धोऽपि नास्ति । ]

चेटः—भणादु भट्टके । [ भणतु भट्टक । ]

शकारः—एणं वशंतशेणिअं मालेहि । [ एनां वसन्तसेनां मारय । ]

चेटः—पशीददु भट्टके । इअं मए अणज्जेण अज्जा पवहणपलिवत्तणेण आणीदा । [ प्रसीदतु भट्टकः । इयं मयानार्येणार्या प्रवहणपरिवर्तनेनानीता । ]

शकारः—अले चेडा ! तवावि ण पहवामि । [ अरे चेट ! तवापि न प्रभवामि । ]

चेटः—पहवदि भट्टके शलीलाह, ण चालित्ताह । ता पशीददु पशीददु भट्टके । भाआमि क्खु अहं । [ प्रभवति भट्टकः शरीरस्य, न चारित्र्यस्य । तत्प्रसीदतु प्रसीदतु भट्टकः । बिभेमि खल्वहम् । ]

शकारः—तुमं मम चेडे भविअ कश्श भाआशि ? [ त्वं मम चेटो भूत्वा कस्माद्बिभेषि ? । ]

चेटः—भट्टके ! पललोअश्श । [ भट्टक ! परलोकात् । ]

शकारः—के शे पललोए ? [ कः स परलोकः ? । ]

---

शकार—अकार्य का गन्ध भी नहीं है ।

चेट—तो कहो ।

शकार—इस "वसन्तसेना" को मार दे ।

चेट—आप प्रसन्न हों ! यह 'आर्या' मुझ अनार्य के द्वारा रथ-परिवर्तन हो जाने से यहाँ आ गई ।

शकार—अरे चेट ! तू भी मेरा नहीं है ? ( मेरे कहने में नहीं है ? )

चेट—आप शरीर के ही स्वामी हैं, चरित्र के नहीं । अतः मुझे क्षमा करें। मैं भयभीत हूँ ।

शकार—तू मेरा "चेट" होकर किससे डरता है ?

चेट—मालिक ! परलोक से ।

शकार—अबे ! यह परलोक क्या है ?

चेटः—भट्टके ! शुकिदुक्किदश्श पलिणामे । [ भट्टक ! सुकृतदुष्कृतस्य परिणामः । ]

शकारः—केलिशे शुकिदश्श पलिणामे ? [ कीदृशः सुकृतस्य परिणामः ? । ]

चेटः—जादिशे भट्टके बहुशुवण्णमंडिदे । [ यादृशो भट्टको बहुसुवर्णमण्डितः । ]

शकारः—दुक्किदश्श केलिशे ? । [ दुष्कृतस्य कीदृशः ? । ]

चेटः—जादिशे हग्गे पलपिंडभक्खके भूदे ता अकज्जं णं कलइश्शं । [ यादृशोऽहं परपिण्डभक्षको भूतः, तदकार्यं न करिष्यामि । ]

शकारः—अले ! ण मालिश्शशि ? [ अरे ! न मारयिष्यसि ? । ]

( इति बहुविधं ताडयति )

चेटः—पिट्टयदु भट्टके, मालेदु भट्टके, अकज्जं ण कलइश्शं ।

**जेण म्हि गब्भदाशे विणिम्मिदे भाअधेअदोशेहिं ।**
**अहिअं च ण कीणिश्शं तेण अकज्जं पलिहलामि ॥२५॥**

---

चेटः कथयति—जेण-इति । येन कर्मणाऽहं गर्भदासः कृतः, तदकार्यमतो-

---

चेट—मालिक ! "पाप पुण्य का परिणाम" !

शकार—पुण्य का क्या परिणाम है ?

चेट—जैसे आप बहुत से सुवर्ण से सुशोभित हैं ।

शकार—और पाप क्या ( परिणाम ) है ?

चेट—जैसा मैं परान्नभोजी हूँ । इसलिए अकार्य न करूँगा ।

शकार—अरे ! नहीं मारेगा ? ( बहुत प्रकार से पीटता है । )

चेट—मालिक ! मारो, चाहे पीटो, पर अकार्य नहीं करूँगा ।

"जिन ( पूर्व जन्म के ) कर्मों से मैं ( इस जन्म में ) दास बना हुआ हूँ अब और ( अधिक अकार्य करके ) पाप मोल न लूँगा अत एव मैं अनर्थ नहीं करता ।" ॥२५॥

[ ताडयतु भट्टकः, मारयतु भट्टकः, अकार्यं न करिष्यामि ।
येनास्मि गर्भदासो विनिर्मितो भागधेयदोषैः ।
अधिकं च न क्रीणिष्यामि तेनाकार्यं परिहरामि ॥ ]

वसन्तसेना—भाव ! शरणागद म्हि । [ भाव ! शरणागतास्मि । ]

विटः—काणेलीमातः । मर्षय मर्षय । साधु स्थावरक ! साधु ।

**अप्येष नाम परिभूतदशो दरिद्रः,**
**प्रेष्यः परत्र फलमिच्छति नास्य भर्ता ।**
**तस्मादमी कथमिवाद्य न यान्ति नाशं,**
**ये वर्धयन्त्यसदृशं सदृशं त्यजन्ति ॥२६॥**

अपि च—

---

ऽधिकं न करिष्यामि । पूर्वस्मिन् काले किमप्यकार्यं, तस्य फलमिदानीं दास्यरूपेण लभ्यते । अतः परं कृतेनानार्येण कर्मणा न जाने कीदृशं फलं भोक्तव्यम् ! ॥२५॥

विटः पुनरुभयोः शोचनीयतां, विधेश्च विलासं विचिन्तयन्नाह—अप्येष-इति । यद्यप्ययं चेटो दरिद्रः, सेवकः, तथापि परलोके क्रियमाणस्य शुभाशुभस्य फलं कामयते, अयञ्चास्य स्वामी तु न वाञ्छति । अहमेवं विचारयामि—येऽनुचितं पोषयन्ति, उचितञ्च परित्यजन्ति, ते विनाशं कथं न यान्ति ? एवंविधानां तु दुष्टचरितानां विनाश एवोचितः, इति भावः ।

अत्राप्रस्तुतप्रशंसाऽलङ्कारः । वसन्ततिलका च्छन्दः ॥२६॥

---

वसन्तसेना—भाव ! शरणागत हूँ ।

विट—पुंश्चलीपुत्र ! क्षमा करो ! वाह ! स्थावरक ! वाह !

"यह परतन्त्र दरिद्र दास ( "चेट" ) परलोक में फल चाहता है; परन्तु इसका स्वामी ( "शकार" ) नहीं । ( मैं सोचता हूँ कि ) ये जो अशुभ कार्य करते हैं तथा शुभ कर्म छोड़ देते हैं—उनका अबतक नाश क्यों नहीं हो जाता ?" ॥२६॥

और भी—

रन्ध्रानुसारी विषमः कृतान्तो, यदस्य दास्यं तव चेश्वरत्वम् ।
श्रियं त्वदीयां यदयं न भुङ्क्ते, यदेतदाज्ञां न भवान् करोति ॥२७॥

शकारः—( स्वगतम् ) अधम्मभिलुए वुड्ढखोडे । पललोअभिलू एशे गब्भदाशे । हग्गे लट्ठिअशाले कश्श भाआमि वलपुलिशमणुश्शे ? । ( प्रकाशम् ) अले गब्भदाशे चेडे ! गच्छ तुमं । ओवलके पविशिअ वीशंते एअंते चिट्ठ । [ अधर्मभीरुको वृद्धशृगालः । परलोकभीरुरेष गर्भदासः । अहं राष्ट्रियश्यालः कस्माद्बिभेमि वरपुरुषमनुष्यः ? । अरे गर्भदास चेट ! गच्छ त्वम् । अपवारके प्रविश्य विश्रान्त एकान्ते तिष्ठ । ]

चेटः—जं भट्टके आणवेदि । ( वसन्तसेनामुपसृत्य ) अज्जए ! एत्तिके मे विहवे । [ यद्भट्टक आज्ञापयति । आर्ये ! एतावान् मे विभवः । ]

---

पुनरप्याह विटः—रन्ध्रानुसारीति । अपि च—छिद्रानुसारी भगवान् कृतान्तोऽपि विषम एवास्ति । यतस्त्वं प्रभुरथ चेदृशगुणसम्पन्नोऽपि दासः कृतः ! अयं चेटस्तव सम्पदां भोक्ता नास्ति, भवाँश्चैतस्याज्ञापरिपालको दासो न कृतः । उदारप्रकृतिर्धर्मभीरुश्चेट एव स्वामी स्यात्, त्वञ्च पापकर्माऽस्य सेवकस्तदौचित्यं भवेन्न च तथा कृतमिति विधिरपि वाम एवेति भावः ।
अत्र काव्यलिङ्गालङ्कारः । इन्द्रवज्रोपेन्द्रवज्रयोः सम्मेलनादुपजातिश्छन्दः ॥ २७ ॥

---

"भगवान् "यम" दोषद्रष्टा होने पर बहुत ही विषम हैं जिससे उन्होंने इसे दास तथा तुझे स्वामी बनाया है । यह ( "चेट ) तेरी सम्पत्ति का उपभोगकर्ता नहीं है और तू इसका आज्ञाकारी सेवक नहीं है ( ऐसा न करके विधि ने अपनी 'वामता' सिद्ध कर दी है । )" ॥२७॥

शकार—( स्वयं ही ) बूढ़ा गीदड़ अधर्म से डरता है । और यह गर्भदास ( "चेट" ) परलोक से भयभीत है । ( परन्तु ) मैं वरपुरुष राजश्यालक होकर भी किससे डरूँगा ? ( प्रकाश में ) अबे जन्म के दास चेट ! तू जा ! कहीं एकान्त में छिपकर बैठ !

चेट—जो स्वामी का आदेश ! ( "वसन्तसेना" के पास जाकर ) आर्ये !

( इति निष्क्रान्तः )

शकारः—( परिकरं बध्नन् ) च्यिश्ट वशंतशेणिए ! च्यिश्ट; मालइश्शं । [ तिष्ठ वसन्तसेने ! तिष्ठ; मारयिष्यामि । ]

विटः—आः, ममाग्रतो व्यापादयिष्यसि ? । ( इति गले गृह्णाति )

शकारः—( भूमौ पतति ) भावे ! भश्टकं मालेदि । ( इति मोहं नाट्यति, चेतनां लब्ध्वा )

**शव्वकालं मए पुश्टे मंशेण अ घिएण अ ।**
**अज्ज कज्जे शमुप्पण्णे जादे मे वेलिए कधं ? ॥२८॥**

( विचिन्त्य ) भोदु, लद्धे मए उवाए । दिण्णा वुड्ढखोडेण शिलश्चालणशण्णा । ता एदं पेशिअ वशंतशेणिअं मालइश्शं । एव्वं दाव । ( प्रकाशम् ) भावे ! जं तुमं मए भणिदे, तं कधं हग्गे एव्वं वड्ढकेहिं मल्लकप्पमाणेहिं कुलेहिं जादे अकज्जं कलेमि ? एव्वं एदं अंगीकलावेदुं मए भणिदं । [ भावो भट्टकं मारयति ।

सर्वकालं मया पुष्टो मांसेन च घृतेन च ।
अद्य कार्ये समुत्पन्ने जातो मे वैरी कथम् ? ॥

---

वसन्तसेनां व्यापादयितुमुद्यतः शकारो विटेन भूमौ पातितः क्षणानन्तरं चेतनां प्राप्याह—शव्वकालमिति । हन्त ! य एवायं विटो मया मांसेन घृतेन परिपोषितः, स एवेदानीं मम शत्रुः सञ्जातः ? पुनर्विचिन्त्य विटं स्ववंशस्योदात्तता-कीर्तनेन वञ्चयति ॥ २८ ॥

---

मेरा इतना ही वश था । [ चला जाता है । ]

शकार—( कमर कसता हुआ ) ठहर ! वसन्तसेने ! ठहर ! मारूँगा ।

विट—अरे मेरे सामने मारेगा ? ( गर्दन पकड़ लेता है । )

शकार—( भूमि पर गिर पड़ता है ) भाव ! अपने स्वामी को मारता है ! ( मूर्च्छा का अभिनय करता है । सचेत होकर )

"सदा मैंने तुझे मांस और घी से परिपुष्ट किया परन्तु आज अवसर आने पर तू मेरा वैरी क्यों हो गया है ?" ॥२८॥

भवतुः, लब्धो मयोपायः। दत्ता वृद्धशृगालेन शिरश्चालनसंज्ञा। तदेतं प्रेष्य वसन्तसेनां मारयिष्यामि। एवं तावत्। भाव! यत्त्वं मया भणितः, तत्कथमहमेवं बृहत्तरैः मल्लकप्रमाणैः कुलैर्जातोऽकार्यं करोमि? । एवमेतदङ्गीकारयितुं मया भणितम्। ]

विटः—

**किं कुलेनोपदिष्टेन, शीलमेवात्र कारणम्।**
**भवन्ति सुतरां स्फीताः सुक्षेत्रे कण्टकिद्रुमाः ॥२९॥**

शकारः—भावे! एशा तव अग्गदो लज्जाअदि, ण मं अंगीकलेदि, ता गच्छ। थावलअचेडे मए पिरिटदे गदे वि। एशे पलाइअ गच्छदि। ता तं गेण्हिअ आअच्छदु भावे। [ भाव! एषा तवाग्रतो लज्जते न मामङ्गीकरोति। तद्गच्छ, स्थावरकचेटो मया ताडितो गतोऽपि। एष प्रपलाय्य गच्छति।

---

विटः कुलप्रशंसया किं फलमिति कथयति—किं कुलेनेति। कुलस्य कीर्तनेन को लाभः? शीलमेवात्रोचितानुचितत्वे कारणं भवति। सुक्षेत्रेऽपि बहवः कण्टकिवृक्षा उत्पद्यन्ते। तव चरित्रं तु सर्वथा दुष्टमिति कुलोच्चतावर्णनं व्यर्थमिति भावः। अत्र दृष्टान्तोऽलङ्कारः। पथ्यावक्त्रं छन्दः॥ २९॥

---

( सोचकर ) अच्छा, मुझे उपाय सूझ गया! इस बड़े खोड़ ने ( "वसन्तसेना" को ) सिर हिलाकर कुछ सङ्केत किया है। अतः इसको भेजकर "वसन्तसेना" को मारूँगा। तो ऐसा करूँ। ( प्रकाश में ) भाव जैसा मैंने तुमसे कहा है कि मैं "मल्लक"—पात्र के समान इतने बड़े कुल में उत्पन्न होकर भी कैसे ऐसा अकार्य करूँगा। यह सब-कुछ तो मैंने इनसे अपने को स्वीकार कराने के लिए कहा था।

विट—"कुल का वर्णन करने से क्या लाभ? इस अकार्य में तो तेरा स्वभाव ही कारण है। क्योंकि अच्छे खेत में भी बड़े-बड़े काँटोवाले वृक्ष उत्पन्न हो जाते हैं। ( अतः कुल की दुहाई मत दो। )" ॥२९॥

शकार—भाव यह तुम्हारे सामने लज्जित हो रही है और मुझे स्वीकार नहीं करती। इसलिए जाओ! "स्थावरक चेट" मेरे पीटने पर चला गया और भागा

तस्मात् तं गृहीत्वागच्छतु भावः । ]

विटः—( स्वगतम् )

**अस्मत्समक्षं हि वसन्तसेना शौण्डीर्यभावान्न भजेत मूर्खम् ।**
**तस्मात्करोम्येष विविक्तमस्या विविक्तविश्रम्भरसो हि कामः ॥३०॥**

( प्रकाशम् ) एवं भवतु, गच्छामि ।

वसन्तसेना—( पटान्ते गृहीत्वा ) णं भणामि शरणागदम्हि । [ ननु भणासि शरणागतास्मि । ]

विटः—वसन्तसेने ! न भेतव्यं न भेतव्यम्; काणेलीमातः ! वसन्तसेना तव हस्ते न्यासः ।

शकारः—एव्वं; मम हश्ते एषा णाशेण च्चियशटदु । [ एवम्; मम हस्ते एषा न्यासेन तिष्ठतु । ]

---

शकारकथनं दैवदुर्विपाकात् तथेति मत्वा विटः स्वगतं कथयति—अस्मदिति । कदाचिदियं वसन्तसेनाऽस्मिन्ननुरक्तापि ममाग्रे मूर्खमेनं नाङ्गीकरोति । ततः एकान्ते एव मया गन्तव्यम् । यतः कामः एकान्ते एव विश्वस्तरसो भवति ।

अत्रार्थान्तरन्यासोऽलङ्कारः । उपजातिश्छन्दः ॥ ३० ॥

---

जा रहा है अतः उसे पकड़ कर ले आओ ।

विट—( स्वयं ही )

"मेरे सामने कदाचित् "वसन्तसेना" अभिमानिनी होने के कारण इस मूर्ख को स्वीकार नहीं कर रही है अतः मैं ( जाकर ) एकान्त कर देता हूँ क्योंकि "काम निर्गम स्थान में ही बढ़ता है ।" ॥३०॥

( प्रकाश में ) ऐसा ही हो । जाता हूँ ।

वसन्तसेना—( आँचल पकड़ कर ) मैं कहती हूँ न कि शरणागत हूँ ।

विट—वसन्तसेने ! डरो मत ! शकार ! "वसन्तसेना" तेरे हाथ में धरोहर-रूप है ।

शकार—हाँ, मेरे हाथ में धरोहर-रूप में ही रहे ।

विटः—सत्यम् ।

शकारः—शच्चं [ सत्यम् । ]

विटः—( किंचिद्गत्वा ) अथवा, मयि गते नृशंसो हन्यादेनाम् ? । तदपवारितशरीरः पश्यामि तावदस्य चिकीर्षितम् । ( इत्येकान्ते स्थितः )

शकारः—भोदु, मालइश्शं । अधवा कवडकावडिके एशे बम्हणे वुड्ढखोडे कदावि ओवालिदशलीले गडिअ शिआले भविअ डुलुभुलिं कलेदि । ता एदश्श वंचणाणिमित्तं एव्वं दाव कलइश्शं । ( कुसुमावचयं कुर्वन्नात्मानं मण्डयति ) वाशू वाशू, वशंतशेणिए ! एहि । [ भवतु, मारयिष्यामि । अथवा कपटकापटिक एष ब्राह्मणो वृद्धशृगालः कदाचिदपवारितशरीरो गत्वा शृगालो भूत्वा कपटं करोति । तदेतस्य वञ्चनानिमित्तमेवं तावत् करिष्यामि । बाले बाले वसन्तसेने ! एहि । ]

विटः—अये, कामी संवृत्तः । हन्त, निर्वृतोऽस्मि, गच्छामि । ( इति निष्क्रान्तः )

---

विट—सचमुच ?

शकार—सचमुच ।

विट—( कुछ दूर जाकर ) अथवा, कदाचित् यह निर्दय इसे मार न दे । अतः छिपकर इसका अभीप्सित देखता हूँ । ( एकान्त में छिपकर खड़ा हो जाता है । )

शकार—अच्छा, मारता हूँ । अथवा, कदाचित् यह कपट-पटु वद्ध (ब्राह्मण) छिपकर शृगाल की भाँति कोई छल न करे । अतः इसको धोखा देने के लिए मैं ऐसा करता हूँ । ( फूल चुनकर अपने को सजाता है । ) सुन्दरि ! वसन्तसेने ! आओ ! आओ !

विट—अरे, यह तो कामी हो गया । वाह ! कृतकृत्य हूँ । जाता हूँ ।

[ चला जाता है । ]

शकारः—

शुवण्णअं देमि पिअं वदेमि पडेमि शीशेण शवेश्टणेण ।
तधा वि मं णेच्छशि शुद्धदंति ! किं शेवअं कश्टमआ मणुश्शा ॥३१॥

[ सुवर्णकं ददामि प्रियं वदामि पतामि शीर्षेण सवेष्टनेन ।
तथापि मां नेच्छसि शुद्धदन्ति ! किं सेवकं कष्टमया मनुष्याः ॥ ]

वसन्तसेना—को एत्थ संदेहो ? ( अवनतमुखी 'खलचरित' इत्यादि-श्लोकद्वयं पठति )

खलचरित निकृष्ट ! जातदोषः,
कथमिह मां परिलोभसे धनेन ? ।
सुचरितचरितं　　विशुद्धदेहं,

---

विटस्य वञ्चनार्थं शकारः पुष्पावचयं कृत्वा आत्मानं शोभयित्वा वसन्तसेनां प्रसादयितुं चेष्टते—शुवण्णअमिति । वसन्तसेने ! अहं तव प्रसादनार्थे सुवर्णं ददामि, हितवचनं वदामि, सोष्णीषेण शिरसा तव पादयोः प्रणिपातं करोमि तथापि त्वं मां न कामयते ? अहो ! मनुष्याः अतीव कष्टमया भवन्ति ? मामेवं सकष्टमवलोक्यापि न दयसे ? इति भावः ॥ ३१ ॥

वसन्तसेना तं भर्त्सयन्त्याह—खलचरितेति । अरे ! खलचरित ! दुष्ट ! मां धनेन किमिति प्रलोभयसि ? मधुपाः कदापि स्वभावतो रमणीयं पवित्रं कमलं नैव

---

शकार—"मैं तेरी प्रसन्नता के लिए तुझे बहुत सा सुवर्ण दूँगा, स्नेहयुक्त वचन बोलूँगा तथा पगड़ी सहित सिर से तेरे पैरों पर पड़ूँगा इतने पर भी ऐ शुद्धदन्ति ! तू मुझे दास को नहीं चाहती है । सच है कि मनुष्य बड़े निर्दय होते हैं ।" ॥३१॥

वसन्तसेना—इसमें क्या सन्देह है ?

( खल चरित आदि ८ । ३२ ३३ ) श्लोक पढ़ती है । )

"ऐ दुष्ट ! नीच ! पापी ! मुझको धन से क्या लुभाता है ? भौंरे निर्मल तथा पवित्र कमल को कभी नहीं छोड़ते । क्या मैं तेरे धन के लोभ से कमल-सदृश

न हि कमलं मधुपाः परित्यजन्ति ॥३२॥

यत्नेन सेवितव्यः पुरुषः कुलशीलवान् दरिद्रोऽपि ।
शोभा हि पणस्त्रीणां सदृशजनसमाश्रयः कामः ॥३३॥

अवि अ, सहआरपादवं सेविअ ण पलासपादवं अंगीकरिस्सं । [ कोऽत्र संदेहः ? अपि च, सहकारपादपं सेवित्वा न पलाशपादपमङ्गीकरिष्यामि । ]

शकारः—दाशीए धीए ! दलिद्दचालुदत्तके शहआलपादवे कडे, हग्गे उण पलाशे भणिदे, किंशुके वि ण कडे । एव्वं तुमं मे गालिं देंती अज्ज वि तं ज्जेव चालुदत्तकं शुमलेशि ? । [ दास्याःपुत्रि ! दरिद्रचारुदत्तकः सहकारपादपः कृतः, अहं पुनः पलाशो भणितः, ? किंशुकोऽपि न कृतः । एवं त्वं मह्यं गालीं ददत्यद्यापि तमेव चारुदत्तकं स्मरसि ? । ]

---

परित्यजन्ति । किमु तवानेन घनप्रलोभेनाहं कमलसदृशं स्ववल्लभमार्यचारुदत्तं त्यक्तुमुत्सहे ? ।

अत्राप्रस्तुतप्रशंसा, परिकरयोः संसृष्टिः । पुष्पिताग्रा छन्दः ॥३२॥

पुनरप्याह—यत्नेनेति । उत्तमकुलशीलवान् दरिद्रोऽपि जनः सर्वथा सेवनीयः । पण्यस्त्रीणां शोभा सदृशजनसमागमेन कामेनैव प्रभवति । अतस्त्वादृशेन दुःशीलेन साकं मम सम्बन्धकथापि निन्दनीयैवेति भावः ।

अत्रार्थान्तरन्यासोऽलङ्कारः । आर्या छन्दः ॥३३॥

---

प्रियतम "चारुदत्त" को छोड़ सकती हूँ ।" ॥३२॥

"कुल-शील-समन्वित दरिद्र पुरुष का भी सेवन करना चाहिए । वेश्याओं की शोभा अपने योग्य मनुष्यों के समागम से ही होती है ।" ॥३३॥

और भी—

रसाल-पादप का सेवन कर पलाश-वृक्ष को न चाहूँगी ।

शकार—दासीपुत्रि ! तूने "दरिद्र चारुदत्त" को तो "रसाल" बना दिया और मुझे "पलाश" कहा "किंशुक" भी नहीं ? इस प्रकार तू मुझे गाली देती हुई अब भी उसी "चारुदत्त" का स्मरण करती है ।

वसन्तसेना—हिअअगदो ज्जेव्व किंत्ति न सुमरीअदि ? । [ हृदयगत एव किमिति न स्मर्यते ? । ]

शकारः—अज्ज वि दे हिअअगदं तुमं च शमं ज्जेव मोडेमि । ता दलिदशत्थवाहअमणुश्शकामुकिणि ! चिश्ट चिश्ट । [ अद्यापि ते हृदयगतं त्वां च सममेव मोटयामि । तद्दरिद्रसार्थवाहकमनुष्यकामुकिनि ! तिष्ठ तिष्ठ । ]

वसन्तसेना—भण भण, पुणो वि भण सलाहणिआइं एदाइं अक्खराइं। [ भण, भण, पुनरपि भण श्लाघनीयान्येतान्यक्षराणि । ]

शकारः—पलित्ताअदु दाशीए पुत्ते दलिद्दचालुदत्तके तुमं । [ परित्रायतां दास्याःपुत्रो दरिद्रचारुदत्तकस्त्वाम् । ]

वसन्तसेना—परित्ताअदि जदि मं पेक्खदि । [ परित्रायते यदि मां प्रेक्षते । ]

शकारः—

**किं शे शक्के वालिपुत्ते महिंदे लंभापुत्ते कालणेमी शुबंधू ।**

---

शकारो वसन्तसेनां व्यापादयन् रक्षणार्थं चारुदत्तमाकारयेति वदति । सापि "अवश्यं रक्षति, यदि मामीदृशीमवलोकयती"ति प्राह । पुनस्तस्याः प्रस्तावानुसारं चारुदत्तः किं कर्तुं शक्नुयादिति वदति—किं शे-इति । किमु स चारुदत्तः शक्रादिषु

---

वसन्तसेना—हृदयस्थित वह कैसे भुलाये जा सकते हैं ?

शकार—आज तुझे और तेरे हृदयस्थित दोनों को साथ ही मार डालता हूँ । इसलिए दरिद्र—"चारुदत्त" अभिलाषिणि ! ठहर ! ठहर !

वसन्तसेना—बार-बार यही कह ! यह अक्षर ( "चारुदत्त-प्रणयिनी" ) बड़े ही श्लाघनीय हैं ।

शकार—अब तुझे वह दासीपुत्र दरिद्र "चारुदत्त" बचावे !

वसन्तसेना—यदि देखते तो बचाते ।

शकार—"क्या वह 'इन्द्र' है ? या बालिपुत्र 'महेन्द्र' है ? या "रम्भापुत्र" "कालनेमि" है ? या "सुबन्धु" है ? अथवा वह रुद्र, द्रोणपुत्र "अश्वत्थामा"

लुद्दे लाआ दोणपुत्ते जडाऊ चाणक्के वा धुंधुमाले तिशंकू ॥३४॥

अधवा, एदे वि ण लक्खंति ।

चाणक्केण जधा शीदा मालिदा भालदे जुए ।
एव्वं दे मोडइश्शामि जडाऊ विअ दोव्वदिं ॥३५॥

( इति ताडयितुमुद्यतः )

[ किं स शक्रो वालिपुत्रो महेन्द्रो रम्भापुत्रः कालनेमिः सुबन्धुः ।
रुद्रो राजा द्रोणपुत्रो जटायुश्चाणक्यो वा धुन्धुमारस्त्रिशङ्कुः ॥ ]

अथवा, एतेऽपि त्वां न रक्षन्ति ।

चाणक्येन यथा सीता मारिता भारते युगे ।
एवं त्वां मोटयिष्यामि जटायुरिव द्रौपदीम् ॥ ]

वसन्तसेना—हा अत्ते ! कहिं सि ? । हा अज्जचारुदत्त ! एसो जणो असंपुण्णमणोरधो ज्जेव्व विवज्जदि, ता उद्धं अक्कंदइस्सं । अधवा वसंतसेणा उद्धं अक्कंददि त्ति लज्जणीअं खु एदं । णमो अज्जचारुदत्तस्स । [ हा मातः ! कुत्रासि ? । हा आर्यचारुदत्त ! एष जनोऽसंपूर्णमनोरथ एव विपद्यते,

---

कश्चिदस्ति ? ॥३४॥

अथवा—एतेऽपि त्वां रक्षितुमक्षमाः—इत्याह—चाणक्येनेति । यथा भारते युगे चाणक्येन सीता हता, यथा वा जटायुः द्रौपदीं हतवान्, तथैव साम्प्रतं त्वामहं मोटयिष्यामि = मारयिष्यामि । अत्र शकारोक्तेरनौचित्यं गुणायैवेति बोध्यम् ॥३५॥

---

"जटायु", "चाणक्य" "धुन्धुमार" या "त्रिशङ्कु" इनमें से कोई है ?" ॥३४॥

अथवा ये भी तेरी रक्षा नहीं करते हैं ।

"जैसे महाभारत युद्ध में "चाणक्य" ने "सीता" को मार दिया तथा "जटायु" ने "द्रौपदी" को समाप्त कर दिया था वैसे ही मैं भी तुझे मारता हूँ । ( वाह ! क्या कहना ! आपका इतिहास-ज्ञान श्लाघनीय है ! )" ॥३५॥

( मारने को तैयार हो जाता है । )

वसन्तसेना—हा माता ! कहाँ हो ! हा आर्यचारुदत्त ! मैं बिना मनोरथ-

तदूर्ध्वमाक्रन्दयिष्यामि। अथवा वसन्तसेनोर्ध्वमाक्रन्दतीति लज्जनीयं खल्वेतत्। नम आर्यचारुदत्ताय। ]

शकारः—अज्ज वि गब्भदाशी तश्श ज्जेव पावश्श णामं गेण्हदि ?। (इति कण्ठे पीडयन्) शुमल गब्भदाशि ! शुमल। [ अद्यापि गर्भदासी तस्यैव पापस्य नाम गृह्णाति ?। स्मर गर्भदासि ! स्मर। ]

वसन्तसेना—णमो अज्जचारुदत्तस्स। [ नम आर्यचारुदत्ताय। ]

शकारः—मल गब्भदाशि ! मल। [ म्रियतां गर्भदासि ! म्रियताम्। ] (नाट्येन कण्ठे निपीडयन् मारयति)

(वसन्तसेना मूर्च्छिता निश्चेष्टा पतति)

शकारः—(सहर्षम्)

**एदं दोशकलंडिअं अविणअश्शावासभूदं खलं,**
**लत्तं तश्श किलागदश्श लमणे कालागदं आअदं।**

वसन्तसेनायां निश्चेष्टभावेन भूमौ निपतितायां सहर्षमाह शकारः—एदं-इति। एतां दोषाणां करण्डिकां = वंशादिनिर्मित-पात्रतुल्याम्, अविनयस्य भवनरूपिणीं, खलाम्, पूर्वमेवागतस्य चारुदत्तस्य रमणार्थं रक्तां = अनुरागिणीम्, कालेन = सम-

---

पूर्ण हुए ही मारी जा रही हूँ। इसलिए जोर से चिल्लाती हूँ। अथवा, "वसन्तसेना के लिए उच्चस्वर से चिल्लाना" लज्जास्पद है। "आर्य चारुदत्त" को प्रणाम है।

शकार—जन्मदासि ! अब भी तू उसी पापी का नाम ले रही है ? (गला घोंटता हुआ) स्मरण कर गर्भदासि ! स्मरण कर !

वसन्तसेना—"आर्य चारुदत्त" को प्रणाम।

शकार—वेश्यापुत्रि ! मर ! मर !

[ गला घोंटने का अभिनय कर मार डालता है। ]

[ "वसन्तसेना" मूर्छित होकर गिर पड़ती है। ]

शकार—(हर्षपूर्वक)

"दोषों की पिटारी, अविनय की निधान, दुष्टा तथा "चारुदत्त" में अनुरक्त

किं एशे शमुदाहलामि णिअअं बाहूण शूलत्तणं,
णीशाशे वि मलेइ अंब शुमला शीदा जधा मालदे ॥३६॥
इच्छंतं मम णेच्छदि त्ति गणिआ लोशेण मे मालिदा,
शुण्णे पुप्फकलंडके त्ति शहशा पाशेण उत्ताशिदा।
शेवावंचिदमादुके मम पिदा मादेव शा दोप्पदी,
जे शे पेक्खदि णेदिशं ववशिदं पुत्ताह शूलत्तणं ॥३७॥

भोदु, शंपदं वुड्ढखोडे आगमिश्शदि त्ति। ता ओशलिअ चिट्ठामि।

[ एतां दोषकरण्डिकामविनयस्यावासभूतां खलां,
रक्तां तस्य किलागतस्य रमणे कालागतामागताम्।
किमेष समुदाहरामि निजकं बाह्वोः शूरत्वं,
निःश्वासापि म्रियतेऽम्बा सुमृता सीता तथा भारते॥
इच्छन्तं मां नेच्छतीति गणिका रोषेण मया मारिता,
शून्ये पुष्पकरण्डक इति सहसा पाशेनोत्त्रासिता।

---

येन समागतामपि कालं = मृत्युम् आगतां = प्राप्तां ( मारयित्वा ) किमहं निज-भुजयोः शूरतां कथयामि ? इयं, अम्बा = माता, वसन्तसेना, महाभारते सीता यथा निःश्वासा सत्यपि म्रियते, इत्यादिकं सर्वमपि प्रलापरूपं तस्य कथनम्। शार्दूल-विक्रीडितं छन्दः ॥३६॥

पद्यान्तरमाह—इच्छन्तमिति। इयं गणिका मया रोषेण मारिता, रोषस्य कारणञ्चेत्थम्—अहमेनामिच्छामि, न चेयं मामिच्छति, इति। अत्र शून्ये पुष्प-करण्डके उद्याने एव मया पाशेन = रज्जुतुल्येन बाहुना, इति शेषः। उत्त्रासिता

---

हो ( रथ परिवर्तन से आई हुई इसको मार कर क्या अपनी भुजाओं की शूरता का वर्णन करूँ ? यह माता ( "वसन्तसेना" ) साँस निकलने पर भी महाभारत में सीता जी की भाँति मर गई है।" ॥३६॥

"मेरे चाहने पर भी यह मुझे नहीं चाहती, इस रोष से मैंने इसे इस शून्य "पुष्पकरण्डक" उद्यान में अपने बाहु रूपी पाश से गला घोंटकर मार डाला।

सेवावञ्चितभ्रातृको मम पिता मातेव सा द्रौपदी,
योऽसौ पश्यति नेदृशं व्यवसितं पुत्रस्य शूरत्वम् ॥

भवतु, सांप्रतं वृद्धश्रृगाल आगमिष्यतीति । ततोऽपसृत्य तिष्ठामि । ]

( तथा करोति )

( प्रविश्य, चेटेन सह )

विटः—अनुनीतो मया स्थावरकश्चेटः । तद्यावत्काणेलीमातरं पश्यामि। ( परिक्रम्यावलोक्य च ) अये, मार्ग एव पादपो निपतितः । अनेन च पतता

---

=मारिता । मम पित्रादिभिश्च ममाद्य पराक्रमो न दृष्टः, अतस्ते वञ्चिताः । पिता च सेवया वञ्चितो भ्राता येन यस्य वा सः । अर्थात् तस्य भ्रात्रेऽपि यः किमपि न दत्तवान्, तेनापि तस्य काचिदपि सेवा न विहिता । माता च मदीया द्रौपदीतुल्या । यथा द्रौपद्याः पञ्च भर्तार आसन् एवमेव मातुरपीति प्रकटीकृतं स्वयमेव मूर्खेण । हन्त ! ते सर्वेऽपि मामीदृशकर्मशूरं न दृष्टवन्तस्ततो वञ्चिताः । मादृशः शूरः कोऽन्यः पुत्रो धन्यो भविष्यति ? इति निन्दितमप्यात्मकर्मश्लाघमानो न लज्जते ! अत्रापि शार्दूलविक्रीडितं च्छन्दः ॥३७॥

---

मेरा भाई सेवा से वञ्चित रह गया ( क्योंकि उसने अपने भाई को कुछ भी नहीं दिया । ) मेरे पिता और "द्रौपदी" के समान माता ये भी वञ्चित हैं जो कि इस समय अपने इस वीर पुत्र की शूरता नहीं देख रहे हैं । ( यहाँ "शकार" ने "द्रौपदी" की समानता करते हुए उसका "बहु-जन-प्रसङ्ग" सिद्ध कर दिया है क्योंकि "द्रौपदी" के पाँच पति थे । इसी प्रकार मेरी माता भी बहुतों की उपभोग्या है । हाय ! शकार ! )" ॥३७॥

अच्छा, अब वह डोकरा ( बूढ़ा "विट" ) आता होगा अतः कुछ हटकर खड़ा हो जाता हूँ । ( वैसा ही करता है । )

[ "चेट" के साथ प्रवेश कर ]

विट—मैंने "स्थावरक चेट" को मना लिया है । इसलिए अब व्यभिचारिणीपुत्र ( "शकार" ) से मिलता हूँ । ( घूम तथा देखकर ) अरे, मार्ग में ही

स्त्री व्यापादिता। भोः पाप! किमिदमकार्यमनुष्ठितं त्वया?। तवापि पापिनः पतनात् स्त्रीवधदर्शनेनातीव पातिता वयम्। अनिमित्तमेतत्, यत्सत्यं वसन्तसेनां प्रति शङ्कितं मे मनः। सर्वथा देवताः स्वस्ति करिष्यन्ति। (शकारमुपसृत्य) काणेलीमातः! एवं मयानुनीतः स्थावरकश्चेटः।

शकारः—भावे! शाअदं दे। पुत्तका थावलका चेडा! तवावि शाअदं। [भाव! स्वागतं ते। पुत्रक स्थावरक चेट! तवापि स्वागतम्।]

चेटः—अध इं। [अथ किम्।]

विटः—मदीयं न्यासमुपनय।

शकारः—कीदिशे णाशे?। [कीदृशो न्यासः?।]

विटः—वसन्तसेना।

शकारः—गडा। [गता।]

---

विटः स्थावरकचेटमादायागच्छति—मार्गे च केनापि सहसा निपतता पादपेन काचिन्नारी व्यापादितेति तां दृष्ट्वा वसन्तसेनाविषये चिन्तां प्रकटयति—यत् सत्यमिति। यत् सत्यं, वसन्तसेनाविषये मम चित्तं शङ्काकुलितमस्ति। देवताः सर्वथा कल्याणं करिष्यन्ति, इति।

---

वृक्ष गिर पड़ा है? और इसने गिरते हुए स्त्री मार डाली। अरे पापी! तूने यह क्या अनर्थ कर डाला? गिरने से स्त्रीवधकर्ता के दर्शन से हम भी पतित हो गये हैं। यह अमङ्गल है। सच तो यह है कि "वसन्तसेना" के प्रति मेरा मन शङ्कित हो उठा है। सर्वथा देवता ही मङ्गल करेंगे। ("शकार" के पास जाकर) काणेलीपुत्र! मैंने "स्थावरक चेट" को मना लिया है।

शकार—भाव! तुम्हारा स्वागत है। बेटे स्थावरक! तेरा भी स्वागत है।

चेट—बहुत अच्छा।

विट—मेरी धरोहर लाओ।

शकार—कैसी धरोहर?

विट—"वसन्तसेना"।

शकार—गई।

विटः—क ? ।

शकारः—भावश्श ज्जेव पिश्टदो । [ भावस्यैव पृष्ठतः । ]

विटः—( सवितर्कम् ) न गता खलु सा तया दिशा ।

शकारः—तुमं कदमाए दिशाए गडे ? । [ त्वं कतमया दिशा गतः ! । ]

विटः—पूर्वया दिशा ।

शकारः—शा वि दक्खिणाए गडा । [ सापि दक्षिणया गता । ]

विटः—अहं दक्षिणया ।

शकारः—शा वि उत्तलाए । [ साप्युत्तरया । ]

विटः—अत्याकुलं कथयसि, न शुद्धयति मेऽन्तरात्मा; तत्कथय सत्यम् !

शकारः—शवामि भावश्श शीशं अत्तणकेलकेहिं पादेहिं । ता शंठावेहि हिअअं । एशा मए मालिदा । [ शपे भावस्य शीर्षमात्मीयाभ्यां पादाभ्याम्, ततः संस्थापय हृदयम् । एषा मया मारिता । ]

विटः—( सविषादम् ) सत्यं त्वया व्यापादिता ? ।

---

विट—कहाँ ।

शकार—तुम्हारे ही पीछे पीछे ।

विट—( शङ्का से ) उस दिशा से तो नहीं गई ।

शकार—तुम किस दिशा से गये थे !

विट—'पूर्व' दिशा से ।

शकार—वह भी 'दक्षिण' दिशा से गई ।

विट—मैं 'दक्षिण' दिशा से ( गया था । )

शकार—वह भी "उत्तर" दिशा से गई ।

विट—बहुत घबराहट से कह रहे हो । मेरी अन्तरात्मा को विश्वास नहीं होता । अतः सच कहो ।

शकार—मैं तुम्हारे सिर को अपने पैरों से छूकर शपथ खाता हूँ । तो हृदय थाम कर सुनो । मैंने उसे मार डाला ।

विट—( विषादपूर्वक ) क्या सचमुच उसे तूने मार, डाला ?

शकारः—जइ मम वअणे न पत्तिआअशि, ता पेक्ख पढमं लश्टिअ-शालशंठाणाह शूलत्तणं। [ यदि मम वचने न प्रत्ययसे; तत्पश्य प्रथमं राष्ट्रिय-श्यालसंस्थानस्य शूरत्वम्। ] ( इति दर्शयति )

विटः—हा, हतोऽस्मि मन्दभाग्यः। ( इति मूर्च्छितः पतति )

शकारः—ही ही, उवलदे भावे। [ ही ही, उपरतो भावः। ]

चेटः—शमश्शशदु शमश्शशदु भावे। अविचालिअं पवहणं आणंतेण ब्जेव मए पढमं मालिदा। [ समाश्वसितु समाश्वसितु भावः। अविचारितं प्रवहणमानयतैव मया प्रथमं मारिता। ]

विटः—( समाश्वस्य, सकरुणम् ) हा वसन्तसेने !

**दाक्षिण्योदकवाहिनी विगलिता याता स्वदेशं रति-**
**र्हा हालंकृतभूषणे ! सुवदने ! क्रीडारसोद्भासिनी !।**

---

विटो वसन्तसेनाया मृत्युश्रवणादनुशोचति ताम्—दाक्षिण्येति। हन्त ! दाक्षिण्यमेवोदकं तस्य वाहिनी = नदी विगलिता = विनष्टा, रतिः स्वदेशं प्रयाता, हा ! अलंकृतानि भूषणानि यया तत्सम्बुद्धौ अलंकृतभूषणे ! सुमुखि ! क्रीडारस-

---

शकार—यदि मेरे कथन में विश्वास नहीं करते तो 'राजश्यालक' की सर्वप्रथम शूरता को देखो। ( दिखलाता है। )

विट—हाय ! मैं भाग्यहीन मारा गया !

[ मूर्छित होकर गिर पड़ता है। ]

शकार—अहः हः ! 'भाव' मर गया।

चेट—भाव समाश्वस्त हों। बिना विचारे हुए रथ लाते हुए ही मैंने उसे तो पहिले ही मार डाला था।

विट—( सचेत होकर शोक पूर्वक ) हा वसन्तसेने !

"कुशलता रूपी जल की नदी ( "वसन्तसेना" ) नष्ट हो गई, "रति" अपने देश को चली गई, ( "रति" यद्यपि स्वर्ग में निवास करती है तथापि वह आज तक मनुष्य-लोक में ही रही थी; परन्तु आज वह चली गई। ) हा

हा सौजन्यनदि ! प्रहासपुलिने ! हा मादृशामाश्रये !
हा हा नश्यति मन्मथस्य विपणिः सौभाग्यपण्याकरः ॥३८॥

( सास्रम् ) कष्टं भोः ! कष्टम्

किं नु नाम भवेत्कार्यमिदं येन त्वया कृतम् ।
अपापा पापकल्पेन नगरश्रीर्निपातिता ॥३९॥

( स्वगतम् ) अये ! कदाचिदयं पाप इदमकार्यं मयि संक्रामयेत् । भवतु,

---

स्योद्भावयित्रि ! हा ! सौजन्यरूपस्य जलस्य नदि ! प्रकृष्टहास एव तव पुलिनम् । हा मादृशाम् = मद्विधानामाश्रये ! हा हा ! सौभाग्यमेव पण्यम् = क्रेतव्यं वस्तुजातम् तस्य आकरः = निधानम्, मन्मथस्य = कामस्य विपणिः = पण्यवीथिका नश्यति । हा ! वसन्तसेने ! त्वयि मृतायां सौन्दर्यसुखमेव समाप्तम् । कामविपणिरेव विनाशमभजत् ।

अत्र करुणो रसः । रूपकमलङ्कारः । शार्दूलविक्रीडितं च्छन्दः ॥३८॥

पुनः शकारमुद्दिश्याह विटः—किंनु-इति । त्वयेदं कार्यं किमिति कृतम् ? ईदृशं च पापकर्म कः कुर्यात् ? पाप-मूर्तिना त्वया पापरहिता नगरस्य शोभा लक्ष्मीश्च त्वया निपातिता ! पापस्य ते दर्शनमपि नोचितं, स्पर्शस्य तु कथैव का ? ॥३९॥

---

आभूषणालङ्कृते ! सुमुखि ! काम-केलि-रसोद्भाविके ! हा सौहार्दसरिते ! हा परिहासपरायणे ! हा मुझ जैसों की आश्रयभूते ! ( तुम कहाँ हो ? ) हाय ! हाय ! आज सौन्दर्य सुख की निधान मनसिज—मनोहरविपणि नष्ट हो गई है ! ( "वसन्तसेना" के मर जाने पर संसार सौन्दर्य-कथा से दरिद्र ही हो गया है । )" ॥ ३८ ॥

( रोता हुआ ) हा खेद है ! दुःख है !

"तूने ऐसा कार्य कैसे किया है ? ( ऐसा दुष्कर्म कर तुझ ) पापी ने निष्पाप नगर की शोभा ही नष्ट कर डाली है ।" ॥ ३९ ॥

( स्वयं ही ) अरे, कहीं यह पापी इस अकार्य का दोष मुझ पर ही न मढ़

इतो गच्छामि । ( इति परिक्रामति )

( शकार उपगम्य धारयति )

विटः--पाप ! मा मा स्प्राक्षीः । अलं त्वया, गच्छाम्यहम् ।

शकारः—अले ! वशंतशेणिअं शअं ज्जेव मालिअ मं दूशिअ कहिं पलाअशि ? शंपदं ईदिशे हग्गे अणाधे पाविदे ।[ अरे ! वसन्तसेनां स्वयमेव मारयित्वा मां दूषयित्वा कुत्र पलायसे ? । सांप्रतमीदृशोऽहमनाथः प्राप्तः । ]

विटः—अपध्वस्तोऽसि ।

शकारः—

अत्थं शदं देम्मि शुवण्णअं दे,
कहावणं देमि शवोडिअं दे ।
एशे दुशद्दाण फलक्कमे मे,
शामाण्णए भोदु मणुश्शआणं ॥४०॥

---

अये ! स्वयं वसन्तसेनां व्यापाद्य कुत्र प्रयासीति शकारवचनमाकर्ण्याह विटः—अपध्वस्त-इति । रे पाप ! पापं कृत्वा पुनर्मिथ्या वदसि ? त्वं तु, अपध्वस्तः =पतितोऽसि ।

शकारः प्रलोभयितुं विटं पुनराह—अत्थमिति । तुभ्यं शतमर्थं = धनं दास्यामि, सुवर्णं दास्यामि । सवोडिकं = विंशतिकपर्दिकासहितं कार्षापणं = सुवर्ण-

---

दे । अच्छा तो यहाँ से जाता हूँ । ( घूमता है । )

[ "शकार" आकर पकड़ता है । ]

विट—पापिन् ! मुझे मत छू ! मत छू ! रहने दे ! मैं जाता हूँ ।

शकार—अरे ! "वसन्तसेना" को स्वयं मार कर मुझे लाञ्छित कर कहाँ भाग रहा है ? अब मुझ अनाथ को ही दोष लगाने के लिए पाया है ?

विट—पागल हो गया है क्या ?

शकार—"मैं तुझे सौ सोने के सिक्के तथा बीस कौड़ियों सहित 'कार्षापण' दूँगा । यह दोष किसी और साधारण मनुष्य पर लगा दो ।" ॥ ४० ॥

[ अर्थं शतं ददामि सुवर्णकं ते कार्षापणं ददामि सवोडिणं ते ।
एष दोषस्थानं पराक्रमो मे सामान्यको भवतु मनुष्यकाणाम् ॥ ]

विटः—धिक्, तवैवास्तु ।

चेटः—शंतं पावं । [ शान्तं पापम् । ]

( शकारो हसति )

विटः—

**अप्रीतिर्भवतु विमुच्यतां हि हासो,**
**धिक्प्रीतिं परिभवकारिकामनार्याम् ।**
**मा भूच्च त्वयि मम संगतं कदाचि-**
**दाच्छिन्नं धनुरिव निर्गुणं त्यजामि ॥४१॥**

---

परिमाणविशेषं दास्यामि मयोक्तानामेषां दुष्टशब्दानां पराक्रमस्य साधारणा मनुष्या एव स्थानं भवन्तु । अयमाशयः—व्यवहारे प्रवृत्ते त्वयापि वक्तव्यम्—नानेन कृतमिदं कार्यम्, अन्येन केनापि कृतं स्यात् । एतदर्थमेवाहं तुभ्यं धनं समर्पयितुमुद्यतोऽस्मीति भावः । अत्रोपजातिश्छन्दः ॥ ४० ॥

परिहसन्तं शकारं विनिन्दन् विटः प्राह—भो दुष्ट ! त्वया सह ममाप्रीतिः = वैरमेव भवतु । परिहासः परित्यज्यताम् । परिभवकारिणीं = निन्दाकारिणीं अनार्यां प्रीतिं धिक् ! त्वया सह प्रीतिविधाने ममापि निन्दैवेति मत्त्वा त्वया सह सर्वदा संगतम् = मित्रतां छिन्नं = कृत्तं निर्गुणं धनुरिव त्यजामि ।

अत्रोपमालङ्कारः । प्रहर्षिणी च्छन्दः ॥४१॥

---

विट—धिक्कार है । यह ( धन ) तेरे ही पास रहे ।

चेट—पाप दूर हो !

( "शकार" हँसता है । )

विट—"मेरा तुझ से वैर ही हो, इस हँसी को छोड़ ! तिरस्कार कराने वाली मित्रता को धिक्कार है ! मेरा और तेरा सङ्ग फिर कभी न हो ! मैं इस मित्रता को टूटे हुए प्रत्यञ्चा—रहित धनुष की भाँति छोड़ता हूँ ॥ ४१ ॥

शकारः—भावे ! पशीद पशीद । एहि । णलिणीए पविशिअ कीलेम्ह । [ भाव ! प्रसीद प्रसीद । एहि । नलिन्यां प्रविश्य क्रीडावः । ]

विटः—

अपतितमपि तावत् सेवमानं भवन्तं,
पतितमिव जनोऽयं मन्यते मामनार्यम् ।
कथमहमनुयायां त्वां हतस्त्रीकमेनं,
पुनरपि नगरस्त्रीशङ्किताधाक्षिदृष्टम् ॥४२॥

( सकरुणम् ) वसन्तसेने !

अन्यस्यामपि जातौ मा वेश्या भूस्त्वं हि सुन्दरि ! ।

---

त्वया सह, पाप-कर्मणा, मम प्रीतिः सर्वथाऽसम्भवेति विटः प्राह—अपतित-मिति । स्त्रीहत्याकरणात् पूर्वमपि भवन्तं सेवमानं जनः ( साधारणोऽपि ) मामनार्यं मन्यते, इदानीं तु हता स्त्री येनैवंविधं, नगरस्य स्त्रीभिरपि शङ्किताभ्यामर्धनिमी-लिताभ्यां लोचनाभ्यां दृष्टम्, त्वां कथमहमनुगच्छेयम् ? त्वां नगरस्त्रियोऽपि घृणया पश्यन्ति, पापकारिणस्तवानुगमनं कथं सम्भाव्यते । अनार्यसंगमः सर्वदा परि-हरणीयः, इति हि सज्जनानां वचनम् ।

अत्र काव्यलिङ्गालङ्कारः । मालिनी च्छन्दः ॥४२॥

सकरुणं, परलोके गतां वसन्तसेनां सम्बोध्य कथयति—अन्यस्यामिति ।

---

शकार—भाव ! प्रसन्न हों ! प्रसन्न हों ! आओ, बावड़ी में घुस कर विहार करें ।

विट—"वसन्तसेना" को मारने से पहिले भी तेरा सङ्ग करने से लोग मुझको अनार्य समझा करते थे; परन्तु अब स्त्री के हत्यारे पतित तथा नगर की स्त्रियों के द्वारा घृणा-पूर्वक अधखुली दृष्टि से देखे हुए तेरा साथ मैं कैसे दे सकता हूँ ?" ॥ ४२ ॥

( शोक पूर्वक ) वसन्तसेने !

"ऐ सुन्दरि ! तू दूसरे जन्म में भी वेश्या मत होना । शील-सम्पन्न किसी

चारित्र्यगुणसंपन्ने ! जायेथा विमले कुले ॥४३॥

शकारः—मम केलके पुप्फकलंडकजिण्णुज्जाणे वशंतशेणिअं मालिअ कहिं पलाअशि ? एहि, मम आवुत्तश्श अग्गदो ववहालं देहि । [ मदीये पुष्पकरण्डकजीर्णोद्याने वसन्तसेनां मारयित्वा कुत्र पलायसे ? एहि, मम आवुत्तस्याग्रतो व्यवहारं देहि । ] ( इति धारयति )

विटः—आः तिष्ठ जाल्म ! । ( इति खड्गमाकर्षति )

शकारः—( सभयमपसृत्य ) किं ले, भीदेशि, ता गच्छ । [ किं रे; भीतोऽसि ? तद्गच्छ । ]

---

वसन्तसेने ! सुन्दरि ! अहं तु भगवन्तं जगदीश्वरमेवं कामये यत्र-कुत्रापि तव जन्म स्यात् , परं वेश्या-गृहे तन्माभूत् । यतो वेश्यात्वादेव तवायं दुर्विपाकः समुपस्थितः । चारित्र्य-गुण-युक्ते सत्कुले एव त्वया जन्म ग्राह्यमित्येव ममाशेति भावः । अथवा—"चारित्र्य-गुणेन-सम्पन्ने" इति वसन्तसेनासम्बोधनम् । मृतस्य सद्गतिं प्रार्थयन्ते लोका इति लौकिकानां प्रणाली । अहं तु त्वदर्थमेतदेव कामये, इति तत्त्वम् ॥४३॥

शकारो गच्छन्तं विटमनुरुध्य मिथ्याकलंकसम्पर्कदूषितं कर्तुं कथयति—मम केलके-इति । मदीये पुष्पकरण्डकसंज्ञके उद्याने वसन्तसेनां मारयित्वा कुत्र चलितोऽसि ? गच्छ, ममाबुत्तस्य = भगिन्याः पत्युः = ( "भगिनीपतिरावुत्तः," इत्यमरः ) अग्रतो व्यवहारं देहि । इति तं गृहीतुमिच्छति ।

विटोऽपि तं हन्तुं खड्गमाकर्षति ।

---

पवित्र कुल में ही उत्पन्न होना । ( यही मेरी ईश्वर से प्रार्थना है । )" ॥ ४३ ॥

शकार—मेरे "पुष्पकरण्डक जीर्णोद्यान" में "वसन्तसेना" को मारकर कहाँ भागा जा रहा है ? चल मेरे 'जीजा' के सामने उत्तर दे । ( 'जवाबदेही' कर ! ) ( पकड़ लेता है । )

विट—अरे ! नीच ठहर ! ( ऐसा कहकर तलवार खींच लेता है । )

शकार—( भयपूर्वक हटकर ) क्या डर गया ? तो भाग जा !

विटः—( स्वगतम् ) न युक्तमवस्थातुम् । भवतु, यत्रार्यशर्विलकचन्दनकप्रभृतयः सन्ति, तत्र गच्छामि । ( इति निष्क्रान्तः )

शकारः—णिधणं गच्छ । अले थावलका पुश्तका ! कीलिशे मए कडे ? । [ निधनं गच्छ । अरे स्थावरक पुत्रक ! कीदृशं मया कृतम् ? । ]

चेटः—भट्टके ! महंते अकज्जे कडे । [ भट्टक ! महदकार्यं कृतम् । ]

शकारः—अले चेडे ! किं भणाशि अकज्जे कडेत्ति ? । भोदु, एव्वं दाव । ( नानाभरणान्यवतार्य ) गेण्ह एदं अलंकारअं मए ताव दिण्णे । जेत्तिके वेले अलकलेमि तेत्तिकं वेलं मम । अण्णं तव । [ अरे चेट ! किं भणस्यकार्यं कृतमिति ? । भवतु, एवं तावत् । गृहाणेममलंकारम् । मया तावद्दत्तम् । यावत्यां वेलायामलंकरोमि तावतीं वेला मम । अन्यदा तव । ]

चेटः—भट्टके ज्जेव एदे शोहंति, किं मम एदेहिं ? । [ भट्टक एवैते शोभन्ते, किं ममैतैः ? । ]

शकारः—ता गच्छ एदाइं गोणाइं गेण्हिअ मम केलकाए पाशादवालग्गपदोलिकाए चिट्ठ । जाव हग्गे आअच्छामि । [ तद्गच्छ, एतौ

---

शकारेण दीयमानमलङ्कारं स्थावरकश्चेटो यावन्न स्वीकरोति, तावदसौ तं प्रति कथयति—ता गच्छेति । ततस्त्वं गच्छ, इमौ बलीवर्दौ गृहीत्वा, यावदहमा-

---

विट—( स्वयं ही ) यहाँ अधिक ठहरना उचित नहीं है । जहाँ "आर्य शर्विलक" "चन्दनक" आदि हैं वहीं मैं भी जाता हूँ । [ चला जाता है ]

शकार—मर जा ! अरे बेटे स्थावरक ! मैंने कैसा काम किया ?

चेट—मालिक ! बहुत बड़ा अनर्थ किया ।

शकार—अबे चेट ! क्या बकता है कि "बहुत बड़ा अनर्थ किया ?" अच्छा, ऐसा करता हूँ । ( भाँति भाँति के आभूषण उतारकर ) इन आभूषणों को ले ! मैंने तुझे दे दिये । जब तक मैं पहनूँगा तब तक मेरे और शेष समय में तेरे ।

चेट—आपको ही ये सुशोभित होते हैं । मुझे इनसे क्या प्रयोजन ?

शकार—तो जा ! इन बैलों को लेकर मेरी नव-निर्मित अट्टालिका के

वृषभौ गृहीत्वा मदीयायां प्रासादबालाग्रप्रतोलिकायां तिष्ठ। यावदहमागच्छामि । ]

चेटः—जं भट्टके आणवेदि [ यद्भट्टक आज्ञापयति । ] ( इति निष्क्रान्तः )

शकारः—अत्तपलित्ताणे भावे गदे अदंशणं। चेडं वि पाशादबालग्गपदोलिकाए णिगलपूलिदं कदुअ थावइश्शं। एव्वं मंते लक्खिदे भोदि, ता गच्छामि। अधवा पेक्खामि दाव, एदं। किं एशा मला आदु पुणो वि मालइश्शं। ( अवलोक्य ) कधं शुमला ?। भोदु, एदिणा पावालएण पच्छादेमि णं। अधवा णामं किदे एशे। ता के वि अज्जपुलिशे पच्चहिजाणेदि। भोदु, एदिणा वादालीपुंजिदेण शुक्खपण्णपुडेण पच्छादेमि। ( तथा कृत्वा, विचिन्त्य ) भोदु, एव्वं दाव। शंपदं अधिअलणं गच्छिअ ववहालं लिहावेमि, जहा अत्थश्श कालणादो शत्थवाहचालु-

---

गच्छामि, तावन्मम प्रासादस्याग्रभागे नवनिर्मितायां प्रतोल्यां तिष्ठ; अन्यत्र कुत्रापि नैव गन्तव्यम्। मनसि चिन्तितस्य तद्बन्धनस्य सिद्ध्यर्थमेष यत्नः। इति भावः।

---

उपरिभाग में ठहर ! तब तक मैं भी आता हूँ।

चेट—जो स्वामी की आज्ञा !

[ चला जाता है। ]

शकार—"विट" तो अपनी रक्षा के लिए चला गया। और इस "चेट" को भी मैं अभिनव प्रासाद के उपरिभाग में हथकड़ी—बेड़ियों से बाँधकर डाल दूँगा। इस प्रकार बात गुप्त रह जायगी। अब जाता हूँ। अथवा इसको ( "वसन्तसेना" को ) देखता हूँ। क्या मर गई ! अथवा और मारूँ ! ( देखकर ) क्या बिलकुल मर गई ! अच्छा तो इस उत्तरीयवस्त्र से इसको ढक देता हूँ। अथवा यह तो नामाङ्कित है। इससे कोई पहिचान लेगा। हाँ, तो इन हवा से इकट्ठे किए गये सूखे पत्तों से इनको ढक देता हूँ ( ढककर तथा सोचकर ) ऐसा करूँ। अब कचहरी में जाकर 'व्यवहार' लिखाता हूँ।

दत्ताकेण ममकेलकं पुप्फकलंडकं जिण्णुज्जाणं पवेशिअ वशंतशेणिआ वावादिदे त्ति।

चालुदत्तविणाशाय कलेमि कवडं णवं।
णअलीए विशुद्धाए पशुघादं व्व दालुणं ॥४४॥

भोदु, गच्छामि। (इति निष्क्रम्य, दृष्ट्वा सभयम्) अविद मादिके। जेण जेण गच्छामि मग्गेण तेण ज्जेव एशे दुश्टशमणके गहिदकशाओदकं चीवलं गेण्हिअ आअच्छदि। एशे मए णशिं च्छिदिअ वाहिदे किद्वेले कदावि मं पेक्खिअ एदेण मालिदे त्ति पआशइश्शदि। ता कधं गच्छामि। (अवलोक्य) भोदु, एदं अद्धपडिदं पाआलखंडं उल्लंघिअ गच्छामि।

---

स्वकीयं दुष्कृतमार्यचारुदत्ते स्थापयिष्यामीति सूचयति—चालुदत्तेति। चारुदत्तस्य विनाशाय नवीनं कपटं रचयामि। यथा विशुद्धायां=पवित्रायाम्, नगर्यां कश्चित् पशुघातं करोति, सर्वा च नगरी ततः परिखिन्ना भवति, एवमेवार्यचारुदत्तवधेन सर्वामपि नगरीं खेदयिष्यामि। दुष्टाः किं किं न कुर्वन्तीति भावः ॥४४॥

---

(मुक़द्दमा दायर करता हूँ) कि—"धन के लिए "सार्थवाह चारुदत्त" ने मेरे "पुष्पकरण्डक जीर्णोद्यान" में घुसकर "वसन्तसेना" मार डाली।"

"चारुदत्त" के विनाश के लिए मैं पवित्र नगरी में भयङ्कर पशुहत्या के समान एक नया कपट करता हूँ। जिससे की सारी नगरी क्षुब्ध हो उठे।)" ॥ ४४ ॥

अच्छा अब जाता हूँ। (निकलकर देखते हुए भय पूर्वक) ओह ! जिस-जिस मार्ग से मैं जाता हूँ उसी-उसी से यह दुष्ट बौद्ध सन्यासी भीगे गेरुए वस्त्र हाथ में लेकर आता हुआ दिखाई देता है। इसे मैंने नाथ गेर कर बैल की भाँति निकाल दिया था तो कदाचित् (उस अपमान से) मुझको देखकर—"इसने ही मारी है" यह न कह दे ? अब कैसे जाऊँ ? (देखकर) अच्छा, तो इस आधी गिरी हुई दीवार को फाँदकर जाता हूँ।

एशे म्हि तुलिदतुलिदे लंकाणअलीए गअणे गच्छंते ।
भूमिए पाआले हणूमशिहले विअ महेंदे ॥४५॥

[ आत्मपरित्राणे भावो गतोऽदर्शनम् । चेटमपि प्रासादबालाग्रप्रतोलिकायां निगडपूरितं कृत्वा स्थापयिष्यामि । एवं मन्त्रो रक्षितो भवति, तद्गच्छामि । अथवा पश्यामि तावदेनाम्—किमेषा मृता ? अथवा पुनरपि मारयिष्यामि । कथं सुमृता ? भवतु, एतेन प्रावारकेण प्रच्छादयाम्येनाम् । अथवा नामाङ्कित एषः, तत्कोऽप्यार्यपुरुषः प्रत्यभिज्ञास्यति । भवतु, एतेन वातालीपुञ्जितेन शुष्क-पर्णपुटेन प्रच्छादयामि । भवतु, एवं तावत् । सांप्रतमधिकरणं गत्वा व्यवहारं लेखयामि, यथा—अर्थस्य कारणात् सार्थवाहकचारुदत्तकेन मदीयं पुष्पकरण्डकं जीर्णोद्यानं प्रवेश्य वसन्तसेना व्यापादितेति ।

चारुदत्तविनाशाय करोमि कपटं नवम् ।
नगर्यां विशुद्धायां पशुघातमिव दारुणम् ॥

भवतु, गच्छामि । अविद मादिके । येन येन गच्छामि मार्गेण, तेनैवैष दुष्ट-श्रमणको गृहीतकषायोदकं चीवरं गृहीत्वागच्छति । एष मया नासां छित्त्वा

---

स्वगमनं सूचयति शकारः—एशेम्हि-इति । अहमिदानीं—यथा हनूमान् महेन्द्रपर्वतस्य शिखरे पादं धृत्त्वा, आकाशे गच्छन्, लङ्कापुर्यां गतः एवमेवार्ध-भग्नप्राकारखण्डे पादं धृत्त्वा गच्छामीत्याशयः । परं मूर्खोऽयमन्यथैव वक्ति । यथा हनूमंतः ( उपरि ) पादं दत्त्वा महेन्द्रः ( पर्वतः ) गतः, इति विपरीतमतेः सर्वमपि विपरीतं भवति । आर्या छन्दः ॥४५॥

---

"लङ्का नगरी में ( "सीताजी" की खोज के लिए ) शीघ्रातिशीघ्र आकाश में जाते हुए तथा भूमि, पाताल और "हनूमान्" के शिखर पर पैर रखते हुए "महेन्द्र" की भाँति मैं भी शीघ्र जा रहा हूँ । ( "जिस प्रकार "हनूमान्" जी "महेन्द्र" पर्वत के शिखर पर पैर रखकर आकाश में जाते हुए 'लङ्का' में पहुँच गये थे" इस सीधे सादे अर्थ को "शकार" ने अपनी काव्यमयी भाषा में कैसा विचित्र रूप दे दिया है ! इसकी बानगी देखिए । )" ॥ ४५ ॥

वाहितः कृतवैरः कदापि मां प्रेक्ष्यैतेन मारितेति प्रकाशयिष्यति । तत्कथं गच्छामि ? । भवतु एतमर्धपतितं प्राकारखण्डमुल्लङ्घ्य गच्छामि ।

एषोऽस्मि त्वरितत्वरितो लङ्कानगर्यां गगने गच्छन् ।
भूम्यां पाताले हनूमच्छिखर इव महेन्द्रः ॥ ]

( इति निष्क्रान्तः )

( प्रविश्यापटीक्षेपेण )

संवाहको भिक्षुः—पक्खालिदे एशे मए चीवलखंडे । किं णु हु शाहाए शुक्खावइश्शं । इध वाणला विलुप्पंति । किं णु हु भूमीए धूलीदोशे होदि, ता कहिं पशालिअ शुक्खावइश्शं । ( दृष्ट्वा ) भोदु, इध वादालीपुंजिदे शुक्खवत्तसंचए पशालइश्शं । ( तथा कृत्वा ) णमो बुद्धश्श । ( इत्युपविशति ) भोदु, धम्मक्खलाइं उदाहलामि । ( 'पंचज्जण जेण मालिदा' ( ८।२ ) इत्यादि पूर्वोक्तं पठति ) अधवा अलं मम एदेण शग्गेण । जाव ताए वशंतशेणिआए बुद्धोवाशिआए पच्चुवआलं

---

अपटीक्षेपेणेति । नाटके "पर्दा" संज्ञिकां पटीं स्वकरेणैव दूरतो विधाय यदि पात्रस्य प्रवेशः, तदा "अपटीक्षेपेण" इत्युल्लिख्यते । एवंविधश्च क्रमः कार्यस्य शीघ्रतामाकस्मिकतां वा द्योतयितुं स्वीक्रियते । अन्यथा तु पटीमुन्नमय्यैव पात्राणि =नटाः प्रविशन्ति, इति हृदयम् ।

---

[ चला जाता है । ]

[ बिना पर्दा उठाये हुए प्रवेश कर ],

संवाहक भिक्षु—मैंने ये वस्त्रखण्ड धो लिये हैं । क्या वृक्ष की शाखा पर सुखाऊँ ? ( परन्तु ) यहाँ बन्दर उछल रहे हैं ( अतः ये फाड़ डालेंगे । यहाँ वस्त्र सुखाना उचित नहीं । ) क्या भूमि पर सुखाऊँ ? परन्तु रेत लग जाने का भय है । तो कहाँ फैला कर सुखाऊँ ? ( देखकर ) अच्छा तो इस हवा से उड़ाकर लाये गए सूखे पत्तों के ढेर पर फैलाता हूँ । ( फैलाकर ) भगवान् "बुद्ध" की जय । ( बैठ जाता है । ) तो अब धर्माक्षर बोलता हूँ । ( "पञ्चजण जेण मालिदा···" आदि ( ८।२ ) श्लोक पढ़ता है । ) अथवा मुझे यह स्वर्ग न

ण कलेमि, जाए दशाणं शुवण्णकाणं किदे जूदिअलेहिं णिक्कीदे, तदो पहुदि ताए कीदं विअ अत्ताणअं अवगच्छामि। (दृष्ट्वा) किं णु खु पण्णोदले शमुश्शशदि ? । अधवा

वादादवेण तत्ता चीवलतोएण तिम्मिदा पत्ता ।
एदे विथिण्णपत्ता मण्णे पत्ता विअ फुलंति ॥४६॥

[ प्रक्षालितमेतन्मया चीवरखण्डम् । किं नु खलु शाखायां शुष्कं करिष्यामि ? इह वानरा विलुम्पन्ति । किं नु खलु भूम्याम् ? । धूलीदोषो भवति । तत्कुत्र प्रसार्य शुष्कं करिष्यामि ? । भवतु, इह वातालीपुञ्जिते शुष्कपत्रसंचये प्रसारयिष्यामि । नमो बुद्धाय । भवतु, धर्माक्षराण्युदाहरामि । अथवालं ममैतेन स्वर्गेण । यावत्तस्या वसन्तसेनाया बुद्धोपासिकायाः प्रत्युपकारं न करोमि, यया दशानां सुवर्णकानां कृतेन द्यूतकाराभ्यां निष्क्रीतः, ततः प्रभृति तया क्रीतमिवात्मानमवगच्छामि । किं नु खलु पर्णोदरे समुच्छ्वसिति ? । अथवा

वातातपेन तप्तानि चीवरतोयेन स्तिमितानि पत्राणि ।
एतानि विस्तीर्णपत्राणि मन्ये पक्षिण इव स्फुरन्ति ॥ ]

---

संवाहको भिक्षुर्वसन्तसेनायाः प्रत्युपकाराभावे स्वर्ग-प्राप्तिं विनिन्दन्, पत्राणां समूहे श्वाससंचरणेन शुष्कपत्राणां प्रचलनमन्वीक्ष्य किमेतदित्याकुलतया कथयति— वादादवेणेति । वातसहितेनातपेन सन्तप्तानि, मदीयचीवरान्निर्गतेन जलबिन्दुवृन्देन स्तिमितानिं = सिक्तानि एतानि पत्राणि, मन्ये सम्प्रति विस्तीर्णाः = परितः प्रकीर्णाः, पक्षिण इव स्फुरन्ति = उत्प्लवितुं चेष्टामिव कुर्वन्तीत्यर्थः ।

अत्रोत्प्रेक्षामूलिकोपमा । आर्या च्छन्दः ॥४६॥

---

चाहिए जबतक कि मैं उस "बुद्ध" की उपासिका "वसन्तसेना" का, जिसने दस सोने की मुहरें द्यूतकर को देकर मुझे छुड़ाया था, प्रत्युपकार नहीं करता हूँ। तब से मैं अपने को उससे खरीदा हुआ-सा समझता हूँ। (देखकर) क्या पत्तों में कोई साँस ले रहा है !

अथवा,

"धूप से सन्तप्त तथा मेरे वस्त्रों की जल बिन्दुओं से सिक्त ये फैले हुए पत्ते—मानों पक्षियों की भाँति चहचहा रहे हैं ! )" ॥ ४६ ॥

( वसन्तसेना संज्ञां लब्ध्वा, हस्तं दर्शयति )

भिक्षुः—हा हा, शुद्धालंकालभूशिदे इत्थिआहत्थे णिक्कमदि। कधं दुदिए वि हत्थे ?। ( बहुविधं निर्वर्ण्य ) पच्चभिआणामि विअ एदं हत्थं। अधवा, किं विचालेण ?। शच्चं शे ज्जेव हत्थे जेण मे अभअं दिण्णं। भोदु, पेक्खिश्शं। ( नाट्येनोद्घाट्य दृष्ट्वा प्रत्यभिज्ञाय च ) शा ज्जेव बुद्धोवाशिआ। [ हा हा, शुद्धालंकारभूषितः स्त्रीहस्तो निष्क्रामति। कथं द्वितीयोऽपि हस्तः ?। प्रत्यभिजानामीवैतं हस्तम्। अथवा, किं विचारेण। सत्यं स एव हस्तो येन मेऽभयं दत्तम्। भवतु, पश्यामि। सैव बुद्धोपासिका। ]

( वसन्तसेना पानीयमाकाङ्क्षति )

भिक्षुः—कधं उदअं मग्गेदि ?। दूले च दिग्घिआ। किं दाणिं एत्थ कलइश्शं ?। भोदु, एदं चीवलं शे उवलि गालइश्शं। [ कथं उदकं याचते ?। दूरे च दीर्घिका, किमिदानीमत्र करिष्यामि ?। भवतु, एतच्चीवरमस्या उपरि गालयिष्यामि। ] ( तथा करोति )

( वसन्तसेना संज्ञां लब्ध्वोत्तिष्ठति, भिक्षुः पटान्तेन वीजयति )

---

[ "वसन्तसेना" सचेत होकर हाथ उठाकर दिखाती है। ]

भिक्षु—हा ! हा ! यह तो विशुद्ध अलङ्कारों से अलङ्कृत स्त्री का हाथ निकल रहा है। क्या दूसरा हाथ भी निकला है ? ( बहुत भाँति से देख कर ) मैं इस हाथ को पहिचानता सा हूँ। अथवा, सोच-विचार से क्या लाभ ? सचमुच यह वही हाथ है जिसने मुझे अभय दिया था। अच्छा, देखता हूँ। ( अभिनय से उघाड़, देख तथा पहिचान कर ) यह वही "भगवान् बुद्ध" की उपासिका है।

[ "वसन्तसेना" पानी माँगती है। ]

भिक्षु—क्या जल माँगती है ? बावड़ी दूर है तो अब क्या करूँ ? अच्छा, इस कपड़े को इसके ऊपर निचोड़ता हूँ। ( निचोड़ता है। )

[ "वसन्तसेना" सचेत होकर उठ बैठती है। "भिक्षु कपड़े के छोर से हवा करता है। ]

वसन्तसेना—अज्ज ! को तुमं ? । [ आर्य ! कस्त्वम् ? । ]

भिक्षुः—किं मं ण शुमलेदि बुद्धोवाशिआ दशशुवण्णणिक्कीदं ? । [ किं मां न स्मरति बुद्धोपासिका दशसुवर्णनिष्क्रीतम् ? । ]

वसन्तसेना—सुमरामि, ण उण जधा अज्जो भणादि । वरं अहं उवरदा ज्जेव । [ स्मरामि, न पुनर्यथाऽऽर्यो भणति । वरमहमुपरतैव । ]

भिक्षुः—बुद्धोवाशिए ! किं ण्णेदं ? । [ बुद्धोपासिके ! किं न्विदम् ? । ]

वसन्तसेना—( सनिर्वेदम् । ) जं सरिसं वेसभावस्स । [ यत्सदृशं वेशभावस्य । ]

भिक्षुः—उट्ठेदु उट्ठेदु बुद्धोवाशिआ एदं पादवसमीवजादं लदं ओलंबिअ । [ उत्तिष्ठतूत्तिष्ठतु बुद्धोपासिकैतां पादपसमीपजातां लतामवलम्ब्य । ]

---

भिक्षुः स्वकीयं प्रत्यभिज्ञानं प्रकाशयति—किं मं णेति । दशसुवर्ण-प्रदानेन क्रीतोऽस्मि भवत्या, पुनरपि मां कथं न स्मरसि ? अहं तु यावज्जीवमुपकारभारं स्वीकरोमि ।

वसन्तसेना प्राह—सुमरामि-इति । अवश्यं स्मरामि, किन्तु, यथा भवान् वदति, तथा न स्मरामि । दशसुवर्णक्रय-वार्ताश्रवणापेक्षया तु वरं मृत्युमेव मन्ये ।

---

वसन्तसेना—आर्य ! आप कौन हैं ?

भिक्षु—क्या आप दस मुहरों से खरीदे हुए मुझको नहीं ( पहिचानती ) स्मरण करती ?

वसन्तसेना—स्मरण करती हूँ । परन्तु, उस प्रकार नहीं जिस प्रकार कि आप कह रहे हैं । ( मैं आपका स्मरण "दशसुवर्णक्रीत" के रूप में नहीं करती । ) इससे अच्छी तो मैं मरी हुई ही हूँ । ( इस बात से तो मैं मरना ही अच्छा समझती हूँ । )

भिक्षु—बुद्धोपासिके ! यह क्या है ?

वसन्तसेना—( उदास होकर ) जो वेश्या—वेश के योग्य है ।

भिक्षु—आप इस वृक्ष के पास उठी हुई लता को पकड़कर उठें । ( ऐसा

( इति लतां नामयति )

( वसन्तसेना गृहीत्वोत्तिष्ठति )

भिक्षुः—एदश्शिं विहाले मम धम्मबहिणिआ चिट्ठदि। तहिं शमश्शशिदमआ भविअ उवाशिआ गेहं गमिश्शदि। ता शेणं शेणं गच्छदु बुद्धोवाशिआ। ( इति परिक्रामति, दृष्ट्वा ) ओशलध अज्जा! ओशलध। एशा तलुणी इत्थिआ, एशो भिक्खु त्ति शुद्धे मम एशे धम्मे।

**हत्थशंजदो मुहशंजदो इंदियशंजदो शे क्खु माणुशे।**
**किं कलेदि लाअउले तश्श पललोओ हत्थे णिच्चले ॥४७॥**

---

एतेन वसन्तसेनाया औदार्यातिशयः सूच्यते। "न दत्त्वा परिकीर्तयेद्" इत्युक्तेः तथा श्रवणस्याप्यनौचित्यप्रतिपादनेनोदात्ततप्रकाशो भवतीति भावः।

तरुणीमपि वसन्तसेनामादाय गच्छतो भिक्षुकस्य व्यवहारशुद्धिमुपदिशति—हत्थशंजदो-इति। यो मानवः स्वहस्तसंयतः, अर्थात् हस्ताभ्यां चौर्यादिकं कस्यचिन्मारणात्मकं वाऽनुचितं कार्यं नैव करोति। न च मुखेनाऽनुचितं वदति, इन्द्रियाणि च यस्य सुसंयतानि सन्ति = स्ववशे स्थितानि सन्तीत्यर्थः। स मानवः किमर्थं राजकुलं सेवते? अनावश्यकमेव तत्कृते राजकुले प्रयाणम्। तस्य हस्ते परलोको निश्चलोऽस्ति। निश्चित-रूपेणैवंविधो जनः स्वर्गलोकं सेवते। अतो मया

---

कहकर लता को झुकाता है। )

[ "वसन्तसेना" पकड़कर उठ जाती है। ]

भिक्षु—इस "विहार" ( बौद्धमठ ) में मेरी धर्म की बहिन रहती है। वहाँ आश्वस्त होकर उपासिका घर जायँगी। इस लिए बुद्धोपासिका धीरे-धीरे चलें। ( घूमता है। देखकर ) आर्यो! हटो! माननीयो हटो! यह युवती है और मैं भिक्षु हूँ अतः मेरा धर्म शुद्ध है।

"जो मनुष्य—हाथ, पैर, मुख और इन्द्रियों पर नियन्त्रण रखता है उसको राजदरबार से क्या भय? उसके लिए तो परलोक निश्चित ही है। ( जो मनुष्य

[ एतस्मिन् विहारे मम धर्मभगिनी तिष्ठति । तत्र समाश्वस्तमना भूत्वोपासिका गेहं गमिष्यति । तच्छनैः शनैर्गच्छतु बुद्धोपासिका । अपसरत आर्याः ! अपसरत । एषा तरुणी स्त्री, एष भिक्षुरिति शुद्धो ममैष धर्मः ।

हस्तसंयतो मुखसंयतः इन्द्रियसंयतः स खलु मनुष्यः ।
किं करोति राजकुलं तस्य परलोको हस्ते निश्चलः ॥ ]

( इति निष्क्रान्ताः )

## इति वसन्तसेनामोटनो नामाष्टमोऽङ्कः ।

—०—

---

तथा सता नेदं चिन्त्यते । यस्य मनः पवित्रं, सर्वात्मनासौ पवित्र एवेति भावः । गीत्युपगीतिसम्मिश्रितमिदं पद्यरत्नम् ॥४७॥

इति मृच्छकटिके "श्रीप्रियम्वदा"ख्य—टीकाया-
मष्टमोऽङ्कः पर्यवसितः ।

---

इन्द्रियों का दास नहीं है तथा जिसका मन पवित्र है उसे अवश्य ही स्वर्ग मिलता है । उस पर कचहरी में कोई व्यवहार नहीं चल सकता है । अतः मेरा मन पवित्र है मुझ पर "युवती-संसर्ग" का सन्देह करना व्यर्थ है । )" ॥४७॥

[ चले जाते हैं । ]

"श्रीप्रियम्वदा" टीकालङ्कृत "मृच्छकटिक" के
"वसन्तसेनामोटक" नामक आठवें
अङ्क का भाषानुवाद समाप्त ।

# नवमोऽङ्कः

( ततः प्रविशति शोधनकः )

शोधनकः—आणत्तम्हि अधिअरणभोइएहिं—'अरे सोहणआ ! ववहारमंडवं गदुअ आसणाइं सज्जीकरेहि' त्ति। ता जाव अधिअरणमंडवं सज्जिदुं गच्छामि ( परिक्रम्यावलोक्य च ) एदं अधिअरणमंडवं। एस पविसामि। ( प्रविश्य, संमार्ज्यासनमाधाय ) विवित्तं कारिदं मए अधिअरणमंडवं। विरइदा मए आसणा। ता जाव अधिअरणिआणं उण णिवेदेमि। ( परिक्रम्यावलोक्य च ) कधं एसो रट्ठिअस्सालो दुट्ठदुज्जणमणुस्सो इदो एव्व आअच्छदि-?। ता दिट्ठिपधं परिहरिअ गमिस्सं। [ आज्ञप्तोऽस्म्यधिकरणभोजकैः—'अरे शोधनक ! व्यवहारमण्डपं गत्वासनानि सज्जीकुरु' इति। तद्यावदधिकरणमण्डपं सज्जितुं गच्छामि। एषोऽधिकरणमण्डपः। एष प्रविशामि। विविक्तः कारितो मयाधिकरणमण्डपः। विरचितानि मयासनानि। तद्यावदधिकरणिकानां पुनर्निवेदयामि। कथमेष राष्ट्रियश्यालो दुष्टदुर्जनमनुष्य इत एवागच्छति ?। तद्दृष्टिपथं परिहृत्य गमिष्यामि। ]

( इत्येकान्ते स्थितः )

---

[ तदनन्तर "शोधनक" प्रवेश करता है। ]

शोधनक—"मुझे न्यायालयाध्यक्षों ने आज्ञा दी है कि—"शोधनक ! न्यायालय में जाकर आसनों को सुव्यवस्थित रूप से लगा दो।" अतः मैं न्यायालय को सुसज्जित करने जा रहा हूँ। ( घूम तथा देखकर ) यह अधिकरणमण्डप ( कचहरी ) है इसलिए मैं प्रवेश करता हूँ। ( प्रविष्ट हो स्वच्छ कर तथा यथास्थान आसन लगाकर ) मैंने न्यायालय स्वच्छ कर दिया है और आसन लगा दिये हैं। तो मैं पुनः न्यायाधीशों से निवेदन करता हूँ। ( घूम तथा देखकर ) क्या यह दुष्ट दुर्जन राजश्यालक इधर ही आ रहा है ? इसलिए आँख बचाकर जाता हूँ।

[ एकान्त में खड़ा हो जाता है ]

( ततः प्रविशत्युज्ज्वलवेषधारी शकारः )

शकारः—

ण्हादेहं शलिलजलेहिं पाणिएहिं,
उज्जाणे उववणकाणणे णिशण्णे ।
णालीहिं शह जुवदीहिं इश्तिआहिं,
गंधव्वेहिं शुविहिदएहिं अंगकेहिं ॥१॥

खणेण गंठी खणजूलके मे खणेण वाला खलकुंतले वा ।
खणेण मुक्के खण उद्धचूडे चित्ते विचित्ते हगे लाअशाले ॥२॥

अवि, अ विशगंठिगब्भपविश्टेण विअ कीडएण अंतलं मग्गमाणेण पाविदं

---

अधिकरण-भोजकैर्न्यायालयाध्यक्षैरादिष्टेन शोधकेन परिशोधिते न्यायालये परिस्तीर्णेषु च यथास्थानमासनेषु, शकारः प्रविश्याह—ण्हादेहं-इति । अहं जलेन स्नातः, सुपरिष्कृतैरङ्गैः सुसंस्कृतः, नारीभिः, गन्धर्वैश्च सहितः उपवने निषण्णः = उपविष्टः आसम् । अत्र शकारोक्तौ पुनरुक्ततादिदोषो न दोषाय ।

प्रहर्षिणी च्छन्दः । लक्षणमुक्तं प्राक् ॥ १ ॥

स्वकीयकेशविन्यासकौशलं प्रदर्शयति—खणेण-इति । अहं विचित्रो राजश्यालकोऽस्मि । तथाहि—कदाचिन्मम केशा ग्रन्थियुक्ताः, क्षणानन्तरमेव च जूटकाः, कदाचिच्च मुक्ता बालाः, कदाचिदूर्ध्वचूडो भवामि । केशप्रसाधनेन मम विचित्रता विद्यते, इति भावः । उपजातिश्छन्दः ॥ २ ॥

---

[ तदनन्तर उज्ज्वल वेष में "शकार" प्रवेश करता है । ]

शकार—"मैं जल ( सलिल, पानी ) से नहाया हूँ तथा अपने अङ्गों को सुसज्जित कर युवती स्त्रियों के साथ उपवन में बैठा हूँ ।" ॥ १ ॥

"कभी गाँठ लगाकर, कभी लपेटकर, कभी खोलकर और कभी ऊपर को बाल बढ़ाकर मैं बड़ा ही विचित्र राजश्यालक हो गया हूँ ।" ॥ २ ॥

और भी—

विष-ग्रन्थि में प्रविष्ट कीड़े की भाँति ( अथवा—मृणाल-ग्रन्थि में घूमते हुए

मए महदंतलं। ता कश्श एदं किविणचेश्टिअं पाडइश्शं ?। ( स्मृत्वा ) आं, शुमलिदं मए। दलिद्दचालुदत्तश्श एदं किविणचेश्टिअं पाडइश्शं। अण्णं च, दलिद्दे खु शे। तश्श शव्वं शंभावीअदि। भोदु, अधिअलणमंडवं गदुअ अग्गदो ववहालं लिहावइश्शं, जधा—चालुदत्तकेण वशंतशेणिआ मोडिअ मालिदा। ता जाव अधिअलणमंडवं ज्जेव्व गच्छामि ( परिक्रम्यावलोक्य च ) एशं तं अधिअलणमंडवं। एत्थ पविशामि। ( प्रविश्यावलोक्य च ) कधं आशणाइं दिण्णइं चियश्टंति ?। जाव आअश्शंति अधिअलणभोइआ, दाव एदश्शिं दुव्वचत्तले मुहुत्तअं उवविशिअ पडिवालइश्शं।

[ स्नातोऽहं सलिलजलैः पानीयैरुद्यान उपवनकानने निषण्णः।
नारीभिः सह युवतीभिः स्त्रीभिर्गन्धर्वैः सुविहितैरङ्गकैः॥
क्षणेन ग्रन्थिः क्षणजूलिका मे क्षणेन बालाः क्षणकुन्तला वा।
क्षणेन मुक्ताः क्षणमूर्ध्वचूडाश्चित्रो विचित्रोऽहं राजश्यालः॥

अपि च, विषग्रन्थिगर्भप्रविष्टेनेव कीटकेनान्तरं मार्गमाणेन प्राप्तं मया महदन्तरम्। तत् कस्येदं कृपणचेष्टितं पातयिष्यामि ?। आं, स्मृतं मया। दरिद्रचारुदत्तस्येदं कृपणचेष्टितं पातयिष्यामि। अन्यच, दरिद्रः खलु सः। तस्य सर्वं संभाव्यते। भवतु, अधिकरणमण्डपं गत्वाऽग्रतो व्यवहारं लेखयिष्यामि, यथा—चारुदत्तेन वसन्तसेना मोटयित्वा मारिता। तद्यावदधिकरणमण्डपमेव गच्छामि। एष सोऽधिकरणमण्डपः। अत्र प्रविशामि। कथमासनानि दत्तानि तिष्ठन्ति ?। यावदागच्छन्त्यधिकरणभोजकाः,

---

कीड़े की भाँति ) ढूँढते हुए मैंने मार्ग पाया है। तो अपने इस ( "वसन्तसेनामारण-रूप ) दुष्कृत्य का दोष किस पर लगाऊँ ? ( स्मरणकर ) हाँ, याद आया "दरिद्र चारुदत्त" के माथे ही इस दोष को मढ़ता हूँ। दूसरी बात यह है कि वह दरिद्र है अतः उस पर ( सन्देह का ) विश्वास किया जा सकता है। अच्छा तो न्यायालय में पहिले ही जाकर अभियोग लिखाता हूँ कि—"चारुदत्त" ने "वसन्तसेना" को गला घोंटकर मार दिया।" इस लिए न्यायालय में ही जाता हूँ। ( घूम तथा देखकर ) यह न्यायालय है, मैं प्रवेश करता हूँ।

तावदेतस्मिन् दूर्वाचत्वरे मुहूर्तमुपविश्य प्रतिपालयिष्यामि । ]

( तथा-स्थितः )

शोधनकः—(अन्यतः परिक्रम्य, पुरो दृष्ट्वा) एदे अधिअरणिआ आअच्छंति; ता जाव उवसप्पामि । [ एतेऽधिकरणिका आगच्छन्ति; तद्यावदुपसर्पामि । ] ( इत्युपसर्पति )

( ततः प्रविशति श्रेष्ठिकायस्थादिपरिवृतोऽधिकरणिकः )

अधिकरणिकः—भो भोः श्रेष्ठिकायस्थौ ! ।

श्रेष्ठिकायस्थौ—आणवेदु अज्जो । [ आज्ञापयत्वार्यः । ]

अधिकरणिकः—अहो ! व्यवहारपराधीनतया दुष्करं खलु परचित्तग्रहणमधिकरणिकैः—

**छन्नं कार्यमुपक्षिपन्ति पुरुषा न्यायेन दूरीकृतं,**

---

अधिकरणस्थैः परकीय-चित्त-परिज्ञानं सौकर्येण कर्तुं न शक्यते—इत्याशयेनाह—छन्नमिति । मानवाः अधिकरणे समागत्य न्यायरहितं सुगुप्तमपि कार्यमुपस्थाप-

---

( प्रविष्ट हो देखकर ) क्या आसन सुसज्जित हैं ? अतः जब तक न्यायालयाध्यक्ष नहीं आते हैं तब तक मैं इस दूबवाले चबूतरे पर बैठकर क्षणभर ( उनकी ) प्रतीक्षा करता हूँ । [ बैठ जाता है । ]

शोधनक—( दूसरी ओर से घूमकर सामने देखते हुए ) ये न्यायाधिकारीगण आ रहे हैं अतः इनके पास जाता हूँ । ( पास जाता है । )

[ तदनन्तर सेठ और 'कायस्थ' आदि के साथ न्यायाधीश प्रवेश करता है । ]

अधिकरणिक—( बज )—सेठ और कायस्थ जी !

श्रेष्ठिकायस्थ—आदेश दीजिये ।

अधिकरणिक—ओह ! व्यवहार के पराधीन होने के कारण दूसरे के मन की बात जानना अधिकरणिकों के लिए कठिन ही है । ( आशय यह है कि अपराध तो दूसरे लोग करते हैं और वे अपनी सत्यता छिपा लेते हैं, अतः सत्यता का पता लगाना कठिन है । )

"मनुष्य ( न्यायालय में ) न्याय से रहित गुप्त कार्य उपस्थित करते हैं

स्वान् दोषान् कथयन्ति नाधिकरणे रागाभिभूताः स्वयम् ।
तैः पक्षापरपक्षवर्धितबलैर्दोषैर्नृपः स्पृश्यते,
संक्षेपादपवाद एव सुलभो द्रष्टुर्गुणो दूरतः ॥३॥

अपि च,—

छन्नं दोषमुदाहरन्ति कुपिता न्यायेन दूरीकृताः,
स्वान् दोषान् कथयन्ति नाधिकरणे सन्तोऽपि नष्टा ध्रुवम् ।
ये पक्षापरपक्षदोषसहिताः पापानि संकुर्वते,

---

-यन्ति, रागाभिभूताः सन्तः स्वकीय-दोषान् नैव कथयन्ति, एवं पक्ष—परपक्षादिदोष-प्रदर्शनादिना समुत्पन्नैर्दोषैर्नृपोऽपि स्पृष्टो भवति । अतः संक्षेपात् निन्दैव न्यायाधीशैर्लभ्यते, गुणस्तु द्रष्टुर्नैव सम्भाव्यते । यद्यपि सावधानतया राजशासनपालने यत्नः क्रियते एव, तथापि वादिनः प्रतिवादिनश्च यथार्थतया कार्योपक्षेपं न कुर्वन्ति, अत एव वास्तविकतायाः परिज्ञानमेव कर्तुं न शक्यतेऽस्माभिरिति राजापि दोषैः स्पृश्यते एवेति भावः । शार्दूलविक्रीडितं च्छन्दः ॥ ३ ॥

उक्तार्थमेव पद्यं पुनराह—छन्नमिति । अत्रापि प्रायः पूर्वोक्त एवार्थः । कुपिताः अत एव न्यायेन दूरीकृताः पुरुषाः प्रच्छन्नं दोषं कथयन्ति स्वकीयान् दोषाँश्चाधिकरणे नैव कथयन्ति । अतस्ते सन्तोऽपि ध्रुवं नष्टा भवन्ति = सन्मार्गात् परिपतन्ति । स्वपक्ष-परपक्ष-कृत-मिथ्यादोषप्रतिपादनेन तेषामपराधस्य निर्णयः

---

और क्रोधवश अधिकरणिकों के सामने अपने दोष नहीं बताते । उन वादि—प्रतिवादियों के दोष का प्रभाव राजा पर भी पड़ता है । ( इस प्रकार संक्षेप में न्यायाधीशों को ) अपवाद ही मिलता है गुण की बात तो दूर रहती है ।" ॥३॥

और भी—

"वे न्याय से दूर होकर ( दूसरों के ) गुप्त दोषों का तो कुपित होकर उद्घाटन करते हैं परन्तु ( न्यायालय में ) अपने दोषों का वर्णन नहीं करते । इस प्रकार वे ( संसार में ) रहते हुए भी सन्मार्ग से पतित हो जाते हैं । स्वपक्ष तथा परपक्ष दोनों पर ही दोष लगाने के कारण ( सम्यक् रूपेण निर्णय न करने से )

संक्षेपादपवाद एव सुलभो द्रष्टुर्गुणो दूरतः ॥४॥
यतोऽधिकरणिकः खलु
शास्त्रज्ञः कपटानुसारकुशलो वक्ता न च क्रोधन-
स्तुल्यो मित्रपरस्वकेषु चरितं दृष्ट्वैव दत्तोत्तरः ।
क्लीबान् पालयिता शठान् व्यथयिता धर्म्यो न लोभान्वितो,
द्वार्भावे परतत्त्वबद्धहृदयो राज्ञश्च कोपापहः ॥५॥

श्रेष्ठिकायस्थौ—अज्जस्स वि णाम गुणे दोसो त्ति वुच्चदि । जइ एव्वं, ता

---

सम्यक् कर्तुं नैव शक्यते, अतो राजापि पापपरीतो भवति, एवञ्च—निर्णायकानां निन्दैव सुलभा, न तु कोऽपि गुण इति भावः । अत्राप्युक्तमेव च्छन्दः ॥ ४ ॥

अधिकरणिकः कीदृशः स्यादित्याह—शास्त्रज्ञः-इति । अधिकरणिकः शास्त्रज्ञः-कपटस्य—वादिप्रतिवादिकृत-कपटस्य अनुसारे = ज्ञाने कुशलः । तयोः कपटप्रकाशन-चतुर इति यावत् । वाग्मी, क्रोधरहितः, शत्रुमित्रयोस्तुल्यः, चरितं दृष्ट्वैवोत्तरदाता, क्लीबानां रक्षकः, शठानां दण्डप्रदः, धार्मिकः, लोभ-शून्यः द्वार्भावे = वास्तविक-तत्त्वप्रकाशनकर्मणि । द्वारभूतः, परेषां तत्त्वे बद्धहृदयः = यथार्थतापरिज्ञाने समा-सक्तचित्तः, नृपस्य कोपपरिहर्ता च भवेदिति शेषः । न्यायाधीशे, एवंविधा गुणा । अवश्यमपेक्षन्ते, इति भावः । शार्दूलविक्रीडितं च्छन्दः ॥५॥

अधिकरणक-वाक्यं निशम्य श्रेष्ठिकायस्थावाहतुः—अज्जस्स-इति । यदि भव-

---

राजा भी दोष का भागी हो जाता है और संक्षेप में निर्णायकों को अपयश ही मिलता है—कोई गुण नहीं ।" ॥ ४ ॥

क्योंकि अधिकरणिक को—

"शास्त्रज्ञ, छल कपट को जानने में कुशल, वाग्मी, क्रोधरहित, शत्रु मित्र दोनों के लिए समान, चरित्र देखने के अनन्तर ही उत्तर देने वाला, दुर्बलों का रक्षक, धूर्तों के लिए दण्ड का दाता, धार्मिक, निर्लोभी, वास्तविक रहस्य का प्रकाशक, दूसरों का हृदय जानने में कुशल तथा राजा के क्रोध का निवारक ( होना चाहिए )" ॥ ५ ॥

चंदालोए वि अंधआरो त्ति वुच्चदि। [ आर्यस्यापि नाम गुणे दोष इत्युच्यते। यद्येवम्, तदा चन्द्रालोकेऽप्यन्धकार इत्युच्यते। ]

अधिकरणिकः—भद्र शोधनक ! अधिकरणमण्डपस्य मार्गमादेशय।

शोधनकः—एदु एदु अधिअरणभोइओ ! एदु। [ एत्वेत्वधिकरणभोजक! एतु। ]

( इति परिक्रामन्ति )

शोधनकः—एदं अधिअरणमंडवं। ता पविसंतु अधिअरणभोइआ। [ अयमधिकरणमण्डपः, तत्प्रविशन्त्वधिकरणभोजकाः। ]

( सर्वे च प्रविशन्ति )

अधिकरणिकः—भद्र शोधनक ! बहिर्निष्क्रम्य ज्ञायताम्—'कः कः कार्यार्थी' इति।

शोधनकः—जं अज्जो आणवेदि। ( इति निष्क्रम्य ) अज्जा ! अधिअरणिआ भणंति—'को को इध कज्जत्थी' त्ति। [ यदार्य आज्ञापयति। आर्याः ! अधिकरणिका भणन्ति—'कः क इह कार्यार्थी' इति। ]

---

तोऽपि गुणेषु दोषसम्भावना, तदा तु चन्द्रेऽप्यन्धकारसम्भावनेति सर्वथा प्रशंसनीय-गुणो भवानिति भावः।

---

श्रेष्ठिकायस्थ—आपके गुणों में दोष की सम्भावना चन्द्रिका में भी अन्धकार की कल्पना के समान है। ( आप सर्वथा निर्दोष अथ-च प्रशंसनीय हैं। )

अधिकरणिक—सौम्य शोधनक ! न्यायालय का मार्ग बतलाओ।

शोधनक—आइये, आइये इधर से आइये।

[ ऐसा कहकर घूमते हैं। ]

शोधनक—यह न्यायालय है अतः आप प्रवेश कीजिये।

[ सब प्रवेश करते हैं। ]

अधिकरणिक—भद्र शोधनक ! बाहर जाकर पता लगाओ कि—"कौन कौन कार्यार्थी ( मुकदमा दायर करने वाले ) हैं ?"

शोधनक—जो आज्ञा। ( बाहर जाकर ) आर्यो ! 'अधिकरणिक' जी कहते हैं कि—"यहाँ कौन कौन व्यवहारार्थी है ?"

शकारः—( सहर्षम् ) उवत्थिए अधिअलणिए । ( साटोपं परिक्रम्य ) हग्गे वलपुलिशे मणुश्शे वाशुदेवे लश्टिअशाले लाअशाले कज्जत्थी । [ उपस्थिता अधिकरणिकाः । अहं वरपुरुषो मनुष्यो वासुदेवो राष्ट्रियश्यालो राजश्यालः कार्यार्थी ।

शोधनकः—( ससंभ्रमम् ) हीमादिक्के, पढमं ज्जेव रट्ठिअसालो कज्जत्थी । भोदु, अज्ज ! मुहुत्तं चिट्ठ । दाव अधिअरणिआणं णिवेदेमि । ( उपगम्य ) अज्जा ! एसो खु रट्ठिअसालो कज्जत्थी ववहारं उवत्थिदो । [ हन्त, प्रथममेव राष्ट्रियश्यालः कार्यार्थी । भवतु, आर्य ! मुहूर्तं तिष्ठ । तावदधिकरणिकानां निवेदयामि । आर्याः ! एष खलु राष्ट्रियश्यालः कार्यार्थी व्यवहारमुपस्थितः । ]

अधिकरणिकः—कथं प्रथममेव राष्ट्रियश्यालः कार्यार्थी ? । यथा सूर्योदये उपरागो महापुरुषनिपातमेव कथयति । शोधनक ! व्याकुलेनाद्य

---

शकारः कार्यार्थीत्याकर्ण्य व्यवहारस्य व्याकुलतां सूचयितुमाहाधिकरणिकः—कथमिति । अहो ! अद्य सर्वतः प्रथमं शकार एव कार्यार्थी ? प्रातः सूर्योदयवेलायां, सूर्यग्रहणे यथा। कस्यचिन्महापुरुषस्य निपातः सम्भवति, तथैवाद्य व्यवहारेऽपि सम्भाव्यते ! एतेन चारुदत्तस्य पतनं ध्वन्यते, इति भावः ।

---

शकार—( सहर्ष ) न्यायाधीश आ गये ! ( अभिमानपूर्वक घूमकर ) मैं सत्पुरुष, वासुदेव, राजश्यालक कार्यार्थी हूँ ।

शोधनक—( घबराहट के साथ ) अरे ! क्या सर्वप्रथम "शकार" ही 'कार्यार्थी' है ? अच्छा, एक क्षण ठहरो मैं अधिकरणिकों से निवेदन करता हूँ । ( पास जाकर ) आर्य ! यह राजश्यालक कार्यार्थी है ।

अधिकरणिक—क्या पहिले ही राजश्यालक कार्यार्थी है ? जैसे सूर्योदय के समय का ग्रहण, किसी महान् पुरुष की मृत्यु का सूचक होता है ( वैसे ही इसका सर्वप्रथम व्यवहारमण्डप में कार्यार्थी होकर आना अनिष्टसूचक है । ) शोधनक !

व्यवहारेण भवितव्यम् । भद्र ! निष्क्रम्योच्यताम्—'गच्छाद्य, न दृश्यते तव व्यवहारः' इति ।

शोधनकः—जं अज्जो आणवेदि त्ति । ( निष्क्रम्य, शकारमुपगम्य ) अज्ज ! अधिअरणिआ भणंति—'अज्ज ! गच्छ । ण दीसदि तव ववहारो त्ति' । [ यदार्य आज्ञापयतीति । आर्य ! अधिकरणिका भणन्ति—'अद्य गच्छ । न दृश्यते तव व्यवहारः' । ]

शकारः—( सक्रोधम् ) आः, किं ण दीशदि मम ववहाले ? । जइ ण दीशदि, तदो आवुत्तं लाआणं पालअं बहिणीवदिं विण्णविअ बहिणिं अत्तिकं च विण्णविअ एदं अधिअलणिअं दूले फेलिअ एत्थ अण्णं अधिअलणिअं ठावइश्शं । [ आः, किं न दृश्यते मम व्यवहारः ! । यदि न दृश्यते, तदावुत्तं राजानं पालकं भगिनीपतिं विज्ञाप्य भगिनीं मातरं च विज्ञाप्यैतमधिकरणिकं दूरीकृत्यात्रान्यमधिकरणिकं स्थापयिष्यामि । ]

( इति गन्तुमिच्छति )

शोधनकः—अज्ज रट्ठिअशालअ ! मुहुत्तअं चिट्ठ । दाव अधिअरणिआणं णिवेदेमि । ( अधिकरणिकमुपगम्य ) एसो रट्ठिअशालो कुविदो भणादि । [ आर्य राष्ट्रियश्याल ! मुहूर्तं तिष्ठ । तावदधिकरणिकानां निवेदयामि । एष

---

आज के अभियोग में अव्यवस्था फैलेगी ( ऐसा प्रतीत हो रहा है । ) सौम्य ! जाकर कह दो कि—"जाओ ! आज तुम्हारा व्यवहार न देखा जायगा । ( मुकदमे पर विचार न किया जायगा । )

शोधनक—जो आज्ञा ! ( "शकार" के पास पहुँचकर ) आर्य ! अधिकरणिक कहते हैं कि—"जाइए ! आज आपका व्यवहार न देखा जायगा ।"

शकार—( क्रोधपूर्वक ) अरे ! क्या मेरा व्यवहार न देखा जायगा ? यदि नहीं देखा जाता तो मैं अपने जीजा राजा "पालक", बहिन तथा माँ से कहकर इस न्यायाधीश को हटाकर दूसरे न्यायाधीश की नियुक्ति करा दूँगा ।

( जाना चाहता है । )

शोधनक—आर्य राजश्यालक जी ! क्षणभर ठहरिये । तब तक मैं

राष्ट्रियश्यालः कुपितो भणति । ] ( इति तदुक्तं भणति )

**अधिकरणिकः**—सर्वमस्य मूर्खस्य संभाव्यते । भद्र ! उच्यताम्—'आगच्छ, दृश्यते तव व्यवहारः' ।

**शोधनकः**—( शकारमुपगम्य ) अज्ज ! अधिअरणिआ भणंति—'आअच्छ, दीसदि तव ववहारो;' ता पविसदु अज्जो । [ आर्य ! अधिकरणिका भणन्ति—'आगच्छ, दृश्यते तव व्यवहारः'; तत्प्रविशत्वार्यः । ]

**शकारः**—ही, पढमं भणंति–'ण दीशदि, शंपदं दीशदि' त्ति । ता णाम भीदभीदा अधिअलणभोइआ । जेत्तिअं हग्गे भणिश्शं तेत्तिअं पत्तिआवइश्शं । भोदु, पविशामि ( प्रविश्योपसृत्य ) शुशुहं अम्हाणं, तुम्हाणं पि शुहं देमि ण देमि अ । [ ही, प्रथमं भणन्ति न दृश्यते, सांप्रतं दृश्यत इति । तन्नाम भीतभीता अधिकरणभोजकाः, यद्यदहं भणिष्यामि तत्तत्प्रत्याययिष्यामि । भवतु, प्रविशामि । सुसुखमस्माकम्, युष्माकमपि सुखं ददामि न ददामि च । ]

**अधिकरणिकः**—( स्वगतम् ) अहो, स्थिरसंस्कारता व्यवहारार्थिनः ।

---

अधिकरणिकों से निवेदन करता हूँ । ( अधिकरणिक के पास पहुँच कर ) यह राजश्यालक कुपित होकर कहता है—( उस का कथन दुहरा देता है । )

**अधिकरणिक**—इस मूर्ख से सब कुछ सम्भावना की जा सकती है । ( यह सब कुछ कर सकता है । ) भद्र ! जाकर कहो कि—"आओ ! तुम्हारा व्यवहार देखा जाता है ।"

**शोधनक**—( "शकार" के पास पहुँच कर ) आर्य ! अधिकरणिक कहते हैं कि—"आओ ! तुम्हारा व्यवहार देखा जाता है ।" अतः आप प्रवेश करें ।

**शकार**—पहिले कहते थे कि "नहीं देखा जायगा" और अब कहते हैं "देखा जायगा" । इस से ( मैं समझता हूँ कि ) ये डर गये हैं । ( अतः मैं जो जो कहूँगा वह-वह विश्वासजनक होगा । अच्छा, प्रवेश करता हूँ । ( प्रविष्ट हो समीप जाकर ) हम सुखी हैं, तुम्हें भी सुख देता हूँ अथवा, नहीं देता ।

**अधिकरणिक**—( स्वयं ही ) ओह 'कार्यार्थी' ( "शकार" ) की "स्थिर

३०

( प्रकाशम् ) उपविश्यताम् ।

शकारः—आं, अत्तण केलकाशे भूमी । ता जहिं मे लोअदि तहिं उवविशामि । ( श्रेष्ठिनं प्रति ) एश उवविशामि । ( शोधनकं प्रति ) णं एत्थ उवविशामि । ( इत्यधिकरणिकमस्तके हस्तं दत्त्वा ) एश उवविशामि । [ आं, आत्मीयैषा भूमिः । तद्यत्र मह्यं रोचते तत्रोपविशामि । एष उपविशामि । नन्वत्रोपविशामि । एष उपविशामि ] ( इति भूमावुपविशति )

अधिकरणिकः—भवान् कार्यार्थी ।

शकारः—अध इं । [ अथ किम् । ]

अधिकरणिकः—तत्कार्यं कथय ।

शकारः—कण्णे कज्जं कधइश्शं । एव्वं वड्डुके मल्लकप्पमाणाह कुडे हग्गे जादे ।

---

संस्कारता ! ( पहिले जैसी ही दृढ़ता है—हमारे सामने भी इस की आकृति में कोई परिवर्तन नहीं है । अथवा—"जो कुछ मैं कहूँगा वह सत्य ही होगा" इस अर्थ को सिद्ध करने में इसकी बड़ी स्थिरता है । )

( प्रकाश में ) बैठिये ।

शकार—हाँ, यह तो अपनी ही भूमि है अतः जहाँ मुझे अच्छा लगता है वहीं बैठता हूँ । ( सेठ से ) यहाँ बैठता हूँ । ( "शोधनक" से ) नहीं, यहाँ बैठता हूँ । ( अधिकरणिक के सिर पर हाथ रख कर ) नहीं, यहाँ बैठता हूँ ।

[ भूमि पर बैठ जाता है । ]

अधिकरणिक—आप कार्यार्थी हैं ?

शकार—जी हाँ ।

अधिकरणिक—तो कार्य कहिये । ( व्यर्थ बातें न कीजिये । )

शकार—कान में कहूँगा ( क्योंकि ) मैं "मल्लक" के समान बड़े कुल में उत्पन्न हुआ हूँ ।

लाअश्शुले मम पिद्धा लाआ तादश्श होइ जामादा।
लाअशिआले हग्गे ममावि बहिणीवदी लाआ ॥६॥

[ कर्णे कार्यं कथयिष्यामि। एवं वृहति मल्लकप्रमाणस्य कुलेऽहं जातः।
राजश्वशुरो मम पिता राजा तातस्य भवति जामाता।
राजश्यालोऽहं ममापि भगिनीपती राजा॥ ]

अधिकरणिकः—सर्वं ज्ञायते,

किं कुलेनोपदिष्टेन शीलमेवात्र कारणम्।
भवन्ति नितरां स्फीताः सुक्षेत्रे कण्टकिद्रुमाः॥ ७॥

तदुच्यतां कार्यम्।

शकारः—एव्वं भणामि, अवलद्धाह वि ण अ मे किं पि कलइश्शदि, तदो तेण बहिणीवदिणा परितुश्टेण मे कीलिदुं लक्खिदुं शव्वुज्जाणाणं पवले पुप्फकलंडकजिण्णुज्जाणे दिण्णे। तहिं च पेक्खिदुं अणुदिअहं

---

महति पानपात्रतुल्ये कुले सम्भूतोऽस्मीति शकारः प्राह—लाअशशुले—इति। मम पिता राजश्वशुरोऽस्ति। अस्य अत्रत्यस्य राज्ञः श्वशुरः इति यावत्। राजा चायं मम पितुर्जामाता वर्तते। अहमपि राजश्यालोऽस्मि। मम भगिन्याः पतिरपि राजाऽस्ति। एतेन महति कुले सम्भूतोऽस्मि, इति भावः। आर्या छन्दः॥ ६॥

किं कुलेनेति। कुलादिकीर्तनमत्रानावश्यकमेव, सर्वमस्माभिस्तव कुलकथानकं ज्ञायते। श्लोकः पूर्वं व्याख्यातः॥७॥

---

"मेरे पिता यहाँ के राजा ("पालक") के श्वशुर हैं और राजा मेरे पिता का जामाता है। मैं राजश्यालक हूँ और राजा मेरी बहिन का पति है।" ॥६॥

अधिकरणिक—यह सब कुछ पता है।

"कुल का वर्णन करने से क्या लाभ? यहाँ तो तुम्हारा स्वभाव ही कारण है। अच्छे खेत में भी लम्बे लम्बे काँटों वाले वृक्ष हो जाते हैं।" ॥ ७॥

इसलिए कार्य कहिये।

शकार—कहता तो हूँ कि अपराध करने पर भी मेरा (कोई) कुछ भी

शोशावेदुं शोधावेदुं पोत्थावेदुं लुणावेदुं गच्छामि। देव्वजोएण पेक्खामि, ण पेक्खामि वा, इत्थिआशलालं णिवडिदं। [ एवं भणामि, अपराद्धस्यापि न च मे किमपि करिष्यति, ततस्तेन भगिनीपतिना परितुष्टेन मे क्रीडितुं रक्षितुं सर्वोद्यानानां प्रवरं पुष्पकरण्डकजीर्णोद्यानं दत्तम्। तत्र च प्रेक्षितुमनुदिवसं शुष्कं कारयितुं शोधयितुं पुष्टं कारयितुं लूनं कारयितुं गच्छामि। दैवयोगेन पश्यामि, न पश्यामि वा, स्त्रीशरीरं निपतितम्। ]

अधिकरणिकः—अथ ज्ञायते का स्त्री विपन्नेति ?।

शकारः—हंहो अधिअलणभोइआ ! किंत्ति ण जाणामि ?। तं तादिशिं णअलमंडणं कंचणशदभूशणिअं केण वि कुपुत्तेण अत्थकल्लवत्तश्श कालणादो शुण्णं पुप्फकलंडकजिण्णुज्जाणं पवेशिअ बाहुपाशबलक्कालेण वशंतशेणिआ मालिदा, ण मए। [ अहो अधिकरणभोजकाः ! किमिति न जानामि ?। तां तादृशीं नगरमण्डनं काञ्चनशतभूषणां केनापि कुपुत्रेणार्थकल्यवर्तस्य कारणाच्छून्यं पुष्पकरण्डकजीर्णोद्यानं प्रवेश्य बाहुपाशबलात्कारेण वसन्तसेना मारिता, न मया। ] ( इत्यर्धोक्ते मुखमावृणोति )

---

नहीं बिगाड़ सकता है। ( क्योंकि मैं राजा का सम्बन्धी हूँ। ) ( इसी स्नेह से ) मेरे जीजा ने मुझको सब उद्यानों में श्रेष्ठ "पुष्पकरण्डक नामक" जीर्णोद्यान दिया है। मैं प्रतिदिन उसमें भ्रमण करने, देखने, सुखवाने, स्वच्छ करवाने ( बढ़े हुए पत्ते आदियों को ) कटवाने जाया करता हूँ। भाग्यवश मैंने वहाँ एक स्त्री के मृत शरीर को पड़ा हुआ देखा अथवा नहीं देखा।

अधिकरणिक—क्या जानते हो कि कौन स्त्री मरी है ?

शकार—अधिकरणभोजको ! क्यों न जानूँगा ? ( बात यह है कि— ) उस नगरी की शोभा, सैकड़ों सुवर्णालङ्कारों से विभूषित "वसन्तसेना" को किसी दुष्ट ने निर्जन "पुष्पकरण्डक जीर्णोद्यान" में प्रवेश कर तुच्छ धन के लिए बाहुपाश में संयत कर बलात्कारपूर्वक मार डाला। मैंने नहीं—( मारा )।

( आधी बात कहने पर ही मुख बन्द कर लेता है। )

अधिकरणिकः—अहो नगररक्षिणां प्रमादः । भोः श्रेष्ठिकायस्थौ ! न मयेति व्यवहारपदं प्रथममभिलिख्यताम् ।

कायस्थः—जं अज्जो आणवेदि । ( तथा कृत्वा ) अज्ज ! लिहिदं । [ यदार्य आज्ञापयति । आर्य ! लिखितम् । ]

शकारः—( स्वगतम् ) हीमादिके, उत्तलाअंतेण विअ पाअशपिंडालकेण अज्ज मए अत्ता एव्व णिण्णाशिदो । भोदु, एव्वं दाव । ( प्रकाशम् ) अहो अधिअलणभोइआ ! णं भणामि, मए ज्जेव दिश्टा । किं कोलाहलं कलेध ? । [ आश्चर्यम्, त्वरां कुर्वाणेनेव पायसपिण्डारकेणाद्य मयात्मैव

---

केनापि वसन्तसेना मारिता, "न मया" इति व्यवहारपदमात्मन एव विनाशकरमिति स्वमूर्खतां प्रकटयितुमाह शकारः—हीमादिके–इति । आश्चर्यम् ! यथा दुग्धनिर्मितं क्षीरादिपदार्थं भोक्तुकामः कोऽपि त्वरां कुर्वाणो जिह्वामेव दग्धां करोति तथैव त्वरमाणेन मया "न मये"ति ब्रुवता स्वात्मविनाश एव कृतः, इति भावः ।

---

अधिकरणिक—ओह ! नगररक्षकों का बड़ा प्रमाद है ! सेठ और कायस्थ जी ! "मैंने नहीं" इस शब्द को पहिले लिखिये ।

कायस्थ—जो आज्ञा ! ( लिखकर ) आर्य ! लिख दिया ।

शकार—( स्वयं ही ) आश्चर्य है ! शीघ्रता करते हुए मैंने ( गरम-गरम ) खीर पीने वाले मनुष्य की भाँति अपना विनाश ही कर लिया है । ( जिस प्रकार कोई मनुष्य असन्तोषपूर्वक एकदम खीर पर टूट पड़ता है और उष्ण होने के कारण अपना मुख जला लेता है वैसे ही मैंने भी उतावली में "मैंने नहीं" कहकर अपना विनाश ही कर लिया है । ) अथवा—( जैसे खीर में लड्डू मसलकर डालते समय वह बँधा हुआ न रहकर बिखर जाता है वैसे ही आत्म-नियन्त्रण न कर मैंने "मैंने नहीं" यह कहकर बना-बनाया खेल बिगाड़ दिया है । )

निर्नाशितः । भवतु । एवं तावत्, अहो अधिकरणभोजकाः ! ननु भणामि, मयैव दृष्टा । किं कोलाहलं कुरुत ? । ] ( इति पादेन लिखितं प्रोञ्छति )

अधिकरणिकः—कथं त्वया ज्ञातं यथा खल्वर्थनिमित्तं बाहुपाशेन व्यापादिता ? ।

शकारः—हंहो, णूणं पडिशूणाए मोघट्ठाणाए गीवालिआए णिश्शुवण्ण-केहिं आहलणट्ठाणेहिं तक्केमि । [ हंहो, नूनं परिशून्यया मोघस्थानया ग्रीवालि-कया निःसुवर्णकैराभरणस्थानैस्तर्कयामि । ]

श्रेष्ठिकायस्थौ—जुज्जदि विअ । [ युज्यत इव । ]

शकारः—( स्वगतम् ) दिश्टिआ पच्चुज्जीविद म्हि । अविद मादिके । [ दिष्टया प्रत्युज्जीवितोऽस्मि । अविद मादिके । ]

श्रेष्ठिकायस्थौ—भो ! कं एसो ववहारो अवलंबदि ? । [ भोः, कमेष व्यवहारोऽवलम्बते ? । ]

अधिकरणिकः—इह हि द्विविधो व्यवहारः ।

श्रेष्ठिकायस्थौ—केरिसो ? । [ कीदृशः ? । ]

---

तो ऐसा कहता हूँ । ( प्रकाश में ) अरे न्यायाधिकारियो ! कहता तो हूँ कि "मैंने ही देखी है ।" ( बिना सुने-समझे ही ) यह क्या कोलाहल ( गड़बड़ ) करते हो ? ( पैर से लिखे हुए को पोंछ देता है । )

अधिकरणिक—तुमने कैसे जाना कि—"धन के लिए बाहुपाश से जकड़ कर मार दी गई ?"

शकार—उसकी शून्य ग्रीवा तथा आभूषण-रहित ( पहिनने के ) अङ्गों को देखकर मैं यह अनुमान करता हूँ ।

श्रेष्ठिकायस्थ—ठीक-सा लगता है ।

शकार—( स्वयं ही ) सौभाग्य से मैं तो जीवित-सा हो गया हूँ ।

श्रेष्ठिकायस्थ—यह व्यवहार किस पर आश्रित है ?

अधिकरणिक—यह व्यवहार दो प्रकार का है ।

श्रेष्ठिकायस्थ—कैसा ?

अधिकरणिकः—वाक्यानुसारेण, अर्थानुसारेण च। यस्तावद्वाक्यानुसारेण, स खल्वर्थिप्रत्यर्थिभ्यः। यश्चार्थानुसारेण स चाधिकरणिकबुद्धिनिष्पाद्यः।

श्रेष्ठिकायस्थौ—ता वसंतसेणामादरं अवलंबदि ववहारो। [ तद्वसन्तसेनामातरमवलम्बते व्यवहारः। ]

अधिकरणिकः—एवमिदम्। भद्र शोधनक! वसन्तसेनामातरमनुद्वेजयन्नाह्वय।

शोधनकः—तधा। ( इति निष्क्रम्य, गणिकामात्रा सह प्रविश्य ) एदु एदु अज्जा। [ तथा, एत्वेत्वार्या। ]

वृद्धा—गदा मे दारिआ मित्तघरअं अत्तणो जोव्वणं अनुभविदुं। एसो उण दीहाऊ भणादि—'आअच्छ, अधिअरणिओ सद्दावेदि; ता मोहपरवसं विअ अत्ताणअं अवगच्छामि। हिअअं मे थरथरेदि। अज्ज! आदेसेहि मे अधिअरणमंडवस्स मग्गं। [ गता मे दारिका मित्रगृहमात्मनो यौवनमनुभवितुम्। एष पुनर्दीर्घायुर्भणति—'आगच्छ, अधिकरणिक

---

अधिकरणिक—(१) वाक्यानुसारी और (२) अर्थानुसारी। जो वाक्य के अनुसार है वह तो "अर्थिप्रत्यर्थी" ( "मुद्दई और मुद्दालह" ) से करना चाहिए और दूसरा जो कि अर्थ के अनुसार है वह अपनी बुद्धि के बल से करणीय है।

श्रेष्ठिकायस्थ—तब तो यह व्यवहार "वसन्तसेना" की माता पर अवलम्बित है।

अधिकरणिक—ऐसा ही है। भद्र शोधनक! "वसन्तसेना" की माता को बिना घबराये हुए ले आओ!

शोधनक—बहुत अच्छा।

( बाहर जा पुनः "वसन्तसेना" की माता के साथ प्रवेश कर ) आर्ये! इधर से आइये।

वृद्धा—मेरी पुत्री ( "वसन्तसेना" ) अपने मित्र के घर यौवन-सुख का अनुभव करने के लिए गई है। ( दूसरी ओर ) यह दीर्घायु कहता है कि—

आह्वयति; तन्मोहपरवशमिवात्मानमवगच्छामि । हृदयं मे प्रकम्पते । आर्य ! आदिश मह्यमधिकरणमण्डपस्य मार्गम् । ]

शोधनकः—एदु एदु अज्जा । [ एत्वेत्वार्या । ]

( उभौ परिक्रामतः )

शोधनकः—एदं अधिअरणमंडवं । एत्थ पविसदु अज्जा । [ एषोऽधिकरणमण्डपः । अत्र प्रविशत्वार्या । ]

( इत्युभौ प्रविशतः )

वृद्धा—( उपसृत्य ) सुहं तुम्हाणं भोदु भावमिस्साणं । [ सुखं युष्माकं भवतु भावमिश्राणाम् । ]

अधिकरणिकः—भद्रे ! स्वागतम्; आस्यताम् ।

वृद्धा—तधा । [ तथा । ] ( इत्युपविष्टा )

शकारः—( साक्षेपम् ) आगदाशि वुड्ढकुट्टणि ! आगदाशि । [ आगतासि वृद्धकुट्टनि ! आगतासि । ]

अधिकरणिकः—अये, त्वं किल वसन्तसेनाया माता ।

---

"चलो ! अधिकरणिक बुलाते हैं।" इस कारण से मैं अपने को मोह-परवश-सी समझ रही हूँ । मेरा हृदय काँप रहा है। आर्य ! मुझे न्यायालय का मार्ग बताओ ।

शोधनक—आर्ये ! इधर से आइये ।

[ दोनों घूमते हैं । ]

शोधनक—यह न्यायालय है । आप इसमें प्रवेश करें ।

[ दोनों प्रवेश करते हैं । ]

वृद्धा—( समीप जाकर ) सम्माननीय ! आप सानन्द रहें ।

अधिकरणिक—आर्ये ! स्वागत है ! बैठिये ।

वृद्धा—बहुत अच्छा ! [ बैठ जाती है । ]

शकार—( उपालम्भपूर्वक ) आ गई बूढ़ी कुटनी ! आ गई !

अधिकरणिक—आप "वसन्तसेना" की माता हैं ?

वृद्धा—अध इं । [ अथ किम् । ]

अधिकरणिकः—अथेदानीं वसन्तसेना क गता ? ।

वृद्धा—मित्तघरअं । [ मित्रगृहम् । ]

अधिकरणिकः—किंनामधेयं तस्या मित्रम् ? ।

वृद्धा—( स्वगतम् ) हद्धी हद्धी; अदिलज्जणीअं खु एदं । ( प्रकाशम् ) जणस्स पुच्छणीओ अअं अत्थो, ण उण अधिअरणिअस्स । [ हा धिक् हा धिक्, अतिलज्जनीयं खल्विदम् । जनस्य पृच्छनीयोऽयमर्थः, न पुनरधिकरणिकस्य । ]

अधिकरणिकः—अलं लज्जया; व्यवहारस्त्वां पृच्छति ।

श्रेष्ठिकायस्थौ—ववहारो पुच्छदि । णत्थि दोसो, कधेहि । [ व्यवहारः पृच्छति । नास्ति दोषः, कथय । ]

वृद्धा—कधं ववहारो ? । जइ एव्वं, ता सुणंतु अज्जमिस्सा । सो खु सत्थवाहविणअदत्तस्स णत्तिओ, साअरदत्तस्स तणओ, सुगहीदणा-

---

वृद्धा—जी हाँ ।

अधिकरणिक—इस समय "वसन्तसेना" कहाँ गई हैं ?

वृद्धा—( अपने ) मित्र के घर ।

अधिकरणिक—उनके मित्र का क्या नाम है ?

वृद्धा—( स्वगत ) धिक् ! धिक् ! यह तो अत्यन्त लज्जाकर ( बात ) है । ( प्रकाश में ) यह बात साधारण मनुष्यों के द्वारा पूछने योग्य है, "अधिकरणिक" के नहीं । ( अर्थात्—यदि कोई साधारण मनुष्य ऐसा पूछता है तो कोई बात नहीं थी; परन्तु न्यायाधिकारी का यह प्रश्न करना उचित नहीं है । )

अधिकरणिक—लज्जित मत होइये । व्यवहार आपसे पूछता है । ( व्यवहार के कारण आपसे पूछा जा रहा है । हम अकारण ही प्रश्न नही कर रहे हैं । )

श्रेष्ठिकायस्थ—व्यवहार पूछता है । ( अतः ) बताने में कोई दोष नहीं है । कहिये ।

वृद्धा—क्या व्यवहार है ? तो सुनिये । "सार्थवाह विनयदत्त" के पौत्र तथा

महेओ अज्जचारुदत्तो णाम, सेट्ठिचत्तरे पडिवसदि। तहिं मे दारिआ जोव्वणसुहं अणुभवदि। [ कथं व्यवहारः ?। यद्येवं, तदा शृण्वन्त्वार्यमिश्राः। स खलु सार्थवाहविनयदत्तस्य नप्ता, सागरदत्तस्य तनयः, सुगृहीतनामधेय आर्यचारुदत्तो नाम, श्रेष्ठिचत्वरे प्रतिवसति। तत्र मे दारिका यौवनसुखमनुभवति। ]

शकारः—शुदं अज्जेहिं ?। लिहीअंदु ? एदे अक्खला। चालुदत्तेण शह मम विवादे। [ श्रुतमार्यैः ?। लिख्यन्तामेतान्यक्षराणि। चारुदत्तेन सह मम विवादः। ]

श्रेष्ठिकायस्थौ—चारुदत्तो मित्तो त्ति णत्थि दोसो। [ चारुदत्तो मित्रमिति नास्ति दोषः। ]

अधिकरणिकः—व्यवहारोऽयं चारुदत्तमवलम्बते।

श्रेष्ठिकायस्थौ—एव्वं विअ। [ एवमिव। ]

अधिकरणिकः—धनदत्त ! वसन्तसेनार्यचारुदत्तस्य गृहं गतेति लिख्यतां व्यवहारस्य प्रथमः पादः। कथमार्यचारुदत्तोऽप्यस्माभिराह्वाययितव्यः ?। अथवा व्यवहारस्तमाह्वयति। भद्र शोधनक ! गच्छ। आर्यचारुदत्तं स्वैरमसंभ्रान्तमनुद्विग्नं सादरमाह्वय, "प्रस्तावेन अधिकरणि-

---

"सागरदत्त" के पुत्र स्वनामधन्य "आर्य चारुदत्त" के यहाँ जो कि 'श्रेष्ठिचत्वर' पर रहते हैं, मेरी पुत्री यौवनसुख का अनुभव करने गई है।

शकार—आपने सुना ? इन अक्षरों को लिखिये। "चारुदत्त" के साथ मेरा विवाद है।

श्रेष्ठिकायस्थ—"चारुदत्त" मित्र है अतः कोई दोष नहीं है।

अधिकरणिक—( तो भी ) यह अभियोग "चारुदत्त" पर अवलम्बित है।

श्रेष्ठिकायस्थ—ऐसा ही है।

अधिकरणिक—धनदत्त ! "वसन्तसेना" "आर्य चारुदत्त" के घर गई" व्यवहार का यह प्रथमपाद लिखिये। क्या हमें "आर्य चारुदत्त" को भी बुलाना पड़ेगा ? अथवा, व्यवहार उन्हें बुला रहा है। भद्र शोधनक ! जाओ ! "आर्य चारुदत्त" को बिना घबराये हुए—"अधिकरणिक आप से मिलना चाहते हैं"

कस्त्वां द्रष्टुमिच्छति" इति ।

शोधनकः—जं अज्जो आणवेदि । ( इति निष्क्रान्तः, चारुदत्तेन सह प्रविश्य च ) एदु एदु अज्जो । [ यदार्य आज्ञापयति । एत्वेत्वार्यः । ]

चारुदत्तः—( विचिन्त्य )

परिज्ञातस्य मे राज्ञा शीलेन च कुलेन च ।
यत्त सत्यमिदमाह्वानमवस्थामभिशङ्कते ॥८॥

( सवितर्कं, स्वगतम् )

ज्ञातो नु किं स खलु बन्धनविप्रयुक्तो,
मार्गागतः प्रवहणेन मयापनीतः ।
चारेक्षणस्य नृपतेः श्रुतिमागतो वा,

---

अकारणमेवाहूतश्चारुदत्तश्चिन्तां प्रदर्शयति—परिज्ञातस्येति । मम शीलम्, कुलम् च राजा सम्यग् वेत्ति, तथापि यदाहूतोऽस्मि, अतः कामप्यवस्थां=दुरवस्थामेवाभिशङ्कते चेतः । दरिद्रस्य ममोपरि कदाचित् केनचित् कश्चिदभियोगः स्थापितस्तदर्थमेवाहूतोऽस्मीति भावः ॥८॥

पुनः स्वाकारणे कारणान्तरं विकल्पयति—ज्ञात इति । अथवा—मार्गं समागच्छन् स आर्यको मम रथे समारूढः ! अयं समाचारश्चारेक्षणस्य नृपतेः परिज्ञातो·

---

यह कहकर धीरे-धीरे आदरपूर्वक बुला लाओ ।

शोधनक—जो आज्ञा ! ( चला जाता है । पुनः "चारुदत्त" के साथ प्रवेश कर ) आर्य ! इधर से, इधर से ।

चारुदत्त—( सोचकर )

"राजा यद्यपि मेरा शील और कुल जानता है तथापि उसका यह आह्वान मेरे चित्त में किसी दुरवस्था की आशङ्का कर रहा है ।" ॥ ८ ॥

( तर्कपूर्वक स्वयं ही )

"मैंने मार्ग में रथ से आये हुए "आर्यक" को बन्धन खोलकर भगा दिया है" क्या यह रहस्य "चारचक्षु" ( दूत ही जिसके नेत्र हैं ) राजा ने जान अथवा

**येनाहमेवमभियुक्त इव प्रयामि ॥९॥**

अथवा किं विचारितेन ?। अधिकरणमण्डपमेव गच्छामि। भद्र शोधनक ! अधिकरणस्य मार्गमादेशय।

शोधनकः—एदु एदु अज्जो। [ एत्वेत्वार्यः। ]

( इति परिक्रामतः )

चारुदत्तः—( सशङ्कम् ) तत्किमपरम् ?

**रूक्षस्वरं वाशति वायसोऽय-**
**ममात्यभृत्या मुहुराह्वयन्ति।**
**सव्यं च नेत्रं स्फुरति प्रसह्य,**
**ममानिमित्तानि हि खेदयन्ति ॥१०॥**

---

भवेत् किमु ? यतोऽभियुक्त इवाहूतोऽस्मि ! वसन्ततिलका च्छन्दः ॥ ९ ॥

अनिमित्तमालोक्य विचारयति चारुदत्तः—रूक्षस्वरमिति । अये ! अय काको रूक्षस्वरेण यथा स्यात्तथा वाशति=शब्दं करोति, मन्त्रि-सेवकाश्च मामाकारयन्ति, वामं नेत्रं च स्फुरति, एतानि सर्वाणि अशुभशकुनानि मां सखेदं कुर्वन्ति। न जाने कीदृशो दिवसोऽद्य समुपस्थितः ? इति भावः।

अत्रोपजातिश्छन्दः ॥१०॥

---

सुन लिया है ? जिससे कि मैं इस प्रकार अभियुक्त की भाँति जा रहा हूँ।"॥९॥

अथवा, सोच-विचार से क्या लाभ ? न्यायालय में ही जाता हूँ। भद्र शोधनक ! न्यायालय का मार्ग बताओ।

शोधनक—आर्य ! इधर से, इधर से।

[ घूमते हैं। ]

चारुदत्त—( शङ्का सहित ) तो क्यों दूसरी ओर—

"यह कौआ बड़े ही रूखे स्वर से चिल्ला रहा है, मन्त्रि और सेवक मुझको बार बार बुला रहे हैं तथा मेरी बाँयीं आँख फड़क फड़क कर मुझको अनिष्ट की सूचना दे कर खिन्न कर रहे हैं।" ॥ १० ॥

शोधनकः—एदु एदु अज्जो सैरं असंभंतं। [ एत्वेत्वार्यः स्वैरमसंभ्रान्तम् । ]

चारुदत्तः—( परिक्रम्याग्रतोऽवलोक्य च )

शुष्कवृक्षस्थितो ध्वाङ्क्ष आदित्याभिमुखस्तथा ।
मयि चोदयते वामं चक्षुर्घोरमसंशयम् ॥११॥

( पुनरन्यतोऽवलोक्य ) अये ! कथमयं सर्पः ? ।

मयि विनिहितदृष्टिर्भिन्ननीलाञ्जनाभः,
स्फुरितविततजिह्वः शुक्लदंष्ट्राचतुष्कः ।

---

पुनरनिमित्तमेव प्रदर्शयति चारुदत्तः—शुष्क–इति । ध्वाङ्क्षः = काकः सूर्याभिमुखः सन् शुष्के वृक्षे स्थितः शब्दं करोतीति शेषः, मम च वामनेत्रं स्फुरति, अतो निःसन्देहं मयि घोरां विपत्तिं सूचयन्ति सर्वाण्यनिमित्तानीति चिन्तितोऽस्मीति भावः ॥११॥

अशकुनान्तरमेवाह—मयि–इति । भिन्नं = चूर्णितं यन्नीलाञ्जनं तद्वदाभा यस्य सः स्फुरिता = देदीप्यमाना वितता = विस्तृता जिह्वा यस्य सः, शुक्लं दंष्ट्राणां चतुष्कं यस्य सः जिह्मितं = कुटिलतया यथा स्यात्तथा आध्मातः = वायुना परिपूर्णः

---

शोधनक—आप बिना किसी घबराहट से धीरे-धीरे इधर से आइये ।

चारुदत्त—( घूम कर तथा आगे देखकर )

"यह कौआ सूखे वृक्ष पर सूर्याभिमुख हो बैठकर "काँव-काँव" कर रहा है। और मेरा वाम-नेत्र फड़क रहा है। अतः ये निस्सन्देह मेरे अनिष्ट की सूचना दे रहे हैं। ( अथवा—यह शुष्कवृक्षस्थित काक मेरी ओर अपनी बाँयीं आँख फिरा रहा है। यह भी एक अशकुन है। )" ॥ ११ ॥

( पुनः आगे की ओर देखकर ) अरे ! क्या यह सर्प है !—

"नीले अञ्जन के चूर्ण के समान कान्तिवाला, लम्बी लम्बी जीभ लपलपाता हुआ, श्वेत दाढ़ों वाला, हवा से फूला तथा अङ्गों को कुटिल करता हुआ

अभिपतति, सरोषो जिह्मिताध्मातकुक्षि-
भुंजगपतिरयं मे मार्गमाक्रम्य सुप्तः ॥१२॥

अपि च, इदम्

स्खलति चरणं भूमौ न्यस्तं न चार्द्रतमा मही,
स्फुरति नयनं, वामो बाहुर्मुहुश्च विकम्पते ।
शकुनिरपरश्चायं तावद्विरौति हि नैकशः,
कथयति महाघोरं मृत्युं न चात्र विचारणा॥१३॥

---

क्षयस्य सः, मयि विनिहितदृष्टिः सन् एष भुजगपतिः मार्गमाक्रम्य सुप्तः सन् सरोषः इतो मामनु समभिपतति । इदमप्यशुभमेव । न जानेऽद्य सर्वोऽप्यशुभसंघातः किं करिष्यतीत्याशयः । अत्रोपमाऽलङ्कारः । मालिनी च्छन्दः ॥१२॥

अन्यदप्यशकुनमाह—स्खलति—इति । पृथिव्यां संस्थापितश्चरणो विचलितो भवति, मही च नार्द्रा । आर्द्रायामेव पृथिव्यां तथा पादस्खलनं सम्भाव्यते । इदं मे वामं नेत्रं, स्फुरति । वामभुजोऽपि विशेषरूपेण कम्पितो भवति । अयं च शकुनिः = काकादिपक्षी, वारंवारं शब्दं करोति । ततः सर्वोऽप्ययमशुभलक्षणसमुदायो मम मृत्युं कथयति । अत्र विचारस्यावकाश एव नास्ति । सर्वथा देवता एव कल्याणं करिष्यन्ति । अत्र काव्यलिङ्गालङ्कारः । हरिणी च्छन्दः ॥१३॥

---

यह सर्प मेरी ओर आँखें लगा कर क्रोध से आ रहा है ।" ॥ १२ ॥

और भी यह—

"भूमि पर रखे हुए पैर फिसल रहे हैं—परन्तु पृथ्वी गीली नहीं है । मेरी बायीं आँख तथा भुजा बार बार फड़क रही है । ( दूसरी ओर ) यह पक्षी बारम्बार चिल्ला रहा है । इस प्रकार ये सब मेरी भयङ्कर मृत्यु की सूचना दे रहे हैं—इस में सोचने-विचारने की आवश्यकता नहीं है । ( यह सर्वथा निश्चित ही है । )" ॥ १३ ॥

सर्वथा देवताः स्वस्ति करिष्यन्ति ।

शोधनकः—एदु एदु अज्जो । इमं अधिअरणमंडवं पविसदु अज्जो । [ एत्वेत्वार्यः । इममधिकरणमण्डपं प्रविशत्वार्यः । ]

चारुदत्तः—( प्रविश्य, समन्तादवलोक्य ) अहो, अधिकरणमण्डपस्य परा श्रीः । इह हि

चिन्तासक्तनिमग्नमन्त्रिसलिलं दूतोर्मिशङ्खाकुलं
पर्यन्तस्थितचारनक्रमकरं नागाश्वहिंस्राश्रयम् ।
नानावाशककङ्कपक्षिरचितं कायस्थसर्पास्पदं,

---

अधिकरणमण्डपस्योत्कृष्टां शोभां वर्णयति चारुदत्तः—चिन्तासक्तेति । इदमधिकरणस्थानं समुद्रायते = समुद्रतुल्यं भवति । समुद्रे यानि वस्तूनि भवन्ति, तान्येवात्रापीति प्रतिपादयति । अत्र चिन्तायामासक्ताः = संलग्नाः अत एव निमग्नाः जले त्रुडिताः मन्त्रिण एव सलिलम् , दूता एवात्रोर्मयः, शङ्खाश्च तैराकुलम् = व्याप्तम् , पर्यन्ते स्थिताश्चारा एव नक्रास्तथा मकराः सन्ति यत्र, नागाः = गजाः, अश्वाश्च हिंस्राः = घातकाः जलजन्तवोऽत्र सन्ति, नानाप्रकारेण वाशकाः = शब्दं कुर्वन्तः कर्मचारिण एवात्र "कङ्क" संज्ञकाः पक्षिणः सन्ति । समुद्रोपरि बहुविधं शब्दं कुर्वाणाः पक्षिणो मत्स्यादि जिघृक्षया भ्रमन्ति, अत्र च शब्दं कुर्वन्तः कर्मकराः, इति साम्यमुचितमेव, कायस्थाः = लेखकविशेषाः अत्र सर्पाः सन्ति, नीत्या च तटस्य क्षोभः क्रियते, समुद्रे चापि हिंस्रा जन्तवो जलाद् बहिर्निर्गत्य

---

सब प्रकार से देवता कल्याण करेंगे ।

शोधनक—आइये, आइये । इस न्यायालय में प्रवेश करिये ।

चारुदत्त—( प्रविष्ट हो, चारों ओर देख कर ) ओह ! न्यायालय की अलौकिक शोभा ! यहाँ—

"यह 'राजकरण' ( कचहरी ) समुद्र-सा लग रहा है । इसमें चिन्तामग्न मन्त्रीगण जल हैं, दूत लहरों तथा शङ्खों के समान हैं, चारों ओर रहने वाले 'चार' ( गुप्तचर ) ही नक्र और मकर हैं, हाथी घोड़ों के रूप में यह भयङ्कर

नीतिक्षुण्णतटं च राजकरणं हिंस्रैः समुद्रायते ॥१४॥

भवतु। ( प्रविशञ्छिरोभिघातमभिनीय, सवितर्कम् ) अहह, इदमपरम्

सव्यं मे स्पन्दते चक्षुर्विरौति वायसस्तथा।
पन्थाः सर्पेण रुद्धोऽयं, स्वस्ति चास्मासु दैवतः॥१५॥

---

तां विक्षुब्धं कुर्वन्ति, अतः सत्यमेवेदं स्थान समुद्राचरणं करोति। अत्रोपमाऽलङ्कारः। शार्दूलविक्रीडितं च छन्दः ॥१४॥

अधिकरणाभ्यन्तरे प्रवेशं चिकीर्षतश्चारुदत्तस्य शिरसि अभिघातः ( टक्कर ) संलग्नः, इत्थं संक्षेपतः सर्वानिशकुनपदार्थान् पुनर्वर्णयति—सव्यं मे, इति। वामं नेत्रं स्फुरति काकः कुशब्दं करोति, मार्गश्च सर्पेणावरुद्धः, एभिरशकुनैः समापततो विघ्नाद् दैवतमेव = देवा एव, स्वस्ति करोतु = मंगलमातनोतु।

---

जन्तुओं से व्याप्त है, शब्द करने वाले कर्मचारी लोग बगुले आदि हैं, कायस्थगण (लेखक—मुहर्रिर-मुंशी आदि) विषैले सर्प हैं तथा इस का तट नीति से जर्जर है। इस प्रकार यह "अधिकरणमण्डप" अनेक हिंस्र जीवों से समुद्रवत् प्रतीत हो रहा है।"❀ ॥ १४ ॥

अस्तु; ( प्रवेश करते हुए सिर में टक्कर लगने का प्रदर्शन कर तर्कपूर्वक ) खेद है! यह दूसरा—( अमङ्गल है। )

"मेरा बाँया नेत्र फड़क रहा है तथा यह कौआ बड़े बुरे स्वर से "काँव-काँव" कर रहा है और सर्प ने मार्ग रोक लिया है। अतः इन आकस्मिक अपशकुनों से देवगण मेरा मङ्गल करें।" ॥ १५ ॥

---

❀ "इस श्लोक में "अधिकरण" का कैसा सुन्दर एवं सच्चा वर्णन किया गया है! यह कविवर "शूद्रक" का अपना अनुभव है। उनका यह पद्य आज के राजकरणों में यथार्थतः अपना स्वरूप दिखला रहा है। पहिले-पहल 'अधिकरण' में प्रवेश करने वाला व्यक्ति पदे-पदे इस कठिनता का अनुभव करता है। कर्मचारी आदि हिंस्र जीव उसे व्यथित कर डालते हैं।" कितना सजीव, मार्मिक और यथार्थ चित्रण है।"

तावत् प्रविशामि । ( इति प्रविशति )

अधिकरणिकः—अयमसौ चारुदत्तः । य एषः

घोणोन्नतं मुखमपाङ्गविशालनेत्रं,
नैतद्धि भाजनमकारणदूषणानाम् ।
नागेषु गोषु तुरगेषु तथा नरेषु,
न ह्याकृतिः सुसदृशं विजहाति वृत्तम् ॥१६॥

---

अत्र दैवतशब्दस्य पुंस्त्वे प्रयोगः "पुंसि वा दैवतं स्त्रियाम्" इत्यमर-प्रामाण्याद् युक्त एव, तथापि कविभिरनादृतत्त्वादत्र "अप्रयुक्ताख्यो" दोषः । दृश्यते चायं महाकविप्रयोगेष्वपि । यथा नैषधे—

"पद्मान् हि मे प्रावृषि खञ्जरीटान्" इति । पथ्यावक्त्रं च्छन्दः ॥१५॥

चारुदत्तं निरीक्ष्याधिकरणिकस्तस्य वर्णनं ( स्वगतं ) करोति—घोणोन्नतमिति । "आकृतिरेव गुणान् कथयति" इति लौकिकाभाणकानुसारं सुन्दराकृतिरयं चारुदत्तोऽनार्य-कार्यं कर्तुं न प्रभवति इत्याशयेनाह—अस्य मुखं घोणेन = नासिकया समुन्नतम् । उन्नता नासिका सौभाग्यशालितां सूचयति । अपाङ्गे = नेत्रप्रान्ते विशाले नेत्रे स्तः, एवंविधाकृतिसम्पन्नोऽयं दूषणानां भाजनं भवितुं नैव शक्नोति । यतो गजेषु, गोषु, अश्वेषु मनुष्येषु चाकृतिः सुसदृशं सद्वृत्तं नैव विजहाति = परित्यजति । तथा चोक्तं केनापि सुकविना सूक्तिरत्नम्—

"आकारैरिङ्गितैर्गत्या, चेष्टया भाषणेन च ।
नेत्र-वक्त्र-विकारैश्च, लक्ष्यतेऽन्तर्गतं मनः ।" इति ।

---

तो प्रवेश करता हूँ ।  [ प्रवेश करता है । ]

अधिकरणिक—( स्वगत ) यह "चारुदत्त" हैं ।

"इनका मुख लम्बी नासिका तथा बड़े बड़े नेत्रों से सुशोभित है । अतः ( मैं विचार करता हूँ कि ) यह इस प्रकार के दोषों के कर्ता नहीं हैं । क्योंकि— हाथी, घोड़े, गौ तथा मनुष्यों की आकृति सत्कार्य का परित्याग नहीं करती है ।" ॥ १६ ॥

चारुदत्तः—भोः ! अधिकृतेभ्यः स्वस्ति । हंहो नियुक्ताः ! अपि कुशलं भवताम् ? ।

अधिकरणिकः—( ससंभ्रमम् ) स्वागतमार्यस्य । भद्र शोधनक ! आर्यस्यासनमुपनय ।

शोधनकः—( आसनमुपनीय ) एदं आसणं । एत्थ उवविसदु अज्जो । [ इदमासनम् । अत्रोपविशत्वार्यः । ]

( चारुदत्त उपविशति )

शकारः—( सक्रोधम् ) आगदेशि ले इश्तिआघादआ ! आगदेशि ? । अहो णाए ववहाले, अहो धम्मे ववहाले; जं एदाह इश्थिआघादकाह आशणे दीअदि । ( सगर्वम् ) भोदु णं दीअदु । [ आगतोऽसि रे स्त्रीघातक ! आगतोऽसि ? । अहो न्याय्यो व्यवहारः, अहो धर्म्यो व्यवहारः; यदेतस्मै स्त्रीघातकायासनं दीयते । भवतु, ननु दीयताम् । ]

---

अत्र दीपकार्थान्तरन्यासयोः साङ्कर्यम् । वसन्ततिलका च्छन्दः ॥१६॥

चारुदत्ताय दीयमानमासनादिसत्कारमसहमानः शकारः सर्वथाऽनुचितोऽयं स्त्रीघातकस्य सत्कारः, इति सोल्लुण्ठमाह—अहो ! णाए इति । नायं न्यायसंगतः, धर्मयुक्तो वा व्यवहार इति भावः ।

---

चारुदत्त—आपका कल्याण हो । आप अपनी नियुक्ति पर कुशल से तो हैं !

अधिकरणिक—( घबराहट से ) आपका स्वागत है । भद्र शोधनक ! आपके लिए आसन लाओ !

शोधनक—( आसन लाकर ) यह आसन है आप इस पर विराजिये ।

[ "चारुदत्त" बैठ जाता है । ]

शकार—( क्रोधसहित ) अरे ! स्त्रीघातक ! आ गया ? ओह ! यह न्याय तथा धर्मपूर्ण 'व्यवहार' है जो इस स्त्रीघातक को आसन दिया जा रहा है ! ( गर्व सहित ) अच्छा दीजिये ! ( जीजा से कहकर सबको ठीक करा दूँगा । )

अधिकरणिकः—आर्य चारुदत्त ! अस्ति भवतोऽस्या आर्याया दुहित्रा सह प्रसक्तिः प्रणयः प्रीतिर्वा ? ।

चारुदत्तः—कस्याः ? ।

अधिकरणिकः—अस्याः । ( इति वसन्तसेनामातरं दर्शयति )

चारुदत्तः—( उत्थाय ) आर्ये ! अभिवादये ।

वृद्धा—जाद ! चिरं मे जीव । ( स्वगतम् ) अअं सो चारुदत्तो । सुणिक्खित्तं खु दारिआए जोव्वणं । [ जात ! चिरं मे जीव । अयं स चारुदत्तः । सुनिक्षिप्तं खलु दारिकया यौवनम् । ]

अधिकरणिकः—आर्य ! गणिका तव मित्रम् ? ।

( चारुदत्तो लज्जां नाट्यति )

शकारः—

**लज्जाए भीलुदाए वा,**

---

अधिकरणिको वसन्तसेनाप्रेम-सम्बन्धे पृच्छति—आर्येति । आर्य चारुदत्त ! किंस्विदस्या वृद्धायाः सुतायां भवतः स्नेहानुबन्धः, ( प्रसक्तिः = प्रकृष्टः स्नेहः ) प्रणयः = रागातिशयः, प्रीतिः = साधारणः स्नेहो वा वर्तते ?

गणिका मम मित्रमिति प्रतिपादयितुं लज्जमानं चारुदत्तं निरीक्ष्य शकारो वक्ति—लज्जाए–इति । भोः, चारुदत्त ! अर्थस्य कारणात् तां स्त्रियं स्वयं मार-

---

अधिकरणिक—आर्य चारुदत्त ! क्या आप का इन 'आर्या' की पुत्री ( "वसन्तसेना" ) के साथ प्रगाढ़ प्रेम, अनुराग अथवा ( साधारण ) स्नेह है ?

चारुदत्त—किसकी ? ( पुत्री के साथ )

अधिकरणिक—इनकी । ( "वसन्तसेना" की माता को दिखलाता है )

चारुदत्त—( उठकर ) आर्ये ! प्रणाम करता हूँ ।

वृद्धा—वत्स ! चिरञ्जीव ! ( स्वगत ) यही वह "चारुदत्त" है । तब तो पुत्री ने अपना यौवन योग्य हाथों में सौंपा है ।

अधिकरणिक—आर्य ! "वेश्या" ( "वसन्तसेना" ) आपकी मित्र है ?

[ "चारुदत्त" लज्जा दिखलाता है । ]

चालित्तं अलिए णिगूहिदुं।
शअं मालिअ अत्थकालणाए,
दाणिं गूहदि ण तं हि भश्टके ॥१७॥

[ लज्जया भीरुतया वा चारित्रमलीकं निगूहितुम्।
स्वयं मारयित्वार्थकारणादिदानीं गूहति न तद्धि भट्टकः ॥ ]

श्रेष्ठिकायस्थौ—अज्जचारुदत्त ! भणाहि। अलं लज्जाए; ववहारो खु एसो। [ आर्य चारुदत्त ! भण। अलं लज्जया। व्यवहारः खल्वेषः। ]

चारुदत्तः—( सलज्जम् ) भो अधिकृताः ! मया कथमीदृशं वक्त-

---

यित्वा सम्प्रति अलीकं ( मिथ्यैव ) स्वचरित्रं निगूहितुं ( चेष्टसे, इति न युक्तमिति शेषः, ) एवंविधमनार्यकार्यं कृत्वा यद् त्वं चरित्र निगूहनं करोषि, ततस्त्वं भट्टारकः = श्लाघ्यो नासि।

अथवा—त्वं यदि चरित्रं गोपायितुमिच्छसि, कामं गोपाय, परं भट्टारकः = मम भगिन्याः पतिरत्रत्यो राजा तु न गोपायिष्यति, स तु सर्वमपि वृत्तं चारादिद्वारा ज्ञास्यति। अथवा—अधिकरणिक एष भट्टारको नैवं निगूहितुं समर्थः। अयं न्यायोचितमेव व्यवहारं करिष्यतीत्यर्थः। अत्र वैतालीयं छन्दः ॥१७॥

---

शकार—"( चारुदत्त ! ) धन के लिए स्त्री को मारकर अब तू लज्जा अथवा भय से अपने मिथ्या चरित्र को छिपाना चाहता है ? अतः तू श्लाघनीय नहीं है।"

अथवा—"यदि तू अपने चरित्र को छिपाना चाहता है तो छिपा, परन्तु मेरे जीजा उसे किसी प्रकार छिपा न रहने देंगे।" ( अथवा )—"चाहे तू उस बात को कितना ही आवृत करना चाहे ! परन्तु ये न्यायाधीश उसको अवश्य ही अनावृत कर देंगे।" ॥ १७ ॥

श्रेष्ठिकायस्थ—आर्य चारुदत्त ! कहिये। लज्जित मत होओ। यह व्यवहार है।

चारुदत्त—( सलज्ज होकर ) अधिकारीगण ! यह कैसे कहा जा सकता है

व्यम्—यथा गणिका मम मित्रमिति ?। अथवा यौवनमत्रापराध्यति, न चारित्र्यम् ।

अधिकरणिकः—

व्यवहारः सविघ्नोऽयं त्यज लज्जां हृदि स्थिताम् ।
ब्रूहि सत्यमलं धैर्यं छलमत्र न गृह्यते ॥१८॥

अलं लज्जया, व्यवहारस्त्वां पृच्छति ।

चारुदत्तः—अधिकृत ! केन सह मम व्यवहारः ?

शकारः—( साटोपम् ) अले ! मए शह ववहाले । [ अरे ! मया सह व्यवहारः । ]

चारुदत्तः—त्वया सह मम व्यवहारः सुदुःसहः ।

शकारः—अले इश्तिआघादआ ! तं तादिशिं लअणशदभूशणिअं वशंतशेणिअं मालिअ, शंपदं कवडकावडिके भविअ णिगूहेशि ?।

---

मम मित्रं गणिकेति वक्तुं सलज्जं चारुदत्तमालक्ष्याधिकरणिको ब्रूते—व्यवहार इति । अस्मिन् व्यवहारे विघ्नः समुपस्थितः, अतो हृदये वर्तमानां लज्जां परित्यज, लज्जया सत्यवृत्तान्ताकथने व्यवहारस्य निर्णयोऽपि दुर्घट इति भावः । सत्यं वद, अत्र छलस्यावश्यकता नास्ति ॥१८॥

---

कि "वेश्या मेरी मित्र है" ? अथवा यह यौवन का ही दोष है, चरित्र का नहीं ।

अधिकरणिक—"इससे ( लज्जा से ) इस अभियोग में विघ्न हो गया है अतः आप हृदयस्थित लज्जा का परित्याग कर सच बोलिये । छल-कपट करने की आवश्यकता नहीं है" ॥ १८ ॥

लज्जा मत करो । व्यवहार आप से पूछ रहा है ।

चारुदत्त—महानुभाव ! किसके साथ मेरा व्यवहार है ?

शकार—( अभिमानपूर्वक ) अरे ! मेरे साथ तेरा व्यवहार है !

चारुदत्त—तेरे साथ मेरा व्यवहार होना कठिन है ।

शकार—अरे ! स्त्रीघातक ! उस रत्नालङ्कारों से अलङ्कृत "वसन्तसेना"

[ अरे स्त्रीघातक ! तां तादृशीं रत्नशतभूषणां वसन्तसेनां मारयित्वा, सांप्रतं कपटकापटिको भूत्वा, निगूहसि ? । ]

चारुदत्तः—असंबद्धः खल्वसि ।

अधिकरणिकः—आर्यचारुदत्त ! अलमनेन; ब्रूहि सत्यम् । अपि गणिका तव मित्रम् ? ।

चारुदत्तः—एवमेव ।

अधिकरणिकः—आर्य ! वसन्तसेना क ? ।

चारुदत्तः—गृहं गता ।

श्रेष्ठिकायस्थौ—कधं गदा, कदा गदा, गच्छंती वा केण अणुगदा ? । [ कथं गता, कदा गता, गच्छन्ती वा केनानुगता ? । ]

चारुदत्तः—( स्वगतम् ) किं प्रच्छन्नं गतेति ब्रवीमि ? ।

श्रेष्ठिकायस्थौ—अज्ज ! कधेहि । [ आर्य ! कथय । ]

चारुदत्तः—गृहं गता । किमन्यद्ब्रवीमि ? ।

शकारः—मम केलकं पुप्फकलंडकजिण्णुज्जाणं पवेशिअ अत्थणिमित्तं

---

को मारकर अब कपटपूर्वक उस बात को छिपा रहा है !

चारुदत्त—क्या असङ्गत बकता है ?

अधिकरणिक—आर्य चारुदत्त ! इसके साथ विवाद मत करिये । सच कहिये "क्या गणिका आपकी मित्र है ?"

चारुदत्त—ऐसा ही है ।

अधिकरणिक—आर्य ! "वसन्तसेना" ( अब ) कहाँ है ?

चारुदत्त—( अपने ) घर गईं ।

श्रेष्ठिकायस्थ—क्यों गईं ? कब गईं ? और किस के साथ गईं ?

चारुदत्त—( स्वयं ) क्या "छिपकर गईं" यह कह दूँ ?

श्रेष्ठिकायस्थ—आर्य ! कहिये ।

चारुदत्त—घर गईं । और क्या कहूँ ?

शकार—मेरे "पुष्पकरण्डक जीर्णोद्यान" में घुस कर तूने धन के लिए

बाहुपाशबलक्कालेण मालिदा । अए ! शंपदं वदशि घलं गदे त्ति ? ।
[ मदीयं पुष्पकरण्डकजीर्णोद्यानं प्रवेश्यार्थनिमित्तं बाहुपाशबलात्कारेण मारिता ।
अये ! सांप्रतं वदसि गृहं गतेति ? । ]

चारुदत्तः—आः, असंबद्धप्रलापिन् !

अभ्युक्षितोऽसि सलिलैर्न बलाहकानां,
चाषाग्रपक्षसदृशं भृशमन्तराले ।
मिथ्यैतदाननमिदं भवतस्तथा हि,
हेमन्तपद्ममिव निष्प्रभतामुपैति ॥१९॥

अधिकरणिकः—( जनान्तिकम् )

---

शकारोक्तं मिथ्याभाषणं विनिन्दन्नाह चारुदत्तः—अभ्युक्षितोऽसीति । आः ! असम्बद्धप्रलापिन् ! कथमेवं मिथ्या वदसि ? तवेदमाननं विवर्णम् सत् तव मृषाभाषित्वं सूचयति, शरीरे प्रस्वेदश्च । तथाहि—त्वं अन्तराले = अन्तरिक्षे किमु बलाहकानां = मेघानां सलिलैः अभ्युक्षितः ? एतावान् प्रस्वेदः शरीरे वर्तते, अहं तु सम्भावयामि—यत् कदाचिन्मेघमुक्तेन जलेन तु नाभिपरिषिञ्चितोऽसि, अन्यथा जलमिदं कुतः ? चाषः = नीलकण्ठाख्यः पक्षी, तस्याग्रपक्ष-सदृशम् = श्रेष्ठपक्षतुल्यम् श्यामवर्णमित्यर्थः, तव मुखं हेमन्त-कालिकं कमलमिव निष्प्रभं सञ्जातम् । एतेन सर्वथा मिथ्या वदसीति द्योत्यते । अत्रोपमाऽलङ्कारः । वसन्ततिलका च्छन्दः ॥१९॥

---

उसे बाहुपाश से मार डाला है और अब कहता है कि "घर गई" ।

चारुदत्त—अरे ! असङ्गत बोलने वाले !

"तेरे शरीर से पसीना छूट रहा है, मानो तू मेघों की जलधारा से भींग गया हो, और नीलकण्ठ के अगले पङ्खों की भाँति काला–काला तेरा मुख 'हेमन्त' ऋतु के कमल की भाँति तेजहीन हो रहा है । ( अर्थात्—तेरा मुख विवर्ण होकर असत्यता प्रकट कर रहा है । )" ॥ १९ ॥

अधिकरणिक—( सामाजिकों के पास )

तुलनं चाद्रिराजस्य समुद्रस्य च तारणम् ।
ग्रहणं चानिलस्येव चारुदत्तस्य दूषणम् ॥२०॥

( प्रकाशम् ) आर्यचारुदत्तः खल्वसौ कथमिदमकार्यं करिष्यति ? ।
('घोणो–' [ ९।१६ ] इत्यादि पठति )

शकारः—किं पक्खवादेण ववहाले दीशदि ? । [ किं पक्षपातेन व्यवहारो दृश्यते ? । ]

अधिकरणिकः—अपेहि, मूर्ख !

वेदार्थान् प्राकृतस्त्वं वदसि, न च ते जिह्वा निपतिता,
मध्याह्ने वीक्षसेऽर्कं, न तव सहसा दृष्टिर्विचलिता ।

---

चारुदत्तं निरूप्याधिकरणकः कथयति—तुलनमिति । चारुदत्तस्य दूषणवार्तायत् सत्यम् , हिमालयस्य तोलनवत् , समुद्रस्य ( भुजाभ्याम् ) सन्तरणवत् , अनिलस्य ( वस्त्रादिना ) ग्रहणवत् सर्वथा असम्भवमिव प्रतीयते । नायमेवंविधमनुचितं, कर्म कर्तुं मर्हेतीति शकारोऽयं मृषा कथयति, इति भावः ॥२०॥

शकारं भर्त्सयन्नाहाधिकरणकः—वेदार्थानीति । अरे मूर्ख ! सर्वमपीदं ते दूषणोद्घोषणं मुधैव । पश्य—प्राकृतः = मूर्खः सन् वेदार्थान् वदसि, जिह्वा च ते न निपतिता ? द्विजातिरिक्तानां वेदोच्चारणेऽधिकाराभावात् त्वं वेदोच्चारणं करोषि, परमाश्चर्यमनधिकारिणोऽपि तव जडस्य जिह्वा न स्खलति ? मध्याह्ने सूर्यं पश्यतोऽपि

---

"चारुदत्त" के दोष की बात—हिमालय को तोलने, ( हाथों से ) समुद्र को पार करने तथा वायु को पकड़ने के समान ( सर्वथा असम्भव ) है ।" ॥२०॥

( प्रकाश में ) यह "आर्य चारुदत्त" कैसे ऐसा अकार्य कर सकते हैं ? ( "घोणा···" ( ९।१६ ) इत्यादि श्लोक पढ़ता है । )

शकार—क्या पक्षपातपूर्वक व्यवहार देखा जा रहा है ?

अधिकरणिक—चुप मूर्ख !

"अरे ! तू नीच होकर भी वेदोच्चारण कर रहा है; परन्तु तेरी जिह्वा खण्ड-खण्ड नहीं हो रही है ? तू मध्याह्न में सूर्य को देख रहा है तो भी तेरी दृष्टि

दीप्ताग्नौ पाणिमन्तः क्षिपसि, स च ते दग्धो भवति नो,
चारित्र्याच्चारुदत्तं चलयसि, न ते देहं हरति भूः ॥२१॥

आर्यचारुदत्तः कथमकार्यं करिष्यति ? ।

कृत्वा समुद्रमुदकोच्छ्रयमात्रशेषं,
दत्तानि येन हि धनान्यनपेक्षितानि ।
स श्रेयसां कथमिवैकनिधिर्महात्मा,
पापं करिष्यति धनार्थमवैरिजुष्टम् ॥२२॥

वृद्धा—हदास ! जो तदाणिं णासीकिदं सुवण्णभंडअं रत्तिं चोरेहि अवहिदं त्ति तस्स कारणादो चदुस्समुद्दसारभूदं रअणावलिं

---

तव दृष्टिः सहसा न विचलिता जाता ? प्रदीप्ते वह्नौ च करं क्षिपसि, न च करस्ते दग्धो भूतः ? चारुदत्तं चारित्र्याच्चालयतोऽपि तव देह पृथ्वी न हरति ?

अत्र निदर्शनाऽलङ्कारः । विशेषोक्तिश्च । अत्र सुमधुराख्यं च्छन्दः । तल्लक्षणञ्च यथा—"म्रौ म्नौ मो नो गुरुश्चेद्वसुशर-रसैरुक्ता सुमधुरा" इति ॥२१॥

पुनरपि चारुदत्तं प्रशंसन्नाहाधिकरणिकः—कृत्वेति । येनानेन चारुदत्तेन समुद्राणां सर्वाण्यपि रत्नानि, अन्यच्च धनम् , अर्थिभ्यो दत्तम् ; स कल्याणानामेकमात्रमाश्रयो महात्मा चारुदत्तो वैरिजनेनाप्यसेवनीयं पापं करिष्यति ? सर्वथाऽसम्भाव्यमिदमस्य शकारस्य कथनम् ।

अत्रातिशयोक्त्यलङ्कारः । वसन्ततिलका च्छन्दः ॥२२॥

---

विचलित नहीं हुई ? प्रदीप्त अग्नि में हाथ दे रहा है, परन्तु तेरा हाथ दग्ध नहीं हुआ ? और तू "चारुदत्त" को चरित्र से भ्रष्ट कर रहा है, इतने पर भी तेरे शरीर का पृथ्वी हरण नहीं कर रही है ?" ॥ २१ ॥

"आर्य चारुदत्त" कैसे अकार्य कर सकते हैं ?

"जिन्होंने रत्न दान करके, समुद्र को केवल जलमात्र का ही आकर बना दिया वही कल्याणों के आश्रय, महात्मा, वैरियों के द्वारा भी असेवनीय, ऐसा पापमय कृत्य कैसे कर सकते हैं ?" ॥ २२ ॥

देदि, सो दाणिं अत्थकल्लवत्तस्स कालणादो इमं अकज्जं करेदि ?। हा जादे ! एहि मे पुत्ति ! । [ हताश ! यस्तदानीं न्यासीकृतं सुवर्णभाण्डं रात्रौ चौरैरपहृतमिति तस्य कारणाच्चतुःसमुद्रसारभूतां रत्नावलीं ददाति, स इदानीमर्थकल्यवर्तस्य कारणादिदमकार्यं करोति ?। हा जाते ! एहि मे पुत्रि ! । ] ( इति रोदिति )

अधिकरणिकः—आर्य चारुदत्त ! किमसौ पद्भ्यां गता, उत प्रवहणेनेति ? ।

चारुदत्तः—ननु मम प्रत्यक्षं न गता । तन्न जाने किं पद्भ्यां गता, उत प्रवहणेनेति ।

( प्रविश्य, सामर्षः )

वीरकः—

पादप्पहारपरिभवविमाणणाबद्धगरुअवेरस्स ।
अणुसोअंतस्स इधं कधं पि रत्ती पभादा मे ॥२३॥

ता जाव अधिअरणमंडवं उवसप्पामि । ( प्रवेष्टकेन ) सुहं अज्जमिस्साणं ।

---

चन्दनेनापमानितो वीरकः स्वापमानाभियोगं निर्वक्ति—पादप्पहारेति । चन्दनकेन मयि पादप्रहारः कृतः । तेनापमानेन सन्नद्धवैरस्यानुशोचत एव मे कथमपि रात्रिः प्रभातरूपेण परिणता । महता क्लेशेन प्रातरभूदित्यर्थः ॥२३॥

---

वृद्धा—हताश ! जिसने उस समय धरोहररूप में रखे हुए सुवर्ण-पात्र को चोरों के चुरा लेने पर उस के बदले में "चारों समुद्रों की सारभूत रत्नावली" दे दी थी, क्या वह अब तुच्छ धन के लिए ऐसा दुष्कर्म कर सकता है ? हा वत्से ! हा पुत्रि !

[ रो पड़ती है । ]

अधिकरणिक—आर्य चारुदत्त ! क्या वह पैदल गई थीं अथवा रथ से ?

[ प्रवेश कर अमर्षपूर्वक ]

वीरक—"( "चन्दनक" के ) पाद-प्रहार रूपी अपमान से क्षुब्ध तथा प्रवृद्ध वैर वाले मेरी यह रात्रि चिन्तासक्त होकर जैसे-तैसे प्रभात में परिणत हुई है ।" ॥ २३ ॥

[ पादप्रहारपरिभवविमाननाबद्धगुरुकवैरस्य ।
अनुशोचत इयं कथमपि रात्रिः प्रभाता मे ॥

तद्यावदधिकरणमण्डपमुपसर्पामि । सुखमार्यमिश्राणाम् । ]

अधिकरणिकः—अये ! नगररक्षाधिकृतो वीरकः । वीरक ! किमागमनप्रयोजनम् ? ।

वीरकः—ही, बंधणभेअगसंभमे अज्जकं अण्णेसंतो, ओवाडिदं पवहणं वच्चदि त्ति विआरं करंतो अण्णेसंतो, 'अरे तुए वि आलोइदे, मए वि आलोइदव्वो' त्ति भणंतो ज्जेव चंदणमहत्तरएण पादेण ताडिदो म्हि । एदं सुणिअ अज्जमिस्सा पमाणं । [ ही, बन्धनभेदनसंभ्रमे आर्यकमन्वेषयन्, अपवारितं प्रवहणं व्रजतीति विचारं कुर्वन्नन्वेषयन्, 'अरे ! त्वयाप्यालोकितम्, मयाप्यालोकितव्यम्' इति भणन्नेव चन्दनमहत्तरकेण, पादेन ताडितोऽस्मि । एतच्छ्रुत्वार्यमिश्राः प्रमाणम् । ]

अधिकरणिकः—भद्र ! जानीषे कस्य तत्प्रवहणमिति ? ।

वीरकः—इमस्स अज्जचारुदत्तस्स । वसंतसेणा आरूढा पुप्फकरंडकजिण्णुज्जाणं कीलिदुं णीअदि त्ति पवहणवाहएण कहिदं । [ अस्यार्यचारुदत्तस्य । वसन्तसेनारूढा पुष्पकरण्डकजीर्णोद्यानं क्रीडितुं नीयत इति प्रवहण-

---

इसलिए न्यायालय में जाता हूँ । ( प्रवेश कर ) आप का कल्याण हो ।

अधिकरणिक—ओह ! नगर-रक्षाधिकारी 'वीरक' है ! वीरक ! तुम्हारे आगमन का क्या प्रयोजन है ?

वीरक—बन्धन तोड़कर भागे हुए "आर्यक" को ढूँढते हुए—ढँका हुआ रथ जा रहा है उसे देख लेने पर "अरी तूने देख लिया अब मुझे भी देखना चाहिए" इस प्रकार कहते हुए मुझको "चन्दनक" ने लात से मारा है । यह सब-कुछ सुनकर आप ही प्रमाण हैं ।

अधिकरणिक—भद्र ! क्या जानते हो कि वह किसका रथ था ?

वीरक—इन "आर्य चारुदत्त" का था । "इस पर "वसन्तसेना" बैठी हुई विहार करने के लिए "पुष्पकरण्डक जीर्णोद्यान" में ले जाई जा रही है" यह

वाहकेन कथितम् । ]

शकारः—पुणो वि शुदं अज्जेहिं ? । [ पुनरपि श्रुतमार्यैः ? । ]

अधिकरणिकः—

**एष भो ! निर्मलज्योत्स्नो राहुणा ग्रस्यते शशी ।**
**जलं कूलावपातेन प्रसन्नं कलुषायते ॥२४॥**

वीरक ! पश्चादिह भवतो न्यायं द्रक्ष्यामः । य एषोऽधिकरणद्वार्यश्वस्तिष्ठति, तमेनमारुह्य गत्वा पुष्पकरण्डकोद्यानं दृश्यतामस्ति तत्र काचिद्विपन्ना स्त्री न वेति ।

वीरकः—जं अज्जो आणवेदि । ( इति निष्क्रान्तः, प्रविश्य च ) गदो म्हि तहिं । दिट्ठं च मए एत्थिआकलेवरं सावएहिं विलुप्पंतं । [ यदार्य आज्ञापयति । गतोऽस्मि तत्र । दृष्टं च मया स्त्रीकलेवरं श्वापदैर्विलुप्यमानम् । ]

---

वीरकवचनं निशम्य सखेदमाहाधिकरणिकः—एष भोः-इति । हन्त ! यथा निर्मलचन्द्रिकोपेतः चन्द्रो राहुणा ग्रस्यते, निर्मलं नद्या जलं कूलस्य = तीरस्याधःपातेन मलिनं क्रियते । तथैवार्यं चारुदत्तोऽपि विधिविलासितादद्य राहुतुल्येन पापेनाक्रान्तः । अत्रातिशयोक्तिः, दृष्टान्तश्चालङ्कारौ । पथ्यावक्त्रं च्छन्दः ॥२४॥

---

रथवान ने कहा था ।

शकार—आपलोगों ने फिर भी सुना ?

अधिकरणिक—"राहु द्वारा ग्रसे हुए निर्मल चन्द्रिकावाले चन्द्र के तथा तट गिरने से ( नदी के ) स्वच्छ जल के मलिन हो जाने के समान यह "चारुदत्त" विपद्ग्रस्त हो रहे हैं ।" ॥ २४ ॥

वीरक ! तुम्हारे न्याय पर बाद में विचार करेंगे । तबतक तुम इस द्वार पर खड़े हुए घोड़े पर चढ़ "पुष्पकरण्डक जीर्णोद्यान" में जाकर देख आओ कि "क्या वहाँ कोई मरी हुई स्त्री पड़ी है ?"

वीरक—जो आज्ञा ! ( चला जाता है । पुनः प्रवेशकर ) मैं वहाँ गया और मैंने वहाँ एक स्त्री के शरीर को कुत्तों से खाता हुआ देखा है ।

श्रेष्ठिकायस्थौ—कधं तुए जाणिदं इत्थिआकलेवरं त्ति ? । [ कथं त्वया ज्ञातं स्त्रीकलेवरमिति ? । ]

वीरकः—सावसेसेहिं केसहत्थपाणिपादेहिं उवलक्खिदं मए । [ सावशेषैः केशहस्तपाणिपादैरुपलक्षितं मया । ]

अधिकरणिकः—अहो ! धिक् वैषम्यं लोकव्यवहारस्य !—

**यथा यथेदं निपुणं विचार्यते तथा तथा संकटमेव दृश्यते ।**
**अहो सुसन्ना व्यवहारनीतयो, मतिस्तु गौः पङ्कगतेव सीदति॥२५॥**

चारुदत्तः—( स्वगतम् )

**यथैव पुष्पं प्रथमे विकाशे समेत्य पातुं मधुपाः पतन्ति ।**

---

लोकव्यवहारस्य विषमतां समर्थयमानोऽधिकरणिकः प्राह—यथेति । अहो ! लोकस्य व्यवहारोऽति विचित्रः । यथा यथा विचारः क्रियते, तथा तथा व्यवहारः कष्टमय एव जायते । प्रमाणेन नीतिमार्गस्तु सुनिश्चिततयैव, चारुदत्तस्यापराधं साधयति, परं पङ्के पतिता गौरिव मम मतिस्तु निर्णयं कर्तुमवसन्ना सती सर्वथाऽसमर्थैवेति । अत्रोपमा । उपजातिछन्दः ॥२५॥

सर्वं निशम्य चारुदत्तश्चिन्तां नाटयति—यथैवेति । यथा पुष्पस्य प्रथमे विकासे

---

श्रेष्ठिकायस्थ—तुमने कैसे जाना कि "स्त्री का शरीर है ?"

वीरक—मैंने ( कुत्तों के खाने से ) बचे हुए बालों, हाथों तथा पैरों से जान लिया ।

अधिकरणिक—ओह ! सांसारिक व्यवहार की विषमता को धिक्कार है !

"जैसे-जैसे इस अभियोग पर विचार किया जाता है वैसे ही वैसे उलझन बढ़ती जाती है । ओह ! व्यवहार की नीति ( "चारुदत्त" के प्रति अपराध के लिए ) भली भाँति पुष्ट हो गई है परन्तु ( यथार्थ निर्णय न करने के कारण ) मेरी बुद्धि कीचड़ में फँसी हुई गाय के समान हो रही है ।" ॥ २५ ॥

चारुदत्त—( स्वयं ही )

"जैसे पुष्प की प्राथमिक विकसितावस्था में भ्रमर—चारों ओर से आकर उसे घेर

एवं मनुष्यस्य विपत्तिकाले छिद्रेष्वनर्था बहुलीभवन्ति ॥२६॥

अधिकरणिकः—आर्यचारुदत्त ! सत्यमभिधीयताम् ।

चारुदत्तः—

दुष्टात्मा परगुणमत्सरी मनुष्यो,
रागान्धः परमिह हन्तुकामबुद्धिः ।
किं यो यद्वदति मृषैव जातिदोषात्
तद्ग्राह्यं भवति, न तद्विचारणीयम् ॥२७॥

अपि च,—

---

संजाते भ्रमरा इतस्ततः समेत्य मधुपानं कर्तुं परिपतन्ति, एवमेव मनुष्यस्य विपत्तिसमये बहुविधा अनर्थाः संगता भवन्तीति दृष्टान्तेन मम विपत्तिकालेऽधुना सर्वोऽप्यनर्थ-संघः संगतः, इति भावः । अत्रानुचितोपमा । उपजातिश्छन्दः ॥२६॥

दुष्टात्मेति । अधिकरणिक-प्रश्नानन्तरं कथयति चारुदत्तो, विचारोऽत्राऽऽवश्यको, नतु यथा मूर्खोऽयं शकारो वदति, तथैव स्वीकार्यमिति भावः । अयं तु स्वजाति-दोषात् परस्य विनाशमेव वाञ्छति । भवद्भिस्तु सविचारमेवास्याभियोगस्य विचारो विधेयः, इति सारः । प्रहर्षिणी छन्दः ॥२७॥

---

होते हैं वैसे ही मनुष्य के विपत्काल में अनर्थ भी ( इधर-उधर से आकर ) एकत्रित हो जाते हैं ।" ॥ २६ ॥

अधिकरणिक—आर्य चारुदत्त ! सच सच बताइये ।

चारुदत्त—"दुष्ट, असूयक, क्रोधोन्मत्त तथा दूसरे को मारने का निश्चय करनेवाला व्यक्ति अपने स्वाभाविक दोष से जो-कुछ कहता है क्या वह स्वीकार्य ही होता है और क्या उस पर विचार नहीं किया जाता ! ( यदि "शकार" मुझ पर लाञ्छन लगाता है तो लगाने दीजिये; परन्तु आप तो विचारपूर्वक कार्य कीजिये । )" ॥ २७ ॥

और भी—

योऽहं लतां कुसुमितामपि पुष्पहेतो-
राकृष्य नैव कुसुमावचयं करोमि।
सोऽहं कथं भ्रमरपक्षरुचौ सुदीर्घे,
केशे प्रगृह्य रुदतीं प्रमदां निहन्मि? ॥२८॥

शकारः—हंहो अधिअलणभोइआ ! किं तुम्हे पक्खवादेण ववहालं पेक्खध ?; ज्जेण अज्ज वि एशे हदाशचालुदत्ते आशणे धालीअदि।
[ हंहो अधिकरणभोजकाः ! किं यूयं पक्षपातेन व्यवहारं पश्यतः? येनाद्याप्येष हताशचारुदत्त आसने धार्यते । ]

अधिकरणिकः—भद्र शोधनक ! एवं क्रियताम् ।

( शोधनकस्तथा करोति )

चारुदत्तः—विचार्यताम् । भो अधिकृताः ! विचार्यताम् । ( इत्यासनाद-

---

पुनरपि स्वकीयं स्वभावमाह चारुदत्तः—योऽहमिति । अहं पुष्पस्य कृते सुपुष्पितां लतामाकृष्य कुसुमावचयमपि नैव करोमि, वदन्तु भवन्तः । भ्रमर-पक्षवत् श्यामवर्णे केशे गृहीत्वा तां प्रमदां रुदतीं सतीं कथं निहन्मि? सर्वदाऽविचारपूर्वकमाहाऽयं शकारो द्वेषवशादतो भवद्भिः स्वकर्तव्यपालनं सावधानतया कार्यमिति भावः । वसन्ततिलका च्छन्दः ॥२८॥

---

"जो मैं विकसित लता को भी पुष्प लेने के लिए नहीं खींचता हूँ वही मैं भ्रमर के पङ्खों के समान कान्तिवाले लम्बे लम्बे केश पकड़कर रोती हुई स्त्री को कैसे मार सकता हूँ?" ॥ २८ ॥

शकार—अधिकरणभोजको ! क्या तुम पक्षपात से व्यवहार कर रहे हो जो कि इस पापी "चारुदत्त" को अब भी आसन पर बैठा रहे हो?

अधिकरणिक—भद्र शोधनक ! ऐसा करो ! ( इन्हें आसन से उठादो ! )

[ "शोधनक" "चारुदत्त" को आसन से उठा देता है । ]

चारुदत्त—विचार करिये ! अधिकारीगण ! विचार करिये ! [ आसन से

वतीर्य भूमावुपविशति )

शकारः—( स्वगतम्, सहर्षं नर्तित्वा ) ही, अणेण मए कडे पावे अण्णश्श मश्तके निवडिदे। ता जहिं चालुदत्ताके उवविशदि तहिं हग्गे उवविशामि। ( तथा कृत्वा ) चालुदत्ता! पेक्ख पेक्ख मं। ता भण भण मए मालिदे त्ति। [ ही, अनेन मया कृतं पापमन्यस्य मस्तके निपतितम्। तद्यत्र चारुदत्त उपविशति तत्राहमुपविशामि। चारुदत्त! पश्य पश्य माम्। तद्भण भण मया मारितेति। ]

चारुदत्तः—भो अधिकृताः ( 'दुष्टात्मा–' ( ९।२७ ) इत्यादि पूर्वोक्तं पठति, सनिःश्वासं, स्वगतम् )

मैत्रेय भोः! किमिदमद्य ममोपघातो?
हा ब्राह्मणि! द्विजकुले विमले प्रसूता।
हा रोहसेन! न हि पश्यसि मे विपत्तिं,

---

निश्चिता विपदित्याकलय्य स्वमित्रं, पत्नीं पुत्रं च स्मरति—मैत्रेयेति। भो मैत्रेय! अद्यायं ममोपघातः = विपत्तिः प्राणविनाश इत्यर्थः कथमुपस्थितः? हा ब्राह्मणि! ( इति पत्नीं सम्बोधयति ) त्वं तु सुविमले कुले प्रसूतासि मयि विपन्ने, "धनस्य कृते तव भर्त्रा वेश्या मारितेति" लोकापवादस्त्वया कथमिव सोढव्यो

---

उतर कर भूमि पर बैठ जाता है। ]

शकार—( स्वयं ही, हर्ष से नाचकर ) वाह! इस प्रकार मैंने अपना पाप दूसरे के माथे मढ़ दिया है! तो जहाँ "चारुदत्त" बैठा था अब मैं वहाँ बैठता हूँ ( बैठकर ) चारुदत्त! मुझे देख! तो कह, कह कि—"मैंने मारी है।"

चारुदत्त—अधिकारीगण! [ "दुष्टात्मा..." इत्यादि ( ९।२७ ) श्लोक पढ़ता है। लम्बा श्वास खींचकर, स्वयं ही ]

"मैत्रेय! आज मुझपर यह विपत्ति क्यों आ पड़ी है? हा प्रिये! तुम तो पवित्र ब्राह्मण कुल में उत्पन्न हुई हो। ( मेरे मरने के अनन्तर "तेरे पति ने धन के लिए वेश्या मार डाली" यह निन्दा तुम कैसे सुनोगी? ) हा रोहसेन!

**मिथ्यैव नन्दसि परव्यसनेन नित्यम् ॥२९॥**

प्रेषितश्च मया तद्वार्तान्वेषणाय मैत्रेयो वसन्तसेनासकाशं शकटिकानिमित्तं च तस्य प्रदत्तान्यलंकरणानि प्रत्यर्पयितुम्; तत्कथं चिरयते ?।

( ततः प्रविशति गृहीताभरणो विदूषकः )

विदूषकः—पेसिदो म्हि अज्जचारुदत्तेण वसंतसेणासआसं, तहिं अलंकरणाइं गेण्हिअ, जधा—'अज्जमित्तेअ ! वसंतसेणाए वच्छो रोहसेणो अत्तणो अलंकारेण अलंकरिअ जणणीसआसं पेसिदो। इमस्स आहरणं दादव्वं, ण उण गेण्हिदव्वं। ता समप्पेहि' त्ति। ता जाव वसंतसेणासआसं ज्जेव्व गच्छामि। ( परिक्रम्यावलोक्य च आकाशे ) कधं भावरेभिलो ?। भो भावरेभिल ! किंणिमित्तं तुमं उव्विग्गो उव्विग्गो विअ लक्खीअसि ?। ( आकर्ण्य ) किं भणासि—"पिअवअस्सो चारुदत्तो अधिअरणमंडवे सद्दाइदो" त्ति ?। ता ण हु अप्पेण कज्जेण होदव्वं। ( विचिन्त्य ) ता पच्छा वसंतसेणासआसं गमिस्सं अधिअरणमंडवं दाव गमिस्सं। ( परिक्रम्यावलोक्य च ) इदं अधिअरणमंडवं। ता जाव पविसामि। ( प्रविश्य ) सुहं अधिअरणभोइआणं। कहिं मम पिअवअस्सो ?।

[ प्रेषितोऽस्म्यार्यचारुदत्तेन वसन्तसेनासकाशम्, तत्रालंकरणानि गृहीत्वा, यथा—

---

भविष्यति ?" स्वपुत्रं सम्बोध्य कथयति—"हा रोहसेन ! त्वमपि मम विपत्तिं न पश्यसि ? सर्वदा परेण = उत्कृष्टेन व्यसनेनैव मिथ्यैव नन्दसि = सततं क्रीडासक्तस्त्वं मम मृत्युसंवादमपि न स्मरसि ?" वसन्ततिलका च्छन्द ॥२९॥

---

तू भी मेरी विपत्ति नहीं देख रहा है। मिथ्या ही खेल में अनुरक्त होकर प्रसन्न हो रहा है !" ॥ २९ ॥

मैंने "वसन्तसेना" के पास "मैत्रेय" को उसका समाचार जानने तथा गाड़ी के लिए दिये हुए सुवर्णालङ्कारों को लौटाने के लिए भेजा था परन्तु वह क्यों देर कर रहा है ?

[ तदनन्तर आभूषण लिये हुए "विदूषक" प्रवेश करता है। ]

विदूषक—मुझे "आर्य चारुदत्त" ने अलङ्कार लेकर "वसन्तसेना" के

'आर्यमैत्रेय ! वसन्तसेनया वत्सो रोहसेन आत्मनोऽलंकारेणालंकृत्य जननीसकाशं प्रेषितः। अस्य आभरणं दातव्यम्, न पुनर्ग्रहीतव्यम्; तत्समर्पय' इति। तद्यावद्वसन्तसेनासकाशमेव गच्छामि। कथं भावरेभिलः ?। भो भावरेभिल ! किंनिमित्तं त्वमुद्विग्न उद्विग्न इव लक्ष्यसे ?। किं भणसि-"प्रियवयस्यश्चारुदत्तोऽधिकरणमण्डप आहूतः" इति ? तन्न खल्वल्पेन कार्येण भवितव्यम्। तत्पश्चाद्वसन्तसेनासकाशं गमिष्यामि। अधिकरणमण्डपं तावद्गमिष्यामि। अयमधिकरणमण्डपः। तद्यावत्प्रविशामि। सुखमधिकरणभोजकानाम्। कुत्र मम प्रियवयस्यः ?।]

अधिकरणिकः--नन्वेष तिष्ठति।

विदूषकः—वअस्स ! सोत्थि दे। [ वयस्य ! स्वस्ति ते। ]

चारुदत्तः—भविष्यति।

विदूषकः—अवि क्खेमं दे ?। [ अपि क्षेमं ते ?। ]

---

पास भेजा है ( और कहा है कि— ) "आर्य मैत्रेय ! "वसन्तसेना" ने वत्स "रोहसेन" को अपने अलङ्कारों से अलङ्कृत कर ( उसकी ) माता के पास भेज दिया है। उसे आभूषण देने चाहिए—लेने नहीं; अतः उन्हें लौटा आओ।" तो मैं "वसन्तसेना" के ही पास जाता हूँ। ( घूम तथा देखकर आकाश में ) क्या "भाव रेभिल" है ? अरे रेभिल ! तुम क्यों उद्विग्न-से दिखलाई दे रहे हो ? ( सुनकर ) क्या कहते हो कि—"प्रिय मित्र "चारुदत्त" को न्यायालय में बुलाया गया है ?" तो ( मैं समझता हूँ कि ) कोई साधारण कार्य न होगा। ( सोचकर ) इसलिए मैं बाद में "वसन्तसेना" के पास जाऊँगा पहिले न्यायालय में ही जाता हूँ। ( घूम तथा देखकर ) यह न्यायालय है मैं इसमें प्रवेश करता हूँ। ( प्रवेश कर ) न्यायाधीशों का कल्याण हो। मेरा प्रिय मित्र कहाँ है ?

अधिकरणिक—ये बैठे हैं।

विदूषक—मित्र ! तुम्हारा कल्याण हो।

चारुदत्त—होगा।

विदूषक—कुशल तो है।

चारुदत्तः—एतदपि भविष्यति।

विदूषकः—भो वअस्स ! किंणिमित्तं उव्विग्गो उव्विग्गो विअ लक्खीअसि ? कुदो वा सद्दाइदो ? । [ भो वयस्य ! किंनिमित्तमुद्विग्न उद्विग्न इव लक्ष्यसे ? कुतो वाहूतः ? । ]

चारुदत्तः—वयस्य !

मया खलु नृशंसेन परलोकमजानता।
स्त्री रतिर्वा विशेषेण शेषमेषोऽभिधास्यति ॥३०॥

विदूषकः—किं किम् ? । [ किं किम् ? । ]

चारुदत्तः—( कर्णे ) एवमेवम्।

विदूषकः—को एव्वं भणादि ? । [ क एवं भणति ? । ]

---

विदूषकप्रश्ने चारुदत्तः स्वदशां वर्णयति—मयेति। मित्र ! परलोकानभिज्ञेन, क्रूरेण मया रतितुल्या स्त्री वसन्तसेना…शेषं = मारितेति पदम् एषः = शकारोऽभिधास्यति = कथयिष्यति। अयमभियोगो मयि निपातितः। इत्युद्वेगकारणमिति भावः ॥३०॥

---

चारुदत्त—यह भी होगी।

विदूषक—मित्र ! तुम किस लिए उद्विग्न से दिखलाई पड़ रहे हो ? तुम्हें किस लिए बुलाया गया है ?

चारुदत्त—मित्र,

"परलोक से अनभिज्ञ, अत्यन्त क्रूर मैंने, 'रति'—रूप में स्त्री ( "वसन्तसेना" )…" इससे आगे यह ( "शकार" ) कहेगा। ( "मार डाली" ये शब्द "शकार" बतलायेगा। मैं उसी अभियोग में पकड़ा गया हूँ। )" ॥ ३० ॥

विदूषक—क्या क्या ?

चारुदत्त—( कान में ) ऐसा ऐसा…।

विदूषक—ऐसा कौन कहता है ?

चारुदत्तः—( संज्ञया शकारं दर्शयति ) नन्वेष तपस्वी हेतुभूतः कृतान्तो मां व्याहरति ।

विदूषकः—( जनान्तिकम् ) एव्वं कीस ण भणीअदि–गेहं गदे त्ति ?। [ एवं किमर्थं न भण्यते–गृहं गतेति ? । ]

चारुदत्तः—उच्यमानमप्यवस्थादोषान्न गृह्यते ।

विदूषकः—भो भो अज्जा ! जेण दाव पुरट्ठावणविहारारामदेउलतडागकूवजूवेहिं अलंकिदा णअरी उज्जइणी, सो अणीसो अत्थकल्लवत्तकारणादो एरिसं अकज्जं अणुचिट्ठदि त्ति ?। ( सक्रोधम् ) अरे रे काणेलीसुदा राअश्शालसंठाणआ उस्सुंखलआ किदजणदोसभंडआ बहुसुवण्णमंडिदमक्कडआ ! भण भण मम आग्गदो, जो दाणिं मम पिअवअस्सो कुसुमिदं माधवीलदं पि आअड्ढिअ कुसुमावचअं ण करेदि कदा वि आअड्ढिदाए पल्लवच्छेदो भोदि त्ति, सो कधं एरिसं अकज्जं उहअलोअविरुद्धं करेदि ?। चिट्ठ रे कुट्टणिपुत्ता ! चिट्ठ । जाव एदिणा तव हिअअकुडिलेण दंडअट्ठेण मत्थअं दे सदखंडं करेमि । [ भो भो आर्याः ! येन तावत् पुरस्थापनविहारारामदेवालयतडागकूपयूपैरलंकृता नगर्युज्जयिनी, सोऽनीशोऽर्थकल्यवर्तकारणादीदृशमकार्यमनुतिष्ठतीति ? । अरे रे कुलटापुत्र राजश्यालसंस्थानक उच्छृङ्खलक कृतजनदोषभाण्ड बहुसुवर्णमण्डित-

---

चारुदत्त—( सङ्केत से "शकार" को दिखलाता है । ) इस बेचारे के रूप में साक्षात् यमराज ही ऐसा कह रहे हैं ।

विदूषक—( सामाजिकों के पास ) तो यह क्यों नहीं कह देते कि "घर गई ।"

चारुदत्त—कहने पर भी अवस्था के कारण इस पर विश्वास नहीं किया जा रहा है ।

विदूषक—आर्यो ! जिसने मन्दिर, विहार, उपवन, वापी, कूएँ तथा यज्ञ-स्थान आदि का निर्माण कर "उज्जयिनी" को अलङ्कृत कर दिया है क्या अब वह निर्धन अवस्था में ऐसा अकार्य करेगा ? ( क्रोधपूर्वक ) अबे ! कुलटापुत्र !

मर्कटक ! भण भण ममाग्रतः, य इदानीं मम प्रियवयस्यः कुसुमितां माधवील-तामप्याकृष्य कुसुमावचयं न करोति कदाप्याकृष्टतया पल्लवच्छेदो भवतीति, स कथमीदृशमकार्यमुभयलोकविरुद्धं करोति ? । तिष्ठ रे कुट्टिनीपुत्र ! तिष्ठ । यावदेतेन तव हृदयकुटिलेन दण्डकाष्ठेन मस्तकं ते शतखण्डं करोमि । ]

शकारः—( सक्रोधम् ) शुणंतु शुणंतु अज्जमिश्शा ! चालुदत्तकेण शह मम विवादे ववहाले वा; ता कीश एशे काकपदशीशमश्तका मम शिले शदखंडे कलेदि ? । मा दाव; ले दाशीए पुत्ता, दुट्टवडुका ! । [ शृण्वन्तु शृण्वन्त्वार्यमिश्राः ! चारुदत्तेन सह मम विवादो व्यवहारो वा; तत्किमर्थमेष काकपदशीर्षमस्तको मम शिरः शतखण्डं करोति ? । मा तावत्, रे दास्याःपुत्र दुष्टबटुक ! । ]

( विदूषको दण्डकाष्ठमुद्यम्य पूर्वोक्तं पठति; शकारः सक्रोधमुत्थाय ताडयति; विदूषकः प्रतीपं ताडयति; अन्योऽन्यं ताडयतः; विदूषकस्य कक्षदेशादाभरणानि पतन्ति )

---

राजश्यालक संस्थानक ! उद्दण्ड ! दोषपात्र ! बहुत-से सुवर्ण से सजे बन्दर ! मेरे सामने बोल ! जो मेरा प्रिय मित्र विकसित "माधवी" लता को, "कहीं इसके पत्ते न टूट जायँ" इस शङ्का से झुकाकर पुष्प भी नहीं चुनता वह कैसे ऐसा उभयलोक विनाशक अकार्य कर सकता है ? ठहर रे व्यभिचारिणी पुत्र ! ठहर ! जब तक तेरे हृदय के समान कुटिल इस डण्डे से तेरे मस्तक के सैकड़ों टुकड़े कर डालता हूँ ।

शकार—( क्रोध से ) आर्यो ! सुनो ! सुनो ! मेरा विवाद "चारुदत्त" के साथ है तो फिर क्यों कौए के पञ्जों के समान सिरवाला यह ( ब्राह्मण ) मेरे सिर के सैकड़ों टुकड़े करता है ? अच्छा तो ठहर रे दासीपुत्र ब्राह्मण ! ठहर !

[ "विदूषक" डण्डा उठाकर उपर्युक्त बात कहता है । "शकार" क्रोध में उठकर "विदूषक" को पीटता है । "विदूषक" उलटा पीटता है । दोनों एक दूसरे को पीटते हैं । "विदूषक" की बगल से आभूषण गिर पड़ते हैं । ]

शकारः—( तानि गृहीत्वा, दृष्ट्वा ससाध्वसम् ) पेक्खंतु पेक्खंतु अज्जा ! । एदे खु ताए तवश्शिणीए केलका अलंकाला । ( चारुदत्तमुद्दिश्य ) इमश्श अत्थकल्लवत्तश्श कालणादो एशा मालिदा वावादिदा अ । [ पश्यन्तु पश्यन्त्वार्याः ! एते खलु तस्यास्तपस्विन्या अलंकाराः । अस्यार्थकल्यवर्तस्य कारणादेषा मारिता व्यापादिता च । ]

( अधिकृताः सर्वेऽधोमुखाः स्थिताः )

चारुदत्तः—( जनान्तिकम् )

**अयमेवंविधे काले दृष्टो भूषणविस्तरः ।**
**अस्माकं भाग्यवैषम्यात् पतितः पातयिष्यति ॥३१॥**

विदूषकः—भो ! कीस भूदत्थं ण णिवेदीअदि ? । [ भोः ! किमर्थं भूतार्थो न निवेद्यते ? । ]

चारुदत्तः—वयस्य !

---

अयमिति । शकार-विदूषकयोः कलहे पतितानि भूषणानि मम विनाशकारीणि संवृत्तानि । अधुनाऽपि भाग्यविपर्ययान्मम विनाश एवैभिः साध्यते, इति भावः ॥३१॥

---

शकार—( उन्हें लेकर देखते हुए घबराहट पूर्वक )—आर्यो ! देखो ! देखो ! ये उस बेचारी के आभूषण हैं । ( "चारुदत्त" की ओर ) इस तुच्छ धन के लिए इसने उसे मार डाला है ।

[ सारे अधिकारी नीचा मुख कर लेते हैं । ]

चारुदत्त—( दर्शकों के पास को )—

"यह आभूषण-पात्र ऐसे समय में दिखाई दिया है जो कि स्वयं गिरने पर मुझको भी दुर्भाग्यवश गिरायेगा ।" ॥३१

विदूषक—अरे ! सच्ची बात क्यों नहीं कहते ?

चारुदत्त—मित्र !

दुर्बलं नृपतेश्चक्षुर्नैतत्तत्त्वं निरीक्षते ।
केवलं वदतो दैन्यमश्लाघ्यं मरणं भवेत् ॥३२॥

अधिकरणिकः—कष्टं भो ! कष्टम्;

अङ्गारकविरुद्धस्य प्रक्षीणस्य बृहस्पतेः ।
ग्रहोऽयमपरः पार्श्वे धूमकेतुरिवोत्थितः ॥३३॥

---

भूतार्थे = यथार्थे कथं न कथयसीति विदूषकोक्तौ कथयति चारुदत्तः—दुर्बल-मिति । मित्र ! राज्ञो नेत्रमत्यन्तं दुर्बलमस्ति, एतत् तत्त्वं नैव पश्यति, केवलं कथनेन ममात्र दैन्यमेव विख्यातमेव भविष्यति, इदानीं तु मृत्युर्मम सुनि-श्चितः ॥३२॥

विधेर्वैचित्र्यं स्मरन् किमत्र सम्पन्नमित्यधिकरणिकः प्राह—अङ्गारकेति । कष्टं भोः ! इदानीं मंगलग्रहेण सह विरोधमाचरतः क्षीणस्य बृहस्पति-ग्रहस्य पार्श्वे, धूमकेतुरिवायं भूषणपतनरूपो दोषः समुपस्थितः । मंगलतुल्यः शकारः बृहस्पति-समश्चारुदत्तः, विदूषककक्षात आभरणानां निपातो धूमकेतुसदृशः, इति भावः ।

अत एवोक्तं माघेन—
प्रतिकूलतामुपगते हि विधौ, विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥" इति ॥

अत्राप्रस्तुतप्रशंसा, उपमा चालङ्कारौ । पथ्यावक्त्रं च्छन्दः ॥३३॥

---

"राजा के नेत्र दुर्बल हैं वे वास्तविक रहस्य का पता नहीं लगा पाते । इस प्रकार दीनतापूर्ण वचन कहकर तो मेरा अश्लाघ्य मरण ही होगा ।" ॥३२॥

अधिकरणिक—खेद है ! दुःख है !

"मङ्गल-ग्रह के विरोधी दुर्बल 'बृहस्पति' के पास यह (आभूषणपतनरूप) दूसरा "धूमकेतु" प्रकट हो गया है ( 'मंगल' "शकार" है "चारुदत्त" 'बृहस्पति' के समान है और आभूषणपात 'धूमकेतु' है । जिस प्रकार इनका सम्मेलन अनिष्टकारी होता है उसी प्रकार "शकारादिकों" का यह विवाद अमङ्गलसूचक है ।)" ॥३३॥

श्रेष्ठिकायस्थौ—( विलोक्य, वसन्तसेनामातरमुद्दिश्य ) अवहिदा दाव अज्जा एदं सुवण्णभंडअं अवलोएदु, सो ज्जेव्व एसो ण वेत्ति। [ अवहिता तावदार्येदं सुवर्णभाण्डमवलोकयतु तदेवेदं न वेति। ]

वृद्धा—( अवलोक्य ) सरिसो एसो, ण उण सो। [ सदृशमेतद्, न पुनस्तत्। ]

शकारः—आं, वुड्ढकुट्टणि ! अक्खीहिं मंतिदं वाआए मूकिदं। [ आं, वृद्धकुट्टनि ! अक्षिभ्यां मन्त्रितं वाचा मूकितम्। ]

वृद्धा—हदास ! अवेहि। [ हताश ! अपेहि। ]

श्रेष्ठिकायस्थौ—अप्पमत्त कधेहि, सो ज्जेव एसो ण वेत्ति। [ अप्रमत्तं कथय, तदेवैतन्न वेति। ]

वृद्धा—अज्ज ! सिप्पिकुसलदाए ओबंधेदि दिट्ठिं। ण उण सो। [ आर्य ! शिल्पिकुशलतयावबध्नाति दृष्टिम्। न पुनस्तत्। ]

अधिकरणिकः—भद्रे ! अपि जानास्येतान्याभरणानि ?।

वृद्धा—णं भणामि, ण हु ण हु अणभिजाणिदो। अह वा कदा वि सिप्पिणा गडिदो भवे। [ ननु भणामि, न खलु न खल्वनभिज्ञातः। अथवा

---

श्रेष्ठिकायस्थ—( देखकर "वसन्तसेना" की माता से ) ध्यानपूर्वक इस सुवर्णपात्र को देखो कि यह वही है या नहीं ?

वृद्धा—यह उस जैसा है परन्तु वह नहीं है।

शकार—अरी दुष्ट वृद्धा ! आँखों से तो पहिचान लिया परन्तु वाणी से नहीं बतलाती !

वृद्धा—हताश ! चुप हो !

श्रेष्ठिकायस्थ—निश्चितरूपेण कहो कि वही है या नहीं।

वृद्धा—आर्य ! शिल्पिकुशलता ( कारीगरी ) से यह दृष्टि को अपनी ओर आकृष्ट कर रहा है परन्तु वह नहीं है।

अधिकरणिक—भद्रे ! क्या इन आभूषणों को पहचानती हो ?

वृद्धा—कहती तो हूँ कि सर्वथा अपरिचित नहीं है। अथवा, कदाचित् किसी

कदापि शिल्पिना घटितो भवेत् । ]

अधिकरणिकः—पश्य श्रेष्ठिन् !

वस्त्वन्तराणि सदृशानि भवन्ति नूनं,
रूपस्य भूषणगुणस्य च कृत्रिमस्य ।
दृष्ट्वा क्रियामनुकरोति हि शिल्पिवर्गः,
सादृश्यमेव कृतहस्ततया च दृष्टम् ॥३४॥

श्रेष्ठिकायस्थौ—अज्जचारुदत्तस्स केरकाइं एदाइं । [ आर्यचारुदत्तीयान्येतानि । ]

चारुदत्तः—न खलु न खलु ।

श्रेष्ठिकायस्थौ—ता कस्स ? । [ तदा कस्य ? । ]

चारुदत्तः—इहात्रभवत्या दुहितुः ।

---

वसन्तसेनामातुर्मुखाद्भूषणानां साम्यवार्तां श्रुत्वा तथैव समर्थयमानोऽधिकरणिको ब्रूते—वस्त्वन्तराणीति । श्रेष्ठिन् ! पश्य, एकस्य वस्तुनस्तुल्यान्यन्यान्यपि भवन्ति वस्तूनि, शिल्पिनश्चैकस्य कृत्रिमस्य भूषणस्यानुकरणं कृत्वा तादृशगुणाकृतिविशिष्टं कुशलहस्ततया रचयन्तीत्येव प्रायो दृश्यते लोके । ततश्चात्रापि सादृश्यं सम्भाव्यते, इति भावः । वसन्ततिलका च्छन्दः ॥३४॥

---

शिल्पी ने वैसा ही बना दिया हो ।

अधिकरणिक—सेठजी देखो !—

"एक वस्तु के समान दूसरी वस्तुएँ भी हो जाती हैं । और शिल्पकार कृत्रिम भूषण का अनुकरण कर वैसा ही दूसरा बना देते हैं । अतः हाथ की कुशलता से इसमें भी समानता हो दिखलाई पड़ती है ।" ॥३४॥

श्रेष्ठिकायस्थ—यह "आर्यचारुदत्त" के हैं ।

चारुदत्त—नहीं, नहीं ।

श्रेष्ठिकायस्थ—तो किसके हैं ?

चारुदत्त—पूजनीया इनकी पुत्री के हैं ।

श्रेष्ठिकायस्थौ--कधं एदाइं ताए विओअं गदाइं ?। [ कथमेतानि तस्या वियोगं गतानि ? । ]

चारुदत्तः—एवं गतानि । आं, इदम् ।

श्रेष्ठिकायस्थौ—अज्जचारुदत्त ! एत्थं सच्चं वत्तव्वं; पेक्ख पेक्ख—

**सच्चेण सुहं खु लब्भइ सच्चालावेण होइ पावं ।**
**सच्चं त्ति दुवेवि अक्खरा मा सच्चं अलिएण गूहेहि ॥३५॥**

[ आर्यचारुदत्त ! अत्र सत्यं वक्तव्यम् ; पश्य पश्य
सत्येन सुखं खलु लभ्यते सत्यालापेन भवति पातकम् ।
सत्यमिति द्वे अप्यक्षरे मा सत्यमलीकेन गूहय ॥ ]

चारुदत्तः—"आभरणान्याभरणानीति" न जाने, किंत्वस्मद्गृहादानीतानीति जाने ।

शकारः—उज्जाणं पवेशिअ पढमं मालेशि । कवडकावडिआए शंपदं णिगूहेशि ?। [ उद्यानं प्रवेश्य प्रथमं मारयसि । कपटकापटिकतया सांप्रतं

---

भूषणविषये सत्यमेव वक्तव्यमित्यूचतुः श्रेष्ठिकायस्थौ—सच्चेणेति । भोः आर्यचारुदत्त ! सत्यमेव त्वया वक्तव्यम् । सत्यकथनेन स्वर्गो लभ्यते, असत्येन च पापमुपलभ्यते । "सत्य"मित्यक्षरद्वयमेव सर्वहितकारकम् । अतोऽसत्यभाषणेन सत्यस्यापलापो न कार्यः, इति भावः ॥३५॥

---

श्रेष्ठिकायस्थ—यह उससे अलग कैसे हो गये ?

चारुदत्त—यों हो गये । हाँ, ऐसे—

श्रेष्ठिकायस्थ—आर्यचारुदत्त ! सत्य बोलना चाहिए । देखो, देखो—

"सत्य बोलनें से सुख मिलता है और सत्य न बोलने से पाप । "सत्य" के ये दो अक्षर सत्य हैं । अतः 'सत्य' को असत्य से मत छिपाओ ।" ॥ ३५ ॥

चारुदत्त—यह आभूषण वही हैं ? यह मैं नहीं जानता किन्तु हमारे घर से लाये गए हैं,यह जानता हूँ ।

शकार—पहिले उद्यान में घुसकर उसे मार डाला और अब कपटपूर्वक

निगूहसि ? । ]

अधिकरणिकः—आर्यचारुदत्त ! सत्यमभिधीयताम् ,—

इदानीं सुकुमारेऽस्मिन्निःशङ्कं कर्कशाः कशाः ।
तव गात्रे पतिष्यन्ति सहास्माकं मनोरथैः ॥३६॥

चारुदत्तः—

अपापानां कुले जाते मयि पापं न विद्यते ।
यदि संभाव्यते पापमपापेन च किं मया ? ॥३७।

( स्वगतम् ) न च मे वसन्तसेनाविरहितस्य जीवितेन कृत्यम् । ( प्रकाशम् ) भोः ! किं बहुना

---

इदानीमिति । आर्यचारुदत्त ! सत्यं कथय । अधुना सुकुमारे तव शरीरेऽस्माकं मनोरथा अपि पतिष्यन्ति कशाश्चापि पतिष्यन्ति । त्वमिदानीं दण्डनीयो भविष्यसीति भावः । ॥३६॥

अपापानामिति । अहं पापर इतानां पुरुषाणां कुले समुत्पन्नोऽस्मि, पापस्य तु मयि सम्भावनापि नास्ति, यदि भवद्भिः पापं मयि सम्भाव्यते एव, तर्हि अपापोऽस्मीत्यपि निरर्थकमेव मम कथनमिति यथा रोचते, तथा क्रियताम् ॥३७॥

---

छिपा रहा है ।

अधिकरणिक—आर्य चारुदत्त ! सच कहिये ।

"( अन्यथा— ) अब आपके इन कोमल अङ्गों पर हमारे मनोरथों के साथ कठोर कोड़े पड़ेंगे । ( अतः सत्य बात कहिये । )" ॥ ३६ ॥

चारुदत्त—"मेरा जन्म निष्पाप कुल में हुआ है मुझमें पाप का लेश भी नहीं है । ( इतने पर भी ) यदि मुझमें पाप की शङ्का की जाती है तो मेरे निष्पाप कहने से क्या लाभ ? ( जैसा मन में आवे वैसा करिये ? )" ॥ ३७ ॥

( स्वगत ) अथवा "वसन्तसेना" से रहित मेरे जीवन से क्या लाभ ? ( प्रकाश में ) अधिक क्या कहूँ ?—

मया किल नृशंसेन लोकद्वयमजानता ।
स्त्रीरत्नं च विशेषेण शेषमेषोऽभिधास्यति ॥३८॥

शकारः—वावादिदा । अले ! तुमं पि भण, मए वावादिदेत्ति । [ व्यापादिता । अरे ! त्वमपि भण, मया व्यापादितेति । ]

चारुदत्तः—त्वयैवोक्तम् ।

शकारः—शुणेध शुणेध भट्टालका ! एदेण मालिदा । एदेण ज्जेव शंशए छिण्णे । एदश्श दलिद्दचालुदत्तश्श शालीले दंडे धालीअदु । [ शृणुत शृणुत भट्टारकाः ! एतेन मारिता । एतेनैव संशयश्छिन्नः । एतस्य दरिद्रचारुदत्तस्य शारीरो दण्डो धार्यताम् । ]

अधिकरणिकः—शोधनक ! यथाह राष्ट्रियः । भो राजपुरुषाः ! गृह्यतामयं चारुदत्तः ।

( राजपुरुषा गृह्णन्ति )

---

मया किलेति । पूर्वोक्त एव श्लोकः किञ्चित् परिवर्त्योक्तः । लोकद्वयम् = इह लोकम्, परलोकञ्च । शेषं पूर्ववत् ॥३८॥

---

"दोनों लोकों को न जानते हुए मैंने स्त्री रत्न"—

शेष यह ( "शकार" ) कहेगा । ( अर्थात्—"मैंने "वसन्तसेना" की हत्या की है" यह "शकार" का अभियोग है । )" ॥ ३८ ॥

शकार—मार डाली । अरे ! तू भी बोल कि "मैंने मार डाली ।"

चारुदत्त—तूने ही कह दिया है ।

शकार—आर्यो ! सुनो ! सुनो ! इसने ही मारी है और इसने ही सन्देह भी दूर कर दिया है । अतः इस "दरिद्र चारुदत्त" के लिए शारीरिक दण्ड का विधान कीजिए ।

अधिकरणिक—शोधनक ! जैसा राजश्यालक कहते हैं ( वैसा करो ! ) राजपुरुषो ! "चारुदत्त" को पकड़ लो !

[ "राजपुरुष" ( सिपाही ) पकड़ लेते हैं । ]

वृद्धा—पसीदंतु पसीदंतु अज्जमिस्सा !। ('जो दाव चोरेहिं अव-हिस्स–' इत्यादि पूर्वोक्तं पठति) ता जदि वावादिदा मम दारिआ वावा-दिदा। जीवदु मे दीहाऊ। अण्णं च, अत्थिपच्चत्थिण्णं व्ववहारो। अहं अत्थिणी। ता मुंचध एदं। [ प्रसीदन्तु प्रसीदन्त्वार्यमिश्राः ! तद्यदि व्यापादिता मम दारिका, व्यापादिता। जीवतु मे दीर्घायुः। अन्यच्च अर्थिप्रत्यर्थिनोर्व्यवहारः। अहमर्थिनी। तन्मुञ्चतैनम् ]

शकारः—अवेहि गब्भदाशि ! गच्छ, किं तव एदिणा ?। [ अपेहि गर्भदासि ! गच्छ, किं तवैतेन ? । ]

अधिकरणिकः—आर्ये ! गम्यताम्। हे राजपुरुषाः ! निष्क्रामयतैनाम्।

वृद्धा—हा जाद ! हा पुत्तअ !। [ हा जात ! हा पुत्रक !। ] ( इति रुदती निष्क्रान्ता )

शकारः—( स्वगतम् ) कडं मए एदश्श अत्तणो शलिशं। शंपदं गच्छामि। [ कृतं मयैतस्यात्मनः सदृशम्, सांप्रतं गच्छामि। ]

( इति निष्क्रान्तः )

अधिकरणिकः—आर्यचारुदत्त ! निर्णये वयं प्रमाणम्; शेषे तु राजा।

---

वृद्धा—आप प्रसन्न हों। प्रसन्न हों। ( "जो पहिले चोरों द्वारा अपहृत सुवर्णपात्र के लिए—" आदि पूर्वोक्त वाक्य पढ़ती है। ) इसलिए यदि मेरी पुत्री मारी गई तो मर जाने दो। परन्तु मेरा यह दीर्घायु जी जाय! और दूसरी बात यह है कि यह व्यवहार "अर्थिप्रत्यर्थी" ( मुद्दई मुद्दालह ) का है। मैं "अर्थिनी" हूँ अतः इसे छोड़ दो।

शकार—जन्मदासि ! चुप रह ! जा ! तुझे इससे क्या प्रयोजन ?

अधिकरणिक—आर्ये ! जाइये ! राजपुरुषो ! इसे निकाल दो।

वृद्धा—हा वत्स ! हा पुत्र ! [ रोती हुई चली जाती है। ]

शकार—( स्वयं ही ) मैंने अपना इष्ट कार्य कर लिया। अब जाता हूँ।

[ चला जाता है। ]

अधिकरणिक—आर्य चारुदत्त ! निर्णय करने वाले हम हैं। इससे अति-

तथापि शोधनक ! विज्ञाप्यतां राजा पालकः—

'अयं हि पातकी विप्रो न वध्यो मनुरब्रवीत् ।
राष्ट्रादस्मात्तु निर्वास्यो विभवैरक्षतैः सह ॥३९॥'

शोधनकः—जं अज्जो आणवेदि । ( इति निष्क्रम्य, पुनः प्रविश्य, सास्रम् ) अज्जा ! गदम्हि तहिं । राआ पालओ भणादि—'जेण अत्थकल्लवत्तस्स कालणादो वसंतसेणा वावादिदा, तं ताइं ज्जेव आहरणाइं गले बंधिअ डिंडिमं ताडिअ दक्खिणमसाणं णइअ सूले भज्जेध' त्ति । जो को वि अवरो एरिसं अकज्जं अणुचिट्ठदि सो एदिणा सणिआरदंडेण सासीअदि । [ यदार्य आज्ञापयति, आर्याः ! गतोऽस्मि तत्र । राजा पालको भणति—'येनार्थं कल्यवर्तस्य कारणाद्वसन्तसेना व्यापादिता, तं तान्येवाभरणानि गले बद्ध्वा डिण्डिमं ताडयित्वा दक्षिणश्मशानं नीत्वा शूले भङ्क्त' इति । यः कोऽप्यपर ईदृशमकार्यमनुतिष्ठति स एतेन सनिकारदण्डेन शास्यते । ]

---

अयं हीति । शोधनक ! राजा निवेद्यताम् यदयमस्ति ब्राह्मणः, स चावध्यो भवतीति मनुनोक्तम् । केवलं धनादिसहितोऽस्मात् राष्ट्राद् बहिः निःसारणीयः ।

अग्रे च भवान् प्रमाणमिति ॥३९॥

---

रिक्त में राजा प्रमाण है। शोधनक ! तथापि राजा "पालक" से निवेदन करो कि--

यह दोषकर्ता ब्राह्मण वध्य नहीं है ऐसी "मनु महाराज" की आज्ञा है। अतः इसको धन सहित देश से निकाल देना चाहिए।" ॥ ३९ ॥

शोधनक—जो आज्ञा ! ( बाहर जा, पुनः प्रवेश कर, रोता हुआ ) आर्य ! मैं वहाँ गया, राजा "पालक" कहते हैं कि—

"जिसने प्रातराशतुल्य धन के लिए "वसन्तसेना" की हत्या की है उसको वही आभूषण पहिनाकर डिण्डिम घोषपूर्वक दक्षिण श्मशान में ले जाकर शूली पर चढ़ा दो।" और जो कोई ऐसा अकार्य करेगा वह इसी प्रकार तिरस्कारपूर्वक दण्ड से शासित किया जायगा।

चारुदत्तः—अहो, अविमृश्यकारी राजा पालकः । अथवा

ईदृशे व्यवहाराग्नौ मन्त्रिभिः परिपातिताः ।
स्थाने खलु महीपाला गच्छन्ति कृपणां दशाम् ॥४०॥

अपि च,—

ईदृशैः श्वेतकाकीयै राज्ञः शासनदूषकैः ।
अपापानां सहस्राणि हन्यन्ते च हतानि च ॥४१॥

सखे मैत्रेय ! गच्छ, मद्वचनादम्बामपश्चिममभिवादयस्व । पुत्रं च मे रोहसेनं परिपालयस्व ।

---

ईदृशे–इति । चारुदत्तो राज्ञः पालकस्याविमर्शकारित्वमेव सूचयति—अथवा–एवंविधे व्यवहार–वह्नौ मन्त्रिभिः सन्निपातिता राजानः शोचनीयां दशां गच्छन्ति । मन्त्रिणामेव कृपया राजानोऽपि पतिता भवन्ति, इति भावः ॥४०॥

ईदृशैरिति । हन्त ! एवंविधाः श्वेत-काकाः एव राज्ञः शासनं दूषयन्ति, सहस्रसंख्याकानपि पापरहितान् पुरुषानेते विनाशयन्ति, पूर्वञ्चापि विनाशिताः । एवंविधा बहवो दृष्टान्ताः सन्ति, इति भावः ॥४१॥

---

चारुदत्त—ओह ! राजा "पालक" बड़ा अविचार से कार्य करने वाला है ! अथवा,

"इस प्रकार की व्यवहाराग्नि में मन्त्रियों के द्वारा डाले गये राजा लोग स्थान-स्थान पर ऐसी शोचनीय दशा को प्राप्त हो जाते हैं । ( मन्त्रियों की कृपा से ही राजा भी पतित हो गये हैं । )" ॥ ४० ॥

और भी—

"इस प्रकार श्वेत कौओं के समान राजा के शासन को दूषित कर देने वाले लोगों के द्वारा हजारों निर्दोष व्यक्ति मारे गये तथा मारे जा रहे हैं ।" ॥४१॥

मित्र मैत्रेय ! जाओ मेरी ओर से माता जी को अन्तिम प्रणाम कहना । और मेरे पुत्र "रोहसेन" का भी पालन करना ।

विदूषकः—मूले छिण्णे कुदो पादवस्स पालणं ? । [ मूले छिन्ने कुतः पादपस्य पालनम् ? । ]

चारुदत्तः—मा मैवम् ;

**नृणां लोकान्तरस्थानां देहप्रतिकृतिः सुतः ।**
**मयि यो वै तव स्नेहो रोहसेने स युज्यताम् ॥४२॥**

विदूषकः—भो वअस्स ! अहं ते पिअवअस्सो भविअ तुए विरहिदाइं पाणाइं धारेमि ? । [ भो वयस्य ! अहं ते प्रियवयस्यो भूत्वा त्वया विरहितान् प्राणान् धारयामि । ]

चारुदत्तः—रोहसेनमपि तावद्दर्शय ।

विदूषकः—एव्वं, जुज्जदि । [ एवम् , युज्यते । ]

अधिकरणिकः—भद्र शोधनक ! अपसार्यतामयं बटुः ।

( शोधनकस्तथा करोति )

---

नृणामिति । मैत्रेय ! परलोकं गतानां जनानां प्रतिकृतिः = प्रतिमूर्तिः पुत्रो भवति । अतो यादृशी प्रीतिस्तव मय्यासीत् , तादृश्येवाधुना मम पुत्रे रोहसेने कार्या ॥४२॥

---

विदूषक—जड़ कट जाने पर पेड़ का पालन कैसा ? ( तुम्हारे बिना "रोहसेन" का पालन कैसे हो सकता है ? )

चारुदत्त—ऐसा मत कहो—

"पुत्र परलोक गये हुए मनुष्यों की प्रतिकृति होता है अतः जो तुम्हारा स्नेह मुझमें है वह "रोहसेन" में लगा देना ।" ॥४२॥

विदूषक—मित्र ! मैं तुम्हारा प्रियमित्र होकर तुम्हारे वियोग में जी सकूँगा ?

चारुदत्त—"रोहसेन" को भी मिला दो ।

विदूषक—ऐसा ! ठीक है ।

अधिकरणिक—भद्रशोधनक ! इस ब्राह्मण को हटाओ ।

[ "शोधनक" "विदूषक" को हटा देता है । ]

अधिकरणिकः—कः कोऽत्र भोः ? । चाण्डालानां दीयतामादेशः ।

( इति चारुदत्तं विसृज्य, निष्क्रान्ताः सर्वे राजपुरुषाः )

शोधनकः—इदो आअच्छदु अज्जो । [इत आगच्छत्वार्यः । ]

चारुदत्तः—( सकरुणम् , 'मैत्रेय भोः ! किमिदमद्य' ( ९।२९ ) इत्यादि पठति; आकाशे )

**विषसलिलतुलाग्निप्रार्थिते मे विचारे,**
**क्रकचमिह शरीरे वीक्ष्य दातव्यमद्य ।**
**अथ रिपुवचनाद्वा ब्राह्मणं मां निहंसि,**
**पतसि नरकमध्ये पुत्रपौत्रैः समेतः ॥४३॥**

---

राजानं पालकमुद्दिश्य चारुदत्तः स्वमतं कथयति—विषेति । हन्त ! ममाभियोगे विचारः परमावश्यक आसीत् । विषेण सलिलेन, तुलया अग्निना च दिव्य परीक्षया विचारः कर्तुमुचितः, स च नैव कृतः । किंच—रिपोः = शकारस्य वचनादेव ब्राह्मणो निहन्यते । अतो राजन् ! पुत्रपौत्रैः सह त्वमवश्यं नरके पतिष्यसीति ।

---

अधिकरणिक—यहाँ कौन है ? चाण्डालों को ( शूली का ) आदेश दो ।

[ "चारुदत्त" को छोड़कर सब राजपुरुष चले जाते हैं । ]

शोधनक—आर्य ! इधर से आइये ।

चारुदत्त( करुणापूर्वक "मैत्रेय भो किमिदमद्य......" इत्यादि ( ९।२९ ) श्लोक पढ़ता है । ) ( आकाश में । )

"विष, जल, तुला तथा अग्नि से परीक्षा कर मेरे शरीर में 'क्रकच' ('आरा') देना उचित था । परन्तु ( ऐसा न कर केवल ) शत्रु ( "शकार" ) के कहने मात्र से ही मुझ ब्राह्मण को मार रहा है ( अतः नीच पालक ! ) तू पुत्र पौत्रों के साथ नरक में पड़ेगा ।" ॥४३॥

अयमागतोऽस्मि ।

( इति निष्क्रान्ताः सर्वे )

## इति व्यवहारो नाम नवमोऽङ्कः ।

---

तथा चोक्तम्—

"अदण्ड्यान् दण्डयन् राजा, दण्ड्यांश्चैवाप्यदण्डयन् ।
अयशो महदाप्नोति, नरकं चाधिगच्छति ॥" इति ।

अत्र काव्यलिङ्गालङ्कारः । मालिनी छन्दः ॥४३॥

इति मृच्छकटिके "श्रीप्रियम्वदा"ख्यटीकायां व्यवहारो नाम
नवमोऽङ्कः सम्पूर्णः ॥

---

अभी आता हूँ । [ सब चले जाते हैं । ]

"श्रीप्रियम्वदा"-टीकालङ्कृत "मृच्छकटिक" के ❀ "व्यवहार" नामक
नवें अङ्क का भाषानुवाद समाप्त ॥

---

❀ "मृच्छकटिक" का यह अङ्क कई दृष्टियों से बहुत ही महत्वपूर्ण है । इसमें कवि ने प्रस्तावना के "नयप्रचारं व्यवहारदुष्टताम्" इस कथन का सुन्दर निर्वाह किया है । स्थल-स्थल पर "न्यायालय" की सूक्ष्मता का वर्णन "शूद्रक" की लेखनी से बहुत ही सजीव रूप में हुआ है ।

इसके साथ साथ इस अङ्क से तात्कालिक राजनैतिक व्यवस्था का भी परिचय प्राप्त होता है । "उस समय मनुस्मृति के अनुसार अभियोगों का निर्णय होता था । निर्णयकर्ता "अधिकरणिक" कहलाता था ।"

इस प्रकार यह अङ्क इस "प्रकरण" का महत्वपूर्ण भाग है । इसमें कवि का अपना अनुभव स्पष्ट है । संक्षेप में इसका "व्यवहार" नाम यथार्थ ही है ।"

## दशमोऽङ्कः

( ततः प्रविशति चाण्डालद्वयेनानुगम्यमानश्चारुदत्तः )

उभौ—

तक्किं ण कलअ कालण णववहबंघणअम्हे णिउणा ।
अचिलेण शीशच्छेअणशूलालोवेशु कुशलम्ह ॥१॥

ओशलध अज्जा ! ओशलध । एशे अज्जचालुदत्ते

दिण्णकलवीलदामे गहिदे अम्हेहिं वज्झपुलिशेहिं ।
दीवे व्व मंदणेहे थोअं थोअं खअं जादि ॥२॥

---

अथ किमर्थं दक्षिणमार्गेण गम्यते ? इति कस्यचित् प्रश्नं समादधाते चाण्डालौ—तक्किमिति । भोः ! त्वं कारणं किमिति न कलय=जानीहि आवां नववधे, ( कस्यचित्सापराधस्येति शेषः ) बन्धनयने च निपुणौ स्वः । किं च—अचिरेण शीर्षच्छेदे शूलोपरि धारणे चावयोश्चातुर्यं प्रसिद्धमस्ति ! आवामिदानीं बध्यं चारुदत्तं शूले समारोपयितुं दक्षिण-श्मशानं प्रयावः, इत्येव कारणमस्ति दक्षिणमार्गे गमनस्येति भावः ।

अत्रोपगीतिश्छन्दः । "आर्योत्तरार्धतुल्ये दलद्वये प्राहुरुपगीतिम् ।" इति लक्षणम् ॥ १ ॥

---

[ तदनन्तर दो चाण्डालों से अनुगत "चारुदत्त" का प्रवेश होता है । ]

दोनों चाण्डाल—

[ "दक्षिण मार्ग से क्यों जा रहे हो ?" इसका उत्तर देते हुए कहते हैं— ]

"तुम कारण क्यों नहीं जानते हो ? हम ( किसी सापराध के ) नूतनवध तथा बन्धन में अत्यन्त निपुण हैं । हम बहुत शीघ्र सिर काटने तथा शूली देने में भी बड़े कुशल हैं । ( इस समय हमारी नियुक्ति "चारुदत्त" को "दक्षिण श्मशान" में ले जाकर शूली देने की" है, अतः हम दक्षिण मार्ग से जा रहे हैं । )" ॥ १ ॥

[ तत् किं न कलय कारणं नववधबन्धनयने निपुणौ ।
अचिरेण शीर्षच्छेदनशूलारोपेषु कुशलौ स्वः ॥

अपसरतार्याः अपसरत । एष आर्यचारुदत्तः

दत्तकरवीरदामा गृहीत आवाभ्यां वध्यपुरुषाभ्याम् ।
दीप इव मन्दस्नेहः स्तोकं स्तोकं क्षयं याति ॥ ]

चारुदत्तः—( सविषादम् )

**नयनसलिलसिक्तं पांशुरुक्षीकृताङ्गं,**
**पितृवनसुमनोभिर्वेष्टितं मे शरीरम् ।**

---

लोकानपसारयितुं कारणं प्रदर्शयते—दिण्णेति । अयं चारुदत्तः करवीर-मालाऽलङ्कृतः सम्प्रति बध्यपुरुषाभ्याम्—[ बधे साधुः—बध्यः "तत्र साधुः" इति सूत्रेण यत् प्रत्ययः । ] आवाभ्यां गृहीतः स्नेहाभावात् दीप इव मन्दं मन्दं क्षीणो भवति । बध्यः पुरुषः करवीर ( करञुआ, इति हिन्दीप्रसिद्धः ) पुष्पैः, रक्त-चन्दनेन चालङ्कृत्य शूलमारोपयितुं नीयते, तन्नियमानुसारमेवावाभ्यां तथाकृत्य नीयमानश्चारुदत्तः प्रदीप इव क्षयं याति । अतो मार्गं परित्यजत, इति भावः । आर्या च्छन्दः ॥ २ ॥

चारुदत्तः स्वकीयां दशां निरीक्ष्य सखेदमाह—नयनेति । अहो ! दशा-विपर्ययः ! एते वायसाः विरसतया शब्दं कुर्वाणाः श्मशाने समुत्पन्नैः करवीर-पुष्पैः समलङ्कृतम्, पांशुभिः=धूलिजालैः रुक्षीकृताङ्गम्, लोचनजलधाराभिः सिक्तम्,

---

आर्यो ! हटो ! हटो ! यह आर्य चारुदत्त—

"कनियर की माला पहिनाकर हम दोनों के द्वारा पकड़ा गया तेलरहित दीपक की भाँति शनैः-शनैः क्षीण हो रहा है ।" ॥ २ ॥

चारुदत्त—( विषादपूर्वक )

"ये कौए बड़ा कर्ण कटु शब्द करते हुए—आँसुओं से भीगे, धूल धूसरित, श्मशान में उत्पन्न 'कनियर' के पुष्पों से अलङ्कृत तथा लाल वर्ण के गन्ध से

विरसमिह रटन्तो रक्तगन्धानुलिप्तं,
बलिमिव परिभोक्तुं वायसास्तर्कयन्ति ॥३॥

चाण्डालौ—ओशलध अज्जा ! ओशलध ।

किं पेक्खध छिज्जंतं शप्पुलिशं कालपलशुधालाहिं ? ।
शुअणशउणाधिवाशं　शज्जणपुलिशद्दुमं　एदं ॥४॥

आअच्छ ले चालुदत्ता ! आअच्छ ।

[ अपसरतार्याः ! अपसरत ।

किं पश्यत छिद्यमानं सत्पुरुषं कालपरशुधाराभिः ।
सुजनशकुनाधिवासं सज्जनपुरुषद्रुममेतम् ॥

आगच्छ रे चारुदत्त ! आगच्छ । ]

चारुदत्तः—पुरुषभाग्यानामचिन्त्याः खलु व्यापाराः, यदहमीदृशीं दशामनुप्राप्तः ।

---

मदीयं शरीरं बलिमिव भोक्तुं विचारयन्तीव । क एवं वेत्ति-ममाप्यन्तः एवं भविष्यति ?

अत्रोत्प्रेक्षोपमा चालङ्कारौ । मालिनी च च्छन्दः ॥ ३ ॥

पुनरप्यपसारयितुं कथयन्तौ सत्पुरुष-विनाशो नावेक्षणीयः, इति सूचयतः—किं पेक्खध-इति । महानुभावोऽयं वृक्षतुल्यः, काल-रूप-परशु-धारया छिद्यते, अस्मिन् वृक्षे च सत्पुरुषाः = पक्षिरूपाः निवासं कुर्वन्ति स्म । तत्किमिति पश्यत एनमेवंविधमिति दूरे यात । अत्र रूपकालङ्कारः । आर्या च्छन्दः ॥ ४ ॥

---

अनुलिप्त मेरे शरीर को बलि की भाँति खाने का विचार कर रहे हैं।" ॥ ३ ॥

चाण्डाल—आर्यो ! हटो ! हटो !

"सज्जन पुरुष रूपी पक्षियों के निवास तथा सत्पुरुषों के लिए वृक्ष-तुल्य इस महानुभाव को काल रूपी फरसे की धार से कटते हुए क्यों देख रहे हो ? सत्पुरुष का वध देखना उचित नहीं है अतः हट जाओ। )" ॥ ४ ॥

आ रे ! चारुदत्त ! आ !

चारुदत्त—पुरुषों के भाग्यों के व्यापार बड़े ही विचित्र अथ-च अचिन्त्य

सर्वगात्रेषु विन्यस्तै रक्तचन्दनहस्तकैः ।
पिष्टचूर्णावकीर्णश्च पुरुषोऽहं पशूकृतः ॥५॥

( अग्रतो निरूप्य ) अहो, तारतम्यं नराणाम् । ( सकरुणम् )

अमी हि दृष्ट्वा मदुपेतमेतन्मर्त्यं धिगस्त्वित्युपजातबाष्पाः ।
अशक्नुवन्तः परिरक्षितुं मां स्वर्गं लभस्वेति वदन्ति पौराः ॥६॥

चाण्डालौ—ओशलध अज्जा ! ओशलध । किं पेक्खध ? ।

---

पुरुषाणां भाग्यानि विचित्राणि भवन्ति, तेषां व्यापारः सम्यगवधारयितुं न शक्यते, यतः कल्पनातीता मदीयेदृशी दशा समुत्पन्ना, इत्याशयेनाह—सर्वगात्रेष्विति । हन्त ! रक्तचन्दनस्य हस्तचिह्नप्रदानेन पिष्टकृष्ण-तण्डुल तिलादि-चूर्णेनालङ्करणेनाहं बलिप्रदानाय पशुतुल्यः कृतोऽस्मि । बलिप्रदाने पशुरेवमेव सुसज्जितः क्रियते ॥ ५ ॥

पुनरपि नराणां तारतम्यं दृष्ट्वा प्राह चारुदत्तः—अमी हि-इति । एते गतागतं कुर्वाणा मानवा एवंविधं करवीरादि-समुपेतं मामवलोक्य "मानवोऽप्येवं पशुवद्बध्यते, धिक् !" इति रुदन्तः मां परिरक्षितुमसमर्थाः सन्तः "स्वर्गं प्राप्नुहि" इति वदन्तो गच्छन्ति । ये एव मम सुहृद्भूतास्ते एवेदानीं मम विपत्ति-काले किंकर्तव्यविमूढा इव सन्तप्यन्ते, इति भावः ।

अत्रेन्द्रवज्रोपेन्द्रवज्रयोः सम्मिश्रणादुपजातिश्छन्दः ॥ ६ ॥

---

होते हैं, जिससे कि आज मेरी यह दशा हो गई है ।

"सारे शरीर में लाल चन्दन के थपे लगाकर तथा काले तिलों के चूर्ण से व्याप्तकर मुझ पुरुष को ( बलि के ) पशु के समान बना दिया है ।" ॥ ५ ॥

( आगे देखकर ) ओह ! मनुष्यों की कितनी भीड़ है ! ( शोकपूर्वक )

"ये नागरिक मुझको इस अवस्था में देखकर ( "मनुष्य भी पशु के समान बाँधा जा रहा है" इस ) धिक्कारपूर्वक आँखों में आँसू भरे हुए मेरी रक्षा करने में अपने को असमर्थ जानकर "स्वर्ग प्राप्त करो" यह कह रहे हैं ।" ॥६॥

चाण्डाल—आर्यो ! हटो ! हटो ! क्या देखते हो !—

इंदे प्पवाहिअंते गोप्पशवे शंकमं च तालाणं ।
शुपुलिशपाणविपत्ती चत्तालि इमे ण दट्ठव्वा ॥७॥

[ अपसरतार्याः अपसरत । किं पश्यत ? ।
इन्द्रः प्रवाह्यमाणो गोप्रसवः संक्रमश्च ताराणाम् ।
सुपुरुषप्राणविपत्तिश्चत्वार्येतानि न द्रष्टव्यानि ॥ ]

एकः—हंडे आहींता ! पेक्ख पेक्ख

णअलीपधाणभूदे वज्झीअंते कदंतअण्णाए ।
किं लुअदि अंतलिक्खे आदु अणब्भे पडदि वज्जे ॥८॥

[ अरे आहीन्त ! पश्य पश्य
नगरीप्रधानभूते वध्यमाने कृतान्ताज्ञया ।
किं रोदित्यन्तरिक्षमथवाऽनभ्रे पतति वज्रम् ॥ ]

---

इन्दे–इति । अत्र "इन्द्र"-पदेन लक्षणया इन्द्रार्थो ध्वजो गृह्यते । इन्द्रस्य प्रत्यक्षाभावात् । ततश्च—प्रवाह्यमाणः = जले प्रवाहयितुं नीयमान इन्द्रध्वजः, गोः प्रसवः, ताराणां प्रचलनम् । सत्पुरुषस्य प्राणसंहारः, इत्येते चत्वारः पदार्था नैव द्रष्टव्याः स्वकल्याणार्थिभिः । आर्या च्छन्दः ॥ ७ ॥

"हण्डे" इति । नीचपात्राणां सम्बुद्धिपदमेतत् । अलङ्कारशास्त्रे तथैव नियमात् । "आहीन्त" इति चाण्डालस्य नामास्ति ।

णअली–इति । नगर्याः प्रधानपुरुषो बधार्थं नीयते । कृतान्तस्य = यमतुल्यस्यास्य राज्ञ आदेशादेवावाभ्यामयं महानुभावो बधार्थं नीयते, न चावयोरत्र दोषः,

---

"बहाने के लिए ले जाता हुआ 'इन्द्रध्वज', गौ का प्रसव, तारों का टूटना तथा सत्पुरुष का वध—ये चार बातें नहीं देखनी चाहिए ।" ॥ ७ ॥

पहिला—अरे ! आहीन्त ! देख !

"कृतान्त-तुल्य इस राजा की आज्ञा से नगरी ( "उज्जयिनी" ) के प्रमुख पुरुष ( "चारुदत्त" ) को वधस्थान पर ले जाते समय क्या यह आकाश रो रहा है अथवा मेघों के बिना ही वज्र गिर रहा है ?" ॥ ८ ॥

द्वितीयः—अले गोहा !

**ण अ लुअदि अंतलिक्खे णेअ अणब्भे पडदि वज्जे ।**
**महिलाशमूहमेहे णिवडदि णअणंबु धालाहिं ॥९॥**

अवि अ,—

**वज्झम्मि णीअमाणे जणश्श शव्वश्श लोदमाणश्श ।**
**णअणशलिलेहिं शित्ते लच्छादो ण उण्णमइ लेणू ॥१०॥**

[ अरे गोह !

न च रोदित्यन्तरिक्षं नैवानभ्रे पतति वज्रम् ।
महिलासमूहमेघान्निपतति नयनाम्बु धाराभिः ॥

---

ततः किमु अन्तरिक्षं रोदिति ? अथवा अनभ्रं=मेघं विनैव वज्रं निपतति ? किमेतदिति ? ॥ ८ ॥

ण अ—इति । नान्तरीक्षं रोदिति, न वाऽनभ्रं वज्रपातो भवति, अपितु महिलानां समुदाय रूपान् मेघान् नयनाम्बुधारा निपतन्ति ।

आर्यचारुदत्तवधादेशात् सर्वा अपि नगरनार्यः शोकाकुला अविरतं नयनाम्बुवर्षणं कुर्वन्ति, इति भावः ॥९॥

वज्झम्मि—इति । बध्ये चारुदत्ते नीयमाने सर्वेषां रोदनादश्रुधाराभिः सिक्तो रथ्यारेणुर्नैवोत्पतति ॥१०॥

---

दूसरा—अरे गोह !

"न अन्तरिक्ष रो रहा है और न वज्र ही टूटकर गिर रहा है प्रत्युत महिला-समुदाय-रूपी मेघों से नयन-जलधाराएँ गिर रही हैं । ("चारुदत्त" के वध से सारी नगरी-नारियाँ रो रही हैं । )" ॥ ९ ॥

और भी—

"वध्य ( "चारुदत्त" ) के वध्यस्थान पर ले जाए जाते समय रोते हुए नागरिकों की आँसुओं से भीगने के कारण मार्ग में धूलि भी नहीं उठ रही है ।" ॥ १० ॥

अपि च,—

वध्ये नीयमाने जनस्य सर्वस्य रुदतः ।
नयनसलिलैः सिक्तो रथ्यातो नोन्नमति रेणुः ॥ ]

चारुदत्तः—( निरूप्य, सकरुणम् )

**एताः पुनर्हर्म्यगताः स्त्रियो मां,**
**वातायनार्धेन विनिःसृतास्याः ।**
**हा चारुदत्तेत्यभिभाषमाणा,**
**बाष्पं प्रणालीभिरिवोत्सृजन्ति ॥११॥**

चाण्डालौ—आअच्छ ले चालुदत्ता ! आअच्छ । इमं घोषणट्ठाणं । आहणेध डिंडिमं, घोशेध घोशणं [ आगच्छ रे चारुदत्त ! आगच्छ । इदं घोषणस्थानम् । आहत डिण्डिमम्, घोषयत घोषणाम् । ]

उभौ—सुणाध अज्जा ! सुणाध । एशे शत्थवाहविणअदत्तश्श णत्तिके

---

गवाक्षेषु समुपविष्टा नार्यो रुदन्तीत्यवेक्ष्य चारुदत्तः सशोकमाह—एता इति । हर्म्ये=धनिनां भवनेषु स्थिता एता नार्यो गवाक्षार्धान्मुखं बहिः कृत्वा "हा चारुदत्त !" इति परस्परं कथयन्त्यः प्रणालीभिरिव वाष्पजलं प्रवाहयन्ति । सर्वा अपि मां निरीक्ष्य शोकावेगतया सुचिरं रुदन्तीत्यर्थः ।

अत्रोत्प्रेक्षाऽलङ्कारः । इन्द्रवज्रा च्छन्दः ।

तल्लक्षणञ्च यथा—"स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति ॥११॥

---

चारुदत्त—( देखकर करुणापूर्वक )

"ये प्रासादों पर बैठी हुई स्त्रियाँ झरोखों से मुख निकाल कर मुझको देखती हुई "हा चारुदत्त" इस प्रकार विलापपूर्वक परनालों के समान आँखों से आँसू बरसा रही हैं ।" ॥११॥

चाण्डाल—आ रे ! चारुदत्त ! आ ! यह घोषणा का स्थान है । ढोल बजाओ ! घोषणा करो !

दोनों—सुनो जी ! सुनो ! "यह "सार्थवाह विनयदत्त" का पौत्र, "सागरदत्त"

शाअलदत्तश्श पुत्तके अज्जचालुदत्ते णाम। एदिणा किल अकज्जकालिणा गणिआ वशंतशेणा अत्थकल्लवत्तश्श कालणादो शुण्णं पुप्फकलंडअजिण्णुज्जाणं पवेशिअ बाहुपाशबलक्कालेण मालिदे त्ति, एशे शलोत्ते गहिदे, शअं अ पडिवण्णे। तदा लण्णा पालएण अम्हे आण्णत्ता एदं मालेदुं। जदि अवले ईदिशं उभअलोअविलुद्धं अकज्जं कलेदि तं पि लाआ पालए एव्वं ज्जेव शाशदि। [ शृणुतार्याः शृणुत। एष सार्थवाहविनयदत्तस्य नप्ता सागरदत्तस्य पुत्रक आर्यचारुदत्तो नाम। एतेन किलाकार्यकारिणा गणिका वसन्तसेनार्थकल्यवर्तस्य कारणाच्छून्यं पुष्पकरण्डकजीर्णोद्यानं प्रवेश्य बाहुपाशबलात्कारेण मारितेति एष सलोप्त्रो गृहीतः, स्वयं च प्रतिपन्नः। ततो राज्ञा पालकेन वयमाज्ञप्ता एतं मारयितुम्। यद्यपर ईदृशमुभयलोकविरुद्धमकार्यं करोति तमपि राजा पालक एवमेव शास्ति ]

चारुदत्तः— ( सनिर्वेदं स्वगतम् )

**मखशतपरिपूतं गोत्रमुद्भासितं मे,**
**सदसि निबिडचैत्यब्रह्मघोषः पुरस्तात्।**

---

"चारुदत्तो धनलोभाद् वसन्तसेनां मारितवान्, सलोप्त्रः ( लोप्त्रं चौर्यधनं, तेन सहितः ) गृहीतोऽयं स्वयमेव तथा स्वीकृतवानिति घोषणां निशम्य स्वपूर्वजानां स्वस्य च दशां स्मृत्वा सदुःखमाह चारुदत्तः—मखेति। मदीयं गोत्रं पूर्वं शत-

---

का पुत्र "आर्यचारुदत्त" है। इस अकार्य करने वाले ने वेश्या "वसन्तसेना" धन के लोभ से निर्जन "पुष्पकरण्डक जीर्णोद्यान" में बाहुपाश में जकड़कर बलात्कारपूर्वक मार डाली है। और यह धन ( मुद्दे ) सहित पकड़ा गया है तथा इसने स्वयं भी स्वीकार कर लिया है। तब "राजा पालक" ने हमको इसे मारने की आज्ञा दी है। यदि कोई ( भविष्य में ) ऐसा अकार्य करेगा तो उसको भी "राजा पालक" इसी प्रकार दण्ड देंगे।"

चारुदत्त—( उदासीनता से स्वयं ही )—

"मेरा गोत्र सैकड़ों यज्ञों से पवित्र था, यज्ञ-सभाओं और विहारों में वेद-घोष

मम मरणदशायां वर्तमानस्य पापै-
स्तदसदृशमनुष्यैर्घुष्यते घोषणायाम् ॥ १२ ॥

( उद्वीक्ष्य, कर्णौ पिधाय ) हा प्रिये वसन्तसेने !

शशिविमलमयूखशुभ्रदन्ति ! सुरुचिरविद्रुमसन्निभाधरौष्ठि ! ।
तव वदनभवामृतं निपीय कथमवशो ह्ययशोविषं पिबामि ? ॥ १३ ॥

उभौ—ओशलध अज्जा ! ओशलध ।

---

संख्यैर्यज्ञैः पवित्रमभूत । यज्ञसभासु च चैत्यस्थानेषु बहवो जना आगत्य, ब्रह्मणो = वेदस्य घोषं = ध्वनिं शृण्वन्ति स्म, यच्च मदीयं गोत्रं = वंशो वेदश्रवणेन परिपूतम-भूत्, तस्येदानीमेतेऽसदृशाः पुरुषा मम मृत्युसमये समुपस्थितेऽनुचितरूपेण घोषणां कुर्वन्ति । इति सर्वथाऽसह्यमिदं वृत्तं, पूर्वजानां मम च निन्दाकरमिति दैवदुर्विपाकस्य किमुच्यतामिति । अत्र विषमालङ्कारः । विमर्षसन्धेः "प्रसंगसंज्ञोऽङ्गविशेषः । "प्रसंगो गुरुकीर्तन" मिति लक्षणात् । मालिनी च्छन्दः ॥१२॥

वसन्तसेनां स्मृत्वा कथयति—शशि-इति । हा ! चन्द्रस्य शुभ्रकिरणतुल्य-दन्तयुक्ते ! शोभमान-विद्रुम-सदृशाधरे ! पूर्वं तव मुखचन्द्र-समुद्भूतममृतं पीत्वा अद्यापयशोरूपं विषं कथमापिबामि ? अमृतपानानन्तरं विषपानं सर्वथाऽसह्यं विरुद्धञ्च भवतीति भावः ।

अत्रोपमा, विषमः, रसवच्चेत्यलङ्काराः सांकर्यं भजन्ते । पुष्पिताग्रा च्छन्दः ॥ १३ ॥

---

हुआ करते थे परन्तु मेरे पापों के कारण इस मरण-वेला में उन पूर्वजों का नाम की आज इस अनुचित प्रकार से उद्घोषणा की जा रही है ।" ॥१२॥

( उद्विग्नता से कान बन्दकर ) हा प्रिये वसन्तसेने !

"निर्मल चन्द्रमा की किरणों के समान श्वेत दाँतों वाली ! तथा अत्यन्त सुन्दर मूँगे के समान अधर वाली ! तेरे मुखचन्द्र से उत्पन्न अमृत पीकर आज मैं क्यों अपयश-रूपी विष पी रहा हूँ । ( अमृत के बाद विष पीना सर्वथा अनुचित, असह्य तथा विरुद्ध है । ) ॥१३॥

एशे गुणलअणणिही शज्जणदुक्खाण उत्तलणशेदू ।
असुवण्णं मंडणअं अवणीअदि अज्ज णअलीदो ॥ १४ ॥

अण्णं च,—

शव्वे खु होइ लोए लोए शुहशंठिदाण तच्चिछः ।
विणिवडिदाणं णलाणं पिअकाली दुल्लहो होदि ॥ १५ ॥

[ अपसरतार्याः ! अपसरत ।

एष गुणरत्ननिधिः सज्जनदुःखानामुत्तरणसेतुः ।
असुवर्णं मण्डनकमपनीयतेऽद्य नगरीतः ॥

---

पुनश्चाण्डालौ कथयतः—एशे इति । आर्याः ! महतो दुःखस्यायं विषयः—यदेष गुण-रूप-रत्नानां निधिः, सज्जन-दुःखानामुत्तरणार्थं सेतु-तुल्यः, सुवर्णं विनैव मण्डनभूतः, नगरीतो बहिर्नीयते । अद्यास्या नगर्या वास्तविकं रत्नं समाप्तिं याति, सज्जनानां दुःखं दूरीकर्तुं कस्य सामर्थ्यम् ? सुवर्णमन्तरापि कोऽन्यो धन्योऽलङ्कार-भाजनं भविष्यतीत्येकपदे एव सर्वमपि विलीनमिव भवतीत्याशयः ।

अत्र रूपकालङ्कारः । आर्या च्छन्दः ॥ १४ ॥

शव्वे—इति । अपि च—सुखमयं जीवनं यापयतां जनानां विषये सर्वोऽपि जनः प्रायः सचिन्तो जायते, किन्तु विशेषरूपेण निपतितानां ( विपत्तिगर्ते इति शेषः ) दीनानां हितकर्ता बन्धुस्तु दुर्लभ एव भवतीत्यर्थः । सर्वोऽपि जनो धनिभ्यः स्पृहयति, दीनेभ्यस्तु कश्चिदेव धन्यः । चारुदत्तसदृशो दीनदुःखदारी नान्योऽत्र नगर्यामिति हृदयम् ॥१५॥

---

दोनों—आर्यो ! हटो ! हटो !

"गुण रत्नों का आकर, सत्पुरुषों की विपत्ति में सेतु-रूप तथा बिना सुवर्ण के भी अलङ्करण-भूत ( "चारुदत्त" ) आज नगरी से ले जाया जा रहा है ।" ॥१४॥

और भी—

"ससार में सब लोग समृद्ध व्यक्तियों के विषय में ही चिन्तित रहते हैं परन्तु विपद्ग्रस्त मनुष्यों का हितकर्ता तो कोई दुर्लभ ही होता है ।" ॥१५॥

अन्यच्च,—

सर्वः खलु भवति लोके लोकः सुखसंस्थितानां चिन्तायुक्तः ।
विनिपतितानां नराणां प्रियकारी दुर्लभो भवति ॥ ]

चारुदत्तः—( सर्वतोऽवलोक्य )

**अमी हि वस्त्रान्तनिरुद्धवक्त्राः, प्रयान्ति मे दूरतरं वयस्याः ।**
**परोऽपि बन्धुः सुखसंस्थितस्य, मित्रं, न कश्चिद्विषमस्थितस्य ॥१६॥**

चाण्डालौ—ओशालणं किदं । विवित्तं लाअमग्गं । ता आणेध एदं दिण्णवज्झचिण्हं । [ अपसारणं कृतम्, विविक्तो राजमार्गः; तदानयतैनं दत्तवध्यचिह्नम् । ]

( चारुदत्तो निःश्वस्य, 'मैत्रेय ! भोः किमिदमद्य' [ ९।२१ ] इत्यादि पठति । )

( नेपथ्ये )

---

स्वमित्राण्यवलोक्याह चारुदत्तः—अमी हि—इति । वस्त्र—प्रान्तेन स्वमुखं पिधाय, एते मम वयस्याः अद्य मम विपत्तौ दूरतरं प्रयान्ति, सत्यमेतद्—यत् सुखे परोऽपि जनः सुहृद्भवति, विषमे दुःख—समये तु कश्चिदपि न भवति । मम सुखावस्थायां ये सुहृद आसन्, ते सम्प्रति चेलाञ्चलाच्छादिताननाः दूरादेव पलायन्ते । अहो ! वैषम्यं जगतः । अत्रार्थान्तरन्यासोऽलङ्कारः । उपजातिश्छन्दः ॥१६॥

---

चारुदत्त—( चारों ओर देखकर )—

"ये मेरे मित्र कपड़े से मुख ढककर दूर-दूर जा रहे हैं ( यह ठीक ही है कि— ) सुख में दूसरा मनुष्य भी मित्र हो जाता है परन्तु विपत्ति में पड़े हुए का कोई भी साथी नहीं होता ।" ॥१६॥

चाण्डाल—हमने लोगों को हटा दिया है अब राजमार्ग स्वच्छ है । अतः इस वध्यचिह्नधारी वध्यको ला !

[ "चारुदत्त" लम्बा श्वास लेकर "मैत्रेय भो !......" इत्यादि ( ९।२९ ) श्लोक पढ़ता है । ]

( नेपथ्य में )

हा ताद ! हा पिअवअस्स ! [ हा तात ! प्रियवयस्य ! ]

चारुदत्तः—( आकर्ण्य, सकरुणम् ) भोः स्वजातिमहत्तर ! इच्छाम्यहं भवतः सकाशात् प्रतिग्रहं कर्तुम् ।

चाण्डालौ—किं अम्हाणं हत्थादो पडिग्गहं कलेशि ? । [ किमस्माकं हस्तात् प्रतिग्रहं करोषि ? । ]

चारुदत्तः—शान्तं पापम्; नापरीक्ष्यकारी दुराचारः पालक इव चाण्डालः । तत्परलोकार्थं पुत्रमुखं द्रष्टुमभ्यर्थये ।

चाण्डालौ—एव्वं कलीअदु । [ एवं क्रियताम् । ]

---

नेपथ्ये "हा तात ।" इत्यादि श्रुत्वा चाण्डालौ प्रतिवदति चारुदत्तः—भोः-इति । भोः ! भवन्तौ स्वजात्यां प्रधानभूतौ स्तः, भवतोः सकाशात् किमपि प्रतिग्रहं ( दानम् ) वाञ्छामि ।

चाण्डालौ कथयतः—किं-इति । अये ! किमु चाण्डालाभ्यामावाभ्यां प्रतिग्रहं वाञ्छति भवान् विप्रः सन् ? इदं तव विपद्गतस्यापि नोचितम् ।

चारुदत्तस्तयोश्चाण्डालत्वं निषेधति—शान्तमिति । एवं भवद्भ्यां नैव वक्तव्यम्—यतो भवन्तौ जात्यैव चाण्डालौ किल, राजा पालकस्तु अपरीक्ष्यकारित्वात् कर्मणा चाण्डालः ! योऽनुचितं कर्म करोति, स एव यथार्थश्चाण्डालः !

---

हा पिता जी ! हा प्रियमित्र !

चारुदत्त—( सुनकर शोकपूर्वक ) अपने जाति के सम्मान्य ( चौधरी ) ! मैं तुमसे कुछ दान लेना चाहता हूँ ।

चाण्डाल—क्या हमसे दान लेना चाहते हो ? ( क्या हम चाण्डालों से भिक्षा माँगते हो ? )

चारुदत्त—अमङ्गल दूर हो ! तुम अविमृश्यकारी दुष्ट पालक की भाँति "चाण्डाल" ( क्रूर ) नहीं हो । ( तुम जाति से ही चाण्डाल हो परन्तु "पालक" की भाँति क्रूरकर्मा नहीं हो । ) अतः मैं परलोक-शान्त्यर्थ पुत्र का मुख देखना चाहता हूँ ।

चाण्डाल—ऐसा ही करो !

( नेपथ्ये )

हा ताद ! हा आवुक [ हा तात ! हा पितः ! । ]

( चारुदत्तः श्रुत्वा, सकरुणम्, 'भोः ! स्वजातिमहत्तर' [ ५२६ पृष्ठे ] इत्यादि पठति )

चाण्डालौ—अले पउला ! खणं अंतलं देध । एशे अज्जचालुदत्ते पुत्तमुहं पेक्खदु । ( नेपथ्याभिमुखम् ) अज्ज ! इदो इदो । आअच्छ ले दालआ ! आअच्छ । [ हे पौराः ! क्षणमन्तरं दत्त । एष आर्यचारुदत्तः पुत्रमुखं पश्यतु । आर्य ! इत इतः । आगच्छ रे दारक ! आगच्छ । ]

( ततः प्रविशति दारकमादाय विदूषकः )

विदूषकः—तुवरदु तुवरदु भद्दमुहो । पिदा दे मारिदुं णीअदि । [ त्वरतां त्वरतां भद्रमुखः । पिता ते मारयितुं नीयते । ]

दारकः—हा ताद ! हा आवुक ! । [ हा तात ! हा पितः ! । ]

विदूषकः—हा पिअवअस्स ! कहिं मए तुमं पेक्खिदव्वो ? । [ हा

---

अहं परलोके शान्तिलाभार्थं स्वपुत्रस्य मुखमवलोकयितुमिच्छामि, इत्येव प्रतिग्रहः ।

---

[ नेपथ्य में ]

हा तात ! हा पिता जी !

[ "चारुदत्त" सुनकर करुणापूर्वक "भोः ! स्वजाति महत्तर !" इत्यादि वाक्य पढ़ता है । ]

चाण्डाल—अरे नागरिको ! थोड़ा मार्ग दे दो जिससे "आर्य चारुदत्त" अपने पुत्र का मुख देख सके । ( नेपथ्य की ओर ) आर्य ! इधर-इधर । आ रे ! बालक ! आ !

[ तदनन्तर बच्चे को लेकर "विदूषक" प्रवेश करता है । ]

विदूषक—सुमुख ! शीघ्रता करो ! तुम्हारे पिता को मारने के लिए ले जाया जा रहा है !

दारक—हा तात ! हा पिता जी !

विदूषक—हा प्रियवयस्य ! मैं तुम्हें फिर कहाँ देखूँगा !

प्रियवयस्य ! कुत्र मया त्वं द्रष्टव्यः ? । ]

चारुदत्तः—( पुत्रं मित्रं च वीक्ष्य ) हा पुत्र ! हा मैत्रेय ! । ( सकरुणम् ) भोः, कष्टम् ।

**चिरं खलु भविष्यामि परलोके पिपासितः ।**
**अत्यल्पमिदमस्माकं निवापोदकभोजनम् ॥१७॥**

किं पुत्राय प्रयच्छामि ? । ( आत्मानमवलोक्य यज्ञोपवीतं दृष्ट्वा ) आं, इदं तावदस्ति मम च

**अमौक्तिकमसौवर्णं ब्राह्मणानां विभूषणम् ।**
**देवतानां पितॄणां च भागो येन प्रदीयते ॥१८॥**

---

चिरं खल्विति । अत्यधिकमोहवशं गतश्चारुदत्तः प्राह—भो मित्र ! हा पुत्र ! परलोके मम पिपासा कथं शान्तिमेष्यति ? परलोकगताय प्राणिने दीयमानं जलं निवापं भवति, इदं निवापजलं, पिण्डादिभोजनञ्च मम तृप्त्यै पर्याप्तं नैव भविष्यति । अहमितोऽतृप्त एव प्रयामि, इति भावः ॥१७॥

पुत्राय मया किं प्रदेयमिति विचार्य, स्वयज्ञोपवीतमेवार्पयितुमाह—अमौक्तिकमिति । ब्राह्मणानां यज्ञोपवीतं यद्यपि मुक्तामयं सौवर्णं वा नास्ति, तथापि तेषां विशिष्टं भूषणमेतदेव विद्यते । एतेनैव देवानां पितॄणाञ्च देयभागो दीयते । असंस्कृतस्य यज्ञाधिकाराभावादित्याशयः । अत्रेदं परमरहस्यम्—पिता स्वपुत्राय

---

चारुदत्त—( पुत्र और मित्र को देखकर ) हा पुत्र ! हा मैत्रेय ! ( शोकपूर्वक ) दुःख है !

"मैं परलोक में प्यासा ही रहूँगा मेरे लिए यह जलाञ्जलि तथा भोजन बहुत ही स्वल्प है । अतः मैं यहाँ से अतृप्त ही जाऊँगा । )" ॥१७॥

पुत्र को क्या दूँ ? ( अपने को तथा यज्ञोपवीत को देखकर ) हाँ, यह मेरी वस्तु है ।

"यद्यपि यह यज्ञोपवीत मोती तथा सोने का बना हुआ नहीं है तथापि ब्राह्मणों का आभूषण है । इससे देवताओं तथा पितरों का भाग दिया जाता है ।" ॥१८॥

( इति यज्ञोपवीतं ददाति )

चाण्डालः—आअच्छ ले चालुदत्ता ! आअच्छ । [ आगच्छ रे चारुदत्त ! आगच्छ । ]

द्वितीयः—अले ! अज्जचालुदत्तं णिलुवबदेण णामेण आलवेशि । अले ! पेक्ख

**अब्भुदए अवशाणे तहे अ लत्तिंदिवं अहदमग्गा ।**
**उद्दामे व्व किशोली णिअदी खु पांडच्छिदुं जादि ॥१९॥**

---

यज्ञोपवीतदानपूर्वकं जीवनसर्वस्वं गायत्र्या मन्त्रमुपदिशति, चाण्डस्यास्य ब्राह्मणत्वं सम्पादयितुं यज्ञोपवीतदानमेव चारुदत्तो युक्तिसंगतं मनुते । अपि च—परमपवित्रस्य यज्ञेन सहैव सञ्जातस्य यज्ञोपवीतपवित्रता यथा चाण्डालस्पर्शान्मृत्युसमये सुरक्षिता स्यादिति प्रथममेवैतस्यार्पणमुचितमिति भावः ॥१८॥

"आगच्छ रे चारुदत्त !" इति चाण्डालमुखान्निरुपपदं सम्बोधनं श्रुत्वाऽपरश्चाण्डालः प्राह—अले ! इति । अरे ! आर्यचारुदत्तं "आर्य" इत्युपाधि-रहितेन नाम्ना कथं सम्बोधयसि ? नायं साधारणजनतया समवलोकनीयः । महानुभावस्यास्य केनापि जन्मान्तरसंस्कारवशेनाद्य विपत्ति-समये किमु सर्वे गुणा उपकाराश्च विस्मर्तुं शक्यन्ते ? ततः सोपाधिकं नाम ग्राह्यमिति भावः

जनस्य सर्वदा समयः समानो न तिष्ठतीति प्रदर्शयति—अब्भुदए—इति ।

---

[ यज्ञोपवीत दे देता है । ]

एक चाण्डाल—आ रे ! चारुदत्त ! आ !

दूसरा—अरे ! "आर्य" चारुदत्त" को बिना "आर्य शब्द के ही सम्बोधित कर रहा है ! अरे देख !

"अभ्युदय तथा अवसान में यह नियति अप्रतिहतगति होकर रात-दिन स्वतन्त्र युवती की भाँति अपने प्रिय को चाहती हुई फिरती रहती है । ( अर्थात्—भाग्य बहुत चञ्चल है । कभी "चारुदत्त" समृद्ध थे परन्तु आज एकदम निर्धन हो गये हैं । अतः उपाधिरहित नाम लेकर अपनी योग्यता का प्रकाशन मत कर ! सभ्यता से बातें कर ! )" ॥१९॥

अण्णं च,—

**शुक्खा बबदेशा शे ? किं प्रणमिअमत्थए ण काअव्वं ? ।**
**लाहुगहिदे वि चंदे ण वंदणीए जणपदश्श ? ॥२०॥**

[ अरे, आर्यचारुदत्तं निरुपपदेन नाम्नालपसि ? । अरे, पश्य

अभ्युदयेऽवसाने तथैव रात्रिंदिवमहतमार्गा ।
उद्दामेव किशोरी नियतिः खलु प्रत्येषितुं याति ॥

---

भगवती नियतिः = दैवम्, भाग्यमिति यावत्, कदाप्येकत्र स्थितिं नैव करोति। पुरुषस्य सौभाग्येऽप्यायाति, दौर्भाग्येऽपि च। रात्रिन्दिवं सा भ्रमत्येव। तस्या मार्गोऽप्रतिहतगतिरस्ति। सा उद्दामा = उन्नीतं = दूरीकृतं दाम = बन्धनरज्जुर्यस्या सा बन्धनरहिता। किशोरी = अश्वा इव अथवा—किशोरी प्राप्तयौवना बालेवोन्मदा सती, सर्वत्र प्रत्येषितुं = कामयितुं = स्वप्रणयिनं सम्भावयितुमिति यावत्, याति। पुरुषस्य भाग्यं विचित्रमस्ति, येन दैवेनायं महानुभावः सर्वजन-माननीयः कृतः पूर्वम्, एतस्याधुना विपत्कालेऽपि तदेव दैवं पुनरप्येनं रक्षितुमागन्तुं शक्नोति, ततश्च त्वया सादरमेवास्य नामोच्चारणीयम्, न तु स्वक्षुद्रता प्रकाशनीयेति भावः।

तथा चोक्तं केनापि महात्मना—

"अघटितमपि घटयति, सुघटितमपि दुर्घटीकुरुते ।
विधिरेव तानि घटयति, यानि पुमान् नैव संघटते ॥" इति ।

अस्मिन् पद्ये उपमाऽलङ्कारः । आर्या च्छन्दः ॥१९॥

प्रकारान्तरेणार्यचारुदत्तस्योपकारभारविषये स्वभाव-वैभवं प्रदर्शयति—शुक्खा-

---

और भी—

"क्या इनके प्रसिद्धि–हेतु वंश आदि समाप्त हो गये ? क्या आज हमको सिर झुकाकर इनका महत्त्व स्वीकार नहीं करना चाहिए ? क्या "राहु" से ग्रस्त चन्द्रमा जनता के लिए वन्दनीय नहीं होता ? ( जिस प्रकार राहुगृहीत चन्द्रमा अभिनन्दनीय होता है वैसे ही आज यह विपद्ग्रस्त महानुभाव सर्वथा वन्दनीय हैं। )" ॥२०॥

अन्यच्च,—

शुष्का व्यपदेशा अस्य ? किं प्रणम्य मस्तकेन कर्तव्यम् ।
राहुगृहीतोऽपि चन्द्रो न वन्दनीयो जनपदस्य ? ॥ ]

दारकः—अरे रे चांडाळा ! ! कहिं मे आवुकं णेध ? [ अरे रे चाण्डालाः ! कुत्र मम पितरं नयत ? । ]

चारुदत्तः—वत्स ! ।

**अंसेन बिभ्रत् करवीरमालां स्कन्धेन शूलं हृदयेन शोकम् ।**
**आघातमद्याहमनुप्रयामि शामित्रमालब्धुमिवाध्वरेऽजः ॥२१॥**

---

इति । भ्रातः ! पश्य—किमु महानुभावस्यास्य व्यपदेशाः = व्यपदिश्यते = परिचितो जायते जनो यैस्ते व्यपदेशाः, प्रसिद्धि-हेतवो वंशादयः, शुष्काः सञ्जाताः ? अस्य वंशे सम्पन्नानि शुभानि कार्याणि किमु समाप्तानि ? किं लोकैरस्माभिश्चास्य कृत्यं शिरोऽवनमय्य सप्रणामं न स्वीकार्यम् ? विपत्तिग्रस्तोऽप्युपकारी सर्वदा सर्वेषामभिनन्दनीय एव भवतीति दृष्टान्तेनोपस्थापयति । तथाहि—राहुणा निगृहीतोऽपि चन्द्रः किमु वन्दनीयो न भवति ? अवश्यमेव तथाभूतमपि चन्द्रमसं लोको वन्दते । ततश्च—विपद्गतस्याप्यवज्ञा नोचिता सर्वजन-ताप-हारिणो महोदयस्येति चाण्डालमुखेन कविना परमोत्तमो विचारः समुपस्थापितः । अत्र दृष्टान्तोऽलङ्कारः । आर्या च्छन्दः ॥२०॥

"अरे चाण्डालाः ! मम पिता कुत्र नीयते ? इति बालक-प्रश्नं चारुदत्त एव प्रथमं समाधत्ते—अंसेनेति । वत्स ! अहं स्वकीयग्रीवायां करवीर-कुसुमानां मालाम्, स्कन्धेन शूलम्, हृदयेन च शोकं बिभ्राणः, यज्ञे बधार्थं शामित्रं = बधस्थानं, नीयमानोऽजः = छाग इवाद्याघातं = मृत्युं अनुप्राप्तुं गच्छामि ।

---

दारक—अरे ! चाण्डालो ! मेरे पिताजी को कहाँ ले जा रहे हो ?

चारुदत्त—वत्स !

"ग्रीवा में कनेर की माला, कन्धे पर शूली तथा हृदय में शोक धारण करता हुआ आज मैं बलि के लिए वध्यस्थान पर ले जाए जाते हुए बकरे की भाँति मरणार्थ जा रहा हूँ ।" ॥२१॥

चाण्डालः—दालआ !

**ण हु अम्हे चांडाला चांडालकुलम्मि जादपुव्वा वि ।**
**जे अहिभवंति शाहुं ते पावा ते अ चांडाला ॥ २२ ॥**

[ दारक !

न खलु वयं चाण्डालाश्चाण्डालकुले जातपूर्वा अपि ।
येऽभिभवन्ति साधुं ते पापास्ते च चाण्डालाः ॥ ]

दारकः—ता कीस मारेध आवुकं ? । [ तत्किमर्थं मारयत पितरम् ? । ]

---

केनापि कर्मविपाकेन ममाद्येदृशो एव कर्मणि मृत्युः सम्प्राप्तः । मामेतौ चाण्डालौ न नयतः कुत्रापि, एतौ तु कारण-( निमित्त- ) भूतौ वराकौ । इति नानयोर्दोषः, न चानयोरुपरि त्वया रोष एव विधेयः, इति भावः ।

अत्रोपमाऽलङ्कारः । दीपकश्च । इन्द्रवज्रा च च्छन्दः । तल्लक्षणं च यथा—"स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति ॥२१॥

अधुना चाण्डालोऽपि बालस्य प्रश्नं प्रति कथयति—णहु—इति । भोः ! प्रिय वत्स ! वयं केवलं चाण्डाल–कुले एव प्रसूताः, न पुनरस्माकं कर्म चाण्डाल-सदृशमस्ति, ये साधुपुरुषं तिरस्कुर्वन्ति घातयन्ति च, ते एव चाण्डाला भवन्ति, कामं ते समुन्नते वंशे कथं न सम्भूता भवेयुः । जात्या चाण्डालश्चाण्डालो न, यस्य कर्मानुचितं, स एव यथार्थश्चाण्डालः ततो राजा, राजश्यालः शकारः, इत्येवमादय एवात्र ते ( चाण्डालाः ) सन्ति, इति भावः । धन्योऽयमेवंवादी नीचकुलोत्पन्नोऽपि साधुचरित्रः । अनुकरणीयचारित्र्यः किलायमिति कवेराकूतम् । आर्या च्छन्दः ॥ २२ ॥

---

चाण्डाल—बालक !

"हम चाण्डाल कुल में उत्पन्न होने पर भी चाण्डाल नहीं हैं। जो सज्जन पुरुष का अपमान करते हैं वे ही ( "पालक" "शकार" आदि ) वास्तव में चाण्डाल होते हैं।" ॥२२॥

दारक—तो तुम पिता जी को किसलिए मारते हो ?

चाण्डालः—दीहाओ, अत्त लाअणिओओ खु अवलज्झदि, ण हुअम्हे । [ दीर्घायुः ! अत्र राजनियोगः खल्वपराध्यति, न खलु वयम् । ]

दारकः—वावादेध मं, मुंचध आवुकं । [ व्यापादयत माम्, मुञ्चत पितरम् । ]

चाण्डालः—दीहाओ ! एवं भणंते चिलं मे जीव । [ दीर्घायुः ! एवं भणंश्चिरं मे जीव । ]

चारुदत्तः—( सास्रं पुत्रं कण्ठे गृहीत्वा )

इदं तत्स्नेहसर्वस्वं सममाढ्यदरिद्रयोः ।
अचन्दनमनौशीरं हृदयस्यानुलेपनम् ॥ २३ ॥

( 'अंसेन बिभ्रत्–' [ १०।२१ ] इत्यादि पुनः पठति, अवलोक्य स्वगतम्, 'अमी हि वस्रान्तनिरुद्धवक्त्राः' [ १०।१६ ] इत्यादि पुनः पठति )

---

चारुदत्तः स्वपुत्रं कण्ठेनाश्लिष्य कथयति प्ररुदन् सन्—इदमिति । अहो ! पुत्रो हि नाम धनिनो दीनस्य च तुल्यरूप एव स्नेहस्य सर्वस्वभूतो भवति । पुत्रो हि चन्दनं उशीरञ्च ( "खस"–इति हिन्दीभाषायां प्रसिद्धः पदार्थः ) विनापि हृदयस्यानुलेपनं भवति । उशीरमिश्रितस्य चन्दनस्यानुलेपेनापि

---

चाण्डाल—दीर्घायु ! इसमें राजाज्ञा का ही अपराध है, हमारा नहीं ।

दारक—मुझे मार डालो ! पिता जी को छोड़ दो ।

चाण्डाल—दीर्घायु तुम इस प्रकार कहते हुए बहुत दिनों तक जीओ !

चारुदत्त—( रोते हुए पुत्र को गले लगाकर )

"( यह पुत्र ) धनी और निर्धन सबके लिए स्नेह का सर्वस्वभूत तथा बिना चन्दन और 'खस' के भी यह हृदय के लिए शान्तिकर लेप है । ( चन्दनादि के लेप से भी इतना आनन्द नहीं होता है जितना कि पुत्र के स्पर्श से । )" ॥२३॥

[ "अंसेन बिभ्रत्…" ( १०।२१ ) इत्यादि श्लोक पुनः पढ़ता है ।
देखकर स्वयं ही । "अमी हि वस्रान्त–निरुद्धवक्त्रा…"
इत्यादि ( १०।१६ ) श्लोक पुनः पढ़ता है । ]

विदूषकः—भो भद्दमुहा मुंचध पिअवअस्सं चालुदत्तं; मं वावादेध ।
[ भो भद्रमुखाः ! मुञ्चत प्रियवयस्यं चारुदत्तम्; मां व्यापादयत । ]

चारुदत्तः—शान्तं पापम् । ( दृष्ट्वा स्वगतम् ) अद्यावगच्छामि । ( 'परोऽपि बन्धुः' [ १०।१६ ] इत्यादि पठति । प्रकाशम् 'एताः पुनर्हर्म्यगताः स्त्रियो माम्' [ १०।११ ] इत्यादि पुनः पठति )

चाण्डालः—ओशलध अज्जा ! ओशलध ।

**किं पेक्खध शप्पुलिशं अजशवशेण प्पणट्ठजीवाशं ? ।**
**कूवे खंडिदपाशं कंचणकलशं व्व डुव्वंतं ॥ २४ ॥**

[ अपसरतार्याः ! अपसरत ।

किं पश्यत सत्पुरुषमयशोवशेन प्रनष्टजीवाशम् ? ।
कूपे खण्डितपाशं काञ्चनकलशमिव मज्जन्तम् ॥ ]

---

तावानानन्दो न जायते, यावान् यादृशश्च पुत्रस्य संस्पर्शेनेति भावः ।

अत्राधिकारूढं रूपकम् । पथ्यावक्त्रं च्छन्दः ॥ २३ ॥

चाण्डालः पुनरप्यपसारणां करोति—किं पेक्खध-इति । आर्याः ! अकीर्तिकारणात् विनष्टा जीवस्याशा यस्य तादृशमेनं मृत्युमुखे निपतिष्यन्तं किं पश्यत ? यथा छिन्नपाशः ( कण्ठबन्धनरज्जुः ) सुवर्णकलशो जले प्रमज्जन्

---

विदूषक—अरे भद्रमुखो ! प्रिय मित्र "चारुदत्त" को छोड़ दो और मुझे मार डालो !

चारुदत्त—अमङ्गल दूर हो ! (देखकर स्वयं ही ) मैं आज समझ रहा हूँ ।
[ "परोऽपि बन्धुः···" इत्यादि ( १०।१६ ) श्लोक पढ़ता है ।
( प्रकाश में ) "एताः पुनर्हर्म्यगताः स्त्रियो माम्"
आदि श्लोक पुनः पढ़ता है । ]

चाण्डाल—आर्यो ! हटो ! हटो !

"अपयश-रूपी विष से जीवन की आशा छोड़े हुए इस सत्पुरुष की रस्सी के टूटने से डूबते हुए सोने के कलशे की भाँति, मृत्यु क्यों देख रहे हो ?

( चारुदत्तः सकरुणम्, 'शशिविमलमयूख-'( १०।१३ ) इत्यादि पठति )

अपरः—अले, पुणो वि घोशेहि । [ अरे, पुनरपि घोषय । ]

( चाण्डालस्तथा करोति )

चारुदत्तः—

**प्राप्तोऽहं व्यसनकृशां दशामनार्यां,**
**यत्रेदं फलमपि जीवितावसानम् ।**
**एषा च व्यथयति घोषणा मनो मे,**
**श्रोतव्यं यदिदमसौ मया हतेति ॥२५॥**

---

प्रेक्षकाणां खेदप्रदो भवति, तथैवायमपि प्रेक्ष्यमाणः प्रेक्षकाणां भवतां चेतसि दुःखमेव जनयिष्यति । किं वृथा वेक्षणेन ? उपमा । आर्या ॥ २४ ॥

घोषणां निशम्य चारुदत्तः सखेदं प्राह--प्राप्तोऽहमिति । अहमद्यानार्यां, व्यसनेन ( कृत्वा ) कृशां=दुर्बलां गर्हितामिति यावत्, दशां प्राप्तोऽस्मि । यत्र च फलमपि जीवनस्यावसानमस्ति । मृत्योरतिरिक्तः परिणामो नास्यां विपत्तिदशायां प्रेक्षे, इत्यर्थः । तथापि-"एषा वसन्तसेना मया हता" इत्याकर्ण्य मम मनोऽतिखिन्नं भवति । पापं कृत्वा यदि तदुचितं फलमुपलभ्यते, तदा न कोऽपि दोषः,

---

( जिस प्रकार डूबता हुआ स्वर्णकलश देखनेवालों के लिए दुःखद होता है । वैसे ही "चारुदत्त" की मृत्यु भी आप लोगों को खिन्न ही करेगी । अतः मार्ग छोड़ो । )" ॥ २४ ॥

[ "चारुदत्त" करुणापूर्वक "शशिविमलमयूख···" इत्यादि ( १०।१३ ) श्लोक पढ़ता है । ]

दूसरा—अरे ! पुनः घोषणा कर !

[ चाण्डाल ड्यौढ़ी पीटता है । ]

चारुदत्त—"मैं इस अत्यन्तगर्हित तथा अनार्यदशा को प्राप्त हो गया हूँ जिसका परिणाम केवल मृत्यु ही है । यह घोषणा मेरे चित्त को व्यथित कर रही है कि—"मैंने "वसन्तसेना" मारी है ।" ॥ २५ ॥

( ततः प्रविशति प्रासादस्थो बद्धः स्थावरकः )

स्थावरकः—( घोषणामाकर्ण्य, सवैक्लव्यम् ) कधं अपावे चालुदत्ते वावादीअदि ? । हग्गे णिअलेण शामिणा बंधिदे । भोदु आक्कंदामि । शुणाध अज्जा ! शुणाध । अत्थि दाणिं मए पावेण पवहणपडिवत्तेण पुप्फकलंडअजिण्णुज्जाणं वशंतशेणा णीदा । तदो मम शामिणा मं ण कामेशित्ति कदुअ बाहुपाशवलक्कालेण मालिदा, ण उण एदिणा अज्जेण । कधं विदूलदाए ण को वि शुणादि ? । ता किं कलेमि ? । अत्ताणअं पाडेमि ? । ( विचिन्त्य ) जइ एव्वं कलेमि, तदा अज्जचालुदत्ते ण वावादीअदि । भोदु, इमादो पाशादवालग्गपदोलिकादो एदिणा जिण्णगवक्खेण अत्ताणअं णिक्खिवामि । वलं हग्गे उवलदे, ण उण एशे कुलपुत्तविहगाणं वाशपादवे अज्जचालुदत्ते । एव्वं जइ विवज्जामि लद्धे मए पललोए । ( इत्यात्मानं पातयित्वा ) ही ही, ण उवलदम्हि । भग्गे मे दंडणिअले । ता चांडालघोशं शमण्णेशामि । ( दृष्ट्वोपसृत्य ) हंहो चांडाला ! अंतलं अंतलं । [ कथमपापश्चारुदत्तो व्यापाद्यते ? । अहं निगडेन स्वामिना बद्धः । भवतु, आक्रन्दामि । शृणुतार्याः ! शृणुत । अस्तीदानीं मया पापेन प्रवहणपरिवर्तेन पुष्पकरण्डकजीर्णोद्यानं वसन्तसेना नीता । ततो मम स्वामिना मां न कामयस इति कृत्वा बाहुपाशबलात्कारेण मारिता, न पुनरेतेनार्येण । कथं विदूरतया न कोऽपि शृणोति ? तत्किं करोमि ? ।

---

परमकारणमेव म्रियमाणोऽपि अश्रोतव्यं, सर्वथा मिथ्यावचनं शृणोमि, एतेन महती पीडा मे भवतीति भावः । प्रहर्षिणी छन्दः ॥२५॥

---

[ तदनन्तर प्रासादस्थित बँधे हुए "स्थावरक" का प्रवेश होता है । ]

स्थावरक—( घोषणा सुनकर विकलतापूर्वक ) क्या निरपराध "चारुदत्त" मारे जा रहे हैं ? मुझको स्वामी ("शकार") ने हथकड़ी बेड़ी से बाँध दिया है । अच्छा चिल्लाता हूँ । आर्यो ! सुनो ! मुझ पापी ने रथ-परिवर्तन से "वसन्तसेना" "पुष्पकरण्डक जीर्णोद्यान" में पहुँचा दी थी । तब मेरे स्वामी ने—"यह मुझको नहीं चाहती" इससे क्रुद्ध होकर बाहुपाश से बलात्कारपूर्वक उसे मेरे स्वामी ने मार डाला—इन 'आर्य' ( "चारुदत्त" ) ने नहीं । क्या दूर होने के कारण

आत्मानं पातयामि ? । यद्येवं करोमि, तदार्यचारुदत्तो न व्यापाद्यते । भवतु, अस्याः प्रासादबालाग्रप्रतोलिकात एतेन जीर्णगवाक्षेणात्मानं निक्षिपामि । वरमहमुपरतः, न पुनरेष कुलपुत्रविहगानां वासपादप आर्यं चारुदत्तः । एवं यदि विपद्ये, लब्धो मया परलोकः । आश्चर्यम् , नोपरतोऽस्मि । भग्नो मे दण्डनिगडः । तच्चाण्डालघोषं समन्विष्यामि । हहो चाण्डालाः ! अन्तरमन्तरम् । ]

चाण्डालौ—अले ! के अंतलं मग्गेदि ? । [ अरे ! कोऽन्तरं याचते ? । ]

( चेटः 'शुणाध' इति पूर्वोक्तं पठति )

चारुदत्तः—अये !

**कोऽयमेवंविधे काले कालपाशस्थिते मयि ।**

---

स्थावरकश्चेटो भवनादात्मानं पातयित्वा विमुक्तनिगडः सन् , सज्जनहितैषिणो मृत्युः सर्वथाऽनुचितः, इत्यादि कथयति, तमालोक्य चारुदत्तः साश्चर्यमाह— कोऽयमिति । अये ! अहमिदानीं कालस्य = मृत्योः, पाशे निपतितोऽस्मि, अयं

---

कोई भी नहीं सुन रहा है ? तो क्या करूँ ? अपने को गिरा देता हूँ । ( सोचकर ) यदि ऐसा करता हूँ तो "आर्य चारुदत्त" का वध नहीं होगा । अच्छा तो इस प्रासाद के अभिनव भाग की इस टूटी हुई खिड़की से अपने को गिराता हूँ । मैं मर जाऊँ तो अच्छा है परन्तु सत्पुरुष-रूपी पक्षियों के लिए निवास-पादप "आर्यचारुदत्त" का मरण अच्छा नहीं है । यदि मैं इस प्रकार मर भी जाता हूँ तो मुझे स्वर्ग मिलेगा । ( अपने को गिराकर ) आश्चर्य है ! मैं मरा नहीं हूँ ! मेरी बेड़ी टूट गई है । अतः चाण्डालों के घोषणा-स्थल पर जाता हूँ । ( देखकर पास जा ) अरे चाण्डालो ! हटो ! हटो !

चाण्डाल—अरे ! कौन हटाता है ?

[ "चेट" "सुनो आर्यो !" आदि पूर्वोक्त वाक्य पढ़ता है । ]

चारुदत्त—अरे,

"मेरे मृत्युपाश में जकड़े जाने पर वर्षा के बिना सूखे हुए धानों में

जनावृष्टिहते सस्ये द्रोणमेघ इवोदितः ? ॥२६॥

भोः ! श्रुतं भवद्भिः,—

न भीतो मरणादस्मि केवलं दूषितं यशः ।
विशुद्धस्य हि मे मृत्युः पुत्रजन्मसमो भवेत् ॥२७॥

---

को महानुभावः, एवंविधे संकटापूर्णे समये, सस्ये=कृषिपूर्णे क्षेत्रे, अनावृष्टया नष्टप्राये "द्रोण" मेघ इवाकस्मात् समागतः ? सततजलधाराभिः कृषिं समागत-जीवां कर्तुं यो मेघः समायाति, स "द्रोणमेघः" इत्युच्यते । तथा चोक्तं ज्योतिस्तत्त्वे—

"आवर्तो निर्जलो मेघः, संवर्तश्च बहूदकः ।
पुष्करो दुष्करजलो, द्रोणः शस्यप्रपूरकः ॥" इति ।

"आवर्तः" "संवर्तः" "पुष्करः" "द्रोणः", इति मेघानां भेदाः । तथा चोक्तं कविकुलगुरुणा मेघदूते मेघं प्रति—

"जातं वंशे भुवनविदिते पुष्करावर्तकानाम्" इति ।

ततश्च—दुर्विचारस्य राज्ञः पालकस्याज्ञया मृत्युमुखे सम्पतन्तं मां संरक्षितु-मनाहूतस्याप्यस्य सज्जनस्य समागमो "द्रोण" मेघसदृश इति भावः ।

अत्रोपमालङ्कारः । पथ्यावक्त्रं च्छन्दः ॥ २६ ॥

चारुदत्तः स्थावरकस्य वचनं श्रुत्वा कथयति—न भीत इति । भोः ! भवद्भिराकर्णितं, यदयं चेटः प्राह । अहं मरणान्न बिभेमि, भयस्य कारणं तु किंचिदस्ति भिन्नमेव, किं तदित्याह—मदीयं यशः एवं दूषितम्, विशुद्धस्य मम मृत्युस्तु पुत्रजन्मतुल्यो भवेत् । राज्ञा पालकेन विचारस्याप्यवसरो न दत्तः ! ॥२७॥

---

"द्रोण—" मेघ के समान अकस्मात् यह कौन आ गया है ?" ॥ २६ ॥

आप लोगों ने सुना ?

"मैं मृत्यु से भयभीत नहीं हूँ मेरी कीर्ति कलङ्कित हो गई है ( यही मेरे भय का कारण है । ) निष्कलङ्क होकर मृत्यु मेरे लिए पुत्र-जन्मोत्सव के समान होगी ।" ॥ २७ ॥

अन्यच्च,—

तेनास्म्यकृतवैरेण क्षुद्रेणात्यल्पबुद्धिना ।
शरेणेव विषाक्तेन दूषितेनापि दूषितः ॥२८॥

चाण्डालौ—थावलअ ! अवि शच्चं भणाशि ? । [ स्थावरक ! अपि सत्यं भणसि ? । ]

चेटः—शच्चं; हग्गे वि मा कश्श वि कधइश्शशि त्ति पाशादबालग्गपदोलिकाए दंडणिअलेण बंधिअ णिक्खित्ते । [ सत्यम् ; अहमपि मा कस्यापि कथयिष्यसीति प्रासादबालाग्रप्रतोलिकायां दण्डनिगडेन बद्ध्वा निक्षिप्तः । ]

( प्रविश्य )

शकारः—( सहर्षम् )

मंशेण तिक्खामिलकेण भत्ते शाकेन शूपेण शमच्छकेण ।
भुत्तं मए अत्तणअश्श गेहे शालिश्श कूलेण गुलोदणेण ॥२९॥

---

अन्यदप्याह—तेनेति । किं च शकारेण सह मम वैरभावो नास्ति, तथापि क्षुद्रबुद्धिना तेन, विषदिग्धेन, दूषितेन बाणेनेवाहं दूषितोऽस्मि, न चात्र विचारः कृतः । एतावान् मम खेदोऽस्ति । अत्रोपमाऽलङ्कारः ॥ २८ ॥

कृतभोजनः शकारः सहर्षं प्राह—मंशेणेति । तिक्ताम्लेन, शाकेन, सूपेन

---

और भी—

"बिना किसी वैरभाव के उस तुच्छ मूर्ख ने विषैले बाण की भाँति मुझे भी दूषित कर दिया है ।" ॥ २८ ॥

दोनों चाण्डाल—स्थावरक! क्या सच कहता है ?

चेट—यह सच है । ( स्वामी ने ) मुझे भी "यह किसी से कह न दे" इस आशङ्का से प्रासाद के अभिनव अग्रभाग में बेड़ियों से जकड़कर डाल दिया था ।

[ प्रवेश कर ]

शकार—( हर्ष से )

( कर्णं दत्वा ) भिण्णकंशखंखण'ए चांडालवाआए शलशंजोए जधा अ एशे उक्खालिदे वज्झडिंडिमशद्दे पडहाणं अ शुणीअदि, तधा तक्केमि, दलिद्दचालुदत्ताके वज्झट्ठाणं णीअदि त्ति । ता पेक्खिश्शं । शत्तुविणाशे णाम मम महंते हलक्कश्श पलिदोशे होदि । शुदं अ मए, जे वि किल शत्तुं वावादअंतं पेक्खदि, तश्श अण्णश्शिं जम्मंतले अक्खिलोगे ण होदि । मए खु विशगंठिगब्भपविट्ठेण विअ कीडएण किं पि अंतलं मग्गमाणेण उप्पाडिदे ताह दलिद्दचारुदत्ताह विणाशे । शंपदं अत्तण केलिकाए पाशादबालग्गपदोलिकाए अहिलुहिअ अत्तणो पलक्कमं पेक्खामि । ( तथा कृत्वा, दृष्ट्वा च ) ही ही, एदाह दलिद्दचालुदत्ताह वज्झं णीअमाणाह एवड्ढे जणशंमद्दे, जं वेलं अम्हालिशे पवले वलमणुश्शे वज्झं णीअदि, तं वेलं केदिशं भवे ? । ( निरीक्ष्य ) कधं ? एशे शे णवबलद्दके विअ मंडिदे दक्खिणं दिशं णीअदि ? । अध किंणिमित्तं मम केलिकाए पाशादबालग्गपदोलिकाए शमीवे घोशणा णिवडिदा, णिवालिदा अ ? । ( विलोक्य ) कधं थावलके चेडे वि णत्थि इध ? । म णाम तेण इदो गदुअ मंतभेदे कडे भविश्शदि ? । ता जाव णं अण्णेशामि ।

[ मांसेन तिक्ताम्लेन भक्तं शाकेन सूपेन समत्स्यकेन ।
भुक्तं मयात्मनो गेहे शालीयकूरेण गुडौदनेन ॥

भिन्नकांस्यवत् खङ्खणायाश्चाण्डालवाचायाः स्वरसंयोगः । यथा चैष उद्गीतो वध्यडिण्डिमशब्दः पटहानां च श्रूयते, तथा तर्कयामि, दरिद्रचारुदत्तको बध्यस्थानं नीयत

= द्विदलया, मत्स्यमांसेन, गुडौदनेन शालीनां भक्तेन च स्वकीये गृहे भोजनं कृत्वा समागतोऽस्मि ॥ २९ ॥

"मैंने—मांस, खटाई, शाक, मछलियों सहित दाल, गुड़ तथा चावलों से अपने घर में ( पर्याप्त ) भोजन किया है ।" ॥ २९ ॥

( सुनकर ) फूटे हुए काँसी के पात्र के समान खोखली चाण्डालों की आवाज सुनायी पड़ रही है । जैसे यह बहुत बड़ा वध्य के ढोल का शब्द सुनाई देता है इससे मैं अनुमान करता हूँ कि "दरिद्र चारुदत्त" वध्यस्थान पर ले जाया जा

इति । तत्प्रेक्षिष्ये । शत्रुविनाशो नाम मम महान् हृदयस्य परितोषो भवति । श्रुतं च मया, योऽपि किल शत्रुं व्यापाद्यमानं पश्यति, तस्यान्यस्मिन् जन्मान्तरेऽक्षिरोगो न भवति । मया खलु विषग्रन्थिगर्भप्रविष्टेनेव कीटकेन किमप्यन्तरं मृगयमाणे नोत्पादितस्तस्य दरिद्रचारुदत्तस्य विनाशः । सांप्रतमात्मीयायां प्रासादबालाग्रप्रतोलिकायामधिरुह्यात्मनः पराक्रमं पश्यामि । ही ही, एतस्य दरिद्रचारुदत्तस्य वध्यं नीयमानस्यैतावान् जनसंमर्दः, यस्यां वेलायामस्मादृशः प्रवरो वरमानुषो वध्यं नीयते, तस्यां वेलायां कीदृशो भवेत् ? कथं एष स नवबलीवर्द इव मण्डितो दक्षिणां दिशं नीयते ? । अथ किंनिमित्तं मदीयायाः प्रासादबालाग्रप्रतोलिकायाः समीपे घोषणा निपतिता, निवारिता च ? । कथं स्थावरकश्चेटोऽपि नास्तीह ? । मा नाम तेनेतो गत्वा मन्त्रभेदः कृतो भविष्यति ? तद्यावदेनमन्विष्यामि । ]

( इत्यवतीर्योपसर्पति )

चेटः—( दृष्ट्वा ) भश्टालका ! एशे शे आगदे । [ भट्टारकाः ! एष स

---

रहा है । अतः देखता हूँ । वैरी के मरने से मेरे मन में बड़ा सन्तोष होता है । मैंने यह भी सुना है कि जो शत्रु को मारा जाता हुआ देखता है उसे दूसरे जन्म में आँख का रोग नहीं होता । विषगन्धि ( अथवा बिस ( मृणाल ) की गाँठ ) में प्रविष्ट कीड़े की भाँति मैंने अवसर की घात लगाते हुए "दरिद्र चारुदत्त" का विनाश उपस्थित कर दिया है । अब मैं अपनी अट्टालिका के उपरिभाग पर चढ़ कर अपना पराक्रम देखता हूँ । ( चढ़कर तथा देखकर ) ओह ! जब इस "दरिद्र चारुदत्त" को वध्यस्थान पर ले जाते समय इतनी भीड़ है तब हम जैसे सत्पुरुष को वध्यस्थान पर ले जाते समय कितनी भीड़ होगी । ( देखकर ) क्या यह नये बैल की भाँति अलङ्कृत होकर दक्षिण दिशा में ले जाया जा रहा है ? तो क्यों मेरे प्रासाद के सामने घोषणा बन्द कर दी गई ? ( देखकर ) क्या "स्थावरक चेट" भी यहाँ नहीं है ? कहीं उसने यहाँ से जाकर भण्डाफोड़ न कर दिया हो ? अतः उसे ढूँढ़ता हूँ ।

[ उतरकर ( चाण्डालों के ) पास जाता है । ]

चेट—( देखकर ) आर्यो ! यह वह आ गया है !

आगतः । ]

चाण्डालौ—

ओशलध देध मग्गं दालं ढक्केध होध तुण्हीआ ।
अविणअतिक्खविशाणे दुट्ठबइल्ले इदो एदि ॥३०॥

[ अपसरत दत्त मार्गं द्वारं पिधत्त भवत तूष्णीकाः ।
अविनयतीक्ष्णविषाणो दुष्टबलीवर्द इत एति ॥ ]

शकारः—अले अले ! अंतलं अंतलं देध । (उपसृत्य) पुत्तका थावलका चेडा ! एहि गच्छम्ह । [ अरे अरे, अन्तरमन्तरं दत्त । पुत्रक स्थावरक चेटक ! एहि गच्छावः । ]

चेटः—ही ही, अणज्ज ! वशंतशेणिअं मालिअ ण पलितुश्टेशि ? । शंपदं पणइजणकप्पपादवं अज्जचालुदत्तं मालइदुं ववशिदेशि ? । [ ही ही, अनार्य ! वसन्तसेनां मारयित्वा न परितुष्टोऽसि ? सांप्रतं प्रणयिजनकल्पपादपमार्यचारुदत्तं मारयितुं व्यवसितोऽसि ? । ]

शकारः—ण हि लअणकुंभशलिशे हग्गे इत्थिअं वावादेमि । [ न हि

---

आयान्तं शकारं निरीक्ष्य चाण्डालौ लोकानपसर्तुं प्रेरयतः—ओशलध—इति । आर्याः ! सहसा अपसरत, द्वारपिधानं स्वगृहस्य क्रियताम्, मार्गं परित्यजत, मौनधनाश्च भवत, यतोऽयमविनय-रूप-तीक्ष्णशृङ्गो बलीवर्दः पुरस्तादेति । बलीवर्द-पदेनात्र दुष्टः शकारो गृह्यते ! अत्र "अप्रस्तुतप्रशंसा"ऽलङ्कारः । आर्या च्छन्दः ॥३०॥

---

चाण्डाल—"आर्यो ! मार्ग छोड़ दो, अपने घरों के किवाड़ बन्द कर लो तथा चुप हो जाओ क्योंकि अविनय-रूपी पैने सींगों वाला यह ("शकार") मरखने बैल की भाँति इधर ही आ रहा है ।" ॥ ३० ॥

शकार—अरे ! मार्ग दो ! (पास जाकर) बेटे ! स्थावरक चेट ! आओ ! चलें ।

चेट—अरे अनार्य ! "वसन्तसेना" को मारकर तू सन्तुष्ट नहीं हुआ और अब "आर्य चारुदत्त" को मरवाने पर तुला हुआ है !

शकार—रत्नों के घड़े के समान (पवित्र) मैं स्त्री को नहीं मार सकता ।

रक्तकुम्भसदृशोऽहं स्त्रियं व्यापादयामि । ]

सर्वे—अहो, तुए मारिदा । ण अज्जचारुदत्तेण । [ अहो, त्वया मारिता, न आर्यचारुदत्तेन । ]

शकारः—के एव्वं भणादि ? । [ क एवं भणति ? । ]

सर्वे—( चेटमुद्दिश्य ) णं एसो साहू । [ नन्वेष साधुः । ]

शकारः—( अपवार्य सभयम् ) अविद मादिके, अविद मादिके, कधं थावलके चेडे शुश्ठु ण मए शंजदे ? । एशे खु मम अकज्जश्श शक्खी । ( विचिन्त्य ) एव्वं दाव कलइश्शं । ( प्रकाशम् ) अलीअं भश्टालका ! हंहो, एशे चेडे शुवण्णचोलिआए मए गहिदे पिंश्टिदे मालिदे बद्धे अ । ता किद्वेले एशे जं भणादि किं शच्चं ? । ( अपवारितकेन चेटस्य कटकं प्रयच्छति, स्वैरकम् ) पुश्तका थावलका चेडा ! एदं गेण्हिअ अण्णधा भणाहि । [ हन्त, कथं स्थावरकश्चेटः सुष्ठु न मया संयतः ? । एष खलु ममाकार्यस्य साक्षी । एवं तावत् करिष्यामि । अलीकं भट्टारकाः ! अहो, एष चेटः सुवर्णचोरिकया मया गृहीतस्ताडितो मारितो बद्धश्च । तत्कृतवैर एव यद्भणति किं सत्यम् ? । पुत्रक स्थावरक चेट ! एतद्गृहीत्वाऽन्यथा भण । ]

---

सब—तूने ही मारी है, "आर्य चारुदत्त" ने नहीं ।

शकार—कौन ऐसा कहता है ?

सब—( चेट की ओर सङ्केत कर ) यह सत्पुरुष ।

शकार—( अलग होकर डरता हुआ ) अरे खेद है ! क्या मैंने "स्थावरक चेट" को भली भाँति नहीं बाँधा था ? यही मेरे उस, अकार्य का साक्षी है । ( सोचकर ) तो ऐसा करता हूँ । ( प्रकाश में ) महानुभावो ! यह सर्वथा झूठ है । इस "चेट" को मैंने चोरी करने के अपराध में पकड़कर पीटा तथा बाँध दिया था । इस वैर से यह जो कुछ कहता है क्या वह सत्य है ? ( ओट से "चेट" को कड़ा दे देता है । धीरे से ) बेटे ! इसे लेकर दूसरे प्रकार से कह दो ।

चेटः—( गृहीत्वा ) पेक्खध पेक्खध भट्टालका ! हंहो, शुवण्णेण मं पलोभेदि । [ पश्यत पश्यत भट्टारकाः ! अहो, सुवर्णेन मां प्रलोभयति । ]

शकारः—( कटकमाच्छिद्य ) एशे शे शुवण्णके, जश्श कालणादो मए बद्धे । ( सक्रोधम् ) हंहो चांडाला ! मए खु एशे शुवण्णभंडाले णिउत्ते शुवण्णं चोलअंते मालिदे पिश्टिदे; ता जदि ण पत्तिआअध ता पिश्टिं दाव पेक्खध । [ एतत् तत् सुवर्णकम् , यस्य कारणान्मया बद्धः । हंहो चाण्डालाः ! मया खल्वेष सुवर्णभाण्डारे नियुक्तः सुवर्णं चोरयन् मारितस्ताडितः; तद्यदि न प्रत्ययध्वं तदा पृष्ठं तावत् पश्यत । ]

चाण्डालौ—( दृष्ट्वा ) शोहणं भणादि । वितत्ते चेडे किं ण प्पलवदि ? । [ शोभनं भणति । वितप्तश्चेटः किं न प्रलपति ? । ]

चेटः—हीमादिके, ईदिशे दाशभावे, जं शच्चं कंपि ण पत्तिआअदि । ( सकरुणम् ) अज्जचालुदत्त ! एत्तिके मे विहवे । [ हन्त, ईदृशो दासभावः, यत्सत्यं कमपि न प्रत्यापयति । आर्य चारुदत्त ! एतावान् मे विभवः । ] ( इति पादयोः पतति )

चारुदत्तः—( सकरुणम् )

---

चेट—( लेकर ) महानुभावो ! देखो ! देखो ! मुझको स्वर्ण का लोभ दे रहा है ।

शकार—( कड़ा छीनकर ) यह वही सोना है जिसके लिए मैंने इसे बाँधा था । ( क्रोधपूर्वक ) अरे चाण्डालो ! मैंने इसे सुवर्णागार में नियुक्त किया था और सोना चुराते हुए मैं मारा तथा पीटा । इतने पर भी यदि तुम्हें विश्वास न हो तो इसकी कमर देखो ।

चाण्डाल—(देखकर) ठीक कहता है । बद्धवैर "चेट" क्या-क्या न कहेगा ।

चेट—यह दासता, सच तो यह है कि, किसी का भी विश्वास विश्वास नहीं कराती । ( रोता हुआ ) आर्य चारुदत्त ! इतना ही मेरा वश था ।

[ पैरों पर गिर पड़ता है । ]

चारुदत्त—( करुणा-सहित )

उत्तिष्ठ भोः ! पतितसाधुजनानुकम्पिन्
निष्कारणोपगतबान्धव धर्मशील ! ।
यत्नः कृतोऽपि सुमहान् मम मोक्षणाय,
दैवं न संवदति, किं न कृतं त्वयाद्य ॥३१॥

चाण्डालौ—भट्टके ! पिट्टिअ एदं चेडं णिक्खालेहि । [ भट्टक ! ताडयित्वैतं चेटं निष्कासय । ]

शकारः—णिक्कम ले । ( इति निष्कामयति ) अले चांडाला ! किं विलंवेध ? मालेध एदं । [ निष्काम रे । अरे चाण्डालाः ! किं विलम्बध्वम् ? मारयतैनम् । ]

चाण्डालौ—जदि तुवलशि ता शअं ज्जेव मालेहि । [ यदि त्वरयसे तदा स्वयमेव मारय । ]

---

विधिवैपरीत्ये किमपि कार्यं न सिध्यतीति स्थावरक-कथनं यथार्थमपि भाग्यविपरीततयाऽयथार्थमेव संपन्नमिति पादयोः पतितं चेटं प्रति चारुदत्तः सकरुणं वदति—उत्तिष्ठेति । भोः ! पतितानां साधुजनानां कृतेऽनुकम्पाशील ! धर्मात्मन् ! कारणं विनैव समागत–बन्धुभाव ! उत्तिष्ठ, त्वया तु मम विमोक्षणाय महान् यत्नः कृतः, परन्तु मम दैवमेव विपरीतं सत् संवादं नाङ्गीकरोति, सखे ! त्वया तु स्व–शक्त्या सर्वमेव कृतं यावत् करणीयमासीत् ।

अत्र यथार्थ–विशेषणदानात् परिकरालङ्कारः । वसन्ततिलका च्छन्दः ॥३१॥

---

"ऐ ! विपद्ग्रस्त सज्जनों पर दया दिखलाने वाले ! अकारण बन्धो, परम धार्मिक ! उठो–उठो ! तुमने मुझे बचाने के लिए पर्याप्त यत्न किया है परन्तु जब उसे मेरा भाग्य ही स्वीकार नहीं करता तो इसमें तुम्हारा क्या दोष है ? तुमने स्ववैभवानुसार क्या–क्या नहीं कर दिखाया है ?" ॥३१॥

चाण्डाल—स्वामिन् ! इस "चेट" को पीट कर निकाल दो !

शकार—निकल बे ! [ निकाल देता है । ]

अरे चाण्डालो ! क्यों विलम्ब कर रहे हो ? इसको ( शीघ्र ही ) मार डालो !

चाण्डाल—यदि जल्दबाजी करते हो तो अपने हाथों ही मार डालो !

रोहसेनः—अले चांडाला ! मं मारेध; मुंचध आवुकं । [अरे चाण्डालाः ! मां मारयत; मुञ्चत पितरम् । ]

शकारः—शपुत्तं ज्जेव एदं मालेध । [ स-पुत्रमेवैतं मारयत । ]

चारुदत्तः—सर्वमस्य मूर्खस्य संभाव्यते । तद्गच्छ पुत्र ! मातुः समीपम् ।

रोहसेनः—किं मए गदेण कादव्वं ? । [ किं मया गतेन कर्तव्यम् ? । ]

चारुदत्तः—

**आश्रमं वत्स ! गन्तव्यं गृहीत्वाद्यैव मातरम् ।**
**मा पुत्र ! पितृदोषेण त्वमप्येवं गमिष्यसि ॥३२॥**

तद्वयस्य ! गृहीत्वैनं व्रज ।

विदूषकः—भो वअस्स ! एव्वं तुए जाणिदं, तुए विणा अहं पाणाइं

---

"सपुत्रमेव चारुदत्तं मारये" ति श्रुत्वा भीत-भीतश्चारुदत्तः स्वपुत्रं आश्रमं प्रति, जनन्या सह, गन्तुमुपदिशति—आश्रममिति । पुत्र ! त्वयाऽद्यैव स्वमात्रा सहाश्रमं प्रति गन्तव्यम् । यथा मिथ्यैव वसन्तसेनामारणापराधेनाहं मृत्यु-मुखे निपतामि, कदाचिदस्य पित्रा पापमाचरितमिति कृत्वा तवापि मृत्युदण्डो माभूदिति त्वया नात्र स्थेयम् ॥३२॥

---

रोहसेन—अरे चाण्डालो ! मुझे मार दो ( परन्तु ) पिताजी को छोड़ दो !

शकार—इसको पुत्र-सहित ही मार डालो !

चारुदत्त—इस मूर्ख से सब-कुछ आशा की जा सकती है । ( यह सब कुछ कर सकता है । ) अतः वत्स ! माता के पास जाओ !

रोहसेन—मुझे जाकर क्या करना चाहिए ?

चारुदत्त—"वत्स ! आज ही माता को लेकर आश्रम ( वन ) में चले जाना । कदाचित् मेरे इस ( "वसन्तसेना" मारणरूप ) दोष से तुम्हारी भी ऐसी ही दशा न हो जाय ।" ॥३२॥

अतः मित्र ! इसे लेकर चले जाओ !

धारेमि त्ति ?। [ भो वयस्य ! एवं त्वया ज्ञातम्, त्वया विनाहं प्राणान् धारयामीति ?। ]

चारुदत्तः—वयस्य ! स्वाधीनजीवितस्य न युज्यते तव प्राणपरित्यागः।

विदूषकः—( स्वगतम् ) जुत्तं ण्णेदं, तधा वि ण सक्कुणोमि पिअवअस्सविरहिदो पाणाइं धारेदुं त्ति। ता बम्हणीए दारअं समप्पिअ पाणपरिच्चाएण अत्तणो पिअवअस्सं अणुगमिस्सं। ( प्रकाशम् ) भो वअस्स ! पराणेमि एदं लहुं। [ युक्तं न्विदम्। तथापि न शक्नोमि प्रियवयस्यविरहितः प्राणान् धर्तुमिति। तद्ब्राह्मण्यै दारकं समर्प्य प्राणपरित्यागेनात्मनः प्रियवयस्यमनुगमिष्यामि। भो वयस्य ! परानयाम्येतं लघु। ] ( इति सकण्ठग्रहं पादयोः पतति )

( दारकोऽपि रुदन् पतति )

शकारः—अले ! णं भणामि शपुत्ताकं चालुदत्ताकं वावादेध त्ति। [ अरे ! ननु भणामि सपुत्रकं चारुदत्तं व्यापादयतेति। ]

( चारुदत्तो भयं नाटयति )

चाण्डालौ—णहि अम्हाणं ईदिशी लाआणत्ती, जधा शपुत्तं चालुदत्तं

---

विदूषक—मित्र ! क्या तुमने ऐसा समझ लिया है कि मैं तुम्हारे बिना जीवित रह जाऊँगा !

चारुदत्त—मित्र ! अपने ही अधीन जीवनवाले आपको प्राणत्याग करना उचित नहीं है।

विदूषक—( स्वयं ही ) यह ठीक है तथापि मैं प्रियमित्र के वियोग में जीवित नहीं रह सकता हूँ। अतः बालक ( "रोहसेन" ) को ब्राह्मणी ( "धूता" ) को देकर प्राण–परित्याग करके प्रिय मित्र का अनुगमन करूँगा। ( प्रकाश में ) मित्र ! मैं इसे शीघ्र ही ले जाता हूँ। [ गले मिलकर पैरों पर गिर पड़ता है। ]

[ बालक भी रोता हुआ गिर पड़ता है। ]

शकार—अरे ! मैं कहता हूँ न, कि पुत्र सहित ही "चारुदत्त" को मार डालो !

[ "चारुदत्त" भय दिखलाता है। ]

वावादेध त्ति। ता णिक्कम ले दालआ ! णिक्कम। ( इति निष्क्रामयतः ) इमं तइअं घोशणट्ठाणं। ताडेध डिंडिमं। [ न ह्यस्माकमीदृशी राजाज्ञप्तिः, यथा सपुत्रं चारुदत्तं व्यापादयतेति। तन्निष्काम रे दारक ! निष्काम। इदं तृतीयं घोषणास्थानम्। ताडयत डिण्डिमम्। ] ( पुनर्घोषयतः )

शकारः—( स्वगतम् ) कधं एशे ण पत्तिआअंति पौला ?। ( प्रकाशम् ) हंहो चालुदत्ता बडुका ! ण पत्तिआअदि एशे पौलजणे। ता अत्तणकेलिकाए जीह्राए भणाहि मए वशंतशेणा मालिदेत्ति। [ कथमेते न प्रत्ययन्ते पौराः ?। अरे चारुदत्त बटुक ! न प्रत्ययते एष पौरजनः। तदात्मीयया जिह्वया भण—'मया वसन्तसेना मारिता' इति। ]

( चारुदत्तस्तूष्णीमास्ते )

शकारः—अले चंडालगोहे ! ण भणादि चालुदत्तवडुके। ता भणावेध इमिणा जज्जलवंशखंडेण शंखलेण तालिअ तालिअ। [ अरे चाण्डालमनुष्य ! न भणति चारुदत्तवटुकः। तद्भणयतानेन जर्जरवंशखण्डेन शङ्कलेन ताडयित्वा ताडयित्वा। ]

चाण्डालः—( प्रहारमुद्यम्य ) भो चालुदत्त ! भणाहि। [ भोश्चारुदत्त ! भण। ]

---

चाण्डाल—हमको "पुत्र सहित "चारुदत्त" को मारने की" राजाज्ञा नहीं है। अतः जा रे बच्चे ! जा ! [ निकाल देते हैं। ] यह तीसरा घोषणा–स्थान है। घोषणा करो ! [ पुनः ड्योढ़ी पीटते हैं। ]

शकार—( स्वयं ही ) क्या ये नागरिक विश्वास नहीं करते हैं ? ( प्रकाश में ) अरे चारुदत्त ! ये नागरिक विश्वास नहीं कर रहे हैं अतः अपनी जिह्वा से कह दे कि "मैंने "वसन्तसेना" मारी है।"

[ "चारुदत्त" चुप रहता है। ]

शकार—अरे ! चाण्डाल गोह ! यह "ब्राह्मण चारुदत्त" नहीं कहता है अतः इस फटे हुए बाँस से मार-मार कर इससे कहलवाओ !

चाण्डाल—( बाँस तानकर ) अरे चारुदत्त ! बोल !

चारुदत्तः—( सकरुणम् )

**प्राप्यैतद्व्यसनमहार्णवप्रपातं,**
**न त्रासो न च मनसोऽस्ति मे विषादः ।**
**एको मां दहति जनापवादवह्नि-**
**र्वक्तव्यं यदिह मया हता प्रियेति ॥२३॥**

( शकारः पुनस्तथैव )

चारुदत्तः—भो भोः पौराः ! ( 'मया खलु नृशंसेन—' [ ९।३०, ३८ ] इत्यादि पुनः पठति )

शकारः—वावादिदा । [ व्यापादिता । ]

चारुदत्तः—एवमस्तु ।

प्रथमचाण्डालः—अले, तव अत्त वज्झपालिआ । [ अरे, तवात्र वध्य-

---

शकारकथनाच्चाण्डालताडितश्चारुदत्तः ( सकरुणं ) कथयति—प्राप्येति । एतस्मिन् व्यसन–विपत्ति–महार्णवे प्रपातं प्राप्य मम त्रासो नास्ति, न च मनसि खेद एवास्ति, तथापि—एक एवायं लोकापवाद–रूपोऽग्नि "मया हता वसन्तसेनेति वक्तव्यम्" इति मां दहति । विपत्तिरस्ति, परमपवादवह्निः परितापकरो महानिति खेदः । अत्र रूपकालङ्कारः । प्रहर्षिणी च्छन्दः ॥२३॥

---

चारुदत्त—( करुणा पूर्वक )

"इस विपत्सागर में गिरकर मुझे न भय है और न खेद ही । परन्तु मुझे एक लोकापवाद–वह्नि ही जलाये डालती है कि मुझे यह कहना पड़ेगा कि "मैंने "वसन्तसेना" मारी है ।" ॥२३॥

[ "शकार" फिर वैसा ही कहता है । ]

चारुदत्त—नागरिको ! ( "मया खलु नृशंसेन…"इत्यादि ( ९।३०,३८ ) श्लोक पुनः पढ़ता है । )

शकार—मार डाली ।

चारुदत्त—ऐसा ही हो ।

पालिका । ]

द्वितीयचाण्डालः—अले, तव । [ अरे, तव । ]

प्रथमः—अले, वज्झपालिआए लेक्खअं कलेम्ह । ( इति बहुविधं लेखकं कृत्वा ) अले, जदि मम केलिका वज्झपालिआ, ता चिट्ठदु दाव मुहुत्तअं । [ अरे, वध्यपालिकाया लेखं कुर्मः । अरे, यदि मदीया वध्यपालिका, तदा तिष्ठतु तावन्मुहूर्तकम् ]

द्वितीयः—किंणिमित्तं ? । [ किंनिमित्तम् ? । ]

प्रथमः—अले, भणिदो म्हि पिदुणा शग्गं गच्छंतेण, जधा—पुत्त वीरअ ! जइ तुह वज्झपालिआ होदि, मा शहशा वावादअशि वज्झं । [ अरे, भणितोऽस्मि पित्रा स्वर्गं गच्छता, यथा—पुत्र वीरक ! यदि तव वध्य-पालिका भवति, मा सहसा व्यापादयसि वध्यम् । ]

द्वितीयः—अले, किंणिमित्तं ? । [ अरे, किंनिमित्तम् ? । ]

प्रथमः—कदा वि कोवि शाहू अत्थं दइअ वज्झं मोआवेदि । कदावि लण्णो पुत्तो भोदि, तेण वद्धावेण शव्ववज्झाणं मोक्खे होदि । कदावि हत्थी बंधं खंडेदि, तेण शंभमेण वज्झे मुक्के होदि । कदावि लाअपलिवत्ते होदि, तेण शव्ववज्झाणं मोक्खे होदि । [ कदापि कोऽपि साधुरर्थं दत्त्वा वध्यं मोचयति । कदापि राज्ञः पुत्रो भवति, तेन वृद्धिमहोत्सवेन सर्ववध्यानां मोक्षो

---

पहिला चाण्डाल—अरे ! आज तेरी बारी है ।

दूसरा चाण्डाल—अरे ! तेरी है ।

पहिला—अरे ! लिखकर देखें । ( बहुत प्रकार से लेख करके ) अरे ! यदि मेरी बारी है तो थोड़ी देर ठहर जा !

दूसरा—किसलिए ?

प्रथम—अरे ! मेरे पिता ने स्वर्ग जाते समय मुझसे कहा था कि—"पुत्र वीरक ! यदि तेरी बारी हो तो सहसा बध्य को मत मारना ।"

दूसरा—अरे ! किस लिए ?

पहिला—कदाचित् कोई सत्पुरुष वध्य को धन देकर छुड़ा दे, अथवा

भवति । कदापि हस्ती बन्धं खण्डयति, तेन संभ्रमेण वध्यो मुक्तो भवति । कदापि राजपरिवर्तो भवति, तेन सर्ववध्यानां मोक्षो भवति । ]

शकारः—किं किं लाअपलिवत्तो होदि ? । [ किं किं राजपरिवर्तो भवति ? । ]

चाण्डालः—अले, वज्झपालिआए लेक्खअं कलेम्ह । [ अरे, वध्यपालिकाया लेखं कुर्मः । ]

शकारः—अले, शिग्घं मालेध चालुदत्ताकं । [ अरे, शीघ्रं मारयत चारुदत्तम् । ] ( इत्युक्त्वा चेटं गृहीत्वैकान्ते स्थितः )

चाण्डालः—अज्जचालुदत्त ! लाअणिओओ खु अवलज्झदि, ण खु अम्हे चाण्डाला; ता शुमलेहि जं शुमलिव्वं । [ आर्यचारुदत्त ! राजनियोगः खल्वपराध्यति, न खलु वयं चाण्डालाः; तत्स्मर्तव्यम् । ]

चारुदत्तः—

**प्रभवति यदि धर्मो दूषितस्यापि मेऽद्य,**

---

"स्मरणीयं स्मरेति" चाण्डालवचो निशम्य चारुदत्तः कथयति—प्रभवति—इति । प्रबलराजपुरुषाणां, शकारस्य वाक्यैर्वा दूषितोऽस्मि यद्यपि, तथापि कामये—

---

राजा के पुत्र हो जाय जिसकी प्रसन्नता में सब बध्यों को छोड़ दिया जाय, या कोई हाथी बन्धन तोड़ डाले जिससे घबराहट में वध्य छूट जाय अथवा कदाचित् राज्य बदल जाय जिससे सब बध्यों की मुक्ति हो जाय ।

शकार—क्या क्या, राज्य-परिवर्तन हो जाय ?

चाण्डाल—अरे ! बारी जानने के लिए लेख करते हैं ।

शकार—अरे "चारुदत्त" को शीघ्र ही मार डालो ।

[ ऐसा कह "चेट" को पकड़कर एकान्त में खड़ा हो जाता है । ]

चाण्डाल—आर्यचारुदत्त ! इसमें राजाज्ञा का अपराध है, हम चाण्डालों का नहीं । अतः जिसे स्मरण करना हो करलो ।

चारुदत्त—"यद्यपि मैं प्रबल पुरुषों ( शकारादिकों ) के कहने तथा अपने

प्रबलपुरुषवाक्यैर्भाग्यदोषात् कथंचित् ।
सुरपतिभवनस्था यत्र तत्र स्थिता वा,
व्यपनयतु कलङ्कं स्वस्वभावेन सैव ॥३४॥

भोः ! क तावन्मया गन्तव्यम् ? ।

चाण्डालः—( अग्रतो दर्शयित्वा ) अले, एद दीशदि दक्खिणमशाणं, जं पेक्खिअ वज्झा झत्ति पाणाइं मुंचंति । पेक्ख पेक्ख|

अद्धं कलेवलं पडिवुत्तं कड्ढंति दीहगोमाआ ।
अद्धं पि शूललग्गं वेशं विअ अट्टहाशश्श ॥३५॥

[ अरे एतद्दृश्यते दक्षिणश्मशानम्, यत्प्रेक्ष्य वध्या झटिति प्राणान् मुञ्चन्ति । पश्य पश्य

अर्धं कलेवरं प्रतिवृत्तं कर्षन्ति दीर्घगोमायवः ।
अर्धमपि शूललग्नं वेश इवाट्टहासस्य ॥ ]

---

यदि मया कदाचित् धर्मः कृतस्तर्हि सुरपतिस्थाने स्वर्गे स्थिता अन्यत्र वा स्थिता सा वसन्तसेनैवाऽऽगत्याऽस्य मम कलङ्कस्य प्रक्षालनं करोतु । अतः किमपि न कामये । एतेन शीघ्रमेव वसन्तसेना समागमिष्यतीति सूचितम् । मालिनी छन्दः ॥३४॥

दक्षिणश्मशानस्य भयावहत्वं प्रदर्शयितुमाह—अद्धमिति । एतस्मिन् श्मशाने प्रविष्टानां शूलोपरि समारोपितानां बध्यजनानामर्धं शरीरं दीर्घकायाः शृगालाः

---

दुर्भाग्य से दूषित हो गया हूँ तथापि यदि मैंने कोई धर्म किया हो तो स्वर्गस्थित अथवा जहाँ कहीं रहनेवाली वही ( "वसन्तसेना" आकर ) अपने स्वभाव से मेरे इस कलङ्क को दूर कर देवे ।" ॥ ३४ ॥

तो मुझे कहाँ जाना चाहिए ?

चाण्डाल—( आगे दिखलाकर ) अरे ! यह 'दक्षिण श्मशान' दिखलाई पड़ रहा है, जिसको देखकर ही वध्यों के प्राण निकल जाते हैं । देखो ! देखो !

"शूली पर लटके हुए ( वध्य के ) आधे शरीर को गीदड़ खींच रहे हैं और शूली पर लगा हुआ ( ऊपर का भाग ) अट्टहास सा करता हुआ प्रतीत

चारुदत्तः—हा, हतोऽस्मि मन्दभाग्यः । ( इति सावेगमुपविशति )

शकारः—ण दाव गमिश्शं । चालुदत्ताकं वावादअंतं दाव पेक्खामि । ( परिक्रम्य, दृष्ट्वा ) कधं उवविश्टे ? । [ न तावद्गमिष्यामि । चारुदत्तकं व्यापाद्यमानं तावत् पश्यामि । कथमुपविष्टः ? । ]

चाण्डालः—चारुदत्ता ! किं भीदेशि ? । [ चारुदत्त ! किं भीतोऽसि ? । ]

चारुदत्तः—( सहसोत्थाय ) ( 'मूर्ख ! न भीतो मरणादस्मि केवलं दूषितं यशः' [ १०।२७ ] इत्यादि पुनः पठति )

चाण्डालः—अज्जचालुदत्त ! गअणदले पडिवशंता चंदशुज्जा वि विपत्तिं लहंति, किं उण जणा मलणभीलुआ माणवा वा ? । लोए कोवि उट्ठिदो पडदि, कोवि पडिदोवि उट्ठेदि । उट्ठंतपडंताह वशणपाडिआ शवश्श उण अत्थि । एदाइं हिअए कदुअ संधालेहि अत्ताणअं । ( द्वितीयचाण्डालं प्रति ) एदं चउट्ठं घोशणट्ठाणं; ता उग्घोशम्ह । [ आर्यचारुदत्त !

---

( अधोलम्बितम् ) कर्षन्ति, अर्धश्च शूले संलग्नं सत् अट्टहासस्याधर इव प्रतीयते । मृत्यु-समये मुखं व्यात्तं भवति, दन्ताश्च दृश्यन्ते । तत्रोत्प्रेक्ष्यते-यदयं जनोऽट्टहासमिव करोति, इति भावः । अत्रोत्प्रेक्षाऽलङ्कारः । आर्या च्छन्दः ॥३५॥

चाण्डालः सान्त्वयति चारुदत्तम्—अज्जेति । आर्य चारुदत्त ! आकाशे वर्तमान-

---

हो रहा है । ( मरते समय वध्य की मुख-मुद्रा बदल जाती है—उसका मुख फटा रह जाता है । अतः ऐसा प्रतीत होता है मानों वह अट्टहास कर रहा हो । )" ॥ ३५ ॥

चारुदत्त—हा ! हतभाग्य मैं मर गया ! [ऐसा कह आवेगपूर्वक बैठ जाता है ।]

शकार—मैं अभी नहीं जाता । "चारुदत्त" को मरते हुए देखूँगा । ( घूम तथा देख कर ) क्या बैठ गया है ?

चाण्डाल—चारुदत्त ! क्या भयभीत हो ?

चारुदत्त—( सहसा उठकर ) मूर्ख ! [ "न भीतो मरणादस्मि"—इत्यादि ( १०।२७ ) श्लोक पुनः पढ़ता है । ]

चाण्डाल—आर्य चारुदत्त ! आकाश-स्थित सूर्य और चन्द्रमा भी विपद्ग्रस्त

गगनतले प्रतिवसन्तौ चन्द्रसूर्यावपि विपत्तिं लभेते, किं पुनर्जना मरणभीरुका मानवा वा ! । लोके कोऽप्युत्थितः पतति, कोऽपि पतितोऽप्युत्तिष्ठते । उत्तिष्ठत्पततो वसनपातिका शवस्य पुनरस्ति । एतानि हृदये कृत्वा संघारयात्मानम् । एतच्चतुर्थं घोषणास्थानम्, तदुद्घोषयावः । ]

( पुनस्तथैवोद्घोषयतः )

चारुदत्तः—हा प्रिये वसन्तसेने ! ( 'शशिविमलमयूख—' [ १०।१३ ] इत्यादि पुनः पठति )

( ततः प्रविशति ससंभ्रमा वसन्तसेना भिक्षुश्च )

---

योः सूर्याचन्द्रमसोरपि विपत्तिरायाति, उत्थान–पतनयोः क्रमः कदाचित् शवस्यापि दृष्टो भवति । बहुशोऽस्माभिः शवा अपि पुनः प्रत्यागतप्राणा दृष्टाः । ततश्च भवता सन्तप्तेन न भवितव्यम् । धैर्यधारणपूर्वकं स्वेष्टदेवतास्मरणीयेति भावः ।

---

हो जाते हैं फिर मरणधर्मा मनुष्यों की तो बात ही क्या है ! संसार में कोई उन्नत पुरुष गिर पड़ता है और कोई पतित उन्नत हो जाता है । उत्थान-पतन का क्रम कभी-कभी शवों में भी दिखलाई पड़ता है । इन सब बातों को सोचकर धैर्य धारण करो ! ❀ ( दूसरे चाण्डाल से ) यह चौथा घोषणा करने का स्थान है अतः घोषणा कर ! [ पुनः उसी प्रकार घोषणा करते हैं । ]

चारुदत्त—हा प्रिये वसन्तसेने !

[ "शशिविमलमयूख···" इत्यादि ( १०।१३ । ) श्लोक पुनः पढ़ता है । ]

[ तदनन्तर घबराई हुई "वसन्तसेना" तथा "भिक्षु" का प्रवेश होता है । ]

---

❀ नीच चाण्डाल के इस कथन में कितनी सत्यता है । उस के एक-एक शब्द से दार्शनिकता टपक रही है । "उत्थान-पतन" का उपदेश बड़ा ही मनोहर है । उस के इस कथन को देखकर यह पद्य स्मरण आ जाता है—

"उत्थान-पतन का जोड़ा, रवि-शशि सा चलता रहता ।
सूखी पर्वत-नदियों में, है कभी नीर भी बहता ।"

[ "उद्बोधन"—श्रीब्रह्मानन्द 'शुक्ल' ]

वास्तव में उसके ये विचार अभिनन्दनीय हैं ।

भिक्षुः—हीमाणहे, अट्ठाणपलिश्शंतं शमश्शाशिअ वशंतशेणिअं णअंते अणुग्गहिदम्हि पव्वज्जाए । उवाशिके ! कहिं तुम णइश्शं ? । [ आश्चर्यम्, अस्थानपरिश्रान्तां समाश्वास्य वसन्तसेनिकां नयन्ननुगृहीतोऽस्मि प्रव्रज्यया । उपासिके ! कुत्र त्वां नेष्यामि ? । ]

वसन्तसेना—अज्जचारुदत्तस्स ज्जेव गेहं । तस्स दंसणेण मिअलांछणस्स विअ कुमुदिणिं आणंदेहि मं । [ आर्यचारुदत्तस्यैव गेहम् । तस्य दर्शनेन मृगलाञ्छनस्येव कुमुदिनीमानन्दय माम् ]

भिक्षुः—( स्वगतम् ) कदलेण मग्गेण पविशामि ? । ( विचिन्त्य ) लाअमग्गेण ज्जेव पविशामि । उवाशिके ! एहि, इमं लाअमग्गं; ( आकर्ण्य ) किं णु हु एशे लाअमग्गे महंते कलअले शुणीअदि ? । [ कतरेण मार्गेण प्रविशामि ? । राजमार्गेणैव प्रविशामि । उपासिके ! एहि, अयं राजमार्गः; किं नु खल्वेष राजमार्गे महान् कलकलः श्रूयते ? । ]

वसन्तसेना—( अग्रतो निरूप्य ) कधं पुरदो महाजणसमूहो ? । अज्ज !

---

वसन्तसेनामादाय समागच्छन् भिक्षुः कथयति—हीमाणहे ! इति । अहो ! इमां वसन्तसेनाम्, एतदुचितं यद्यपि नासीद्विश्रामस्थानं, तथापि कथञ्चित् कृतविश्रामां नीत्वा आगच्छतो मम संन्यासेन महानुपकारः कृतः ! अहं तु स्वजीवने परोपकाररूपां वसन्तसेना-परिचर्यां संन्यासस्यैव फलं सम्भावयामि ।

---

भिक्षु—आश्चर्य है ! इस सन्यासी-वेष से मैं परिश्रान्त "वसन्तसेना" को आश्वासन देकर ले जाता हुआ कृतकृत्य हो गया हूँ । उपासिके ! तुम को कहाँ ले चलूँ ?

वसन्तसेना—"आर्य चारुदत्त" के ही घर । उन का दर्शन करा कर 'चन्द्र-दर्शन" से प्रफुल्लित कुमुदिनी की भाँति मुझे आनन्दित करो ।

भिक्षु—( स्वयं ही ) किस मार्ग से प्रवेश करूँ ? ( सोच कर ) राजमार्ग से ही प्रविष्ट होता हूँ । उपासिके ! आओ ! यह राजमार्ग है । ( सुनकर ) क्या राजमार्ग पर महान् कोलाहल सुनाई पड़ रहा है ?

वसन्तसेना—( आगे देखकर ) क्या आगे बहुत भीड़ है ? आर्य ! पता

जाणाहि दाव किं णेदं त्ति । विसमभरक्कंता विअ वसुंधरा एअवासोण्णदा उज्जइणी वट्टदि । [ कथं पुरतो महान् जनसमूहः ? । आर्य ! जानीहि तावत् किंन्विदमिति । विषमभरक्रान्तेव वसुंधरा एकवासोन्नतोज्जयिनी वर्तते । ]

चाण्डालः—इमं अ पच्छिमं घोशणट्ठाणं, ता तालेध डिंडिमं । उग्घोशेध घोशणं । ( तथा कृत्वा ) भो चालुदत्त ! पडिवालेहि । मा भाआहि, लहुं ज्जेव मालीअशि ! [ इदं च पश्चिमं घोषणास्थानम्, तत्ताडयत डिण्डिमम् । उद्घोषयत घोषणाम् । भोश्चारुदत्त ! प्रतिपालय । मा भैः, शीघ्रमेव मार्यसे । ]

चारुदत्तः—भगवत्यो देवताः ! ।

भिक्षुः—( श्रुत्वा, ससंभ्रमम् ) उवाशिके ! तुमं किल चारुदत्तेण मालिदाशि त्ति चालुदत्तो मालिदुं णीअदि । [ उपासिके ! त्वं किल चारुदत्तेन मारितासीति चारुदत्तो मारयितुं नीयते । ]

वसन्तसेना—( ससंभ्रमम् ) हद्धी हद्धी, कधं मम मंदभाइणीए किदे अज्जचालुदत्तो वावादीअदि ? । भो ! तुरिदं तुरिदं आदेसेहि मग्गं । [ हा धिक् हा धिक्, कथं मम मन्दभागिन्याः कृत आर्यचारुदत्तो व्यापाद्यते ? । भोः ! त्वरितं त्वरितमादिश मार्गम् । ]

भिक्षुः—तुवलदु तुवलदु बुद्धोवाशिआ अज्जचालुदत्तं जीअंतं शम-

---

लगाओ कि क्या बात है ? विषमभार से दबी हुई सी पृथ्वी की भाँति यह 'उज्जयिनी' एक ही ओर एकत्रित हो गई है ।

चाण्डाल—यह अन्तिम घोषणा स्थान है । अतः ढोल पीटो तथा घोषणा करो ! ( ड्यौढ़ी पीटकर ) चारुदत्त ! तैयार होजा ! डर मत ! शीघ्र ही मार दिया जायगा ।

चारुदत्त—हे भगवान् !

भिक्षु—( सुनकर घबराया हुआ ) "तुम्हें "चारुदत्त" ने मार डाला है" ( इस अपराध में ) "चारुदत्त" को मारने के लिए ले जाया जा रहा है ।

वसन्तसेना—( घबराहट के साथ ) हाय ! हाय ! क्या मुझ मन्दभागिनी के लिए "चारुदत्त" मारे जा रहे हैं ! शीघ्रातिशीघ्र मार्ग बतलाओ !

शशाशिदुं । अज्जा ! अंतलं अंतलं देध । [ त्वरतां त्वरतां बुद्धोपासिकार्यचारुदत्तं जीवन्तं समाश्वासयितुम् । आर्याः ! अन्तरमन्तरं दत्त । ]

वसन्तसेना—अंतरं अंतरं । [ अन्तरमन्तरम् । ]

चाण्डाल—अज्जचालुदत्त ! शामिणिओओ अवलज्झदि । ता शुमलेहि जं शुमलिदव्वं । [ आर्यचारुदत्त ! स्वामिनियोगोऽपराध्यति । तत् स्मर यत् स्मर्तव्यम् । ]

चारुदत्तः—किं बहुना । ( 'प्रभवति'– [ १०।३४ ] इत्यादि श्लोकं पठति )

चाण्डालः—( खड्गमाकृष्य ) अज्जचालुदत्त ! उत्ताणे भविअ समं चिट्ठ । एक्कप्पहालेण आलिअ तुमं शग्गं णेम्ह । [ आर्यचारुदत्त ! उत्तानो भूत्वा समं तिष्ठ । एकप्रहारेण मारयित्वा त्वां स्वर्गं नयामः । ]

( चारुदत्तस्तथा तिष्ठति )

चाण्डालः—( प्रहर्तुमीहते, खड्गपतनं हस्तादभिनयन् ) ही कधं

---

भिक्षु—आप जीवित "चारुदत्त" को आश्वासन देने के लिए शीघ्रता करें । शीघ्रता करें । आर्यो ! मार्ग दो !

वसन्तसेना—हटो ! हटो !

चाण्डाल—स्वामी की आज्ञा का ही इसमें अपराध है अतः जिसका स्मरण करना है, करलो ।

चारुदत्त—अधिक कहने से क्या लाभ ?

[ "प्रभवति···" इत्यादि ( १०।३४ ) श्लोक पढ़ता है । ]

चाण्डाल—( तलवार खींचकर ) आर्य चारुदत्त ! ऊपर को हो सधकर सीधे खड़े हो जाओ ! तुमको एक प्रहार से ही स्वर्ग पहुँचाते हैं ।

[ "चारुदत्त" वैसे ही खड़ा हो जाता है । ]

चाण्डाल—( प्रहार करना चाहता है । हाथ से खड्ग गिरने का अभिनय करते हुए ) अरे, क्यों ?—

आअड्ढिदे शलोशं मुट्ठीए मुट्ठिणा गहीदे वि।
धलणीए कीश पडिदे दालुणके अशणिशण्णिहे खग्गे ॥३६॥

जधा एदं शवुत्तं, तधा तक्केमि ण विवज्जदि अज्जचालुदत्तेति। भअवदि शज्झवासिणि! पशीद पशीद। अवि णाम चालुदत्तश्श मोक्खे भवे, तदो अणुगहीदं तुए चांडालउलं भवे। [ ही, कथम्

आकृष्टः सरोषं मुष्टौ मुष्टिना गृहीतोऽपि।
धरण्यां किमर्थं पतितो दारुणकोऽशनिसन्निभः खड्गः ॥

यथैतत् संवृत्तम्, तथा तर्कयामि न विपद्यत आर्यचारुदत्त इति। भगवति सह्यवासिनि! प्रसीद प्रसीद। अपि नाम चारुदत्तस्य मोक्षो भवेत्, तदानुगृहीतं त्वया चाण्डालकुलं भवेत्। ]

अपरः—जधाणत्तं अणुचिट्ठम्ह। [ यथाज्ञप्तमनुतिष्ठावः। ]

---

उत्तानो भूत्वा स्थितश्चारुदत्तः, चाण्डालः खड्गं चालयति, किन्तु खड्गः सम्पतति भूमौ, तदा स साश्चर्यं वदति—आ अड्ढिदे-इति। मया एष खड्गः सरोषमाकृष्टः, सुदृढं मुष्टौ गृहीतोऽपि धरण्यां निपतितः, मन्ये चारुदत्तो न विपत्स्यते; दैवमेतस्य रक्षां विधास्यति। भगवति, सह्यवासिनि, जगदम्ब! तवानुकम्पया जीवति यदि चारुदत्तस्तदा चाण्डालानां कुले भवत्या महती कृपा स्यात्। एवंविधस्य भद्रपुरुषस्य निरपराधस्य वधेन चाण्डाला अपि निन्दिता भवन्ति, इति भावः ॥ ३६ ॥

---

"मैंने क्रोधपूर्वक इसे मुट्ठी में पकड़कर खींचा है तो भी वज्र के समान यह खड्ग पृथ्वी पर किस लिए गिर पड़ा है!" ॥ ३६ ॥

जैसे यह घटना हुई है इससे मैं अनुमान करता हूँ कि "आर्य चारुदत्त" की मृत्यु न होगी।" भगवति! जगदम्बे! प्रसन्न होओ! प्रसन्न होओ! यदि "चारुदत्त" बच जाते हैं तो 'चाण्डाल-कुल' कृतार्थ हो जायगा। ( अन्यथा, ऐसी विभूति के वध से कलङ्कित 'चाण्डाल-कुल' का उद्धार असम्भव है। )

दूसरा—( राजा की ) आज्ञानुसार ही कार्य करते हैं।

प्रथमः—भोदु, एव्वं कलेम्ह । [ भवतु, एवं कुर्वः । ]

( इत्युभौ चारुदत्तं शूले समारोपयितुमिच्छतः )

( चारुदत्तः 'प्रभवति—' [ १०।३४ ] इत्यादि पुनः पठति )

भिक्षुर्वसन्तसेना च—( दृष्ट्वा ) अज्जा ! मा दाव मा दाव । अज्जा ! एसा अहं मंदभाइणी, जाए कारणादो एसो वावादीअदि । [ आर्याः ! मा तावन्मा तावत् । आर्याः ! एषाहं मन्दभागिनी यस्याः कारणादेष व्यापाद्यते । ]

चाण्डालः—( दृष्ट्वा )

का उण तुलिदं एशा अंशपडंतेण चिउलभालेण ।
मा मेत्ति वाहलंती उट्ठिदहत्था इदो एदि ॥३७॥

[ का पुनस्त्वरितमेषांसपतता चिकुरभारेण ।
मा मेति व्याहरन्त्युत्थितहस्तेत एति ॥ ]

वसन्तसेना—अज्जचारुदत्त ! किं णेदं ? । [ आर्यचारुदत्त ! किं न्विदम् ? । ]

---

"एनं मा मारयत, अहमेव सा, यस्याः कारणादयं निहन्यते," इति कथयन्तीं समापतन्तीञ्च वसन्तसेनां निरीक्ष्य चाण्डालः कथयति—का उण-इति । स्कन्धयोर्मुक्तं केशपाशं वहन्ती त्वरितमागच्छन्ती, हस्तावुन्नमय्य "मा—मा" इति कथयन्ती केयमस्ति ? ॥ ३७ ॥

---

पहिला—अच्छा, ऐसा करते हैं ।

[ ऐसा कहकर दोनों "चारुदत्त" को शूली पर चढ़ाना चाहते हैं । ]

[ "चारुदत्त" "प्रभवति···" इत्यादि ( १०।३४ ) श्लोक पुनः पढ़ता है । ]

भिक्षु और वसन्तसेना—( देखकर ) आर्यो ! ऐसा मत करो ! यह मैं ही हूँ जिसके कारण इनका वध किया जा रहा है ।

चाण्डाल—( देखकर )

"यह कन्धों पर बाल बिखेरे हुए जल्दी-जल्दी "नहीं-नहीं" इस प्रकार हाथ उठाकर कहती हुई कौन इधर को आ रही है ?" ॥ ३७ ॥

वसन्तसेना—आर्य चारुदत्त ! यह क्या है ?

( इत्युरसि पतति )

भिक्षुः—अज्जचालुदत्त ! किं णेदं ? । [ आर्यचारुदत्त ! किं न्विदम् ? । ]

( इति पादयोः पतति )

चाण्डालः—( सभयमुपसृत्य ) कधं वशंतशेणा ? । णं खु अम्हेहिं शाहु ण वावादिदे । [ कथं वसन्तसेना ? । ननु खल्वस्माभिः साधुर्न व्यापादितः । ]

भिक्षुः—( उत्थाय ) अले, जीवदि चालुदत्ते ? । [ अरे, जीवति चारुदत्तः ? । ]

चाण्डालः—जीवदि वश्शशदं । [ जीवति वर्षशतम् । ]

वसन्तसेना—( सहर्षम् ) पच्चुज्जीविदम्हि । [ प्रत्युज्जीवितास्मि । ]

चाण्डालः—ता जाव एदं वुत्तं लाइणो जण्णवाडगदश्श णिवेदेम्ह । [ तद्यावदेतद्वृत्तं राज्ञो यज्ञवाटगतस्य निवेदयावः । ]

( इति निष्क्रामतः )

शकारः—( वसन्तसेनां दृष्ट्वा, सत्रासम् ) हीमादिके, केण गब्भदाशी जीवाविदा ? । उक्कंताइं मे पाणाइं । भोदु, पलाइश्शं । [ आश्चर्यम् , केन

---

[ ऐसा कहकर वक्षःस्थल पर गिर पड़ती है । ]

भिक्षु—आर्य चारुदत्त ! यह क्या है ?

[ पैरों पर गिर पड़ता है । ]

चाण्डाल—( भय सहित पास जाकर ) क्या "वसन्तसेना" है ? ( अच्छा हुआ कि ) हमने ( निरपराध ) सज्जनपुरुष को नहीं मारा !

भिक्षु—( उठकर ) अरे ! "चारुदत्त" जीवित हैं !

चाण्डाल—सैंकड़ो वर्षों तक जीवें ।

वसन्तसेना—( सहर्ष ) मैं तो फिर से जी गई हूँ ।

चाण्डाल—तब तक हम इस समाचार को यज्ञशाला में बैठे हुए राजा से कहते हैं । [ जाते हैं । ]

शकार—( "वसन्तसेना" को देखकर भयपूर्वक ) आश्चर्य है ! इस जन्म-

गर्भदासी जीवनं प्रापिता ? । उत्क्रान्ता मे प्राणाः । भवतु, पलायिष्ये । ] ( इति पलायते )

चाण्डालः—( उपसृत्य ) अले, णं अम्हाणं ईदिशी लाआणत्ती—जेण शा वावादिदा, तं मालेध त्ति । ता लट्टिअशालअं ज्जेव अण्णेशम्ह । [ अरे, नन्वस्माकमीदृशी राजाज्ञप्तिः—येन सा व्यापादिता, तं मारयतेति । तद्राष्ट्रियश्यालमेवान्विष्यावः । ]

( इति निष्क्रान्तौ )

चारुदत्तः—( सविस्मयम् )

**केयमभ्युद्यते शस्त्रे मृत्युवक्त्रगते मयि ।**
**अनावृष्टिहते सस्ये द्रोणवृष्टिरिवागता ॥३८॥**

( अवलोक्य च )

---

कुतः समागता वसन्तसेना ? इति चिन्ताचक्रे निपतितश्चारुदत्तः साश्चर्यं कथयति—केयमिति । अये ! मां हन्तुं शस्त्रे समुत्तोलिते, मयि च मृत्योर्मुखे निपतिते, अनावृष्ट्या विनष्टप्राये सस्ये द्रोण-वृष्टिः = सतत-धारावृष्टिरिवेयं का समागता ? इयं वसन्तसेनैवास्ति, अन्या वा काचित्तद्रूपमाकल्प्य मामुज्जीवयितुं देवी समागता ? इति भावः । अत्रोपमाऽलङ्कारः ॥ ३८ ॥

---

दासी को किसने जिला दिया ? मेरे तो प्राण निकले जा रहे हैं । अच्छा तो भाग जाता हूँ । [ भाग जाता है । ]

चाण्डाल—( पास जाकर ) अरे ! हमको ऐसी राजाज्ञा है कि—"जिसने "वसन्तसेना" मारी है उसे ही मार डालो !" अतः अब 'राजश्यालक' को ही ढूँढते हैं । [ दोनों चले जाते हैं । ]

चारुदत्त—( आश्चर्य से )—

"मुझे मारने के लिए शस्त्र तानने तथा मेरे मरणासन्न होने पर—सूखे हुए धनों में बहुत बड़ी वर्षा की भाँति यह कौन आ गई है ?" ॥३८॥

( देखकर )

**वसन्तसेना किमियं द्वितीया ? समागता सैव दिवः किमित्थम् ।?**
**भ्रान्तं मनः पश्यति वा ममैनां ? वसन्तसेना न मृताथ सैव ?॥ ३९॥**

अथवा,—

**किं नु स्वर्गात् पुनः प्राप्ता मम जीवातुकाम्यया ?**
**तस्या रूपानुरूपेण किमुतान्येयमागता ? ॥४०॥**

वसन्तसेना—( सास्रमुत्थाय, पादयोर्निपत्य ) अज्जचारुदत्त ! सा ज्जेव अहं पावा, जाए कारणादो इअं तुए असरिसी अवत्था पाविदा । [ आर्यचारुदत्त ! सैवाहं पापा, यस्याः कारणादियं त्वयासदृश्यवस्था प्राप्ता । ]

---

तामवलोक्य कथयति—वसन्तसेनेति । किमियं द्वितीया वसन्तसेनैवागता ? अथवा—सैव स्वर्गात् पुनः समायाता ? अथवा भ्रान्तियुक्तं मदीयं मन एवं पश्यति, वस्तुतो नैव मृता वसन्तसेनेति न सम्यगवधारयामि ?

अत्र सन्देहालङ्कारः । उपजातिश्छन्दः ॥ ३९ ॥

पक्षान्तरमाश्रित्य कथयति—किन्नु इति । अथवा—मम जीवातोः = सञ्जीवनौषधस्य काम्यया = इच्छया, सैव पुनः स्वर्गात् प्राप्ता ? आहोस्वित् तस्या रूपानुरूपमेव स्वरूपं कृत्वा काचिदन्येयं देवी समागता ? पूर्वोक्त एवात्र भावः । आनन्दातिरेकाच्च पुनरुक्तिर्न दोषाय । "जीवातुर्जीवनौषधम्" इत्यमरः ।

अत्रापि सन्देहालङ्कारः ॥ ४० ॥

---

" क्या यह दूसरी "वसन्तसेना" है ? अथवा वही स्वर्ग से उतर आई है ? या मेरा मन ही भ्रान्त होकर ऐसा देख रहा है ? अथवा, "वसन्तसेना" मरी नहीं, यह तो वही है ।" ॥३९॥

अथवा—

"क्या यह मुझे जिलाने की इच्छा से ही पुनः स्वर्ग से उतर आई है ? अथवा, उसकी अनुरूप यह कोई दूसरी स्त्री ही आ गई है ?" ॥४०॥

वसन्तसेना—( रोती हुई उठकर तथा पैरों पर गिरकर ) आर्यचारुदत्त ! मैं वही पापिनी हूँ जिसके कारण आपने ऐसी अनुचित दशा प्राप्त की है ।

( नेपथ्ये )

अच्चरिअं अच्चरिअं, जीवदि वसंतसेना । [ आश्चर्यमाश्चर्यं, जीवति वसन्तसेना । ] ( इति सर्वे पठन्ति )

चारुदत्तः—( आकर्ण्य सहसोत्थाय स्पर्शसुखमभिनीय निमीलिताक्ष एव हर्षगद्गदाक्षरम् ) प्रिये ! वसन्तसेना त्वम् ? ।

वसन्तसेना—सा ज्जेवाहं मंदभाआ । [ सैवाहं मन्दभाग्या । ]

चारुदत्तः—( निरूप्य, सहर्षम् ) कथं वसन्तसेनैव ? । ( सानन्दम् )

**कुतो बाष्पाम्बुधाराभिः स्नपयन्ती पयोधरौ ।**
**मयि मृत्युवशं प्राप्ते विद्येव समुपागता ॥४१॥**

प्रिये वसन्तसेने !

---

सत्यं वसन्तसेनैवास्तीति निश्चित्य सहर्षमाह चारुदत्तः—कुत इति । मयि मृत्युवशंगते मृतसञ्जीवनीविद्येव लोचनजलेन पयोधरौ स्नपयन्तीव त्वं कुतः समागता ? अत्रोपमाऽलङ्कारः । पथ्यावक्त्रं छन्दः ॥ ४१ ॥

---

( नेपथ्य में )

आश्चर्य है ! आश्चर्य है ! "वसन्तसेना" जीवित है !

[ यह सब पढ़ते हैं । ]

चारुदत्त—( सुनकर, सहसा उठकर, स्पर्श सुख का अभिनय कर तथा आनन्द से आँखें बन्दकर हर्ष–गद्गद कण्ठ से ) प्रिये वसन्तसेने ! तुम हो ?

वसन्तसेना—मैं वही भाग्यहीना हूँ ।

चारुदत्त—( देखकर हर्षपूर्वक ) क्या "वसन्तसेना" ही है ?

( आनन्द से )—

"मेरे मृत्यु के वश में आ जाने पर "सञ्जीवनी विद्या" की भाँति—आँसुओं से पयोधरों को सींचती हुई कहाँ से आ गई हो !" ॥४१॥

प्रिये वसन्तसेने !

त्वदर्थमेतद्विनिपात्यमानं देहं त्वयैव प्रतिमोचितं मे।
अहो प्रभावः प्रियसंगमस्य मृतोऽपि को नाम पुनर्भ्रियेत ? ॥४२॥

अपि च प्रिये ! पश्य,—

रक्तं तदेव वरवस्त्रमियं च माला,
कान्तागमेन हि वरस्य यथा विभाति।
एते च वध्यपटहध्वनयस्तथैव,
जाता विवाहपटहध्वनिभिः समानाः ॥४३॥

चारुदत्तः पुनराह—त्वदर्थमिति। वसन्तसेने ! ममेदं शरीरं त्वदर्थमेव मृत्युमुखे निपात्यमानमासीत्, त्वयैव च स्वयमागत्य बन्धनान्मोचितम्। धन्योऽयं प्रभावः प्रियसंगमस्यैव वर्तते। अन्यथा लोके मृतोऽपि किं कश्चित् पुनर्भ्रियेत ? जीवितो भवेत् किमु ?

अत्र विरोधाभासः, आक्षेपः, अर्थान्तरन्यासः, इत्येतेऽलङ्कारा निरपेक्षतया स्थिता इति संसृष्टिरेतेषां सर्वेषाम्। उपजातिश्छन्दः ॥ ४२ ॥

अपि च—रक्तमिति। प्रिये वसन्तसेने ! इदं रक्तं वस्त्रं, इयं करवीर-कुसुमानां मम कण्ठे निक्षिप्ता माला, यथा कान्तायाः समागमे वरस्य कण्ठे शोभते, यथा च पटहानां=वाद्यानां ध्वनयो विवाहकाले भवन्ति, तथैव वाद्यध्व-नयोऽपि विवाहकालिकध्वनितुल्याः संवृत्ताः। अतः परं विवाहोत्सवेऽपि नानन्दोऽ-

"मेरा यह शरीर तुम्हारे लिए नष्ट किया जा रहा था और तुमने ही आकर इसे मुक्त कर दिया है। ओह ! यह 'प्रिय-सङ्गम' का ही प्रभाव है। अन्यथा कहीं कोई मर कर भी जीता है ?" ॥४२॥

और भी–प्रिये ! देखो !

"यह वही लाल वस्त्र तथा ( करवीर की ) माला प्रिया–समागम के समय वर के कण्ठ के समान सुशोभित हो रही है तथा ये वध्य वाद्यों की ध्वनि विवाह-कालीन बाजों जैसी हो गई हैं। ( यह 'प्रिय–सङ्गम' का ही माहात्म्य है कि "वध्य" होकर भी 'वर' की समानता कर रहा हूँ। )" ॥४३॥

वसन्तसेना—अदिदक्खिणदाए किं ण्णेदं ववसिदं अज्जेण ? । [ अति-दक्षिणतया किं न्विदं व्यवसितमार्येण ? । ]

चारुदत्तः—प्रिये ! त्वं किल मया हतेति—

**पूर्वानुबद्धवैरेण शत्रुणा प्रभविष्णुना ।**
**नरके पतता तेन मनागस्मि निपातितः ॥४४॥**

वसन्तसेना—( कर्णौ पिधाय ) संतं पावं; तेण म्हि राअसालेण वावादिदा । [ शान्तं पापम् ; तेनास्मि राजश्यालेन व्यापादिता । ]

चारुदत्तः—( भिक्षुं दृष्ट्वा ) अयमपि कः ? ।

वसन्तसेना—तेण अणज्जेण वावादिदा; एदिणा अज्जेण जीवाविदम्हि। [ तेनानार्येण व्यापादिता; एतेनार्येण जीवं प्रापितास्मि । ]

चारुदत्तः—कस्त्वमकारणबन्धुः ? ।

---

नुभूयते । अत्रोपमाऽलङ्कारः । अनुकूलश्च । वसन्ततिलका च्छन्दः ॥ ४३ ॥

"अतिदक्षिणेन = कुशलेनापि भवता किमेवं कृतम् ?" इति प्रश्नं समाधत्ते चारुदत्तः—पूर्वानुबद्धेति । प्रिये ! जन्मान्तरगतवैरप्रसंगवशात् शक्तिशालिना स्वयं नरके निपतता तेन शकारेणाहमपि "मया त्वं हता" इति वदता मनाङ् निपातितोऽस्मि । नाहं स्वयमेव मरणाय सन्नद्धोऽस्मीति भावः ॥ ४४ ॥

---

वसन्तसेना—अत्यन्त उदारता के कारण यह आपने क्या कर डाला ?

चारुदत्त—प्रिये ! "मैंने तुम्हें मार डाला"—

"( इस प्रकार कलङ्क लगाकर ) पूर्वजन्म के वैरी शक्तिशाली शत्रु ( "शकार" ) ने स्वयं नरक में गिरते हुए मुझे भी डाल दिया है ।" ॥४४॥

वसन्तसेना—( कान बन्द कर ) अमङ्गल दूर हो ! मुझे तो उसी 'राज्यश्यालक' ने मारा था ।

चारुदत्त—( 'भिक्षु' को देखकर ) यह कौन है ?

वसन्तसेना—उस 'अनार्य' ( "शकार" ) ने मार डाली तथा इन 'आर्य' ने मुझे बचा लिया । ( ये मेरे रक्षक हैं )

चारुदत्त—अकारण बन्धु आप कौन हैं ?

भिक्षुः—ण पच्चभिजाणादि मं अज्जो ?। अहं शे अज्जश्श चलण-शंवाहचिंतए शंवाहके णाम। जूदिअलेहिं गहिदे एदाए उवाशिकाए अज्जश्श केलके त्ति अलंकालपणणिक्कीदे म्हि। तेण अ जूदणिव्वेदेण शक्कशमणके शंवुत्ते म्हि। एशा वि अज्जा पवहणविपज्जाशेण पुप्फक-लंडकजिण्णुज्जाणं गदा। तेण अ अणज्जेण "ण मं बहु मण्णेशि" त्ति बाहुपाशबलक्कालेण मालिदा, मए दिट्ठा। [ न प्रत्यभिजानाति मामार्यः ?। अहं स आर्यस्य चरणसंवाहचिन्तया संवाहको नाम द्यूतकरैर्गृहीत एतयोपासिक-यार्यस्यात्मीय इत्यलंकारपणनिष्क्रीतोऽस्मि। तेन च द्यूतनिर्वेदेन शाक्यश्रमणकः संवृत्तोऽस्मि। एषाप्यार्या प्रवहणविपर्यासेन पुष्पकरण्डकजीर्णोद्यानं गता। तेन चानार्येण "न मां बहु मन्यसे" इति बाहुपाशबलात्कारेण मारिता, मया दृष्टा। ]

( नेपथ्ये कलकलः )

जयति वृषभकेतुर्दक्षयज्ञस्य हन्ता,
तदनु जयति भेत्ता षण्मुखः क्रौञ्चशत्रुः।

---

नेपथ्ये कलकलो भवति—जयतीति। दक्षयज्ञविनाशकारी भगवान् शङ्करो जयति, अनन्तरञ्च सर्वशत्रुभेदकः क्रौञ्चदारकः षडाननो जयति, तदनु च

---

भिक्षु—आप मुझे नहीं पहिचानते ? मैं आपके चरण दबाने वाला वही "संवाहक" नामक सेवक हूँ। मुझे द्यूतकरों के द्वारा पकड़ लेने पर इन बुद्धोपासिका 'आर्या' ने अपने अलङ्कार देकर खरीद लिया था ( छुड़ा दिया था। ) मैं उस जूए से उदास होकर "शाक्य श्रमणक" हो गया। ( आज ) ये आर्या रथ—परिवर्तन हो जाने से "पुष्पकरण्डक जीर्णोद्यान" में चली गईं थीं। वहाँ उस दुष्ट के द्वारा "यह मुझको नहीं चाहती" इस बात से रुष्ट होकर बाहुपाश से बलात्कार पूर्वक मारी हुईं इन्हें मैंने देखा।

[ नेपथ्य में कोलाहल होता है। ]

"दक्ष—यज्ञ के विनाशकर्ता भगवान् "शङ्कर" की जय हो। तदनन्तर क्रौञ्च-शत्रु भगवान् " कार्तिकेय" जी की जय हो! पुनः धवल "कैलाश"—रूपी

तदनु जयति कृत्स्नां शुभ्रकैलासकेतुं,
विनिहतवरवैरी चार्यको गां विशालाम् ॥४५॥

( प्रविश्य, सहसा )

शर्विलकः—

हत्वा तं कुनृपमहं हि पालकं भो-
स्तद्राज्ये द्रुतमभिषिच्य चार्यकं तम् ।
तस्याज्ञां शिरसि निधाय शेषभूतां,
मोक्ष्येऽहं व्यसनगतं च चारुदत्तम् ॥४६॥

---

शुभ्रकैलास एव केतुः = पताका यस्यास्तां विशालां कृत्स्नां = सम्पूर्णां गां = धरित्रीं विनिहतः = मारितः वरः = बलवान् शत्रुर्येन स आर्यकनामा गोपालदारको जयति । आर्यकः सकलां पृथ्वीं जयति, इति वाक्यार्थः पर्यवसन्नः । एतेन पालकं नृपं हत्वा आर्यको विजयते, इति ध्वन्यते, इति भावः ।

अत्र कैलासे केतोरारोपाद्रूपकालङ्कारः । मालिनी च च्छन्दः ॥ ४५ ॥

शर्विलकः प्रविश्य कथयति—हत्वेति । अहं तमविवेकिनं कुत्सितं राजानं पालकं, निहत्य, तत्पदे च सत्वरं "आर्यकम्" अभिषिच्य, इदानीं शिष्टां तस्याज्ञां शिरसि कृत्वा विपद्ग्रस्तमार्यचारुदत्तं मोक्ष्ये । आर्यचारुदत्त-मोक्षादतिरिक्तं किञ्चित् कार्यं नावशिष्यते कर्तुमिति भावः । अत्र "मोचयिष्यामि" "मोचयिष्ये" वा इत्येव युक्तं, न तु मोक्ष्ये" इति ध्येयम् । प्रहर्षिणी च्छन्दः ॥ ४६ ॥

---

पताका वाली विशाल पृथ्वी के विजेता तथा शत्रुओं के हन्ता गोपाल-पुत्र "आर्यक" की जय हो ! ॥ ४५ ॥

[ प्रवेश कर सहसा ]

शर्विलक—"मैं उस दुष्ट राजा "पालक" को मारकर तथा उसके स्थान पर "आर्यक" का अभिषेक कर अब उसकी आज्ञा को शिरोधार्य करके विपद्ग्रस्त "आर्य चारुदत्त" को छुड़ाता हूँ ।" ॥४६॥

हत्वा रिपुं तं बलमन्त्रहीनं पौरान् समाश्वास्य पुनः प्रकर्षात् ।
प्राप्तं समग्रं वसुधाधिराज्यं राज्यं बलारेरिव शत्रुराज्यम् ॥४७॥

( अग्रतो निरूप्य ) भवतु; अत्र तेन भवितव्यम् , यत्रायं जनपदसमवायः । अपि नामायमारम्भः क्षितिपतेरार्यकस्यार्यचारुदत्तस्य जीवितेन सफलः स्यात् ? । ( त्वरिततरमुपसृत्य ) अपयात जाल्माः ! । ( दृष्ट्वा, सहर्षम् ) अपि ध्रियते चारुदत्तः सह वसन्तसेनया ? । संपूर्णाः खल्वस्मत्स्वामिनो मनोरथाः ।

दिष्ट्या भो व्यसनमहार्णवादपारा-

---

हत्वा इति । बलेन = सेनया, मन्त्रशक्त्या च हीनं तं नृपं हत्वा, प्रकर्षात् हेतोः पौरांश्च समाश्वास्य, सम्पूर्णमेव पृथिव्या राज्यमधिगतम् , यथा इन्द्रेण स्वकीयशत्रून् व्यापाद्य सर्वं राज्यं प्राप्तमासीत् । इदानीं सर्वोऽपि प्रजावर्गः सुखी भविष्यतीत्याशयः ।

यत्रायं जनपदानां = जनपदस्थानां जनानां समवायः = समूहः । तत्रैव चारुदत्तः स्यादिति मम विचारः । किमिदं कार्यं श्रीचारुदत्तस्य जीवितेन सफलं भविष्यति ? इति विचारयन् वसन्तसेनया सहितं चारुदत्तमवलोक्य सहर्षमाह— "सम्पूर्णा नोऽस्माकं मनोरथाः" इति । इन्द्रवज्रा छन्दः ॥ ४७ ॥

आर्यचारुदत्तं वसन्तसेनया सहितं निरीक्ष्याद्य मम मनसि महान् प्रमोदः

---

"सेना तथा मन्त्रशक्ति रहित उस राजा को मार और नागरिकों को आश्वासन देकर बलपूर्वक हमने देवराज "इन्द्र" की भाँति—शत्रुओं का समस्त पृथ्वी राज्य प्राप्त कर लिया है ।" ॥४७॥

( आगे देखकर ) अस्तु; जहाँ जहाँ यह लोगों की भीड़ है वे यहाँ होंगे ! क्या "राजा आर्यक" का यह कार्य "आर्य चारुदत्त" के जीवन से सफल हो सकता है ? ( शीघ्र समीप जाकर ) अरे दुष्टो ! हटो ! ( देखकर हर्ष से ) क्या "आर्य चारुदत्त" "वसन्तसेना" के साथ जीवित हैं ? हमारे स्वामी के मनोरथ सफल हो गये !

दुत्तीर्णं गुणधृतया सुशीलवत्या ।
नावेव प्रियतमया चिरान्निरीक्ष्ये,
ज्योत्स्नाढ्यं शशिनमिवोपरागमुक्तम् ॥४८॥

तत्कृतमहापातकः कथमिवैनमुपसर्पामि ?। ( अथवा ) सर्वत्रार्जवं शोभते। ( प्रकाशमुपसृत्य बद्धाञ्जलिः ) आर्यचारुदत्त !

चारुदत्तः—ननु को भवान् ?।

शर्विलकः—

---

सम्भविष्यतीति शर्विलकः कथयति—दिष्ट्येति । यथा समुद्रे निमज्जन् कश्चिद् गुणवत्या रज्जुयुक्तया नौकयोत्तार्यते, तथैवाद्य सौभाग्येन विपत्तिसागरे निमज्जन् श्रीचारुदत्तो गुणशीलया सुशीलया वसन्तसेनयैवोत्तार्य सुसुखं प्राप्नोति । यथा वा उपरागाद् = ग्रहणान्निर्मुक्तश्चन्द्रः स्वचन्द्रिकया विराजमानः प्रेक्षकाणाञ्चक्षुषोः प्रीतिकरो भवति, तथैवैनं प्रिययोपेतमार्यचारुदत्तं निरीक्ष्याहमपि प्रसीदामि ! इत्याशयः । अत्र श्लेषः, उपमा च । प्रहर्षिणी च्छन्दः ॥ ४८ ॥

"कृतापराधोऽप्यहं ऋजुतया तं निरीक्षिष्ये" इति विचार्य स्वपरिचयं ददाति

---

"जिस प्रकार समुद्र में डूबते हुए मनुष्य को गुण ( रस्सी ) वाली नौका बचा लेती है उसी प्रकार सौभाग्य से विपत्सागर से दया-दाक्षिण्यादि गुणों से युक्त एवं सुशीला नौका के समान प्रियतमा के द्वारा बचाये गये तथा ग्रहण से मुक्त चन्द्रिका-सहित चन्द्र के समान "वसन्तसेना—" सहित "आर्यचारुदत्त" को मैं देख रहा हूँ। ( जिस प्रकार कौमुदीसहित कलाधर को देखने से प्रसन्नता होती है उसी प्रकार आज "चन्द्र-चन्द्रिका" जैसे इस अभिराम युगल को देखकर मैं परम प्रसन्न हो रहा हूँ। )" ॥ ४८ ॥

तो ( इनके घर चोरी के ) महान् पाप का कर्ता मैं इनके समीप कैसे जाऊँ ! अथवा, सरलता ( सीधापन ) सर्वत्र सुशोभित होता है। ( प्रकाश में हाथ जोड़े हुए समीप जाकर ) आर्य चारुदत्त !

चारुदत्त—आप कौन हैं ?

येन ते भवनं भित्त्वा न्यासापहरणं कृतम् ।
सोऽहं कृतमहापापस्त्वामेव शरणं गतः ॥४९॥

चारुदत्तः—सखे ! मैवम्; त्वयासौ प्रणयः कृतः । ( इति कण्ठे गृह्णाति )

शर्विलकः—अन्यच्च—

आर्यकेणार्यवृत्तेन कुलं मानं च रक्षता ।
पशुवद्यज्ञवाटस्थो दुरात्मा पालको हतः ॥५०॥

चारुदत्तः—किम् ? ।

शर्विलकः—

त्वद्यानं यः समारुह्य गतस्त्वां शरणं पुरा ।

---

बद्धाञ्जलिः सन् शर्विलकः—येन ते-इति । आर्यचारुदत्त ! येन पापेन ( मया ) भवतो भवनं भित्त्वा न्यासरूपेण धृतस्य सुवर्णभाण्डस्यापहरणं कृतम्, सोऽहं कृतमहापातकोऽपीदानीं भवन्तं शरणं प्रपन्नोऽस्मि । सुवर्णाय हरणात्मकं चौर्यं ब्राह्मणस्य महापातकजनकमिति तथोक्तमिति भावः ॥ ४९ ॥

आर्यचारुदत्तेन "सखे ! मैवं मन्तव्यम्, त्वया तु महती प्रीतिः कृता" इति सप्रेम कण्ठे समालिङ्गितः शर्विलकः पुनर्वदति—आर्यकेण–इति । कुल-मान-रक्षकेण सद्वृत्तेनार्यकेण यज्ञस्थानस्थितो राजा पालकोऽपि पशुवद्धतः ॥ ५० ॥

---

शर्विलक—"जिसने आपके घर सेंध लगाकर धरोहर का अपहरण कर लिया था मैं वही महापापी आपकी ही शरण में हूँ ।" ॥ ४९ ॥

चारुदत्त—मित्र ! ऐसा मत कहो । तुमने तो यह बड़ा स्नेह किया है ।

[ ऐसा कहकर गले लगा लेता है । ]

शर्विलक—और भी—

"सच्चरित्र "आर्यक" ने अपने कुल तथा सम्मान की रक्षा करते हुए यज्ञ-स्थान में बैठे हुए "पालक" को पशु की भाँति मार डाला है ।" ॥ ५० ॥

चारुदत्त—क्या !

शर्विलक—"जो आपके रथ में बैठकर आपकी शरण में गया था उसी

**पशुवद्वितते यज्ञे हतस्तेनाद्य पालकः ॥५१॥**

चारुदत्तः—शर्विलक ! योऽसौ पालकेन घोषादानीय निष्कारणं कूटागारे बद्ध आर्यकनामा त्वया मोचितः ? ।

शर्विलकः—यथाह तत्रभवान् ।

चारुदत्तः—प्रियं नः प्रियम् ।

शर्विलकः—प्रतिष्ठितमात्रेण तव सुहृदार्यकेणोज्जयिन्यां वेणातटे कुशावत्यां राज्यमतिसृष्टम् । तत्प्रतिमान्यतां प्रथमः सुहृत्प्रणयः । (परिवृत्य) अरे रे, आनीयतामयं पापो राष्ट्रियशठः ।

---

एतस्याभिप्रायमविदित्वा "किमेतदिति" चारुदत्तप्रश्नानन्तरं स्वाशयं स्पष्टयति शर्विलकः—त्वद्यानमिति । यो यानमारुह्य भवदीयं, भवन्तं पुरा शरणमुपगतः तेन यज्ञे पशुवद्राजा पालको हतः, इति मम कथनस्याशयः ।

अत्र विवेकहीनो राजा पालकोऽपि विनाशितो यो भवन्तं हन्तुं समाज्ञसवानिति भावः ॥ ५१ ॥

शर्विलकः पुनः स्वाभिप्रायं प्रकटयति—प्रतिष्ठितेति । आर्यचारुदत्त ! राज्यासने प्रतिष्ठितमात्रेणैव तेन भवतः कृते "वेणा" नद्यास्तटे राज्यं दत्तम्, ततश्च स्वीकृत्य तस्ये प्रीत्यतिशयः परिपालनीयः, प्रथमप्रणयरूपेणेति निवेदयामि ।

---

("आर्यक") ने आज विशाल यज्ञ-स्थान में "पालक" को मार दिया है ।" ॥५१॥

चारुदत्त—शर्विलक ! जिसे "पालक" ने 'घोष' से लाकर बाँध दिया था क्या उस "आर्यक" को तुमने मुक्त कर दिया ?

शर्विलक—जी हाँ ।

चारुदत्त—हमारे लिए प्रिय है ।

शर्विलक—आपके मित्र "आर्यक" ने सिंहासन पर बैठते ही "वेणा" के तीर पर "कुशावती" का राज्य आपको दे दिया है । अतः प्रियमित्र का प्रथम प्रेम-( भरा आग्रह ) स्वीकार कीजिये । ( घूमकर ) अरे ! उस नीच, पापी राजश्यालक को लाओ !

( नेपथ्ये )

यथाज्ञापयति शर्विलकः ।

शर्विलकः—आर्य नन्वयमार्यको राजा विज्ञापयति—'इदं मया युष्मद्गुणोपार्जितं राज्यम्; तदुपयुज्यताम्' ।

चारुदत्तः—अस्मद्गुणोपार्जितं राज्यम् ? ।

( नेपथ्ये )

अरे रे राष्ट्रियश्यालक ! एह्येहि । स्वस्याविनयस्य फलमनुभव ।

( ततः प्रविशति पुरुषैरधिष्ठितः पश्चाद् बद्धबाहुः शकारः )

शकारः—हीमादिके,

**एव्वं दूलमदिक्कंते उद्दामे विअ गद्दहे ।**

---

पुनरपि शर्विलको ब्रूते—आर्येति ! ननु आर्यको राजा कथयति—इदं राज्यं भवतो गुणैरेवाधिगतम्, अतः यथेच्छमुपयुज्यताम् ?

चारुदत्तः सौजन्येन पृच्छति—अस्मदिति । किं मम गुणैः प्राप्तं राज्यम् ? नैवम् ।

शकारः स्वदशां वर्णयति—एव्वमिति । अहो ! सुदूरं गतो बन्धन रहितो गर्दभ इवाहं समानीतोऽस्मि, किञ्च–प्रबलः बुक्कनेन सर्वजनत्रासकारी श्वेव बद्धोऽस्मि,

---

[ नेपथ्य में ]

जैसा "शर्विलक" का आदेश !

शर्विलक—आर्य ! यह राजा "आर्यक" निवेदन करता है कि—"यह आपके गुणों के द्वारा उपार्जित राज्य है । अतः उपयोग करिये ।"

चारुदत्त—क्या मेरे गुणों से उपार्जित राज्य है ?

[ नेपथ्य में ]

अरे ! राजश्यालक ! इधर आ ! इधर आ ! अपनी उद्दण्डता का फल भोग !

[तदनन्तर पुरुषों द्वारा शासित पीछे को हाथ बँधा हुआ "शकार" प्रवेश करता है]

शकार—"बन्धन तोड़कर दूर भागे हुए उद्धत गधे की भाँति मुझे ले

आणीदे खु हगे बद्धे हुडे अण्णे व्व दुक्कले ॥५२॥

( दिशोऽवलोक्य ) शमंतदो उवट्ठिदे एशे लश्टिअबंधे । ता कं दाणिं अशलणे शलणं वजामि ? । ( विचिन्त्य ) भोदु, तं ज्जेव अब्भुववण्णशलणवच्छलं गच्छामि । ( इत्युपसृत्य ) अज्जचालुदत्त ! पलित्ताआहि पलित्ताआहि । [ आश्चर्यम्,

एवं दूरमतिक्रान्त उद्दाम इव गर्दभः ।
आनीतः खल्वहं बद्धः कुक्कुरोऽन्य इव दुष्करः ॥

समन्तत उपस्थित एष राष्ट्रियबन्धः । तत्किमिदानीमशरणः शरणं व्रजामि ? । भवतु, तमेवाभ्युपपन्नशरणवत्सलं गच्छामि । आर्यचारुदत्त ! परित्रायस्व परित्रायस्व । ]

( इति पादयोः पतति )

( नेपथ्ये )

अज्जचालुदत्त ! मुंच मुंच, वावादेम्ह एदं । [ आर्यचारुदत्त ! मुञ्च मुञ्च, व्यापादयामैतम् । ]

शकारः—( चारुदत्तं प्रति ) भो अशलणशलणे ! पलित्ताआहि । [ भो अशरणशरण ! परित्रायस्व । ]

---

किमिदानीं मया विधेयम् ? सर्वतो मम बन्धने समुपस्थिते स एव शरणागतवत्सलश्चारुदत्तो मम रक्षां कर्तुं समर्थः, अतस्तमेव शरणं याचे ।

अत्रोपमाऽलङ्कारः । पथ्यावक्त्रं छन्दः ॥ ५२ ॥

---

आया तथा प्रबल कुत्ते के समान बाँध दिया गया हूँ ।" ॥ ५२ ॥

( चारों ओर देखकर ) मैं चारों ओर से घिर गया हूँ तो अब मैं अशरण किसकी शरण में जाऊँ ? ( सोचकर ) उसी दयार्द्रचेता ( "चारुदत्त" ) के पास जाता हूँ । समीप जाकर ) आर्य चारुदत्त ! रक्षा करो ! रक्षा करो !

[ पैरों में गिर पड़ता है । ]

[ नेपथ्य में ]

आर्य चारुदत्त ! छोड़ दो ! छोड़ दो ! हम इसको मारते हैं

शकार—( "चारुदत्त" से ) अशरणशरण ! रक्षा करो

चारुदत्तः—( सानुकम्पम् ) अहह, अभयमभयं शरणागतस्य ।

शर्विलकः—( सावेगम् ) आः, अपनीयतामयं चारुदत्तपार्श्वात् । ( चारुदत्तं प्रति ) ननूच्यतां किमस्य पापस्यानुष्ठीयतामिति ।

**आकर्षन्तु सुबद्ध्वैनं ? श्वभिः संखाद्यतामथ ?**
**शूले वा तिष्ठतामेष ? पाट्यतां क्रकचेन वा ? ॥५३॥**

चारुदत्तः—किमहं यद्ब्रवीमि तत्क्रियते ? ।

शर्विलकः—कोऽत्र संदेहः ? ।

शकारः—भश्टालआ चालुदत्त ! शलणागदे म्हि । ता पलित्ताआहि पलित्ताआहि । जं तुए शलिशं तं कलेहि; पुणो ण ईदिशं कलिश्शं । [ भट्टारक चारुदत्त ! शरणागतोऽस्मि । तत्परित्रायस्व परित्रायस्व । यत्तव सदृशं

---

चारुदत्तं प्रति कथयति शर्विलकः—आकर्षन्तु-इति । आर्यचारुदत्त ! महापातकपुञ्जस्वरूपमेनं शकारं किमु एतस्य पादयो रज्जुं बद्ध्वा रक्षिणः समाकर्षन्तु ? अथवा—श्वान एवैनं भक्षयन्तु ? किंवा—अयं शूले समारोप्यताम् ? अथवा—क्रकचेन = करपत्रेण ( "आरा" इति हिन्दीभाषायां प्रसिद्धेन ) काष्ठवत् पाट्यताम् = द्विधा क्रियताम्, रक्षिभिरिति शेषः, सत्वरमाज्ञाप्रदानेन वयमनुग्राह्याः, न चायं भवता परित्रातव्यः । अत्र "तिष्ठताम्" इति व्याकरणविरुद्धत्वाच्च्युतसंस्कृतिदोषः । "स्थीयताम्", "दीयताम्", इति वा पाठे न दोषः । पथ्यावक्त्रं च्छन्दः ॥ ५३ ॥

---

चारुदत्त—( दयापूर्वक ) अहह ! शरणागत को अभय है ।

शर्विलक—(आवेग से) अरे ! इसे "चारुदत्त" के पास से अलग कर दो !

"इसको बाँधकर खींचो, कुत्तों से नुचवाओ अथवा शूली पर चढ़ा दो, या आरे से चीर डालो !" ॥ ५३ ॥

चारुदत्त—क्या जो मैं कहूँगा वह किया जायगा ?

शर्विलक—इसमें क्या सन्देह है ?

शकार—पूज्य चारुदत्त ! शरणागत हूँ । अतः रक्षा करो ! रक्षा करो !

तत्कुरु; पुनर्नेदृशं करिष्यामि । ]

( नेपथ्ये )

पौराः ! वावादेध, किंणिमित्तं पादकी जीवावीअदि ? । [ पौराः ! व्यापादयत, किंनिमित्तं पातकी जीव्यते ? । ]

( वसन्तसेना वध्यमालां चारुदत्तस्य कण्ठादपनीय शकारस्योपरि क्षिपति )

शकारः—गब्भदाशीधीए ! पशीद पशीद । ण उण मालइश्शं । ता पलित्ताआहि । [ गर्भदासीपुत्रि ! प्रसीद प्रसीद । न पुनर्मारयिष्यामि । तत्परित्रायस्व । ]

शर्विलकः—अरे रे, अपनयत । आर्यचारुदत्त ! आज्ञाप्यताम्—किमस्य पापस्यानुष्ठीयताम् ? ।

चारुदत्तः—किमहं यद्ब्रवीमि तत्क्रियते ? ।

शर्विलकः—कोऽत्र संदेहः ।

चारुदत्तः—सत्यम् ? ।

---

जो तुम्हें उचित है वही करो ! फिर ऐसा कार्य न करूँगा ।

[ नेपथ्य में ]

नागरिको ! इसे मार डालो ! यह पापी क्यों जी रहा है ?

[ "वसन्तसेना" वध्यमाला को "चारुदत्त" के गले से उतारकर "शकार" के ऊपर डाल देती है । ]

शकार—जन्मदासीपुत्रि ! प्रसन्न हो ! प्रसन्न हो ! अब न मारूँगा अतः बचा दे ।

शर्विलक—अरे ! हटाओ ! आर्य चारुदत्त ! आज्ञा दीजिये कि इस पापी का क्या किया जाय ?

चारुदत्त—क्या जो मैं कहूँगा वह किया जायगा ?

शर्विलक—( अवश्य ! ) इसमें क्या सन्देह है ?

चारुदत्त—सचमुच ?

शर्विलकः—सत्यम् ।
चारुदत्तः—यद्येवं शीघ्रमयम्—
शर्विलकः—किं हन्यताम् ? ।
चारुदत्तः—नहि नहि, मुच्यताम् ।
शर्विलकः—किमर्थम् ? ।
चारुदत्तः—

**शत्रुः कृतापराधः शरणमुपेत्य पादयोः पतितः ।**
**शस्त्रेण न हन्तव्यः,**

शर्विलकः—एवम् , तर्हि श्वभिः खाद्यताम् ।
चारुदत्तः—नहि,

**उपकारहतस्तु कर्तव्यः ॥५४॥**

---

शकारं बन्धनान्मोचयितुमादिशति चारुदत्तः—शत्रुरिति । प्रियशर्विलक ! अनेन शकारेण महानपराधः कृतो यद्यपि तथाप्ययं मम पादयोर्निपतितः, शरणं याचते, अतः शस्त्रेण नैव हन्तव्यः । [ एवं तर्हि श्वभिः खाद्यताम् , इति शर्विलकस्य प्रश्नं प्रति समाधानमाह— ] उपकारेण हतः कर्तव्यः । पापिनोऽस्य बधस्तु कर्तव्य

---

शर्विलक—सचमुच ।
चारुदत्त—यदि ऐसा है तो शीघ्र ही इसे—
शर्विलक—क्या मार दिया जाय ?
चारुदत्त—नहीं, नहीं, छोड़ दिया जाय ।
शर्विलक—किसलिए ?
चारुदत्त—"अपराधकर्ता शत्रु शरण में आकर पैरों पर गिर पड़ा है अतः इसे शस्त्र से नहीं मारना चाहिए"—
शर्विलक—ऐसा है । तो क्या कुत्तों से नुचवाया जाय ?
चारुदत्त—नहीं ।
"उसे उपकार से मारना चाहिए ( अर्थात् शत्रु को शस्त्र से नहीं मारना

शर्विलकः—अहो, आश्चर्य्यम्, किं करोमि ?। वदत्वार्यः।

चारुदत्तः—तन्मुच्यताम् ।

शर्विलकः—मुक्तो भवतु ।

शकारः—ह्रीमादिके, पच्चुज्जीविदे म्हि । [आश्चर्यम्, प्रत्युज्जीवितोऽस्मि ।]

(इति पुरुषैः सह निष्क्रान्तः)

(नेपथ्ये कलकलः)

(पुनर्नेपथ्ये)

---

एव, परत्र शस्त्रेण, प्रत्युत उपकार-शस्त्रेणेति भावः। अयं परित्यज्यतामिति सारः। आर्या च्छन्दः ॥५४॥

---

चाहिए किन्तु उपकार-भार से उसे दबाना चाहिए।)" ❀ ॥५४॥

शर्विलक—ओह आश्चर्य है ! क्या करूँ ? आप आज्ञा दें।

चारुदत्त—अतः इसे छोड़ दीजिये।

शर्विलक—छोड़ दो।

शकार—आश्चर्य है ! मैं तो पुनरुज्जीवित हो गया हूँ।

[पुरुषों के साथ चला जाता है।] †

[नेपथ्य में कोलाहल होता है।]

[पुनः नेपथ्य में]

---

❀ "आर्य चारुदत्त" की उदारता का यह उत्कृष्ट उदाहरण है कि वे अपने अहितकर्ता "शकार" को भी क्षमा कर देते हैं उनका यह विचार कि "शत्रु को उपकार से मारना चाहिए" कितना अनूठा है ! उपकार से दबा हुआ मनुष्य सर्वदा कृतज्ञता-पाश में बँधा रहता है। यह सैकड़ों दण्डों का एक दण्ड है। इस रीति से अपराधों का-'सुधार-सम्मिश्रित-दण्ड' मिलने से कल्याण हो जाता है। "उपकारहतस्तु कर्तव्यः" सर्वथा स्मरणीय अथच अनुकरणीय है।"

† "स्वभावो दुरतिक्रमः" के अनुसार "शकार" अपने जीवनदाता को प्रणाम भी नहीं करता। कृतघ्नता उसके स्वभाव का भूषण है ! कृतज्ञता उससे कोसों दूर है। कृतघ्नता के कारण वह "उदार चारुदत्त" का उपकार नहीं मानता है।"

एसा अज्जचालुदत्तस्स वहुआ अज्जा धूदा पदे वसणंचले विलग्गंतं दारअं आक्खिवंती बाप्फभरिदणअणेहिं जणेहिं णिवारिज्जमाणा पज्जलिदे पावए पविसदि । [ एषार्यचारुदत्तस्य वधूरार्या धूता पदे वसनाञ्चले विलगन्तं दारकमाक्षिपन्ती बाष्पभरितनयनैर्जनैर्निवार्यमाणा प्रज्वलिते पावके प्रविशति । ]

शर्विलकः—( आकर्ण्य, नेपथ्याभिमुखमवलोक्य ) कथं चन्दनकः ?। चन्दनक ! किमेतत् ? ।

चन्दनकः—( प्रविश्य ) किं ण पेक्खदि अज्जो ? । महाराअप्पासादं दक्खिणेण महंतो जणसंमद्दो वट्टदि । ( 'एसा' इत्यादि पुनः पठति ) कधिदं अ मए तीए, जधा—'अज्जे ! मा साहसं करेहि । जीवदि अज्जचारुदत्तो' त्ति । परंतु दुक्खवावुडदाए को सुणेदि, को पत्तिआएदि ? । [ किं न पश्यत्यार्यः । महाराजप्रासादं दक्षिणेन महान् जनसंमर्दो वर्तते । कथितं च मया तस्यै, यथा—'आर्ये ! मा साहसं कुरुष्व । जीवत्यार्यचारुदत्तः' इति । परंतु दुःखव्यापृततया कः शृणोति, कः प्रत्ययते ? । ]

---

महाराजेति । दक्षिणेन ( दक्षिणस्यां दिशि "एनपा द्वितीया" इति द्वितीया, "दक्षिणेन" इत्यत्र च तृतीया विभक्तिर्नास्ति, अपि तु "एनप्" प्रत्ययान्तमिदं पदम् ! महाराजभवनस्य दक्षिणदिशीत्यर्थः ।

---

"यह "आर्य चारुदत्त" की धर्मपत्नी "आर्या धूता" पैरों में घिसटते तथा आँचल पकड़ते हुए बालक को झटकती हुई आँखों में आँसू भरे हुए परिजनों के द्वारा रोकने पर भी अग्नि में प्रवेश कर रही हैं ।"

शर्विलक—( सुनकर नेपथ्य की ओर देखते हुए ) क्या "चन्दनक" है ? चन्दनक ! यह क्या है ?

चन्दनक—( प्रवेशकर ) क्या आप नहीं देख रहे हैं कि महाराज के भवन की दक्षिण दिशा में कितनी भीड़ हो रही है ? ( "यह "आर्य चारुदत्त" की…" आदि उपर्युक्त वाक्य पुनः पढ़ता है । ) मैंने उनसे कहा है कि— "आर्य चारुदत्त" जीवित हैं ।" परन्तु दुःखावेग में कौन सुनता है ? और कौन विश्वास करता है ?

चारुदत्तः—( सोद्वेगम् ) हा प्रिये ! जीवत्यपि मयि किमेतद्व्यवसितम् ? । ( ऊर्ध्वमवलोक्य दीर्घं निःश्वस्य च )

**न महीतलस्थितिसहानि भवच्चरितानि चारुचरिते यदपि ।**
**उचितं तथापि परलोकसुखं न पतिव्रते ! तव विहाय पतिम् ॥ ५५ ॥**

( इति मोहमुपगतः )

शर्विलकः—अहो प्रमादः ।

**त्वरया सर्पणं तत्र मोहमार्योऽत्र चागतः ।**

---

मयि जीवत्यपि मम पतिव्रता पत्नी चितारोहणं करोति ! सर्वथाऽनुचितमिदमित्याह चारुदत्तः—न महीतलेति । प्रिये ! यद्यपि तव चरितानि भूतले स्थातुं न योग्यानि, भूतले एवंविधा त्वादृशी पतिव्रता कथं स्थितिं कर्तुमर्हतीत्याशयः ! तथापि, मामिह विहाय एकाकिन्यास्तव स्वर्गसुखोपभोगोऽपि निन्दनीय एवेति, न गन्तव्यमिति भावः ।

पतिव्रता-स्वरूपञ्च यथा—

"आर्तार्ते मुदिते हृष्टा, प्रोषिते मलिना कृशा ।
मृते म्रियेत या पत्यौ, सा स्त्री ज्ञेया पतिव्रता ॥" इति ।

अत्र काव्यलिङ्गालङ्कारः । प्रमिताक्षराख्यं च छन्दः । तल्लक्षणं यथा—"प्रमिताक्षरा सजससैरुदिता" इति ॥५५॥

मोहमुपगते चारुदत्ते किंकर्तव्यविमूढः शर्विलकः प्राह—त्वरयेति । अहो !

---

चारुदत्त—( ससम्भ्रम ) हा प्रिये ! मेरे जीते हुए ही तुमने यह क्या सोच लिया है ! ( आकाश की ओर देखकर तथा लम्बा श्वास खींचकर )

"ऐ पवित्रचरित्रे ! यद्यपि तुम्हारे आचरण मर्त्यलोक के योग्य नहीं हैं तथापि पतिव्रते ! पति को छोड़कर एकाकी स्वर्ग-सुख का अनुभव करना तुम्हारे लिए उचित नहीं है ।" ॥५५॥　　[ मूर्छित हो जाता है । ]

शर्विलक—ओह ! असावधानता !

"हमको ( "धूता" को बचाने के लिए ) अत्यन्त शीघ्रतापूर्वक भागना

हा धिक् प्रयत्नवैफल्यं दृश्यते सर्वतोमुखम् ॥५६॥

वसन्तसेना—समस्ससिदु अज्जो । तत्त गदुअ जीवावेदु अज्जां; अण्णघा अधीरत्तणेण अणत्थो संभावीअदि । [ समाश्वसित्वार्यः । तत्र गत्वा जीवयत्वार्याम् ; अन्यथाऽधीरत्वेनानर्थः संभाव्यते । ]

चारुदत्तः—( समाश्वस्य, सहसोत्थाय च ) हा प्रिये ! कासि ? । देहि मे प्रतिवचनम् ।

चन्दनकः—इदो इदो अज्जो । [ इत इत आर्यः । ]

( इति सर्वे परिक्रामन्ति )

( ततः प्रविशति यथानिर्दिष्टा धूता चेलाञ्चलमाकर्षन् विदूषकेणानुगम्यमानो

---

महान् प्रमादः सञ्जातः । यत आर्या धूता चितामारोढुं त्वरते, अस्माभिश्च तस्याः संरक्षणार्थं परया त्वरया तत्र सर्पणं=धावनं कर्तव्यमासीत्, परमयं महानुभावश्चारुदत्तोऽत्र मोहमुपगतः ! एनं परित्यज्य गमनमपि सर्वथा हानिकरमेवेति मन्ये, विधिविपरीततया सर्वोऽप्यस्माकं प्रयत्नो विफल एव जातः । किं मया कार्यम् ! आर्ये चारुदत्ते विपन्ने, धूतादेव्यां वा विपन्नायामुपकारभारनियन्त्रितानामार्यकप्रभृतीनामस्माकं सर्वेषां जीवनं निरर्थकमेव भविष्यतीति "धिक्" पदेन द्योत्यते ॥ ५६ ॥

---

उचित था परन्तु यहाँ "आर्य चारुदत्त" मूर्छित हो गये हैं । ( अतः वहाँ नहीं जाया जा सकता ) इसलिए हमारा प्रयत्न तो चारों ओर से विफल होता ही दिखलाई पड़ रहा है ।" ॥५६॥

वसन्तसेना—आप धैर्य धारण करें । वहाँ जाकर 'आर्या' को जीवित करें । अन्यथा अधीरता से अनर्थ की सम्भावना है ।

चारुदत्त—( धैर्य धारण कर तथा सहसा उठकर ) हा प्रिये ! कहाँ हो ! मुझे उत्तर दो !

चन्दनक—आर्य ! इधर से आइये ! [ सब घूमते हैं । ]

[ तदनन्तर यथोक्त "धूता" आँचल पकड़े हुए "विदूषक" से अनुगत

रोहसेनो रदनिका च )

धूता—( सास्रम् ) जाद ! मुंचेहि मं । मा विग्घं करेहि । भीआमि अज्जउत्तस्स अमंगलाकण्णणदो । [ जात ! मुञ्च माम् । मा विघ्नं कुरुष्व । बिभेम्यार्यपुत्रस्यामङ्गलाकर्णनात् । ] ( इत्युत्थायाञ्चलमाकृष्य, पावकाभिमुखं परिक्रामति )

रोहसेनः—माद अज्जए ! पडिवालेहि मं । तुए विणा ण सक्कुणोमि जीविदं धारेदुं । [ मातरार्ये ! प्रतिपालय माम् । त्वया विना न शक्नोमि जीवितं धर्तुम् । ] ( इति त्वरितमुपसृत्य, पुनरञ्चलं गृह्णाति )

विदूषकः—भोदीए दाव बम्हणीए भिण्णत्तणेण चिदाधिरोहणं पावं उदाहरंति रिसीओ । [ भवत्यास्तावद्ब्राह्मण्या भिन्नत्वेन चिताधिरोहणं पापमुदाहरन्ति ऋषयः । ]

---

विदूषको धूतादेवीं मरणव्यवसायान्निवर्तयितुमाह—भोदीए-इति । अत्रेदं रहस्यम्—पत्यौ मृते एव तस्य शरीरेण पादुकया वा सह ब्राह्मणी चिताधिरोहणं कर्तुं समर्था, इति स्मृतिकाराणामादेशात् प्रथममेव भवत्याश्चितारोहणं शास्त्र-निन्दितत्वात् स्वर्गेऽपि विघ्नमुत्पादयिष्यति, आर्यचारुदत्तो यावज्जीवति, तावदिदं कार्यम् नैवार्यपदोचितमाभातीत्याशयः । भिन्नत्वेन = पृथक्त्वेन, पतिं विनेत्यर्थः, चितायामधिरोहणं ऋषयः पापमिति कथयन्ति, इति भावः ।

---

"रोहसेन" तथा "रदनिका" का प्रवेश होता है । ]

धूता—( आँखों में आँसू भरकर ) वत्स ! मुझे छोड़ो ! विलम्ब मत करो! मैं पतिदेव का अमङ्गल ( मृत्यु का समाचार ) सुनने से डरती हूँ ।

[ उठकर आँचल को छुड़ाकर अग्नि की ओर घूमती है । ]

रोहसेन—माताजी ! मुझे भी साथ ले लो । मैं आपके बिना जीवित नहीं रह सकता ।

[ ऐसा कर पुनः शीघ्रता से आँचल पकड़ लेता है । ]

विदूषक—आर्ये ! पति के बिना ( उसके जीवित रहते हुए एकाकी ही बिना पादुका आदि लिये ) चितारोहण को ऋषिगण पाप बताते हैं ।

धूता--वरं पावाचरणे। ण उण अज्जउत्तस्स अमंगलाकण्णणं। [ वरं पापाचरणम्। न पुनरार्यपुत्रस्यामङ्गलाकर्णनम्। ]

शर्विलकः—( पुरोऽवलोक्य ) आसन्नहुतवहार्या। त्वर्यतां त्वर्यताम्।

( चारुदत्तस्त्वरितं परिक्रामति )

धूता—रअणिए! अवलंब दारअं, जाव अहं समीहिदं करेमि। [ रदनिके! अवलम्बस्व दारकम्। यावदहं समीहितं करोमि। ]

चेटी—( सकरुणम् ) अहं पि पधोवदेसिणि म्हि भट्टिणीए। [ अहमपि पथोपदेशिन्यस्मि भट्टिन्याः। ]

---

विदूषकप्रबोधनां निशम्य धूता ब्रूते—वरमिति। पापाचरणमपि मयेदं कथञ्चित् सोढव्यम्, आर्यपुत्रस्यामङ्गलश्रवणं तु मया कथमपि सोढुं न शक्यते, इत्यर्थः।

शर्विलकः सम्मुखे प्रज्वलितं वह्निं धूताञ्चालोक्यार्यचारुदत्तं त्वरयितुमाह—आसन्नेति। आसन्नः = समीपवर्ती, हुतवहः = वह्निः यस्याः सा तादृशी, आर्या = धूता देवी। अतस्त्वरा कार्या। अत्रानर्थो माभूदिति सत्वरं गत्वा संरक्ष्यतामार्येति भावः।

"बालकमवलम्बस्वेति" धूतावाक्यमाकर्ण्य चेटी ( रदनिका ) प्राह—अहं पि- इति। अहमपि सर्वदा भवत्या मार्गप्रदर्शिका अस्मि, पुनरद्य कोऽयं नवीनो नयो भवत्या स्वीक्रियते? अहमेव मार्गं प्रदर्शयिष्यामि = भवत्याः पूर्वमेवाहं चितारोहणं करिष्यामि, नो चेत् स्वकर्तव्यात् परिभ्रष्टा भूत्वा लोके परलोके च निन्दिता

---

धूता—यह पापाचरण अच्छा है परन्तु 'आर्यपुत्र का अमङ्गल सुनना नहीं।

शर्विलक—( आगे देखकर ) 'आर्या' अग्नि के समीप हैं। अतः ( कहीं अनर्थ न हो जाय ) शीघ्रता कीजिये। शीघ्रता कीजिये।

[ "चारुदत्त" शीघ्रता से घूमता है। ]

धूता—रदनिके! बालक को पकड़ ले। मैं अपना अभिलषित सम्पादित करती हूँ।

चेटी—( रोती हुई ) मैं आपकी वशंवदा मार्गप्रदर्शिका हूँ। ( अतः आज भी आपसे पहिले चितारोहण कर वहाँ का मार्ग दिखलाऊँगी। अतः मुझे लौटाइये मत। )

धूता—(विदूषकमवलोक्य) अज्जो दाव अवलंबेदु। [आर्यस्तावदवलम्बताम्।]

विदूषकः—( सावेगम् ) समीहिदसिद्धिए पउत्तेण बम्हणो अग्गदो कादव्वो। अदो भोदीए अहं अग्गणी होमि। [ समीहितसिद्ध्यै प्रवृत्तेन ब्राह्मणोऽग्रे कर्तव्यः। अतो भवत्या अहमग्रणीर्भवामि।

धूता—कधं पच्चादिट्ठम्हि दुवेहिं? (बालकमालिङ्ग्य ) जाद! तुमं ज्जेव पज्जवट्ठावेहि अत्ताणं अम्हाणं तिलोदअदाणाअ। अदिक्कंते किं मणोरहेहिं?। ( सनिःश्वासम् ) ण खु अज्जउत्तो तुमं पज्जवट्ठाविस्सदि। [ कथं प्रत्यादिष्टास्मि द्वाभ्याम्? जात! त्वमेव पर्यवस्थापयामानमस्माकं तिलोदकदानाय। अतिक्रान्ते किं मनोरथैः?। न खल्वार्यपुत्रस्त्वां पर्यवस्थापयिष्यति। ]

---

भविष्यामीति भावः।

"भवानेवावलम्बतामिति" विदूषकः श्रुत्वोत्तरयति—समीहिदेति। देवि! अभीष्टसिध्यै सर्वथा ब्राह्मणोऽग्रे कर्तव्यः, ततश्चाऽहमेव भवत्या अग्रणीर्भविष्यामि। भवत्याः पूर्वमहमेव म्रिये, इति भावः।

उभयोर्वचनं निशम्याह धूता—कधमिति। कथमाभ्यामुभाभ्यामपि प्रत्यादिष्टा=प्रत्याख्याताऽस्मि? ( "प्रत्यादेशो निराकृतिः" इत्यमरः। )

स्वपुत्रं प्रति कथयति–जादेति। वत्स! आवयोस्तिलोदकदानाय त्वमेवात्मानं पर्यवस्थापय=संरक्ष! समये विनष्टे किं वृथा मम मनोरथैः? समुचिते समये कृतं कर्म सफलं भवति, अतो मम यात्रायां विघ्नं मा कुर्विति भावः। विमुग्धा सती

---

धूता—( "विदूषक" को देखकर ) आप ही पकड़ लीजिये।

विदूषक—अभीष्ट सिद्धि के लिए ब्राह्मण को आगे करना चाहिए अतः मैं आपके आगे चलता हूँ। ( अर्थात्—आपसे पहिले मैं मरूँगा। )

धूता—क्या इन दोनों ने ही निषेध कर दिया? ( बालक को चूमकर ) पुत्र! तुम्हीं हमको तिलाञ्जलि देने के लिए रह जाओ! समय बीत जाने पर मेरे मनोरथों से क्या लाभ? ( पतिदेव का अमङ्गल सुनने के अनन्तर मेरे मनोरथों से क्या लाभ होगा? अतः तुम मेरी यात्रा में विघ्न मत करो। ) ( श्वास खींचकर ) 'आर्यपुत्र' भी तुम्हारी देखभाल नहीं करेंगे।

चारुदत्तः—( आकर्ण्य, सहसोपसृत्य ) अहमेव पर्यवस्थापयामि बालिशम् । ( इति बालकं बाहुभ्यामुत्थाप्य, वक्षसालिङ्गति )

धूता—( विलोक्य ) अम्महे, अज्जउत्तस्स ज्जेव्व सरसंजोओ । ( पुनर्निपुणं निरूप्य, सहर्षम् ) दिट्ठिआ अज्जउत्तो ज्जेव एसो । पिअं मे पिअं । [ आश्चर्यम् , आर्यपुत्रस्यैव स्वरसंयोगः । दिष्ट्यार्यपुत्र एवैषः । प्रियं मे प्रियम् । ]

बालकः—( विलोक्य सहर्षम् ) अम्मो, आवुको मं परिस्सजदि । ( धूतां प्रति ) अज्जए ! वड्ढीअसि । आवुको ज्जेव मं पज्जवट्ठावेदि । [आश्चर्यम् , पिता मां परिष्वजति । आर्ये ! वर्धसे । तात एव मां पर्यवस्थापयति । ] ( इति प्रत्यालिङ्गति )

चारुदत्तः—( धूतां प्रति )

---

पुनरप्याह—न खलु आर्यपुत्रोऽपि त्वां सम्भालयति ? एताभ्यां रदनिका-विदूषकाभ्यां यदि त्वं न रक्षितस्तर्हि ममार्यपुत्रेणापि न रक्षिष्यसे किम् ?

तथा श्रुत्वा चारुदत्तः प्राह—अहमेवेति । एनं बालिशम्=मूर्खं शिशुम्, अहमेव पर्यवस्थापयामि । कोऽन्यो मम पुत्रं रक्षितुं समर्थः, इति भावः ?

---

चारुदत्त—( सुनकर सहसा समीप जाकर ) मैं ही इस अबोध का पालन करूँगा ।

[ बालक को हाथों में भरकर छाती से लगा लेता है । ]

धूता—( देखकर ) आश्चर्य है ! 'आर्यपुत्र' का-सा ही स्वर है ! ( पुनः देखकर हर्षपूर्वक ) सौभाग्य से ये 'आर्यपुत्र' ही हैं । मेरे लिए प्रिय हैं ।

बालक—( देखकर सहर्ष ) आश्चर्य है ! पिता जी मेरा आलिङ्गन कर रहे हैं । ( "धूता" से ) माताजी ! आपका अभ्युदय हो रहा है । पिताजी ही मेरी रक्षा करेंगे ।

[ ऐसा कहकर प्रत्यालिङ्गन करता है । ]

चारुदत्त—( "धूता" से )

हा प्रेयसि ! प्रेयसि विद्यमाने, कोऽयं कठोरो व्यवसाय आसीत् ।
अम्भोजिनीलोचनमुद्रणं किं, भानावनस्तङ्गमिते करोति ? ॥५७॥

धूता—अज्जउत्त ! अदो ज्जेव सा अचेतणेत्ति चुंबीअदि । [ आर्यपुत्र ! अत एव साऽचेतनेति चुम्ब्यते । ]

---

चारुदत्तो धूतां प्रति कथयति—हा प्रेयसीति । हा प्रियतमे ! प्रियतमे मयि विद्यमाने एवायं कठोरो व्यवसायस्त्वया किमिति स्वीकृतः ? किमु कदाचिदपि कमलिनी, भगवति भास्करेऽस्ताचलचूडानवलम्बिनि सति स्वलोचनयोर्मुद्रणं करोति ? नैव ? यथा कमलिनी सूर्येऽस्तंगते एव निमीलयति नेत्रे, तथैव मय्यनस्तंगतेऽपि भवती कथमेवं कर्तुमुद्यतेति सर्वथाऽनुचितमेतदिति भावः ।

अत्र यमक-दृष्टान्तावलङ्कारौ । अत्र विधेयाविमर्शदोषः । अस्तंगमिते "न" करोतित्येव युक्तम् । इन्द्रवज्रा च्छन्दः ॥ ५७ ॥

स्वस्वामिनो दृष्टान्तं श्रुत्वा धूता आह—अज्जउत्तेति । आर्यपुत्र ! यतः सा भानुः प्रिया कमलिनी भानावस्तंगते एव नेत्रनिमीलनं करोति, अत एव "अचेतना" इति पदेन चुम्ब्यते=स्पृश्यते । पूर्वमेव पतिप्रयाणं सम्भविनं ज्ञात्वा तयापि लोचनमुद्रणं कार्यम् । चेतना चाहं विचारधना सत्यपि किमचेतनायाः कमलिन्या अनुकरणं कुर्याम् ? इति सारः ।

---

"हा प्रियतमे ! प्रियतम के जीवित रहने पर भी तुमने यह क्या कठोर निश्चय कर लिया था ? क्या कभी कमलिनी भगवान् भास्कर के बिना अस्त हुए ही अपनी आँखें बन्द कर लेती है ? ( नहीं; जैसे कमलिनी भगवान् सहस्रदीधिति के उदय होने पर कभी नहीं कुम्हलाती वैसे ही मेरे रहते हुए ही तुम्हारा यह व्यापार सर्वथा अनुचित था ।" ) ॥ ५७ ॥

धूता—आर्यपुत्र ! इसी लिए तो वह "अचेतना" कहलाई जाती है । ( अपने प्रियतम के अस्त होने पर वह आँखें बन्द करती है अतः वह अचेतना कहलाई जाती है । पति के रहते ही 'लोचन-मुद्रण' उचित है । तो क्या मुझे "सचेतना" होकर भी ऐसा नहीं करना चाहिये था ? )

विदूषकः—( दृष्ट्वा, सहर्षम् ) ही ही भो, एदेहिं ज्जेव अच्छीहिं पिअवअस्सो पेक्खीअदि। अहो सदीए पहावो, जदो जलणप्पवेशव्ववसाएण ज्जेव पिअसमागमं पाविदा (चारुदत्तं प्रति) जेदु जेदु पिअवअस्सो। [ आश्चर्यं, भोः ! एताभ्यामेवाक्षिभ्यां प्रियवयस्यः प्रेक्ष्यते। अहो सत्याः प्रभावः, यतो ज्वलनप्रवेशव्यवसायेनैव प्रियसमागमं प्रापिता। जयतु जयतु प्रियवयस्यः। ]

चारुदत्तः—एहि मैत्रेय !। ( इत्यालिङ्गति )

चेटी—अहो संविधाणअं। अज्ज ! वंदामि। [ अहो संविधानकम्। आर्य ! वन्दे। ] ( इति चारुदत्तस्य पादयोः पतति )

चारुदत्तः—( पृष्ठे करं दत्वा ) रदनिके ! उत्तिष्ठ। ( इत्युत्थापयति )

धूता—( वसन्तसेनां दृष्ट्वा ) दिट्ठिआ कुसलिणी बहिणिआ। [ दिष्ट्या

---

विदूषकः प्रहर्षं प्रकटयति—ही ही भोः इति। एताभ्यामेव स्वीयाभ्यां चक्षुर्भ्यां प्रत्यक्षीकरोमि भवन्तमिति सौभाग्यमस्माकमिति सर्वोऽप्ययं सत्याः प्रभावः।

चेटी रदनिका हर्षोद्रेकं सूचयति—अहो ! इति। अहो ! भगवत्या नियत्याः कीदृशं संविधानकम् = दैवलीला, सम्पन्नम् ? विधिकर्तव्यं ज्ञातुं न शक्यते। धन्योऽयमद्यतनो दिवसः।

---

विदूषक—( देखकर हर्ष से ) आश्चर्य है ! मैं इन्हीं आँखों से प्रिय मित्र को देख रहा हूँ। ओह ! यह सब सती ( "धूता" ) का ही प्रभाव है जो अग्नि-प्रवेश से ही "प्रिय सङ्गम" हो गया है। ( "चारुदत्त" से ) प्रियमित्र की जय हो !

चारुदत्त—आओ ! मैत्रेय ! आओ ! [ आलिङ्गन करता है। ]

चेटी—ओह ! दैव का विधान ! आर्य ! प्रणाम करती हूँ।

[ "चारुदत्त" के पैरों पर गिर पड़ती है। ]

चारुदत्त—( पीठ पर हाथ फेरकर ) रदनिके ! उठो !

[ उठा देता है। ]

धूता—( "वसन्तसेना" को देखकर ) सौभाग्य से बहिन सकुशल हैं।

कुशलिनी भगिनी । ]

वसन्तसेना—अहुणा कुसलिणी संवुत्तम्हि । [ अधुना कुशलिनी संवृत्तास्मि । ]

( इत्यन्योन्यमालिङ्गतः )

शर्विलकः—दिष्ट्या जीवितसुहृद्वर्गं आर्यः ।

चारुदत्तः—युष्मत्प्रसादेन ।

शर्विलकः—आर्ये वसन्तसेने ! परितुष्टो राजा भवतीं वधूशब्देनानुगृह्णाति ।

वसन्तसेना—अज्ज ! कदत्थम्हि । [ आर्य ! कृतार्थास्मि । ]

शर्विलक—( वसन्तसेनामवगुण्ठ्य चारुदत्तं प्रति ) आर्य ! किमस्य भिक्षोः क्रियताम् ? ।

चारुदत्तः—भिक्षो ! किं तव बहुमतम् ?

भिक्षुः—इमं ईदिशं अणिच्चत्तणं पेक्खिअ दिउणतले मे पव्वज्जाए बहु-

---

धूता वसन्तसेनां कुशलं पृच्छति—सा चोत्तरयति—अहुणेति । अधुना तव जीवनादेवाहं सकुशला जातास्मि ! इति भावः ।

किं तवेष्टमिति प्रश्नं समुत्तरति भिक्षुः—इममिति। ईदृशं सर्वमपि संविधानकं

---

वसन्तसेना—( वास्तव में ) अब सकुशल हूँ ।

[ दोनों एक दूसरे से मिलती हैं । ]

शर्विलक—सौभाग्य से आप मित्रों सहित जीवित हैं ।

चारुदत्त—आपकी कृपा से ।

शर्विलक—आर्यें वसन्तसेने ! राजा प्रसन्न होकर आपको "वधू" पद से अनुगृहीत करते हैं ।

वसन्तसेना—आर्य ! मैं कृतार्थ हो गई हूँ ।

शर्विलक—( "वसन्तसेना" का घूँघट निकाल कर चारुदत्त" से ) आर्य ! इस 'भिक्षु' का क्या किया जाय ?

चारुदत्त—संन्यासिन् ! आपको क्या अभीप्सित है ?

माणे संवुत्ते। [ इदमीदृशमनित्यत्वं प्रेक्ष्य द्विगुणतरो मम प्रव्रज्यायां बहुमानः संवृत्तः । ]

चारुदत्तः--सखे ! दृढोऽस्य निश्चयः । तत्पृथिव्यां सर्वविहारेषु कुलपतिरयं क्रियताम् ।

शर्विलकः—यथाहार्यः ।

भिक्षुः—पिअं णो पिअं । [ प्रियं नः प्रियम् । ]

वसन्तसेना—संपदं जीवाविदम्हि । [ सांप्रतं जीवापितास्मि । ]

शर्विलकः—स्थावरकस्य किं क्रियताम् ?।

चारुदत्तः—सुवृत्त अदासो भवतु । ते चाण्डालाः सर्वचाण्डालानामधि-

---

निरीक्ष्य अनित्यताञ्च जगतो विभाव्य संन्यासं प्रति विशिष्टोऽनुरागः समजनि मम त्विति नाहं कमपि सांसारिकं पदार्थं कामये, इति भावः ।

सर्वविहारेषु भिक्षोः कुलपतित्वं ज्ञात्वा प्रसन्ना वसन्तसेना प्राह—सम्पदमिति । अधुना प्रत्युज्जीवनं मम संजातम् । अयमाशयः—अनेनैव भिक्षुणा जलसेकादिनाऽहमस्मि प्रत्युज्जीविता, यावदयं नोपकृतस्तावन्मम शिरसि महान् भार आसीत् । इदानीं च वास्तविकं मम जीवनं जातम् ।

---

भिक्षु--संसार को इस अनित्यता को देखकर संन्यास में मेरा दुगना अनुराग हो गया है। ( मैं किसी सांसारिक पदार्थ की अभिलाषा नहीं करता । )

चारुदत्त—मित्र ! इनका यह दृढ़ निश्चय है। अतः भूमण्डल के समस्त 'विहारों' ( बौद्धमठों ) का इन्हें 'कुलपति' बना दिया जाय ।

शर्विलक—जो आज्ञा !

भिक्षु—मेरे लिए बहुत प्रिय है।

वसन्तसेना—अब प्रत्युज्जीवित हुई हूँ। ( अर्थात्—इसने मेरी रक्षा की थी। मेरे ऊपर बहुत कृतज्ञता का भार था परन्तु अब वह कुछ हलका हो गया है। अतः वास्तव में मैं अभी जीवित हुई हूँ। )

शर्विलक—"स्थावरक चेट" का क्या किया जाय ?

चारुदत्त—मित्र ! वह दासता से मुक्त हो जाय । वे चाण्डाल सब चाण्डालों

पतयो भवन्तु । चन्दनकः पृथिवीदण्डपालको भवतु । तस्य राष्ट्रियश्यालस्य यथैव क्रिया पूर्वमासीत्, वर्तमाने तथैवास्यास्तु ।

शर्विलकः—एवं, यथाहार्यः; परमेनं मुञ्च मुञ्चः व्यापादयामि ।

चारुदत्तः—अभय शरणागतस्य । ( 'शत्रुः कृतापराधः' ( १०।५४ ) इत्यादि पठति )

शर्विलकः—तदुच्यतां किं ते भूयः प्रियं करोमि ? ।

चारुदत्तः—अतः परमपि प्रियमस्ति

**लब्धा चारित्र्यशुद्धिश्चरणनिपतितः शत्रुरप्येष मुक्तः,**
**प्रोत्खातारातिमूलः प्रियसुहृदचलामार्यकः शास्ति राजा ।**
**प्राप्ता भूयः प्रियेयं, प्रियसुहृदि भवान् संगतो मे वयस्यो,**

---

आर्यचारुदत्तः शर्विलकस्य प्रश्नं समाधत्ते—लब्धेति । भोः ! अतः परमपि किञ्चित् प्रियमवशिष्यते किमु ? किं किं प्रियं मयाऽनुभूतमित्याह—चारित्र्यशुद्धिर्मया लब्धा = लोके कलङ्कसम्पर्को मम नाभूदित्याशयः ! चरणयोर्निपतितः एषः शत्रुरपि मुक्तः, सर्वानप्यरातीन् = शत्रूनुन्मूल्य राजा आर्यकोऽपि प्रियसुहृत् अचलां = पृथिवीं शास्ति, इत्यपरमस्माकं प्रियम्, इयं प्रिया = वसन्तसेना भूयः प्राप्ता,

---

के स्वामी बना दिये जाँय । "चन्दनक" पृथ्वी भर का "दण्डनायक" निर्धारित किया जाय ! और उस राजश्यालक का जैसा पहिले काम था वैसा ही अब भी रहे ।

**शर्विलक**—जो आज्ञा ! परन्तु उसे छोड़ दीजिये । मैं मारूँगा ।

**चारुदत्त**—शरणागत के लिए अभय है ।

[ "शत्रुः कृतापराधः" इत्यादि ( १०।५४ ) श्लोक पढ़ता है । ]

**शर्विलक**—तो बताइये कि मैं अब आपका क्या प्रिय कार्य करूँ ?

**चारुदत्त**—क्या इससे भी अधिक कुछ प्रिय है ?

"मेरा चरित्र शुद्ध ( निष्कलङ्क ) रह गया; पैरों में गिरे हुए शत्रु को भी मैंने मुक्त कर दिया, तथा शत्रुओं का समूलोन्मूलन करके राजा "आर्यक" पृथ्वी का शासन कर रहे हैं, मैंने फिर से प्रिया ( "वसन्तसेना" ) प्राप्त करली और आप

लभ्यं किं चातिरिक्तं यदपरमधुना प्रार्थयेऽहं भवन्तम् ?॥५८॥
कांश्चित्तुच्छयति प्रपूरयति वा कांश्चिन्नयत्युन्नतिं,
कांश्चिद् पातविधौ करोति च पुनः कांश्चिन्नयत्याकुलान् ।
अन्योन्यं प्रतिपक्षसंहतिमिमां लोकस्थितिं बोधय-
न्नेष क्रीडति कूपयन्त्रघटिकान्यायप्रसक्तो विधिः ॥५९॥

---

प्रियः सुहृद् भवानपि प्रियसुहृदि = आर्यके संगतः, अतः परं किं लभ्यमवशिष्यते ? यदर्थं भवतोऽभ्यर्थनां कुर्याम् ? सर्वमपि तव प्रसादादुपलब्धमिति भावः । स्रग्धरा छन्दः ॥ ५८ ॥

इदानीं तु मयेदं ज्ञायते—काँश्चिदिति । विधिः = दैवम् काँश्चित् तुच्छान् करोति, अपरान् प्रपूरयति, काँश्चिचोन्नतान् करोति, काँश्चिच्च पुनः पातनकर्मणि प्रेरयति, अपरान् पुनः काँश्चिदाकुलान् करोति । अन्योऽन्यं प्रतिपक्षस्य संहतिमिमां लोकस्य परिस्थितिं बोधयन् कूपयन्त्रघटिकान्यायेन क्रीडामिव करोति ।

तथा चोक्तं कविकुलगुरुणा—
"कस्याऽत्यन्तं सुखमुपनतं दुःखमेकान्ततो वा,
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ।" इति ।
यथा वा—श्रीभासेनोक्तम्—
"चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः" ॥ इति ॥
अत्र दीपकालङ्कारः । शार्दूलविक्रीडितं छन्दः ॥५६॥

---

जैसे मेरे मित्र "आर्यक" को मिल गये; ( बताओ तो सही ) अब क्या अवशिष्ट है जो मैं आपसे माँगू ?" ॥५८॥

"यह प्रबल दैव किन्हीं को छोटा, किन्हीं को परिपूर्ण, किन्हीं को पतित तथा किन्हीं को व्याकुल बनाता रहता है । इस प्रकार शत्रु-मित्र, उन्नति-अवनति आदि सांसारिक गतिविधि को बताता हुआ कूएँ के "रहट" के समान यह ( किन्हीं को रिक्त, कुछों को परिपूर्ण तथा औरों को पतित बनाता हुआ ) खेल-सा करता है ।" ॥५६॥

तथापीदमस्तु भरतवाक्यम्—

**क्षीरिण्यः सन्तु गावो, भवतु वसुमती सर्वसंपन्नसस्या,**
**पर्जन्यः कालवर्षी, सकलजनमनोनन्दिनो वान्तु वाताः ।**
**मोदन्तां जन्मभाजः, सततमभिमता ब्राह्मणाः सन्तु सन्तः,**
**श्रीमन्तः, पान्तु पृथ्वीं प्रशमितरिपवो धर्मनिष्ठाश्च भूपाः ॥६०॥**

( इति निष्क्रान्ताः सर्वे )

---

यद्यपि सर्वं प्रियमुपलब्धं तथापीदं श्रीभरतवाक्यं सफलमस्तु—क्षीरिण्यः इति । अस्माकं देशे गावो दुग्धप्रदाः सन्तु । वसुमती = धरित्री सर्वसस्यैः संपन्नास्तु । मेघः समये वर्षणशीलो भवतु । सर्वजनमनसः आनन्दप्रदा वाताः प्रवान्तु । सर्वे प्राणिनः प्रमोदमावहन्तु । सर्वदा ब्राह्मणाः सर्वेषामभिमताः सन्तश्च सन्तु । धर्मनिष्ठाः श्रीसहिता नृपाः सर्वेषां रिपूणां क्षयं विधाय सुचिराय पृथ्वीं पान्तु = रक्षन्तु । एतदेव सर्व-मंगलकारि प्रियमधुना प्रार्थ्यते । भगवान् श्रीशिवस्तथा करोतु ।

अत्र प्रशस्तिनामकं निर्वहणसन्धेरङ्गमुक्तं भवति । तथा चोक्तम्—

"नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते ।" इति ।

काव्यान्ते शुभाशीर्वचनस्य कवेः कर्तव्यत्वान्माङ्गलिकता प्रकरणस्यास्य । स्रग्धरा छन्दः ॥ ६० ॥

इति सर्वे नटाः स्वकर्तव्यं सम्पूर्णं कृत्वा अङ्कान्ते निष्क्रान्ताः ।

---

तथापि यह 'भरत वाक्य' हो !

"गौएँ पर्याप्त दूध देने वाली हों ! पृथ्वी धन-धान्य से परिपूर्ण हो ! मेघ ठीक समय पर वर्षा करें ! आनन्ददायी समीर बहे ! प्राणी प्रसन्न हों ! ब्राह्मण सबके प्रिय हों ! तथा शत्रुओं के विनाशक, शक्ति-शोभा-सम्पन्न धर्मनिष्ठ राजा ( शासक ) गण पृथ्वी ( भारतमाता ) की रक्षा करें ।" ॥६०॥

[ सब चले जाते हैं । ]

# संहारो नाम दशमोऽङ्कः समाप्तः ।

—॰—

मुज़फ्फरनगर–मण्डलान्तर्गत–"चरथावल" अभिजनानां, श्रीपण्डित-बद्रीदत्त-शुक्लानां पौत्रेण, श्री पण्डित–माईदयालु–शुक्लानां पुत्रेण, श्री'तुलसा'देव्या गर्भसम्भवेन, साहित्याचार्य, व्याकरणालङ्कारशास्त्रिणा, काव्यतीर्थेन, "कविरत्न" श्रीब्रह्मानन्दशुक्लेन, खुरजास्थ–श्रीराधा-कृष्ण–संस्कृत–कालेजे, साहित्यविभागाध्यक्षेण विरचितायां मृच्छकटिकस्य "श्रीप्रियम्वदा"–ख्यटीकायां दशमोऽङ्कः समाप्तः ॥

* समाप्तश्चायं ग्रन्थः *

—◆—

"श्री प्रियम्वदा"–टीकालङ्कृत "मृच्छकटिक" 'प्रकरण' के "संहार" नामक दसवें अङ्क का भाषानुवाद समाप्त

"श्रीशूद्रक" कवि–विरचित "मृच्छकटिक प्रकरण" का. श्रीकृष्णकान्त 'शुक्ल'–कृत हिन्दी–अनुवाद समाप्त

श्रीकृष्णार्पणमस्तु

—:०:—

# मृच्छकटिकस्थपद्यानुक्रमः ।

श्रीमदानन्दवर्धनाचार्यप्रणीतो

# ध्वन्यालोकः

पं० श्रीअलखदेवशर्मप्रणीतया
प्रकाशिकाख्यव्याख्यया
हिन्दीभाषया च
समुल्लसितः

मास्टर खेलाड़ीलाल ऐण्ड सन्स, बनारस-१

सर्वविधशास्त्रिपरीक्षायां निर्धारितम्

# मुद्राराक्षसं नाटकम्

'प्रियंवदा'ख्य-(संस्कृत-हिन्दी-)
टीकया विभूषितम्

-o-o-✤-o-o-

टीकाकारः
पं० श्रीब्रह्मानन्दशुक्लः, …